श्रीभवत्रातरचिता

# जैमिनीयश्रौतसूत्रवृत्तिः

श्रीप्रेमनिधि-शास्त्रिणा वेदाचार्येण
संशोधिता सम्पादिता च

सा च
इन्द्रप्रस्थीय-सरस्वतीविहार-संस्थाध्यक्षैः
डॉ. श्रीलोकेशचन्द्र-महोदयैः
२०२२तमे विक्रमाब्दे सम्मुद्राप्य प्राकाश्यं नीता

# JAIMINĪYA-ŚRAUTA-SŪTRA-VṚTTI

## OF BHAVATRĀTA

*edited by*

**PREMNIDHI SHASTRI**

Published by the

INTERNATIONAL ACADEMY OF INDIAN CULTURE

NEW DELHI (INDIA)

# ŚATA-PIṬAKA SERIES

## INDO-ASIAN LITERATURES

Volume 40

**Reproduced in original scripts and languages**
Translated, annotated and critically evaluated by
specialists of the East and the West
in a Series of Collectanea

*Founded by*
**RAGHU VIRA** *M.A., Ph.D., D.Litt. et Phil.*

**आचार्य-रघुवीर-समुपक्रान्तं**

**जम्बुद्वीप-राष्ट्राणां**
(भारत-नेपाल-गान्धार-शूलिक-तुरुष्क-पारस-ताजक-भोट-चीन-मोंगोल-मञ्जु-
उदयवर्ष-सिंहल-सुवर्णभू-श्याम-कम्बुज-चम्पा-द्वीपान्तरादीनां )

**एकैकेषां समस्रोतसां संस्कृति-साहित्य-समुच्चय-
सरितां सागरभूतं**

# शतपिटकम्

॥ ॐ नमो ब्रह्मणे ॥

# उपोद्घातः

अयि वेदविदाम्वरा मनीषिप्रवरा विद्वांसः सुविदितमेव तत्रभवतां धिषणाधनानां यत् परमकारुणिको भगवान् जैमिनिर्वेदार्थस्य बुभुत्सून् मानवाननुगृहीतुं वेदार्थदर्शनलोचनभूतं जैमिनीयमीमांसाशास्त्रं द्वादशाध्यायीपरिमितं प्रणीय महदिव लोकस्यास्योपचकार।

स एव हि भावितात्मा यज्ञविद्याविविदिषावतां श्रोत्रियाणां यज्ञविज्ञानबुभुत्सामपि प्रीणयितुम् आर्षेयीं यज्ञपरिपाटीमपि चाविच्छिन्नां कल्पयितुं विविधयज्ञक्रतुसत्रादिनानारत्नरत्नाकरमिव जैमिनीयश्रौतं नाम कल्पसूत्रं प्रणीय याज्ञिकानपि प्रणयिनः प्रभूतमनुजग्राह।

### कोऽयं जैमिनिः

श्रौतसूत्राणामाम्नाता, मीमांसान्यायस्य प्रणेता भगवान् जैमिनिः भगवतो व्यासस्य कृष्णद्वैपायनस्य परमविधेयः शिष्य आसीत्। एतद्विधौ प्रचरन्ति केचित् श्लोकाः सामवैदिकपरम्परायाम्, येषामध्ययनेन सुप्रतीमो यत् कल्पसूत्राणामाम्नाता पूर्वमीमांसाख्यस्य जैमिनिन्यायस्य च प्रणेता मुनिर्जैमिनिर्भगवतो व्यासादेव सकलं साम सरहस्यं सकल्पञ्च समधीयाय। तथा हि--

सामाखिलं सकलवेदगुरोर्मुनीन्द्राद्
व्यासादवाप्य भुवि येन सहस्रशाखम्।
व्यक्तं समस्तमपि सुन्दरगीतरागम्
तं जैमिनिं तलवकारगुरुं नमामि॥ अथ च—

वेदोक्तं कर्म येनासीन् मीमांसित्वा सुनिश्चितम्।
व्यासशिष्याय मुनये तस्मै जैमिनये नमः॥ इति

उज्जहारागमाम्भोधेर्यो धर्मामृतमञ्जसा।
न्यायैर्निर्मथ्य भगवान् स प्रसीदतु जैमिनिः॥ इति च।

एतेन सुश्लोकत्रयेण सकलानामपि सामविन्मूर्धन्यानां प्रामाण्यपदवीमुपप्रपन्नेन सुनिपुणं विज्ञातं भवति यन्मीमांसान्यायस्य प्रणेता कल्पसूत्राणाञ्चाम्नाता भगवान् जैमिनिः भगवतो व्यासस्य शिष्य आसीत्।

### जैमिनिस्तलवकारश्च सामशाखाप्रवर्तकौ

जैमिनीयश्रौते विकृतिकल्पवृत्त्युपक्रमे तत्र भवान् वृत्तिकारो मङ्गलमाचरन् श्लोकमेकमधीते—

ऋक्सामपाठक्रमकृद् द्रष्टा च ब्राह्मणस्य यः।
तस्मै तलवकाराय नमो यच्छाखिनो वयम्॥ इति

एतेन वृत्तिकारवचनेन भगवतो जैमिनेस्तलवकारस्य च मुनेः कश्चित् सविशेषः समानश्च साम-शाखासम्बन्धः प्रस्फुरति, येन एकैव कृतिरुभाभ्यामपि नामभ्यां विख्यातिमेति क्षितौ । यथा हि जैमिनिना दृष्टं जैमिनीयं ब्राह्मणं तलवकारनाम्ना ख्यातिमुपेत्य तलवकारब्राह्मणमित्याख्यां भजते । तलवकारप्रणीता तलवकारोपनिषच्च जैमिनिप्रणीतेव जैमिनीयोपनिषदिति नाम्ना ख्यातिं प्रयाति ।

कोऽनयोरेकताद्योतकस्तादृशः सम्बन्धो येनैकस्यैव कृतिरुभाभ्यामपि नामभ्यां प्रथते उभयकर्तृतां च भजते । एतद्विषये सामवेदीयगुरुशिष्यपरम्पराविद्भिर्विपश्चिद्भिरेवं निगद्यते यद् गुरुशिष्ययोरेककृतिना समानसम्बन्धादेकैव कृतिरुभाभ्यामपि नामभ्यां प्रचरति । यथा लोकेऽपि माधवीयमृग्भाष्यं सायणनाम्ना प्रसिध्यति । सायणीया धातुवृत्तिश्च माधवीयेति प्रख्यायते । कयोरपि गहनः सम्बन्धो नीरक्षीरवदेक-तामिव प्रत्याययति । यतस्तत्कर्तृत्वावगमे विपश्चितामपि विचिकित्सा समुदेति । तलवकारस्य जैमिनि-शिष्यता तु तं जैमिनिं तलवकारगुरुं नमामि इति वाक्यादेव निराबाधं प्रसिध्यति । अथ च जैमिनीयगृह्यसूत्रे सामवेदीयर्षितर्पणप्रकरणे (१.१४) मध्ये सामवेदस्य त्रयोदशाचार्याणां स्मरणतर्पणविधौ जैमिनि-स्तलवकारश्च सममेव तर्पणं भजतः । यथा—जैमिनिं-तलवकारं, सात्यमुग्रं राणायनिम् इत्यादि । एतेनैनयो-रेकया शाखया समानः सम्बन्धः कश्चित् प्रवर्तते इति निश्चिनुमः । एतस्य च निश्चयस्य पुष्टिं कुर्वाणो विक्रमार्कस्याष्टमशताब्दीतोऽपि पूर्वतनो ग्रन्थः प्रपञ्चहृदयं नाम इत्थमवभाषते—तलवकारशाखाप्रयुक्तं सामवैदिकविषयं जैमिनिना प्रदर्शितम् इति । एतेनैतयोरेकशाखागतः कश्चित् सविशेषो दृढतरश्च सम्बन्धः प्रतिभासते । अन्यथा ह्येकैव सामशाखा उभाभ्यामपि मुनिनामभ्यां जैमिनितलवकाराभ्यां संविधिमात-न्वन्ती कथं नाम प्रथेत । अत इदं जैमिनीयं कल्पसूत्रं तलवकारशाखीयमपीति ।

## जैमिनीयश्रौतपरिमाणम्

जैमिनीयं श्रौतसूत्रं कियत् परिमाणं भजते, इत्येषा विविदिषा विक्रमार्कस्याष्टमशताब्दीतोऽपि प्राक्तने प्रपञ्चहृदयाख्ये वेदवेदाङ्ग-तच्छाखाप्रशाखावबोधके ग्रन्थे इत्थं विबोधिता वर्तते—तलवकारशाखा-प्रयुक्तं सामवैदिकविषयं चतुरशीतिपटलैः जैमिनिना प्रदर्शितम् इति । एतेन विश्वसिमो यज्जैमिनीयश्रौतसूत्रेण चतुरशीतिपटलात्मकेन भवितव्यम् । परमद्य तु न वयं तत्र पटलान् विलोकयामः । अद्यत्वे तु तत्र खण्डा अध्यायाश्च विलोक्यन्ते । पटलानि त्वद्य ततो व्यवच्छिन्नानि हि दृश्यन्ते । नैतद् व्यामोहाय भवतु विदुषाम् । नापि च संशयितव्यमेतद्विधौ विपश्चिद्भिः । यतोऽद्यत्वे पुस्तके ये खण्डाः पठ्यन्ते पुरा ते पट-लान्येवावर्तन्त । सम्भावयामो, यत् प्रपञ्चहृदयरचनाकाले भवत्रातीवृत्तिलेखनकाले च तत्र पटलान्येव अवर्तन्त । एतदर्थं संशयानानां दोषज्ञानां संशयं वृत्तिकृत् स्वयमुच्छिनत्ति स्वीयायामेव जैमिनीयश्रौतवृत्तौ । तद्यथा पर्यध्यायस्य सप्तचत्वारिंशत्तमे खण्डे—यदस्मिन् पटले वक्ष्यते तत्सर्वं ब्राह्मण एव विज्ञायते, (जै श्रौ ६.४७) । अथ च—द्विषट्कयोः क्व श्रवणमिति चेत् परस्याध्यायस्य सप्तमे पटले (जै.श्रौ. ६.४८) इति । एवं हि—युग्विषयाणां तूत्तरस्मिन् पटले वक्ष्यते (जै. श्रौ. ६.४९) इति । एतेन प्रतीमो यद्वृत्तिरचनाकाले जैमिनीयश्रौते पटलान्येवावर्तन्त ।

अद्यत्वे महत्स्तोमेषु विष्टुतिषु च या खण्डबहुलता दृश्यते सा तु सर्वपश्चिमैर्विद्वद्भिः शिष्य-शिक्षासौकर्याय पश्चादेव प्रकल्पिता भवेदिति प्रतिभाति; यत्र स्तोमानां विष्टुतीनाञ्च नैके भेदाः प्रभेदाः सूक्ष्मभेदाश्च सामगानसरणीसम्पत्तये नैकर्षिनामग्राहं सविवेकं निर्दिश्यन्ते ।

वृत्तिकृता त्वस्य ग्रन्थस्य मानं प्रपञ्चहृदयप्रदर्शितात् परिमाणाद् भूय एव प्रदर्शितं भवति, तदपि नाम विवेचनीयमेव । तद्यथा—

व्याख्यानमिदमाख्यातमार्षेयस्य यथामति ।
ग्रन्थमानमिह प्रोक्तं चत्वारिंशच्छतं मया ।। ( जै. श्रौ. ६.७० )

एवं हि भवत्रातपरिकल्पितेन ग्रन्थमानेनात्र चत्वारिंशदुत्तरं शतात्मकेन भाव्यम् । किन्तु माननिर्देशके श्लोके 'मया' शब्दस्य विनिपातेनैतदनुमीयते, यद् वृत्तिकृता निर्धारितं चत्वारिंशदुत्तरं शतपरिमितं ग्रन्थपरिमाणं केवलं वृत्त्यनुबन्ध्येव, न तु मूलग्रन्थानुबन्धीति । वृत्तिकृता श्रौतवृत्तौ नैकत्र स्थलेषु मूलमतिरिच्य बहवो विषयास्तत्तदाचार्यमतोपन्यासपूर्वं निरूपिताः वर्तन्ते । सैषा वृत्तिकारप्रकल्पिता ग्रन्थमानसंख्या तन्निबन्धिन्येव संविभातीति ब्रूमः । अतो नायं विषयः पृथग् विवेचनापेक्षः । एतद्विषये विद्वद्भिः स्वयमूह्यम् ।

## भावत्राती वृत्तिः

आचार्यश्रीभवत्रातेन जैमिनीयश्रौते वृत्तिरतानि न तु भाष्यम् । भाष्यभ्रमस्त्वभूलो मुधा च । एतद् भ्रमाभ्रन्तु विष्टुतिप्रकरणावसाने लिखितेन श्लोकार्धेनैव विलोपं याति । यथा—

पश्चादन्या विष्टुतीनाञ्च क्लृप्तीः ।
भावत्राती भूषयामास वृत्तिः ।। इति ।। (जै. श्रौ. ६.७०)

एतेन विज्ञातं भवति, यदियं श्रौतवृत्तिर्न त्वेतत् श्रौतभाष्यमिति ।

केचित्त्वेवं मुह्यन्ति—यदियं वृत्तिः कमपि पूर्वाचार्यकृतं भाष्यमाश्रित्य तनिता । यतो वृत्तिर्हि भाष्ये तन्यते । यथा निरुक्तभाष्ये दुर्गवृत्तिः । यथा च पातञ्जले महाभाष्ये काशिकावृत्तिरिति । एष व्यामोहस्तु वृत्तेरध्ययनेनैव व्यपनीयते । वृत्तिकृद् वृत्तिं रचयन् प्रथमतो मूलसूत्राणां प्रतीकान्युपन्यस्यैव तत्र वृत्तिं तनोति, न तु कञ्चिद् भाष्यवाक्यमुपन्यस्येति । यदीयं वृत्तिर्भाष्यावलम्बिन्यभविष्यत्तदा तद्भाष्यप्रतीकान्येवावालम्बिष्यन्तेति । तत्तु नात्र विलोकयामः । अत इयं स्वतन्त्रा मूलाक्षरानुगामिनी भावत्राती वृत्तिरेवेति । न तु भाष्यमिति ।

## वृत्तिकारात् पूर्वे जैमिनीयश्रौतभाष्यकृतः ।

भवत्रातवृत्तेः पूर्वं जैमिनीयश्रौतस्य कश्चिदन्योऽपि भाष्यकृदासीदिति भावत्रातीं वृतिमनुरुध्य न किञ्चिद् वक्तुं पारयामः । यतो नायं वृतौ कमपि पूर्वाचार्यं भाष्यकृत्त्वेन स्मरति सनामग्राहमिति ।

स्मरति चैकत्र सोमभक्षप्रकरणे पूर्वमीमांसाभाष्यकारं श्रीभवदासाचार्यम् । यथा सोमभक्षे सुब्रह्मण्याभक्षोऽस्ति न वेति विचारे—भवदासेनाप्येवमेव निश्चित्य पुनर्व्याख्यानान्तरेण अभक्षणपक्ष एव साधितः (जै. श्रौ. १.१४) इति । एतेन अयं भवदासो जैमिनीयश्रौतस्य भाष्यकृदिति कल्पयितुं नैव पार्यते, यतो हि सोमभक्षाभक्षविधिविवेको न केवलं श्रौतमेव विषयमनुबध्नाति । अयं तु विषयः मीमांसाशास्त्रमप्यनुबध्नात्येव । अतो नैतन्निर्णेतुं शक्नुमो यद् भवदासो जैमिनीयश्रौतस्य पुराणो भाष्यकृदिति । मीमांसाशास्त्रस्य भाष्यकृत्त्वेन तु प्रसिध्यत्येवायम् ।

क्वचिदयं वृत्तिकृत् केषां चिन्मतं 'केचित्' इति पदेनोपन्यस्यति । यथा प्रवर्ग्योद्वासने—केचिदेतद् वाक्यद्वयमेकवाक्यतया व्याचक्षते (जै. श्रौ. १.५) इति । अथ च दक्षिणाप्रतिग्रहणविधौ—केचित् परविहितेन विधिना प्रतिग्रहणमिच्छन्ति, न तु तदस्माभिर्मृष्यते (जै. श्रौ. १.१७) इति । अथापि सोमभक्षणप्रकरण एव केचिदिदं सोमभक्षणस्य साम्नां विशेषणं सामसम्बन्धिनामेव छन्दोगानां सोमभक्षणं ज्ञापयतीति कल्पयित्वा सुब्रह्मण्यं सोमभक्षणं निषेधयन्तीति (जै. श्रौ. १.२०) इति ।

एतैर्द्वित्रिभिर्वाक्यैः केचित्पदोपन्यस्तैरेतन्निर्णेतुं नैव पारयामो यदिमे केचित्पदवाच्या जैमिनीयश्रौतस्य भाष्यकृत एवाभूवन्निति ।

आर्षाणि तु मतान्ययं पदे पदे न्यस्यति । तेषां सूचिमन्त एव पृथग् दर्शयिष्यामः ।

## वृत्तिकृतः परिचयस्तत्कालश्च

जैमिनीयस्य श्रौतस्य वृत्तिकृच्छ्रीभवत्राताचार्यो जन्मना कं प्रदेशमलञ्चकार, कस्मिंश्च वंशे जनिं लेभे, मातृपित्रादिसंबन्धश्चास्य केन, कश्च जैमिनीयश्रौतवृत्तिनिर्माणकाल इति । एतत् सर्वमपि यथाप्रमाणलाभं वक्तुमुपक्रमामः ।

वृत्तिकारो भवत्राताचार्यो जन्मना कं देशं जनपदं वा अलञ्चकारेत्येतद्विषये न तेन स्वयं किमप्यलेखि, नापि चेतिहासविद्भिः किञ्चिन्निर्णीतमास्ते । परमेतदनुमीयते यदयं केरलीयो भवेत् । यतोऽस्य जनको मातृदत्तः केरलेभ्य एव महाकविमाचार्यं दण्डिनं द्रष्टुमुपप्रपन्नः । एतच्च श्रीदण्डिमहाकविनिबद्धायाम् अवन्तिसुन्दरीकथायां वर्णितमास्ते । यथा—सर्वजनमातृभूतः करुणावृत्तिः मातृदत्तः केरलेभ्यः त्वद्दर्शनाय······· ····इत्यादि ।

अस्य च जननी आनर्तीयाभूत् । यतो भवत्रातस्य मातामहो वेदत्रयीपारंगमो ब्रह्मदत्तो ह्यानर्तीय आसीत् । तस्यानर्तीयत्वं च वैदिकवाङ्मयानुसन्धानलब्धपाटवैः विद्वद्भिः श्री भगवद्दत्तमहोदयैः स्वरचिते वैदिकवाङ्मयस्येतिहासे साधितमस्ति ।

श्रीभवत्रातस्य मातामहो विद्यागुरुश्च ब्रह्मदत्त एव आसीदित्येतत्तु स्वयं श्रीभवत्रातेनैव जैमिनीयश्रौतवृत्तेरारम्भ एव श्लोकेनैकेन प्रकाशितमस्ति । यथा—

ध्यानेनारमयत्तारां त्रिणयनं सोमेन यो वासवम् ।
विप्रान् वेदतदङ्गतत्त्ववचनैर्वित्तेन विद्वज्जनम् ॥
वन्दे ब्रह्मविदं द्विजन्मतिलकं तं ब्रह्मदत्ताह्वयम् ।
यत्पादाम्बुजसेवनोपजनितप्रज्ञालवः साञ्जलिः ॥ (जै. श्रौ. १. १)

एतेन विज्ञायते यच्छ्रीब्रह्मदत्तोऽस्य विद्यागुरुरासीत् । स एवास्य मातामहोऽप्यासीदित्यपि वृत्तिकृता स्वयं प्रकाशितं वर्तते । यथा—

मातृतुल्यदयो नाम मातृदत्त इति श्रुतः ।
पराकाष्ठां गतवतः स सुतां श्रौतकर्मणः ॥

विश्वामित्रजमुख्यस्य ब्रह्मदत्तस्य लब्धवान् ।
तस्य जन्मनि यस्तेन स भवत्रात इत्यभूत् ।। (जै. श्रौ. १. १)

एताभ्यामेवोभाभ्यां श्लोकाभ्यामेतदपि निष्कृष्यते ध्वनितं च भवति यद् ब्रह्मदत्तोऽस्य मातामहः पिता चास्य सर्वजनकरुणावृत्तिः मातृतुल्यदयो मातृदत्त[1] आसीत् ।

## श्रीभवत्रातस्य स्थितिकालः

जैमिनीयश्रौतवृत्तिनिर्माता श्रीभवत्राताचार्यः कस्मिन् वत्सरे स्वस्थित्या वसुधामलञ्चकार इत्येतद्विषये स्वयं न तेन किञ्चित् स्ववृत्तौ प्रकाशितं किन्तु विज्ञायते यदयं ख्रीष्टस्य सप्तम्यां शताब्द्यां भारतवसुधां स्वस्थित्या भूषयामास । एतच्च महाकविश्रीदण्डिविरचितावन्तिसुन्दरीकथाग्रन्थस्याध्ययनेन सुप्रतीतं भवति । यतो भवत्रातस्य जनको मातृदत्तो महाकवेः श्रीदण्डिनः परमं मित्रं सहचरश्चासीत् । एतच्च प्रचोदितं भवत्यवन्तिसुन्दरीकथोपोद्घात एव । यथा—मित्रञ्च तवैव विश्वब्रह्मराशेः, कल्पसूत्रटीकाकारस्य ············ब्रह्मर्षेर्भवरातनाम्न. पुत्रः················अथ्यामङ्गेषु इतिहासकलासु कवितायां चाद्वितीयः········· परममाहेश्वरो ··मन्त्रार्थतत्त्वव्याख्याता सर्वजनमातृभूतः करुणावृत्तिर्मातृदत्तः, (अवन्तिसुन्दरीकथा पृष्ठ १३—१४) इति । अथ च—तदाश्चर्यश्रवणरागावर्जितमनोभिस्तु मातृदत्तप्रभृतिभिः प्रियसखैः (अ. सु. कथा पृ. १७) इति । सुप्रतीमो वयमेतावद्भिरेव वचोभिः यद्भवत्राताचार्यस्य जनको मातृदत्तः[1] श्रीमहाकवेर्दण्डिनः समकालवर्ती आसीदिति ।

महाकवेर्दण्डिनस्तु स्थितिकालोऽवन्तिसुन्दरीकथासम्पादकेन श्री के० एस० महादेवशास्त्रिणा ख्रीस्तीयसप्तमशताब्देरुत्तरार्धस्यान्तिमं चरणमष्टमशताब्देश्च पूर्वार्धस्य प्रथमं चरणं बहुभिः प्रमाणैः सनिर्णयं संसाधितः । अतो दण्डिनः सहचरत्वाद् वृत्तिकृत्पितुः मातृदत्तस्यापि स एव कालः ख्रीस्तीयसप्तमशताब्देरन्तिमं चरणं निर्धारितं भवति । भावत्रातीवृत्तिविरचनकालस्त्वतः परमेव सम्भवति । यदि मातृदत्तेनास्य जनकेनायं स्ववयसः पञ्चविंशे वत्सरे भवत्रातो जनितो भवेत्तदा भवत्रातेन स्ववयसः पञ्चविंशतिभिः वत्सरैः सकला वेदवेदाङ्गविद्या समधीता भवेत् । समावर्तनात् परं न्यूनातिन्यूनं दश वर्षाणि द्वादश वा यज्ञानुष्ठानाद्यनुभवगञ्चयार्थमप्यपेक्ष्यन्त एव । अतो भवत्रातेन जैमिनीयश्रौतवृत्तिः स्ववयसो यौवनं कालं व्यतिनीय प्रौढावस्थायामेव लिखिता सम्भवेत् । एतेन निर्धारयितुं शक्यते यद् वृत्तिकारेणेयं वृत्तिः ख्रीस्तस्याष्टमशताब्देर्मध्ये कालेऽलेखि इति ।

## माधवीयकारिका

श्री खास्ट्रा—महोदया द्वारा सम्पादितस्य जैमिनीयश्रौतस्याग्निष्टोमान्ते निवेशित एको माधवीयकारिकानिचयो दृष्टिपथं चरति । भावत्रातीवृत्तिसंयुतेऽपि च जैमिनीयश्रौतस्याग्निष्टोमान्तेऽपरो माधवीयकारिकानिचयः सन्दृश्यते ।

---

१. मातृदत्तो हिरण्यकेशीयश्रौतसूत्रस्य व्याख्याकारो वर्तते । हिरण्यकेशीयश्रौतसूत्रस्य द्वे हस्तलिखिते प्रती त्रुटितपाठे पुण्यपत्तनस्य 'भारतेतिहाससंशोधकमण्डले, वर्तेते । हिरण्यकेशीयगृह्यस्य मातृदत्तव्याख्या तु अस्य सूत्रस्य सम्पादकेनांशत उद्धृता वर्तते ।

एतन्महते चित्राय भवति, यदुभावपि माधवीयकारिकानिचयौ माधवीयनाम्ना प्रथितावपि बन्धरचनायां लेशतोऽपि परस्परं नैव सम्वदतः।

श्रीखास्ट्रा - महोदयया सम्पादितस्य जैमिनीयश्रौतस्याग्निष्टोमप्रकरणान्ते पठितस्य माधवीयकारिकानिचयस्य को रचयितेति विज्ञातुं नैव पारयामः किन्तु भावत्रातीवृत्तिसंयुते जैमिनीयश्रौतेऽग्निष्टोमप्रकरणान्ते पठितस्य माधवीयकारिकानिचयस्य रचयिता वृत्तिकारो भवत्रात एवेति तद्वचोभिः स्वयं प्रकाशते। यथा—

श्रीभवत्रातरचिता माधवेन मनोरमा।
जैमिनीयस्य सूत्रस्य वृत्तिरेषा विलिख्यते॥
विलिख्य वृत्तिं सूत्रस्य जैमिनीयस्य साम्प्रतम्।
तस्यैव कारिका तेन माधवेन विलिख्यते॥
वृत्तिं जैमिनिसूत्रस्य कृत्वा श्लोकानिमानपि।
पठति स्म भवत्रातो भवं नत्वा भवच्छिदम्॥

एतैर्वचोभिरवधारयामो यदत्र पठितानां माधवीयकारिकाबन्धानां रचयिता भवत्रात एवेति। प्रतीमः, प्रतिगुरुकुलं तद्रूपरम्परागता नैकविधा माधवीयकारिकाः अग्निष्टोमान्तपठिताः प्रचलिता भविष्यन्ति, येन सर्वविधासु कारिकासु माधवीयत्वे ऽपि रचनावैविध्यं संदृश्यते।

जैमिनीयश्रौतस्याग्निष्टोमप्रकरणान्ते पठिता द्विविधा अपि कारिका 'माधवीया' इत्येव नाम्ना विख्यायन्ते। रचनावैविध्येऽपि माधवीयकारिकेत्येकत्वाभिधानेन प्रख्यातिकारणं किमिति तत्परंपराविद्भिः विवेचनीयं भवति।

## भावत्रातीवृत्तेः सम्पादनसमस्यायां किञ्चिन्निवेदनम्

जैमिनीयश्रौतस्य मूलं केवलमग्निष्टोमप्रकरणान्तं श्रीखास्ट्रा द्वारा मुद्रितमुपलभ्यते। नातः परं किञ्चिदस्य मूलसूत्रपाठः क्वचिदुपलभ्यते। भावत्राती तु वृत्तिः मूलप्रतीकैः सह समस्तैव लब्धा वर्तते।

भावत्रातीजैमिनीयश्रौतवृत्तेः विश्वस्मिन्नपि विश्वे केवलमेकैव हस्तलिखिता प्रतिः सरस्वतीविहाराध्यक्षैः श्रीलोकेशचन्द्रमहोदयैः प्रतिलिपिरूपेण अलाभि मद्रपुरतः।

अस्याः प्रतेः पाण्डुलिपिकोषः स्खलितिबहुलः नैकेषु स्थलेषु त्रुटितपाठश्चावर्तत। अतोऽस्य सम्पादनविधौ अशुद्धपाठानां यथोचितं यथाप्रसङ्गं समुचितीकरणे च भूयानेव प्रयासः समपेक्ष्यत। तथापि तत्सम्बन्धिनां नैकेषां श्रौतसूत्राणां ब्राह्मणानाञ्च साहाय्यमुपलभ्य भूयांसः पाठाः समुचितं संशोध्य मूले स्थापिता वर्तन्ते। तत्स्थानीया अशुद्धा असङ्गताश्च पाठा मूलस्याधोभागे टिप्पणे स्थापिताः सन्ति। यत्र च कतिचित्स्थलेषु मम बुद्धिः कुण्ठां गता तत्र पाठस्यान्ते प्रश्नचिह्नं ? विलिख्यते। श्लोकास्तु प्रायस्त्रुटितपाठा अशुद्धाश्च गोचरीभवन्ति। ते मया वृत्तिमनुरुध्यैव शोधिताः सन्ति। त्रुटितो भागस्तु नापूर्यत क्वापि।

पर्यध्यायेषु प्रथमत आतृतीयाध्यायपरिसमाप्तिमध्यायक्रमो लुप्तो वर्तते । एतदन्तरे भूयान् मूलपाठोऽपि त्रुटितो वर्तते । अतस्तृतीयाध्यायं यावत् अध्यायक्रमदर्शनं नास्ति ।

तृतीयाध्यायसमाप्तावेव 'इति तृतीयाध्यायः' इति सङ्केतः कृतो वर्तते । अत्र स्थले कियान् भागस्त्रुटित इत्यवगन्तुं नैव पारितम् । केवलं तृतीयाध्यायसमाप्तौ द्वितीयतृतीयखण्डौ समवेतावेव समाप्तिं यातौ । तत्र त्रुटितस्थलो बिन्दुभिः पूरितो वर्तते ।

भगवत्कृपया विदुषामनुग्रहेण प्रयासः सफलो ऽभूत् । अस्य ग्रन्थस्य मुद्रणे ईक्ष्याणां निरीक्षणं केवलमसहायेन मयैव अकारि । इत्यतः क्वचिद् ईक्ष्यगतानामशुद्धीनां विरलः पातोऽपि सम्भाव्यते । तद्विधो च मर्षणीयैव मम अगतिर्विद्वद्भिर्दयालुभिरिति साञ्जलिः याचे ।

## आभारप्रदर्शनम्

अन्ततश्चाहं सुरसरस्वतीप्रणयिनां, श्रीसरस्वतीविहारजीवातुभूतानां, सुरभारतीसमुद्धारसमर्पितसमस्तजीवनानां, भारतीयसंस्कृतिसंरक्षणविचक्षणानाम्, अद्य तु परमेशप्रीत्येव पारे ब्रह्मणि लीनानां महनीयकीर्तीनामाचार्यप्रवराणां डाक्टरश्रीरघुवीरमहोदयानां प्रभूतमाभारमावहामि यैरहं गीर्वाणवाणीस्नेहाप्लुतेनान्तरात्मना एतस्मै श्रेष्ठतमाय कर्मणे संप्रचोदितो ग्राहितश्चास्य ग्रन्थरत्नस्य सम्पादनभारम् । मया तु सुरवाणीवशम्वदेन तेषामेव महात्मनां पूताशासाहाय्यमवलम्ब्य लक्ष्यं नीत एष भार इति चेतसा प्रसीदामि । परमेतत्प्रेरयितारो नाद्य भुवं विभूषयन्तः स्वमभीप्सितं पूर्तिं गतं विलोकयन्ति इति खिद्ये च । मन्ये, अमरपदवीं प्रपन्नाः सुरसंसदमास्थिता एव पुण्यकीर्तयः परमं प्रमोदं भजन्ते पूर्तिं विलोकयन्तः ।

अद्य तु तत्कांक्षितभारग्राहिणः तन्नयनानन्दकरा मनीषिप्रवराः सरस्वतीविहारधुरन्धरा विद्वद्वरा डाक्टर श्री लोकेशचन्द्रमहोदया एव अमरसरस्वतीरागवतां परमस्नेहभाजनानि प्रचरन्ति, यैः परमप्रियस्य निजपितुः परमाभीप्सितं पूरयद्भिः एतद् ग्रन्थरत्नं सरस्वतीविहारसंस्थातः प्रकाशं नीत्वा पितुरिव स्वकीर्तिरपि दिगङ्गनाङ्गेषु कस्तूरिकालेपं कारिता ।

विनयग्राहिणामेषां सुरसरस्वतीस्नेहं कैर्वचोभिः प्रकटयितुं प्रभवामि । अद्यावधि वैदिकसाहित्यप्रणयिनामपि श्रवणपदवीमनागतस्यैतस्य दुर्लभस्य कल्परत्नस्य भावत्रातीवृत्तिद्युतिराजितस्य प्रकाशनेन न केवलं वेदविद एव तोषिता अपि तु दश पूर्वे दशापराश्च पितरोऽपि पुण्यलोकस्थाः प्रीणिता इति मन्ये ।

अहं हि सुरभारतीविलासोल्लासरसां लोकेशप्रेम्णैव भुवमवतीर्णां शारदामिव परां श्रीशारदादेवीं विद्वद्वन्द्यां हार्दैः सौभाग्याशंसनवचोभिः सभाजयामि, यया अस्य ग्रन्थप्रदीपस्य प्रकाशने सुस्निग्धा हार्दाः स्नेहाः प्रत्यर्पिताः ।

इन्द्रप्रस्थे
माघशुक्लश्रीपञ्चमी २०२२ वि०

विदुषां स्नेहप्रवणः
प्रेमनिधिशास्त्री वेदाचार्यः

# विषयानुक्रमः

१. अग्निष्टोमप्रकरणम्

ओं हरिः । श्रीगणपतये नमः[1] ।

## [2]श्रीभवत्रातेन विरचिता जैमिनीयश्रौतसूत्रवृत्तिः[2]

नमस्त्रिणेत्राय जितात्मजन्मने विजन्मने जन्मनिवृत्तिहेतवे ।
[3]नभस्वदाकाशकृशानुमेदिनीजलेन्दुभास्वद्यजमानमूर्त्तये ॥ १ ॥

जिगाय वेदानपि यः स्वतेजसा विवेद च व्यास च वेदसागरम् ।
परावरज्ञः स पराशरात्मजो मया महात्मा प्रणिपत्यते[4] मुनिः ॥ २ ॥

वेदार्थतत्त्वामलदर्पणं यश्चकार लोके ततकीर्तिशास्त्रम् ।
ज्ञानैकधाम्ने विदधामि तस्मै कृताञ्जलिर्जैमिनये नमस्याम्[5] ॥ ३ ॥

ध्यानेनारमयत्तरां[6] त्रिणयनं सोमेन यो वासवम् ।
विप्रान् वेदतदङ्गतत्त्ववचनैर्वित्तेन विद्वज्जनम् ॥
वन्दे ब्रह्मविदं द्विजन्मतिलकं तं ब्रह्मदत्ताह्वयम् ।
यत्पादाम्बुजसेवनोपजनितप्रज्ञालवः[7] प्राञ्जलिः ॥ ४ ॥

यदधीना[8] शिवप्राप्तिरिहामुत्र च देहिनाम् ।
तस्यै विद्वत्समितये नमः क्षपितपाप्मने ॥ ५ ॥

समे गायत्रममृतं सामवेदार्णवामृतम् ।
यस्मादानशिरे मर्त्या ब्रह्मणो विबुधा इव ॥ ६ ॥

मुनेर्ब्रह्मनिधेस्तस्य काश्यपस्य महात्मनः ।
बहवः प्रथिता वंशा विवस्वत इवांशवः ॥ ७ ॥

तेषु यस्याभवद् ऋषिर् मठरो मण्डनं परम् ।
मधुः संवत्सरस्येव मणिः फणिपतेरिव ॥ ८ ॥

अस्मिन् संजज्ञिरे वंशे सामगा गुणशालिनः ।
..............................सिंहा इवार्णवम् ॥ ९ ॥

...............................................

तस्य पुत्रो बुधसमः सामर्ग्यजुषपारगः[9] ॥ १० ॥

अवनीन्द्रैरबन्ध्यास्त्रैः शिरसा धृतशासनः ।
श्रुतिस्मृत्यर्थतत्त्वज्ञो धर्मकर्मसु दक्षिणः ॥ ११ ॥

---

[1] अतः परम्-अविघ्नमस्तु । जैमिनये नमः इत्यधिकः पाठः कोषे दृश्यते
[2] को. भवत्रात्रा विरचितं जैमिनीयश्रौतसूत्रभाष्यम् [3] को. नन्दस्वदाका° [4] को. प्रणिपत्य ते
[5] को. नमः स्याम् [6] को. ध्यानेनारमयत्तरं [7] को. तत्पादाम्बुज°
[8] को. यदधीनं [9] को. सामर्ग्यजुषु°

द्विजन्महितलाभाय द्विजन्मभिरुपाश्रितः ।
आसीदनवमोत्साहः सर्वेषु खलु जन्तुषु ॥ १२ ॥

मातृतुल्यदयो नाम मातृदत्त इति श्रुतः ॥ १३ ॥

पराकाष्ठां गतवतः स सुतां श्रौतकर्मणः[१] ।
विश्वामित्रजमुख्यस्य ब्रह्मदत्तस्य लब्धवान् ॥ १४ ॥

तस्य जन्मनि यस्तेन स भवत्रात इत्यभूत् ।
स स्ववागनुसृत्यैव व्याकरोत्यध्वरागमम् ॥ १५ ॥

श्रुतिविहितानां ज्योतिष्टोमादीनां क्रियाविशेषाणां नित्यनैमित्तिककाम्यानां तदधिकृतैः पुरुषैरवश्यानुष्ठेयत्वाद् ऐदंयुगीनानाञ्च पुरुषाणां श्रुत्यालोचनेनैव सम्भवति[२] । तिसृणामवयवत्वात्[३] । बह्वीषु च शाखासु सङ्कीर्णानां विधीनाम् एकशाखाध्यायिभिरनुपलक्ष्यमाणत्वाद्, बहुशाखाध्ययनक्षमायाश्च [४]मेधायाः कलायाः कस्यचिदप्यविद्यमानत्वात्[४], क्रमादेश्च विशेषणस्य केषुचित् पदार्थेषु श्रुत्यनुमेयस्य दुर्ज्ञानत्वाद्, अन्यप्रकरणपठितानाञ्चान्यस्मिन् प्रकरणे केषाञ्चिदङ्गानामनुष्ठानस्येष्टस्य ज्ञातुमशक्यत्वात्, मन्त्रलिङ्गज्ञापितानाञ्च कतिपयानाञ्च विधीनामल्पमतिभिरिदानीन्तनैरपरिज्ञायमानत्वाद् भुवनानुग्रहपरैराचार्यैः जैमिनिप्रभृतिभिः बह्वीनां शाखानां पारदृश्वभिः स्वतपोबलोपलब्धतत्वावगमैस्त्रय्या[५] विधिवैदिकं क्रियामार्गम् अनुष्ठातारोऽनुतिष्ठेयुरित्येतदर्थं सर्वविधिपदार्थोपसंहारेण यज्ञशास्त्राणि प्राणीयन्त[६] । तेष्विदमुद्गातृपदार्थप्रकाशनपरमाचार्येण जैमिनिना प्रणीतं शास्त्रम् । तत्र सर्वक्रतुप्रकृतित्वाद् ब्राह्मणेन च प्रथमविहितत्वाज्ज्योतिष्टोमोऽग्निष्टोमः प्रथमं प्रारभ्यते ।

नन्वग्निहोत्रं प्रथमं विहितं प्रथमं च प्रयुज्यते, सत्यमेतत्, किन्तु [७]अग्निहोत्रे औद्गात्रस्या[७]भावादुद्गातृपदार्थव्याचिख्यासया चास्य सूत्रस्य प्रणयनादग्निहोत्रं न प्रारभ्यते ।

नन्वौद्गात्रादन्यदपि यच्छ्रुतौ विधीयते तत् सूत्रेष विवरितव्यम्, को नेत्याह । औद्गात्रमेवास्मच्छ्रुतौ कार्त्स्न्येन विधीयते । [८]अन्यदाध्वर्यवादि किञ्चित्किञ्चिदितरवेदविहितमनुवादरूपेणाभिधीयत इति मन्यामहे । तथा हीदं वचनमुपपद्यते । तदाहुः यदृचा होतृत्वं क्रियते यजुषाध्वर्यवं साम्नोद्गीथोऽथ केन ब्रह्मत्वं क्रियत [९]इत्यनया त्रय्या[९] विद्यया क्रियत इति ब्रूयात् (श. ११.५.८.७) इति । अत्रर्गादिभिः शब्दैर्वेदा एव[१०] विधीयन्ते, त्रय्या विद्ययेत्यत्रैव दर्शनात् । तस्मात् सामवेदेनौद्गात्रमेव विधीयते । तदेव सूत्रेणापि वक्तव्यम् ।

अथवाग्निहोत्रस्यार्त्विज्यमधिकृत्य ऋत्विजामेकः इति शौनकेनोक्तत्वाद् ब्राह्मणे च प्रयत्नेनोक्तत्वादग्निहोत्रस्यापि विधिः स्यात् । क्रतुश्रुतावेव कृत्स्नं विहितमिति नात्र कथ्यते । यत्किञ्चिच्छ्रुतावविहितमग्निहोत्राङ्गं तदुत्तरत्र अग्न्याधेयसंबन्धेन विधायिष्यते । नन्वग्न्याधेयपूर्विका[११] सर्वकर्मणां प्रवृत्तिः । अस्ति चौद्गात्रमग्न्याधेये, अतस्तदेवादौ वक्तव्यम् । नेति ब्रूमः । न ह्यौद्गात्रमग्न्याधेयिकमस्मच्छ्रुतावस्ति ।

---

[१] को. सोऽथकर्मणोः [२] को. संयन्ति [३] को. तिसृणामनवयवायत्तत्वात्
[४] को. मेधापरः कस्यचिदपि कलाया अविद्यमानत्वात् [५] को. °गमैस्त्रैषा
[६] को. प्राणीयन्तः [७] को. अग्निहोत्रमौद्गात्रस्या° [८] को. अन्यर्यवादि, अत्र पाठः त्रुटितोऽवभाति
[९] को. इत्यग्नयात्रर्थं ? [१०] को. एवं [११] को. °धेयपूर्णिक

अग्न्याधेयं तु प्रदर्शितमेव। तद् 'यदेतदग्नीन् मन्थन्ति'[1] (जै. ब्रा. १.१) इत्यारम्य कतिपयैर्वाक्यैस्तत्राग्न्याधेयौद्गात्रस्य अस्मच्छ्रुतावसतः प्रथमाभिधानमसदादित्वं सूत्रस्यामङ्गलमिति कृत्वा न क्रियते।

अथवा ब्रह्मा सामानि गायेत् इति वक्ष्यमाणत्वादौद्गात्रमग्न्याधेये वैकल्पिकं सामगानम्। यत्तु नित्य औद्गात्रमेव भवति, तेनैव प्रारम्भो युक्त इति कृत्वा ज्यौतिष्टोमिकेनैव[2] कर्मणा सूत्रं प्रारभ्यते। तस्येदमादौ वाक्यं सोम इति।

ननु प्रतिज्ञाय प्रारब्धव्यम् इदं वक्ष्यामः इति। विवक्षितस्य अर्थस्य प्रतिज्ञायां कृतायाम्, इदमनेन वक्ष्यत इत्यवहितमनसां प्रतिपत्तॄणां[3] प्रतिपत्तौ लाघवमुपजायते। दृश्यते च शास्त्रादौ प्रतिज्ञा—अथातो विद्ध[धि ?]व्यपदेशे सर्वऋत्वधिकारं यज्ञं व्याख्यास्यामः। अथातो धर्मजिज्ञासा इति च। नायमेकान्तो यत् प्रतिज्ञा कर्तव्येति। प्रतिज्ञातमपि यदि न सम्यग् व्याख्यायेत दुर्बोध एवार्थो भवति। अप्रतिज्ञातमपि साधु वर्ण्यमानमर्थं सद्य एव श्रावकाः प्रतिपद्यन्ते। अल्पीयस्तु प्रतिपत्तिलाघवमस्त्येव प्रतिज्ञाकरणे। तदर्थं केचिदाचार्याः प्रतिजानन्ति, केचिद् ग्रन्थलाघवार्थम् अप्रतिज्ञायैव शास्त्राणि प्रारभन्ते। दृश्यते हि—आग्नेय्याग्नीषोमीयं[4] च पुरोडाशावासाद्य होतारमामन्त्रयन्ते, वृद्धिरादैच् इत्येवमादि शास्त्राणि। [5]श्रुतावपि चोभयं[5] दृश्यते—सावित्रं पूर्वेद्युः पशुबन्धे इति। अथैष उपदेशः इति। श्रुत्यनुकरणार्थमाचार्यो ऽप्युभयं करोति। यथात्र न प्रतिजानाति, प्रतिज्ञास्याति चाग्न्याधेयादिषु, तस्मादप्रतिज्ञानमदोषः[6]। अलमतिप्रसङ्गेन। सूत्रं व्याख्येयम्—

**सोमप्रवाकमागतं प्रतिमन्त्रयेत महन्मे ऽवोचो भगं मे ऽवोचः पुष्टिं मे ऽवोचो यशो मे ऽवोच इति। अथैनमाह कच्चिन्नाहीनः। कच्चिन्नानूद्देश्यः। कच्चिदन्यस्तमार्त्विज्यम्, के याजयन्ति। का दक्षिणा इति। तस्य त्रीणि मीमांसेत जन्मकर्मर्त्विज इति। एतान्येव यजमान ऋत्विजां मीमांसेत। तदाहुः को ऽहीन इति। अतिरात्रः प्रथमो ऽहीन इत्याहुः। नहि सो ऽहोरात्रयोर्हीयते किञ्चिदिति। तदानध्यायो भवति। अनूद्देश्येन न याजयेद्, यत्र स्वन्तःशवो ग्रामो भवति। अन्तःशव एष यज्ञो योऽनूद्देश्यः इति। न्यस्तमार्त्विज्यं न कुर्याद्। ते यदेव पूर्वः परिचक्षाणो न्यस्यात्तदेव परिचक्ष्मह इति। अथापि न्यस्तमित्येतेनैव। के याजयन्तीति। अनूचाना एवानूचानं बन्धुमन्तो बन्धुमन्तं सुचरितिनः सुचरितिनम् इति। कृष्णजन्मानं न याजयेत्। पापकर्माणं न याजयेत्। कृष्णजन्मभिर्ऋत्विग्भिः सह न याजयेत्। पापकर्मभिः सह न याजयेत्। का दक्षिणा इति। न दक्षिणाः पृच्छेदिति ह स्माह शाट्यायनिर् विक्रयस्यैतद् रूपमिति। पृच्छेदिति ह स्माह ताण्ड्य एतत्फलो वै यज्ञो यद्दक्षिणा इति। स यदि याजयिष्यन् स्यादभिद्रवेद्। स यद्यदीक्षितं यक्ष्यमाणं गच्छेदुत्तरत उपविश्य प्रवाचयेत। यजमान एवात ऊर्ध्वमभिद्रवति परिवेषणाय।**

---

[1] को. °दग्नीस्मृञ्चति०   [2] को. ज्यौतिष्टौमिके०   [3] को. प्रतिपत्तृणां

[4] को० आग्नेयाग्नीषो०   [5] को० श्रुतावच्चं भयं   [6] को. °मदोषम्

तत्र सोमं प्रवक्ति प्रब्रवीतीति वा सोमप्रवाकं तमात्मानमाभिमुख्येन गतमुद्गाता प्रतीक्ष्य महन्मे ऽवोचः (तां. ब्रा. १.१.१) इत्येतन्मन्त्रं जपेत् । अयं तावत् समुदायार्थः, विस्तरेण च वर्ण्यते । सोमो यज्ञो मख इति पर्यायः । सोमद्रव्यकत्वात् सोमशब्दो यज्ञे प्रवर्तते । स च सर्वेषु एकाहीनसत्रेषु विशेषेण प्रवर्तमानो ऽपि ज्योतिष्टोममेवाभिसन्धायात्र प्रयुज्यते । तस्यैवात्र वक्ष्यमाणत्वात् । सोमेनासौ यक्ष्यते, तस्य त्वयौद्गात्रं कर्तव्यमिति, य उद्गातारं प्रब्रवीति स सोमप्रवाकः । न स यः कश्चित् सोमो विद्यत इत्येतन्मात्रं प्रब्रवीति । उत्तरत्र हि अनूचानैरेव सह याजयेदिति आर्त्विज्यसंबन्धमेव वक्ष्यते । ननु सोमप्रवाकं प्रतिमन्त्रयेतेत्येतावतार्थस्य सिद्धत्वादागतशब्दो ऽनर्थकः । नानर्थकः । शय्यातो वै मानव इत्येतदनुवाकप्रदर्शितस्य स यद्यदीक्षितम् इति वाक्येन अत्रापि विधास्यमानस्य स्वयमेवोद्गानार्थमभिगमनस्यानभिप्रेतत्वप्रदर्शनार्थत्वात् । अथवा सोमप्रवचनस्यानियतकर्तृत्वमागतशब्देन ज्ञाप्यते, य आगतस्तं प्रतिमन्त्रयेतेति ।

नन्वनिर्देशनादेव[1] सोमप्रवाकस्यानियतत्वं सिध्यति, नैवम् । अनिर्देशे यजमान एव सोमप्रवाक इति शङ्क्येत । । स ह्यात्मन आर्त्विज्यं कारय [यितुम्] आतुर ऋत्विजः स्वयमेवाभिगम्य वक्तुमर्हति । न यः कश्चिद् । अनातुरेणैव [2]प्राहेति तु[2] ? तत्र यजमानो वा अन्यो वा सोमप्रवाक इत्यागतशब्देन ज्ञाप्यते ।

अथवोद्गातुः सत्रे यजमानस्य सतो ऽप्रार्थितो ऽपि न तत्वादस्य विधेरभावो न्याय्यः[3] । तज्ज्ञापनार्थम् आगत इति प्रार्थयितुमागतं, नान्यमिति । कथं पुनरयाजयिष्यता विवक्ष्यमाणैः कारणैः प्रतिमन्त्रणीयम् उत याजयिष्यतैव । उभाभ्यामिति ब्रूमः । यदि हि याजयिष्यतैवाभविष्यत्, स यदि याजयिष्यन् स्यादित्यत्रैव प्रतिमन्त्रणं व्यधास्यत[4] । अयाजनबुद्धिश्च याजने दोषज्ञानादुत्पद्यते । कच्चिन्नाहीन इति पृष्ट्वा तत्प्रतिवचनेन दोषादोषौ ज्ञायेते ।

न च पूर्वविहितं प्रतिमन्त्रणमकृत्वाप्रष्टुं[5] युक्तम् । अथैवमुच्येत, प्रोक्ते सोमे तदानीमेव प्रतिमन्त्रणमकुर्वन् कच्चिन्नाहीन इत्यतो ऽन्येनैव प्रकारेण गुणदोषान् अयाजने विज्ञाय ततः[6] प्रतिमन्त्रयेत न वेति । तदयुक्तम् । नित्यमन्येनैवोपायेन याजमानदोषाभावे ऽपि विज्ञेये सति तदर्थानामेषां प्रश्नानामानर्थक्यप्रसङ्गात् ।

न च याजनमकरिष्यतापि प्रतिमन्त्रणे क्रियमाणे किञ्चिद् विरुध्यते । महन्मे ऽवोचः इति मन्त्रेण हि सोमस्य महाभाग्यं कीर्त्यते[7], न च तावता याजनमभ्युपगतं भवति । तस्मात् प्रोक्ते सोमे ऽविचार्यैव गुणदोषान् प्रतिमन्त्रयेत । किन्तु यदि पूर्वमेव विज्ञातमयाजनकारणं, प्रोक्ते सोमे बुद्धौ प्रवृत्ते तदा प्रतिमन्त्रणे ऽपि नादरः कार्यः । व्यवसितत्वादयाजनस्य । सोमप्रवाकशब्दो [8]ऽ कोऽन्यः कादिविधिलक्षणः[8] । किं वा लक्षणवादेन, श्रुतिरेवात्र लक्षणम् ।

अथ ... इति । अथेत्यानन्तर्येऽर्थे । प्रतिमन्त्रणानन्तरमेनं सोमप्रवाकं कच्चिन्नाहीन इति निगदेन पञ्चार्थान् पृच्छति ।

---

[1] को. नन्वनिदर्शनादेव [2] को. प्रहेतु ? [3] को. न्यायः
[4] को. व्याधास्यते [5] को. °मकृत्या° [6] को. तन्तः
[7] को. कीर्त्या ते [8] को. कोन्यं क्वादि वि°

पाठक्रमादेवानन्तर्यसिद्धेरथशब्दो ऽनर्थकः। नानर्थकः। अतिक्रम्य पाठक्रममर्थक्रमेण पूर्वं प्रतिमन्त्रणात् प्रश्नस्य व्रजतो ऽनिवृत्यर्थत्वात्। अथवा सर्वत्रापि न किञ्चिदर्थाधिक्यमथशब्देन क्रियते। अलङ्करणमेवानेन लौकिकवैदिकानां वाक्यसमुदायानां प्रायेण क्रियते। यथा—अथाधिश्रयति, अथावद्योतयति। अथवावृत्या नयतीति। यथा च—स्नातवन्तस्तीर्थे वयम्, अथ प्रविष्टा गृहम्, अथ भुक्तवन्तः इति पाठक्रमादेव हि प्रयोगक्रमः सिध्यति। एवं सिद्धस्यैव क्रमस्य दृढीकरणमथशब्देन क्रियत इति व्याख्येयम्।

कथं [1]पुनराहेति पृच्छत्यर्थो[1] भवति, प्रश्नानामेषां दर्शनात्, अनेकार्थत्वाच्च धातूनां पृच्छत्यर्थोऽयं [2]मन्त्रकल्पे कल्प्यते[2], शब्दार्थत्वसामान्यादनयोरपि सुकल्प्यमेवैतत्।

विहितस्यैवार्थस्यानुष्ठानार्हत्वादविधायकत्वाच्च लटः[3] ब्रूयादिति लिङैव वक्तव्यम्। नात्र लिङः प्रयोजनम्। कुतः। न कल्पसूत्राणि क्रियमाणानि विधिपराणि। तर्हि श्रुतिविहिता एव क्रियाविशेषाः क्रमादिपरिज्ञानार्थमनुक्रम्यन्ते। लटैव चायमर्थः सिध्यति, अतः सूत्रे विधिशब्दा न दृश्यन्ते। यत्र तु क्वचिद् दृश्यन्ते यथा वा पूर्वस्मिन्नेव वाक्ये, तत्राप्यविवक्षितो विध्यर्थः इति मन्तव्यम्।

अथवा[4] ये श्रुतौ प्रत्यक्षविहिताः पदार्थास्ते सूत्रे लडन्तैः सूत्रैर्निर्दिश्यन्ते। ये त्वविहिताः श्रुत्या लिङादिभिरुपादीयन्ते ते लिङादिभिः शब्दैरत्र विधीयन्त इति ग्राह्यम्। ये तु प्रत्यक्षविहिता अपि विधिशब्दैरेवात्र निर्दिश्यन्ते पदार्था यथा—तमुत्तिष्ठन्तमारभ्यानूत्तिष्ठेत्, बृहत् स्तोत्रं प्रतिगृह्य ब्रूयात्, पृथिव्यां हस्तौ स्याताम् इत्येवमादयस्तेष्वयं परिहारः, श्रौतान्येवैतानि वाक्यानि प्रक्षिप्यन्त इति।

ननु श्रुतावपि क्रियाविधौ लडेव प्रायेण दृश्यते यथा—औदुम्बरीमन्वारभते तं प्रोहति, पृथिवीमभिमृशति इत्येवमादिषु। नेदं लटो दर्शनम्। ल (ड्व) दियं छान्दसी विधायिका विभक्तिः। तस्मात् साधूक्तं—श्रुतिविहितानां सूत्रेणानुक्रमणमिति।

कच्चिन्नाहीनः[5] इति पञ्च प्रश्नास्तेषामयमर्थः—यो भवता प्रोक्तः सोमः स कदाचिदहीनो न भवति। कच्चिच्चायमनूद्देश्यो न भवति। कच्चिदस्य यज्ञस्यार्त्विज्यं केनचिद् अन्यस्तम् अप्रत्याख्यातम्। केन[6] यज्ञेन याजयन्ति। काश्चास्य यज्ञस्य दक्षिणा इति। प्रतिवचनस्याभावे प्रश्नस्यानर्थक्यप्रसङ्गादचोदितमपि प्रतिवचनदानम् अर्थात् सोमप्रवाकेन कर्तव्यम्। नाहीनः, नानूद्देश्यः, न न्यस्तमार्त्विज्यम्, देवदत्तः कृष्णरातः शिवगुप्तश्च याजयन्ति, द्वादशशतं गावो दक्षिणा इति वा यथार्थम्।

**तस्य…इति**। तस्य यजमानस्य जन्मकर्मर्त्विज इत्येतानि त्रीण्युद्गाता विचारयेत्। दुष्टानदुष्टानिति। जन्मेति मातापितरावभिप्रेतौ, कर्म प्रसिद्धमेव ससमाचारम्। ऋत्विजस्तु ये यजमानस्य प्रतिनिबद्धाः पूर्वेषां कर्मणां कर्तारस्ते तु मीमांस्यन्ते।

ननु प्रकृतत्वात् सोमप्रवाकस्यैव तस्येति ग्रहणं युक्तम्, नैवम्। यजमानस्य च जन्मादिविचारेणात्रार्थो भवति न सोमप्रवाकस्य। अर्थतश्च यजमानस्यैव ऋत्विजो ग्राह्याः तेषामेव मुख्यत्वप्रतिपादनार्थत्वात्। ततश्चैवं ग्राह्यम्।

---

[1] को. पुनराभिः वृद्धचर्थो [2] को. °कल्प्यते कल्प्येत [3] को. लुटो
[4] को. यदा [5] को. अच्छिन्नाहीदा [6] को. केन न

यद्यपि यजमानस्य जन्मादीनीमानि त्रीणि सम्मतान्येव लोके कथ्यन्ते तथापि बहुविधैरुपायैरसकृन्मीमांसेतैव। ये तु दोषाश्चापरोगादयस्ते यदि सकारणमाशङ्क्येरन्, सन्तीति तत एव मीमांस्येरन् नान्यथेति। ऋत्विजाञ्च[1] मीमांसा न केवलं गुणदोषग्रहणार्थैव, तैरपि सृष्टस्यानभ्युपगमार्था विहिता सा[2]। ते जन्मकर्मर्त्विज इत्येतान्येव त्रीणि[3] मीमांस्यन्ते[4]। निपातद्वयं किमर्थम्, इदमुच्यते—असति[5] निपातद्वये [6]यजमान ऋत्विजां[6] मीमांसते, नोद्गाता यजमानस्येति पूर्ववाक्यार्थप्रतिषेधकमिदं वाक्यं भवेत्, विधिद्वयान्मिथो वा वाक्यं विकल्प्येत। यथा—उत्तरीयमुपानहौ छत्रमिति[7] देवदत्ताय दातव्यम्, एतद् विष्णुमित्राय[8] दातव्यम्, इत्युक्ते देवदत्ताय प्रतिषिद्धं मत्वा तद् विष्णुमित्रायैव दीयते ऽनियमेन वा द्वयोरेकस्मै। तद् एवशब्देन निवर्त्यते एतान्येव यजमानस्य मीमांसितान्येव। एव शब्दे चासति[9] एषामेव त्रयाणामवधारणमाशङ्क्येत, एतान्येव मीमांस्यानि नापरे दोषा इति। [10]तन्निपातानामनेकार्थत्वाद् एवशब्देन[10] समुच्चयार्थेन निवर्त्यते। एतानि चैव त्रीणि मुख्यानि अन्ये च दोषा इति।

ननु यथा पूर्वस्मिन् वाक्ये तस्येत्युक्तम्, अर्थाद् यजमानस्येति गृहीतम्, एवमत्रापि स इत्येव वक्तव्यम्, अर्थादेव यजमान इति गृह्णीमः। नात्र यजमानस्य अर्थाद्ग्रहणं शक्यते। एष हि छन्दोगानां राद्धान्तः अनादिकर्तृकं कर्म उद्गात्रा कर्तव्यमिति। अग्न्याधेयाधिकारे चायमर्थः साधु प्रतिपादयिष्यते। तस्माद् यजमानग्रहणमचोद्यम्। किमिदमुद्गातृकर्मवाचिनि सूत्रे याजमानं कर्मोच्यते, अत्र ब्रूमः—इह यज्ञे पञ्च पदार्थाः। हौत्रम्, आध्वर्यवम्, औद्गात्रं, ब्रह्मत्वं, याजमानमिति। तेषां त्रयो हौत्रादयः त्रिभिर्वेदैः व्यवस्थया विधीयन्ते, तस्मादचोद्यं यजमानकर्मवचनम्। एवमियमृत्विग्यजमानगुणदोषविषया मीमांसा कृता, तस्याः प्रयोजनमुत्तरत्र वक्ष्यते।

**तदा···इति**। तत्राहुः को ऽसावहीनः, यः पूर्वं पृच्छकाभिप्रेत इति। अहीनयाजने दोशमाशङ्क्य पृष्टं, कच्चिन्नाहीन इति। प्रसिद्धानां च द्विरात्रादीनामहीनानामार्त्विज्यं कर्तुं युक्तम्। एवं द्वादशाहब्राह्मणे हि—तदाहुर्याजयितव्यं [11]द्वादशाहेन न वा[11] इति, नेति ब्रूयात् इत्यधिकृत्य तस्माद् द्वादशाहेन नैव याजयेदिति पूर्वमुक्त्वा तदु वा आहुर्याजयितव्यमेव इति यजमानपक्ष एव स्थापितम्। तस्मात् द्वादशाहेन तावद् याजयितव्यः, तत्प्रकृतित्वात् द्विरात्रादिभिरपि। तस्मादन्यो ऽसावहीनः—यस्यार्त्विज्यं दोषवदिति मत्वा तच्छ्रवणार्थोऽयं प्रश्नः क्रियते तदाहुः को अहीन इति।

**अति···दिति**। इदं पूर्ववाक्यस्य प्रतिवचनम्। अतिरात्रः[12] प्रथमो ऽहीन इत्याहुराचार्याः। [13]न ह्यहोरात्रयोः[13] किञ्चिदपि हीयत इति। प्रथमग्रहणमनर्थकम्। नानर्थकम्। द्विरात्रादीनामप्युपादानार्थत्वात्। अयमर्थः—अतिरात्रः प्रथमो ऽहीनः, प्रसिद्धाश्च द्विरात्रादयः इति रात्रस्याहीनत्वेनाप्रसिद्धेः हेतुरुपादीयते।

नन्वेवमुच्यमाने द्विरात्रादिभिरपि याजनं दोषवत् स्यात्, भवतु, दोषवदेव हि तैर्याजनम्। तथा हि

---

[1] को. ऋत्विजश्च [2] को. स [3] को. त्रीणि मिममानः
[4] को. मीमांसन्ते [5] को. आसक्ति° [6] को. यजमानर्त्विजां
[7] को. वृत्रमिति [8] को. विष्णुदत्ताय [9] को. च सति
[10] को. °र्थत्वत्वादि° [11] को. °हेनानाव [12] को. °रात्रं
[13] को. नहि सो ऽहोरा°

श्रूयते—तस्माद् द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्यै इति। अथवा वैकल्पिकम् अहीनयाजनम्। तद् वा आहुर्याजयितव्यमेव इत्यस्माद् वा वचनात्। तस्माद् द्वादशाहेन न याज्यम् इति परवचनाच्च आचार्येणापि कच्चिन्नाहीना इति प्रश्नवचनकरणात् दोषवत् अहीनयाजनम्। अनूद्देश्यादाविव प्रतिषेधाकरणात् अनुमतं च। तस्मादत्र विकल्प एव युक्तः।

अथापरं व्याख्यानम्। अतिरात्रः प्रथमः। प्रथमप्रयुज्यमानो ऽहीनः, सो ऽमुष्मिन् प्रश्ने ऽभिप्रेतः। श्रूयते हि—तदाहुर्न प्रथमं यजमानो ऽतिरात्रेण यजेत इति। यद्यपि [1]यजमान एवात्र[1] प्रतिषिध्यते, याजनमप्यर्थात् प्रतिषिद्धं भवति। यजनं हीदं प्रतिषिद्धत्वाद् दोषवत्। तत्कुर्वतो याजनमपि दोषायैव स्यात्। तत्परिहारार्थं प्रश्नः क्रियते, किमयं प्रथमसोमो ऽतिरात्रो न भवतीति।

नन्वतिरात्रस्य द्वितीयादावपि प्रयोगे ऽहोरात्रयोरवयवादेकस्मादप्यहीनत्वं हेतुर्विद्यते। ततश्चेदं प्रसजति, सर्वेणातिरात्रेण न याजयेदिति। तत्र प्रथमशब्दो ऽनर्थकः। नानर्थकः। प्रथम एव प्रयोगो ऽहीनो न द्वितीयादिरित्येतदर्थत्वात्। नहि हेतुसद्भावमात्रेण द्वितीयादिप्रयोगो ऽहीनो भवति। वचनात् इदमतिरात्रस्य अहीनत्वम्। तच्च वचनं प्रयोगाश्रयमेव।

ननु असाधारणेन हेतुना भवितव्यम्, सत्यमेतत्। हेतुनैवार्थः साध्यते। तत्र [2]हेतुरसाधारण एव[2] प्रदृश्यते। यथा—अनित्यः शब्दः, कृतकत्वात्। अग्निरत्र, धूमदर्शनात् इति। इह तु वचनेनैवाहीनत्वं सिद्धम्, हेतुस्त्वनैकान्तिको ऽपि। तत्र सत्तामात्रमवलम्ब्य प्रदृश्यते। यथा लोके ह्यैतिह्यप्रमाणसिद्धे सास्नादिमति गोशब्दे गमनाद् गौरिति गमनसद्भावो गोशब्दप्रवृत्तौ कारणं व्यपदिश्यते। न च तावता गोत्वमश्वादेः प्रसजति। यथा च वेदे शूर्पेण जुहोति इति शूर्पं होमकरणत्वेन विधाय तेन हि अन्नं क्रियते इति वाक्यशेषेण अन्नकरणत्वं हेतुरुच्यते। तथापि शूर्पेणैव हूयेत न दर्व्यादिना। एवमत्रापि अतिरात्रः प्रथमो ऽहीनः इत्याहुः। इत्येतावतैव वचनेन प्रथमं प्रयुज्यमानस्य अतिरात्रस्याहीनत्वं सिद्धम्। हेतुस्त्वयं साधारणो ऽप्यहीनशब्दस्यात्र प्रवृत्तिनिमित्तत्वेन प्रदर्श्यते। द्वितीयादेश्च प्रयोगस्य हीनत्वे वचनं न पश्यामः। ततश्चैवं सिद्धम्—प्रथमसोमेन सता अतिरात्रेण न याजयितव्यमिति।

अनू···इति। अनूद्देश्येन यज्ञेन न याजयेत्। यस्मिन् हि देशे अन्तःशवो ग्रामो भवति तत्रानध्ययनं भवति। यज्ञश्चायमन्तश्शवो यो ऽनूद्देश्य[3] इति। व्यवयवमिदं वाक्यम्। अनूद्देश्येन न याजयेदिति प्रतिज्ञा। यत्र तु[4] अन्तश्शवो ग्रामो [5]भवतीति हेतुः[5]। तदानध्यायो भवतीति दृष्टान्तः।

अन्तश्शव एष यज्ञो यो ऽनूद्देश्य इति अयं हेतुः। पुनरयं मन्त्रदेश्यो नाम शुनस्कणस्तोम इति ब्रूमः। स हि मरणकामस्य यज्ञः। ततस्तेन न याजयितव्यम्।

अनूद्देश्यो व्याख्यातव्यः। एवं स इत्यनूद्देश्यो भवति, अन्तश्शवश्चायम्। यज्ञमध्य एव यजमानस्य मरणात्। अथवा—यदि दीक्षितानां प्रमीयेत (तां ९.८.१) इति दीक्षितमरणमधिकृत्य संवत्सरे ऽस्थीनि[6] याजयेयुः (तां ९.८.१३) इति विहितो ऽस्थियज्ञो नाम विद्यते। सो ऽनुदीर्यमाणत्वान्मृतं प्रत्यदेश्यो भवति,

---

[1] को. यजमेवात्र [2] को. हेतुरसाधारणेव [3] को. अदेश्य
[4] को. स [5] को. भवति [6] को. °स्मिन्

अन्तश्शवत्वं च तस्य विद्यते। एवं हि तत्र श्रूयते—स्तोत्रे स्तोत्रे अस्थिकुम्भमुपनिदधाति इति।

**न्यस्त···इति।** न्यस्तं केनचित् प्रत्याख्यातमार्त्विज्यं यस्य यज्ञस्य स यज्ञो न्यस्तार्त्विज्यः, तं न कुर्यात्। इत्थञ्च तत्र प्रत्याचक्षीत, यदेव ते दुष्टं कर्म, पूर्वस्त्वया वृतः, [1]परि इव[1] न्यस्यात्, तदेव ते वयमपि परिचक्ष्मह इति विज्ञातमपि दोषं न वदेत्, एवमेव प्रत्याचक्षीत।

**अथापि···इति।** अथापीति हेतुसमुच्चयार्थः। न्यस्तार्त्विज्यस्य यज्ञस्याकरणे अयमपि हेतुः। न्यस्तमित्येतेनैव शब्देन हेतुना कुर्याद् दोषस्तु विज्ञायेत वा न वा।

**के याजयन्तीति।** यः पूर्वं प्रश्नः के याजयन्तीति सोऽयमनूद्यते। अन्यविवक्षया याजयन्तीति इदमधिकृत्य किञ्चिद् वक्ष्यते इत्यर्थः। अथवा के याजयन्तीति पृच्छता किमभिप्रेतमिति।

**अनू···नमिति।** अनूचाना विद्वांसः, प्रशस्तबान्धवाः बन्धुमन्तः, विहिते कर्मणि प्रवर्तमानाः प्रतिषिद्धान्निवर्तमानाः सुचरितिनः। तत्रैवं योज्यम्—अनूचाना एव ऋत्विजो याजयन्ति। अनूचानमेव यजमानं याजयन्ति। बन्धुमन्त एव ऋत्विजो याजयन्ति। बन्धुमन्तमेव यजमानं याजयन्ति। सुचरितिन एव ऋत्विजो याजयन्ति। सुचरितिनमेव यजमानं याजयन्तीति न्याय इति। अत्रायमर्थः—सर्वेषाम् ऋत्विग्यजमानानामनूचानत्वादिगुणाभिलाषया यस्मात् प्रश्नः कृतस्तस्मादेवं विधा एवर्त्विजो याजयेयुः। एवंविधमेव यजमानं याजयेयरिति।

अनूचानैरेव सह याजयेत्। अनूचानैरेवर्त्विग्भिः सह याजयेत्। नैकेनाप्यनूचानेन। कृष्णजन्मानं न याजयेत्। कृष्णं जन्म यस्य स कृष्णजन्मा। दुष्टजन्मेत्यर्थः। मातापितृदोषेण च जन्मनि[2] दोषः। तस्मादप्रशस्तमातापितृकं न याजयेदित्यर्थः। पापकर्माणं न याजयेत्। पापकर्माणं प्रतिषिद्धसेविनं न याजयेत्।

**कृष्ण···जयेत्।** पापकर्मभिर्ऋत्विग्भिः सह न याजयेत्। अनूचाना एवेत्यादि वचनत एव अनूचानकृष्णजन्मपापकर्मणामृत्विग्यजमानानामप्रशंसातः अनूचानैरेवेत्यादीनि पञ्चापि वाक्यानि अनर्थकानि। नानर्थकानि। यदिव वचनमनादृत्यार्थयशोऽभिलाषादिना निमित्तेनर्त्विजां केचिद् यजमानो वा यज्ञविधौ प्रवर्तेरंस्तत्र[3] स्वयमनूचानत्वादिसंपद्युक्तो ऽपि तैरसम्पर्कार्थं याजनान्निवर्तेत इत्येवमर्थत्वात्। अथवा अनूचाना एवेति श्रौतमेतद्वाक्यमपुनरुक्तता वाच्या।

नन्वनूचानमेव याजयेदित्येतदपि वक्तव्यम्, सत्यमेतत्। अननूचानस्यापि यज्ञप्रसङ्गो विद्यत इति ज्ञापनार्थं नोच्यते। एवं च बह्वृचानां प्रवर्ग्याधिकारे वचनम्—तन्न प्रथमयज्ञे प्रवृञ्ज्यादुपनामुक एवैनमुत्तरो यज्ञो भवति, यः प्रथमयज्ञेन प्रवृणक्ति कामं तु सो ऽननूचानः[4] श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् आत्मा वै व यज्ञः स्यात्तदात्मनैव तद्यज्ञं समृध्यति" इति। अतो हि वचनात् अननूचानस्यापि यज्ञो ऽस्तीति नायुक्तं गृहीतुम्।

**का···इति।** का दक्षिणा इत्यत्र किञ्चिद् वक्ष्यते। न दक्षिणाः पृच्छेदिति ह स्माह शाट्यायनिर्विक्रयस्यैतद् रूपमिति। दक्षिणा न पृच्छेदिति शाट्यायनिराचार्य आह स्म उक्तवान् किल। अयं च हेतुः विक्रयस्य, तद्रूपश्च[5] दक्षिणाप्रश्न इति। यथा लोके पदादीनि विक्रीणन्तं पृच्छन्ति [6]किं भवतादेयमिति[6]। तद्वदत्रापि

[1] को. व [2] को. जन्मनी [3] को. प्रवृत्तेरन् तत्र
[4] को. ऽनूचानः [5] को. तद्रूपा च [6] को. कं भवता देयमिति

आर्त्विज्यार्थं प्रार्थितेन दक्षिणासु पृच्छ्यमानासु विक्रयस्य रूपं भवतीत्यभिप्रायः। तस्मात् का दक्षिणा इति न पृच्छेत्।

पृच्छेन्न इति प्रतिषिद्धस्य प्रश्नस्य पुनः प्रतिप्रसवः क्रियते। पृच्छेद् दक्षिणा इति आह स्म ह ताण्ड्य आचार्यः। अयं च हेतुः, यदेते दक्षिणाः इति कीर्त्यते। एतत्फलो वै यज्ञ इति दक्षिणाफलो हि यज्ञ इत्यर्थः।

ननु स्वर्गादिफलो यज्ञो, न दक्षिणाफलः। सत्यमेतत्। दक्षिणाभिस्तु फलं साध्यते। तत्र साधनभूतासु दक्षिणासु साध्यव्यपदेशो गौणः प्रशंसार्थः।

ननु फलसाधनत्वमपि दक्षिणानां नास्ति, यज्ञस्यैव तदिति। यद्यपि नास्ति, दक्षिणा स्वर्गं लोकं गमयति इति लिङ्गात् सदिवोपचर्यते। तत्रायमर्थः—हीनदक्षिणो यज्ञः फलं न साधयेत्। फलसाधनसमर्थेनैव यज्ञेन याजयितव्यम्। तस्माद्यज्ञस्यैव साफल्यचिकीर्षया दक्षिणाः प्रष्टव्या इति। अथवा। एतत्फलो वै यज्ञः ऋत्विजाम् इति व्याख्येयम्। दक्षिणालाभ एव हि फलं यज्ञेन ऋत्विजां साध्यते, नान्यद्। यदि च दक्षिणाः न स्युः, अकरणीयमार्त्विज्यं स्यात्, तस्मात् प्रष्टव्या एव दक्षिणा इति।

ननु पूर्वस्मिन् वाक्ये प्रतिषिद्धत्वात् अत्र च पुनर्विहितत्वाद् वैकल्पिको दक्षिणाप्रश्नः, नेति ब्रूमः। प्रश्ननिगदे नित्यवच्छ्रुतत्वादनित्य एव प्रतिषेधः। प्रतिषेध इदानीं किमर्थः, द्रव्यलोभेन न पृच्छेदित्येवमर्थम्। एवं चेत्, पुनर्विधिः किमर्थः, असति पुनर्विधौ पूर्वं वचनं प्रतिषेधकमेव केवलं प्रशंस्य गृह्येत, तत् पुनर्विधिना निवर्त्यते। 'वाक्यद्वये ऽप्याचार्यग्रहणं'[1] पूजार्थमेव।

स य···व्रजेत्। स एवं याजने गुणदोषान् मीमांसितवानुद्गाता याजयिष्यन् यदि स्याद्, आभिमुख्येन गच्छेद् यज्ञं यजमानं वा। उक्तदोषसद्भावे याजनप्रतिषेधात् तदभावे याजयिष्यन् भवति। तत्राप्यनियम इति चेन्न। याजनस्यापि षट्कर्मस्वन्तर्भावात् तेषां च ब्राह्मणस्य विहितत्वात्।

ननु यजनदानाध्ययनान्येव स्मृतिकारैर्नियम्यन्ते, न याजनप्रतिग्रहाध्यापनानि। सत्यमेतत्[2]। इत्थं तु याजनादीनामनियमः। यजनादिवत् स्वयं प्रयत्नेन याजनादिषु नावश्यं प्रवर्तितव्यमिति। तस्मादप्रयत्नोपपन्नेषु याजनादिषु दोषाभावे प्रवर्तेतैव। सति दोषे प्रत्याचक्षीत।

स य···प्रयेत।उद्गाता अदीक्षितं यक्ष्यमाणं यदि गच्छेत् तस्योत्तरत उपविश्य तमात्मानं प्रति सोमं प्रवाचयेत। ननु पूर्वमेव सोमः प्रोक्तः[3] किमिदानीं प्रोच्यते, अन्यविषयमेवैतत् सोमप्रवचनम्। यदि स्वयमेवाप्रार्थितो दक्षिणालाभनिमित्तमार्त्विज्यं कर्तुमिच्छेत् तत्रास्य विषयः। अस्ति च श्रुतिवचनम्—तस्मादुद्गातावृत उत्तरतो निवेशनं लिप्सेतैतद्ध अनारुद्धं निवेशनं यदुत्तरतः इति। आवृतस्योद्गातुरुत्तरतो निवेशनं कर्तव्यम्। उच्यते—तदिदमुक्तमुत्तरत उपविश्य प्रवाचयेत इति। स इति चात्र वचनम् एवमेवोपपद्यते, पूर्वस्मादपि वाक्यात् स इति शक्यमनुवर्तयितुम्। [सत्यम्]। अन्यविषयताज्ञापनार्थमेव तस्य [स इति] पुनः प्रयुज्यते। तत्रैवमुत्तरत उपविश्य आत्मानं प्रति सोमस्य प्रवाचने यजिधातुः प्रयुज्यते। ततः प्रोक्ते सोमे महन्मे ऽवोच इत्यारभ्यते।

---

[1] को. °द्वयेष्वाचार्य° [2] को. यत् मे तत [3] को. प्रोक्तं

**यदि···येत्।** दीक्षितं यजमानं यदि गच्छेत्, अभिद्रुत्य आभिमुख्येन तं समीपं गत्वा अभिवादयेत प्रशंसेत्। यज्ञारब्धिः शोभना कृतेति ब्रूयात्।

**यज···णाय।** अस्मादभिवादनात् उद्गात्रा कृतादूर्ध्वं यजमान एव उद्गातारमभिगच्छति। परिवेषणाद परिचरणाय। एवेत्यनर्थकम्। नानर्थकम्। वयसा ज्ञानादिना वा यद्यपि गरीयानुद्गातुर्यजमानः स्यात् तथापि स्वयमेवोद्गातारमभिगम्य सत्कुर्यादित्येतदर्थत्वात्। अत ऊर्ध्वमित्यनर्थकम्। नानर्थकम्। अहरहर् आयज्ञ-परिसमाप्तेरुद्गाता सत्कर्तव्य इत्येतदर्थत्वात्॥

इत्थमुक्तो[1] ऽयमौद्गातृप्रवृत्तौ पुष्कलः क्रमः।
चरन् यदनुरोधेन नाशर्म लभते जनः[2]॥ १॥

इति महोपाध्यायश्रीभवत्रातेन[3] विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ
औद्गातृप्रवृत्तिक्रमो नाम प्रथमः खण्डः

---

[1] को. इत्थमुक्तेयमौ°　　[2] को. न　　[3] को. भवत्रात्रा

# अथ द्वितीयः खण्डः

अथास्मा आसनमाहरन्ति तस्मिन्नुपविशति । अहे दैधिष व्योदतिष्ठान्यस्य सदने सीद यो ऽस्मत्पाकतरस्तस्य सदने सीद निरस्तः परावसुरिति तृणं निरस्यति यत् प्रतिशुष्काग्रं भवति यद्वा प्रतिच्छिन्नाग्रम् । अप उपस्पृश्य आ वसोः सदने सीदामीति सीदति । अथास्मा उदकमाहरन्ति । तत् प्रतिगृह्णाति मयि वर्चो अथो भगमथो यज्ञस्य यत्पयः परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहत्विति । अथास्मै मध्वाहरन्ति । तत् प्राश्नाति चतसृभिरङ्गुलीभिः साङ्गुष्ठाभिः । त्रिः प्राश्नाति मध्वसि मधव्यो भूयासमिति । अथास्मै वाससी आहरन्ति । श्रियै रूपमिति । ते परिधत्ते श्रीरसि श्रीमान् भूयासमिति । प्रवर्तौ स्रजो ऽलङ्करणमित्यस्मा आहरन्ति । अलङ्कृतमेनं वृणीते पर्जन्यो म उद्गाता स म उद्गाता त्वं म उद्गाता दिशो मे प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्य इति । तमुपांशु प्रतिमन्त्रयते । पर्जन्यस्त उद्गाता स त उद्गाताहं त उद्गाता दिशस्ते प्रस्तोतृप्रतिहर्तारौ । सुब्रह्मण्यः कर्मैव वयं करिष्यामः । ओमित्युच्चैः । अथैनं देवयजनं याचति उद्गातर्देवयजनं मे देहीति । तं तथेत्युपांशु प्रतिमन्त्रयते । ओमित्येवोच्चैः । अथास्मा आवसथमुपपन्नाय गामुपाञ्जन्ति । तामुपाष्टां हते पाप्मानमेव तद्धते । अथ यदि गामुत्सृजेत् तामेतेनैवोत्सृजेत्—गौर्धेनुर्हव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्तु ॥ ओमुत्सृजतेति ॥ २॥

अथा···रन्ति । गमनानन्तरमस्मा उद्गात्रे आसनमाहरन्ति यजमानपुरुषाः । बहुवचनप्रयोगादनियमेन यः कश्चिद् यजमानपुरुष आहरति । नावश्यं बहव एव । तस्मिन् सति तस्मिन्नासन उपविशति वक्ष्यमाणक्रमेण ।

अहे···न्नाग्रम् । तस्मादासनदानेन मन्त्रेण यत् तृणं प्रतिशुष्काग्रं भवति यद्वा तृणं प्रतिच्छिन्नाग्रं भवति तन्निरस्यति । प्रतिशुष्काग्रं भवति प्रतिच्छिन्नाग्रं वेत्येतावता सिद्धे यद्वेति ब्रुवन्[1] उभयोरपि सतोरेकमेव निरसनीयमिति ज्ञापयति ।

ननु अयत्नसिद्धमेतत्, असिना परशुना वा छिन्द्यात् इत्युक्ते तयोरेकेनैव हि छिन्दन्ति । न हि तेनैतत् तुल्यम् । नात्र निरसनीयक्रियां प्रति तृणं करणत्वेन चोद्यते । करणविभक्तेरत्राश्रवणात् । कर्मत्वेन तु श्रवणात् तृणमत्र प्रधानम् । निरसनं त्वस्य गुणभूतम् । तत्र तृणभेदे तद्गुणस्य निरसनस्या [ना]वृत्तिः । युक्तं प्रति प्रधानं हि गुणभेदन्यायविदो वदन्ति । लोके च श्वा काको वा निवारयितव्य इत्युक्ते द्वयम-

---

[1] को. ब्रुवन्

प्यागच्छन् निवार्यते, तद्वदत्रापि द्विविधस्यापि सतः तृणस्य निरसनप्रसक्तौ एकस्यैव निरसनार्थं यत्नो ऽयं क्रियते। तृणनिरसनान्यथानुपपत्तेः। शिष्टाचारतः तृणास्तरणमासने सिध्यति।

**अथ***सीदति।** तृणनिरसनानन्तरमप उपस्पृश्यानेन मन्त्रेणासनमुपविशति। अनेनैवोपवेशनविधिना सिद्धत्वात्तस्मिन्नुपविशतीति पूर्वं वाक्यमनर्थकम्। नानर्थकम्। तृणनिरसनस्योपवेशनाङ्गत्वप्रतिपादनार्थत्वात्। उपवेशनमधिकृत्य ह्युक्तं तृणनिरसनं तदङ्गं स्यात्, नान्यथा। अङ्गत्वज्ञापनं[1] च तस्यानावृत्तिर्गुणलोप इत्येवमात्रार्थम्।

**अथास्मा उदकमाहरन्ति।** अथास्मा आसीनाय उदकमाहरन्ति। अवचने ऽपि शिष्टाचारतः तेनोदकेन पादौ प्रक्षाल्याचामति। आहृतेन चोदकेन अवश्यमर्थं कार्यम्। स चायमाचारकः, एष एव ग्राह्यो नान्यः।

**तत्प्रति***दृंहस्वेति।** तदित्युदकमेवोच्यते। पुनरन्यदुदकमाहृतमनयर्चा प्रतिगृह्णाति। ग्रहणचोदनायां हि आहरणमर्थसिद्धं, न तु पूर्वस्मिन् वाक्ये यस्योदकस्याहरणं तस्यैवेदं प्रतिगृह्णातीति वक्तुं युक्तम्। सत्यम्, इत्थमपि वक्तुमशक्यम्, पादप्रक्षालनाचमनयोस्तु लोप एव प्रसजति। तस्मात् पूर्वमेव व्याख्यानं साधीयः। अन्यस्य करणस्यानुक्तत्वात् परेषां च वचनात् अञ्जलिना प्रतिगृह्णाति। आदिग्रहणेनार्थसिद्धेः समस्ताया वा ऋचो वचनमनर्थकम्। नानर्थकम्। ऋचं वदन् प्रतिगृह्णातीत्येतदर्थत्वात्। एष हि न्यायः[2], कर्मकरण-मन्त्रेषु मन्त्रान्ते कर्मारम्भ इति। तथा चोक्तं कौषीतकिना—मन्त्रान्तेन करणेषु कर्मणः सन्निपातनम् इति। तदत्रास्या ऋचः समस्तपाठेन निवर्त्यते। तत्कथं भवति, इदमुच्यते—वचनवैरूप्यं नार्थवैरूप्यं गृह्यते। प्रतीकगृहीतानामन्ते कर्मारम्भः, पठितानामादाविति। तस्मादस्या आदावेवोदकग्रहणमारब्धव्यम्।

सदसस्पतिम् (जै. सं १.१८.७) इत्यस्याश्च सदःप्रपदने ऽस्य व्याख्यानस्य सहकारिप्रत्ययो ऽप्युपो-द्बलको विद्यते। पूर्वया द्वारा सदः प्रपद्यन्ते। स त्वा देवो अनु मा प्रसर्पत। इन्द्र त्रिधातु शरणं (जै. सं. १.२८.४), यत इन्द्र भयामहे (जै. सं. १.२९.२), सदसस्पतिम् (जै. सं. १.१८.७) इति जपन्त इति। तत-स्तत्र तावदेतद् व्याख्यानं युक्ततरम्। तस्मात् तत्सामान्यादत्रापि स्थालीपुलाकन्यायेन एवमेव निश्चेतव्यम्। ऐकस्वर्यार्थं पाठ इति केचिद् व्याचक्षते, तदयुक्तम्। त्रैस्वर्यपठितानां हि करणमन्त्राणामैकस्वर्यं केचिदप्या-चार्या नेच्छन्ति। मन्त्रादौ पुनः कतिपयानां कर्मणामारम्भः परतन्त्रेष्वपि दृश्यते। तत्र क्वचिद् उपलब्ध-स्यैवार्थस्य ज्ञापकबलेन ग्रहणमुपपन्नम्। नानुपलब्धस्य। तस्मादुक्तार्थं एव पाठो, नैकस्वर्यार्थः।

अथवा उदकग्रहण-सदःप्रपदने प्रति लिङ्गसामर्थ्यमनयो ऋचोरस्मिन् कर्मद्वये पाठेन प्रदर्श्यते। तच्च असत्यामपि चोदनायाम् अनयो ऋचोरस्मिन् कर्मद्वये अवगमनार्थम्। तस्माद् गृह्योक्ते ऽपि मधुपर्के अर्घ्य-मुदकं मयि वर्चः इत्यनयैवर्चा प्रतिग्राह्यम्[3]। सदसस्पतिमित्यनयैव तृतीयसवने ऽपि सदः प्रवेष्टव्यम्। एव-मिदं द्विविधं प्रयोजनमृक्पाठस्य।

**अथास्मै मध्वाहरन्ति।** प्रसिद्धं मधुपदेनात्र दध्नो ग्रहणम्। अवचनात् केवलमेव मध्वाहर्तव्यम्। **तत्प्रा***नाति।** तन्मधु चतसृभिरङ्गुष्ठचतुर्थाभिस्त्रिः[4] प्राश्नन्ति। सहाङ्गुष्ठेन पञ्चभिरिति चेन्न। यदि ह्येव-मैषिष्यत[5] सर्वाभिः पञ्चभिरित्येवावक्ष्यत, तदर्थम्[6]। अङ्गुष्ठचतुर्थत्वञ्च प्राशनसौकर्यार्थमव्यवधानार्थञ्च।

---

[1] को. अङ्गत्वं ज्ञा° [2] को. स्त्याय [3] को. प्रतिग्राह्यः
[4] को. °ष्ठचतुर्थाभि° [5] को. ह्येवमैविष्यते [6] को. र्थं

कनिष्ठिकया विना संपाद्य, प्राश्नामि इत्यनेन मन्त्रेण प्राश्नाति। एकवाक्यत्वेनैव मन्त्रस्य प्राशनसंबन्धसिद्धेः प्राश्नामीत्यनर्थकम्। नानर्थकम्। प्रतिप्राशनं मन्त्रावृत्तिप्रतिपादनार्थत्वात्। इतरथा हि गुणानां च परार्थत्वात् असम्बन्धः समत्वात् स्यात् इति न्यायात् प्राशनगुणेनाभ्यासेन मन्त्रो न संबध्येत, अतस्तु यत्नात् सम्बध्यते।

**अथास्मै···रूपमिति**। आचमनानन्तरमस्मै वाससी आहरन्ति। श्रियै रूपमिति। षष्ठ्यर्थेयं चतुर्थी। श्रियो हि रूपं वस्त्रयुगलम्। श्रीरूपतया च वचनाच्छोभने वाससी आहर्तव्ये। अतिशोभनं हि द्रव्यं श्रीरूपमिति लोके प्रसिद्धम्। **अथते···भूयासमिति**। ते वाससी अनेन मन्त्रेण यथायोगं परिधत्ते। प्रतिवस्त्रं च मन्त्र आवर्त्यते।

**प्रवर्तौ··आहरन्ति**। प्रवर्तौ[१] कुण्डले, स्रजो मालाः, अलंकरणमन्यद् भूषणं, तान्यस्मा आहरन्ति। अलंकरणग्रहणेनैव सिद्धेः प्रवर्तौ स्रज इति पृथग् ग्रहणमनर्थकम्। नानर्थकम्, प्रवर्तयोः स्रजां च नियमार्थत्वात्। तस्मादवश्यं प्रवर्तौ स्रजश्चाहर्तव्याः, यथोपपदमन्यदलंकरणमिति। अलङ्करणप्रयोगादन्यदपि यदस्मै श्रद्धया दीयते तस्याप्ययमेव कालः। अथवा प्रवर्तौ स्रज इत्येवमाद्यलङ्करणमस्मा आहरन्तीति व्याख्येयम्। तत्र चावर्तग्रहणं[२] कटककटिसूत्राङ्गुलीयकादीनामुपलक्षणार्थम्। स्रग्ग्रहणमञ्जकमनुलेपनादीनामिति मन्तव्यम्। विविधेष्वपि द्रव्येषु प्रवर्तयोः स्रजां च मुख्यत्वादत्रोपादानं[३] क्रियते।

अलङ्कृतमेनं वृणीते। आहृतेनालङ्कारेणालङ्कृतमेनं यजमानोऽनेन मन्त्रेण वृणीते। यथोद्गाता शृणुयेत तथा मन्त्रं ब्रूयात्।

**तमुपांशु···करिष्यामः**। तं यजमानमुद्गातानेन मन्त्रेणोपांशु प्रतिमन्त्रयत इति करणाध्याहारेण व्याख्येयम्। ओमित्युच्चैः प्रतिमन्त्रयेत।

**अथैनं···मे देहीति**। देवा इज्यन्तेऽस्मिन्निति देवयजनम्। देवयजनशब्दो यज्ञभूमौ वर्तते। प्रतिमन्त्रणानन्तरमेनं यजमान एव देवयजनं याचति। अदृष्टार्थमिदं याचनं, न यागदेशलब्धत्वम्। कथमवगम्यते, होत्रादिभ्यो याच्यमानत्वात्। यदि हि दृष्टार्थः स्यात्, एकस्मादेव लब्धे देशे यागसिद्धेरन्येभ्यो लब्धिर्व्यर्था भवेत्। न च यजमान ऋत्विग्भ्यो द्रव्यमादातुमर्हति[४]। आत्मार्थं हि यज्ञे प्रवर्तमाने[५] स्वेन द्रव्येण स्वैः कर्मकरैः स्वस्मिन् देशे स्वयमृत्विग्भ्योऽपि दत्वा प्रवर्तितुमर्हति। तस्मादेव यजमानयाचनाददृष्टं फलम्। अथवा पूजावचनमेतत्। औपचारिकं सर्वस्वं तुभ्यं मया निवेदितं, देवयजनमपि देशं त्वमेव मे देहीति। अथवा देवयजनयाचनद्वारेण यज्ञस्यैवायं प्रारम्भः अनुज्ञाप्यते। तं यजमानमुद्गाता तथेत्युपांशु प्रतिमन्त्रयते। **ओमित्येवोच्चैः**। ओमित्येवोच्चैः प्रतिमन्त्रयते। ओमित्युच्चैरिति पूर्वोक्तस्यैव वचनादेवकारः प्रयुक्तो नार्थविशेषणार्थः।

**अथास्मा···गामुपाञ्जन्ति**। पूर्वमेवासनशयनभोजनाद्यर्थमृत्विजां गृहाणि परिकल्पितानि भवन्ति, तदधिकृतमिदमुच्यते। अथास्मै आत्मार्थं परिकल्पितं गृहं प्रविष्टाय गामुपाञ्जन्ति समीपं नयन्ति। अथवा आवसथमुपपन्नायेति[६] हेतुरूपेणोच्यते। अन्यस्मा अपि ऋत्विग्भ्यः श्रेयसे स्वगृहं प्रविष्टाय गोरुपादानार्थम्।

**तामुपाष्टां···पाप्मानमेव तद्धते**[७]। तां गामुपनीतां हन्ति। अञ्जेः निष्ठायामनिन् भावः। हते इति

---

[१] को. प्रवृत्तौ [२] को. च वर्त° [३] को. °दत्रोपादं [४] को. द्रव्यमातुम°
[५] को. प्रवर्तमानं [६] को. आवसथमुपवसायेति [७] को. तद्धरते

आत्मनेपदं छन्दसि बहुवचनाद् युक्तम् । दृश्यते च—गामुपाष्टां हनीत पाप्मानमेव तद्धते इति । छन्दोऽनुकरणार्थ-मत्राप्येवं प्रयुज्यते । अर्थवादो वाक्यशेषः । कस्यायमर्थः, यथा वा पाप्मनो हननमेवमस्मिन् विषये गोहनन-मपीति । तदस्मिन् गोघाते दोषो न शङ्क्यः ।

**अथ यदि···ओमुत्सृजतेति ।** अथ यदि तां गामुत्सृजेदेतेनैव मन्त्रेण गौर्धेनुः इत्यादिना तृणान्यत्त्[1] अन्ते-नानुमन्त्र्य ओमुत्सृजत[2] इत्युच्चैरुत्सृजेत् ।

नन्वनुमन्त्रणस्याश्रुतत्वात् गौर्धेनुः इत्यादिः उत्सृजत इत्यन्तः सर्वो ऽयमुत्सर्जनमन्त्र एव भवितुमर्हति । नैवम्, प्रणवात् पूर्वेणेति करणेन कृतेन गौर्धेनुरित्यस्य मन्त्रस्यान्तो विज्ञाप्यते । नचानेन कर्तव्या क्रियोच्यते । उत्सर्जनन्तु ओमुत्सृजत इत्यनेनैव लिङ्गात् कर्तव्यम् । तत्र तामनुमन्त्रयते गौर्धेनुः इति गृह्ये दृष्टत्वात् । अनु-मन्त्र्येत्यध्याह्रियते । एतेनैव पाप्मनो हननेन हेतुना उत्सृजेदित्येवमर्थत्वात् । [3]अयमभिप्रायः, अहनने[3] गोः पाप्मनो ऽहननं भवति गामुपाष्टां[4] हनीत पाप्मानमेव तद्धते इति श्रुतिवचनादुत्सर्जने ऽपि हिंसावर्जनात् पाप्मैव हन्य इति । अथवा एतेनैव गौर्धेनुरिति तन्निवर्तनार्थत्वात् ।

किं पुनरिमे हननोत्सर्जने गोस्तुल्यं विकल्प्येते, कः सन्देहः । किन्तु उत्सर्जनपक्ष एवास्मिन् काले शिष्टैराचर्यते ।

सत्कारं प्रत्ययं सम्यगुद्गातुरुदितो विधिः ।
इति सन्तोषिते तस्मिन् यज्ञस्य फलमेयते ।। २ ।।

इति महोपाध्यायश्रीभवत्रातेन[5] विरचितायां जैमिनीयसूत्रवृत्तौ
उद्गातृसत्कारो नाम द्वितीयः खण्डः

---

[1] को. तृणान्यत्सि
[2] को. इदमुत्सृजत
[3] को. अयमभिप्रायमहनने
[4] को. गामुपाष्टुं
[5] को. भवत्रात्रा

# अथ तृतीयः खण्डः

क्रीते राजनि सुब्रह्मण्यमामन्त्रयन्ते । स यज्ञोपवीतं कृत्वाप आचम्य दक्षिणेन पाणिना पलाशशाखां शमीशाखां वादायान्तरेण चक्रं चानड्वाहं च दक्षिणामीषामनुप्रसृप्य राजवाहनस्यान्तरीषे तिष्ठन् सुब्रह्मण्यामाह्वयति त्रिरनिरुक्ताम् । सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमित्युपांशु । एवमेव प्राग्वर्तमान एवं दक्षिणत एवमुदगावर्ते । द्विर्दक्षिणमनड्वाहं शाखया संस्पृशति सकृद्वामम् । पर्यावहन्ति राजवाहनम् । विमुक्तयोरनडुहो राजानं प्रपादयन्ति । प्रपन्ने राजनि यथैतमुपनिःसृप्य पूर्वया द्वारा शालां प्रपद्योत्तरतः शाखामुपगूहति यजमानस्य पशून् पाहीति । अत्रैतदनोयुक्तं ददाति सुब्रह्मण्याय । आतिथ्यया चरन्ति । आतिथ्यया चरित्वा प्रवर्ग्योपसद्भ्यां चरन्ति । संस्थितायामुपसद्युत्करे तिष्ठन् सुब्रह्मण्यामाह्वयति त्रिर्निरुक्ताम् । सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योम् इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण कौशिक ब्रुवाण सुत्यामागच्छ मघवन्देवा ब्रह्माण आगच्छतागच्छतागच्छतेति । आहूय सुब्रह्मण्यां यजमानं वाचयति । ब्रह्मासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादोऽग्निर्वत्सस्तेन मे प्रस्नुतेषमूर्जं धुक्ष्व । ब्रह्मासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादो वायुर्वत्सस्तेन मे प्रस्नुतेषमूर्जं धुक्ष्व । ब्रह्मासि सुब्रह्मण्ये तस्यास्ते द्यौः पाद आदित्यो वत्सस्तेन मे प्रस्नुतेषमूर्जं धुक्ष्व । ब्रह्मासि सुब्रह्मण्ये तस्यास्ते दिशः पादोऽवान्तरदिशा वत्सस्तेन मे प्रस्नुतेषमूर्जं धुक्ष्व । ब्रह्मासि सुब्रह्मण्ये परोरजास्ते पञ्चमः पादः समुद्रः स्तनश्चन्द्रमा वत्सस्तेन मे प्रस्नुतेषमूर्जं धुक्ष्व प्रजां पशून् स्वर्गं लोकं मह्यं यजमानाय धुक्ष्वेत्युपांशु । एवमेवापराह्ण उपसदि संस्थितायाम् । एते एवोपवसथादनुवर्तयते । सुत्यामित्युपवसथात् । श्वः सुत्यामित्युपवसथे । अद्य सुत्यामिति सवे ॥ ३ ॥

क्रीते···मन्ते । राजेति सोमः कीर्त्यते । दृश्यते हि—सोमं राजानं वरुणं (जै. सं. १.१०.१) सोमो राजा भूतो वासि इत्यादौ सोमे राजशब्दः । तदनुकरणमाचार्येण क्रियते । क्रीते सोमे सुब्रह्मण्यं यजमानपुरुषा आमन्त्रयन्ते, कर्मकालो भवतः प्राप्त इत्यवबोधयन्ति ।

स यज्ञोपवीतं...त्युपांशु । स सुब्रह्मण्यो यज्ञोपवीतं कृत्वाप आचम्य दक्षिणेन पाणिना पलाशशाखा वा शमीशाखां वादाय राजवाहनस्यानसश्चक्रं चानड्वाहं चान्तरेण दक्षिणामीषामनुप्रसृप्यान्तरीषे[1] ईषयोर्बध्ये तिष्ठन्ननिरुक्तां [2]सुब्रह्मण्यां त्रिराह्वयति[2] । उपांशु एव[3] चाह्वयति । सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिति ।

---

[1] को. °प्यान्तरिषे [2] को. °ण्यांस्त्रिरा° [3] को. एवं

शौचार्थस्याचमनस्य यज्ञोपवीतस्य च स्मृतिसिद्धत्वाद् वचनमनर्थकम् । नानर्थकम् । अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरते सव्यमिति यज्ञोपवीतम् इति श्रुतिवचनसिद्धस्याजिनस्य वाससो वा द्वितीयस्य यज्ञोपवीतस्य क्रियाङ्गभूतस्य चान्यस्य चाचमनस्य विधानार्थत्वात् । यस्मादसत्यपि स्वप्नादावप्याचमन-निमित्ते कर्मादावाचरेत् । उत्तरीयञ्च वस्त्राजिनयोरन्यतरत्कर्मण्युपाददीत । अव्यवायेन च राजाहवनीययोः प्रविशेत् किमत्र दक्षिणेन इति वचनादन्यत्रावचने पाण्योरेकेनापि नियमेन कर्माणि क्रियेरन्, नैव दक्षिणेनैव पाणिना तान्यपि क्रियेरन् । तथा च परेषां वचनम्—एकाङ्गवचने दक्षिणं प्रतीयात् इति । एवमेव शिष्टै-राचर्यते । यानि तु कर्माणि विधिमनपेक्ष्य अर्थादेव प्राप्नुवन्ति दृष्टार्थानि तानि सव्येनापि क्रियेरन् । यथेदं शाखादानम् । शाखया[1] संस्पृशतीति वचनेऽसति[2] अर्थप्राप्तं तदस्मिन् दक्षिस्यापि प्राप्तिः सव्यस्यापि, तत्र दक्षिणस्यैवायं नियमः । एवं चेदाज्यस्थालीं स्रुवामादायेत्यादौ सव्यस्यापि प्रसङ्गो भवतु । नथैवास्मा-भिरिष्यते ।

त्रिरिति वचनादेव सिद्धेरभ्यस्तपाठो ऽनर्थकः । नानर्थकः । निरुक्तायां दृष्टयोस्त्रैस्वर्यावमानयो-रस्यामपि प्राप्नुवतोर्निवर्तनार्थत्वात्[3] । कथमनयोरस्यां प्राप्तिः, इदमुच्यते । यन्निरुक्तायाः सुब्रह्मण्यायाः प्रतीकं [4]तस्यैवेयं संज्ञानिरुक्तेति[4] । एवं हि परैरियमनिरुक्ता[5] क्वचिद्विधीयते—सुब्रह्मण्याप्रतीकं त्रिरुपांशु अभिव्याहृत्येति । तत्रायमनिरुक्तेति बहुव्रीहिसमासः इति । अथवा श्रुत्यनुकरणार्थोऽयमभ्यस्तपाठः । तस्मात् त्रैस्वर्यावसानयोर्निवृत्तिरेव भवति । एवं चेत् पाठेनैव सिद्धत्वात् त्रिरित्यनर्थकम् । नानर्थकम् । अनूक्तस्यै-वास्य सुब्रह्मण्यासंज्ञायाः [6]प्रणवान्तानिवृत्यर्थत्वात्[6] । यदि त्रिरुक्तस्यैवायं सुब्रह्मण्या संज्ञा स्यात् द्वे अपि निरुक्तानिरुक्ते सुब्रह्मण्ये पराञ्चौ न स्याताम् । तत्र ते सुब्रह्मण्यया प्रणवान्तया पराच्यावाचमविसृजन्ते इति चोदना नोपपद्येत । त्रिरिति पुनरुच्यते अनभ्यासाया एव संज्ञा सिद्धयति तत्रेयं पराची भवति । अनिरुक्ते-त्यन्वर्थसंज्ञा । न ह्यत्र देवता निरूप्यते । सञ्ज्ञानाञ्च प्रयोजनं संज्ञिसंप्रत्ययस्तस्मादनिरुक्ताग्रहण इयं प्रत्येतव्या । यत्र सुब्रह्मण्याह्वायामध्वर्युः संप्रेष्य शालां प्रतिनयति तत्र संप्रैषानन्तरमेव सुब्रह्मण्याह्वानमारभते । अस्यां तु सुब्रह्मण्यायामेवं संप्रैषः—सुब्रह्मण्य सुब्रह्मण्यामाह्वय, मा तु त्वमाह्वार्यजमान आह्वास्यतीति । तस्माद् यथासंप्रैषं यजमानाह्वानादूर्ध्वमत्राह्वयेत् ।

**एवमेव [प्राग्वर्त]माने** । अथ शकटं प्रदक्षिणमावृत्य शाखां प्रति नयति । अत्रापि वक्ष्यति पर्यावहन्ति[7] राजवाहनमिति तत्रेदमुच्यते, एवमेव प्राचीं दिशं प्रति शकटे वर्तमाने सुब्रह्मण्यामाह्वयेदिति ।

ननु पर्यावहन्ति[8] राजवाहनमिति विधाय पश्चादिदं वक्तव्यम्, सत्यमेष एव क्रमः । व्यवहितत्वात्तु [9]सुब्रह्मण्याह्वानमेवेत्यतिदेष्टुमशक्यं[9] स्यात्, पुनर्वचने च ग्रन्थगौरवं प्रसजतीति तत्परिहर्तुं मत्रैवेदं विधित्रय-मुपन्यस्यते ।

**एवं दक्षिणतः**[10] । एवमेव दक्षिणां प्रति दिशं शकटे वर्तमान आह्वयति । एवमुदक् । इत्थं व्याख्याय-माने चेति ब्रूमः—सुब्रह्मण्यस्य तथा च सति अथ यां क्रीते राजनि सुब्रह्मण्यामिति बहुष्वेकवचनं नोपपद्येत ।

---

[1] को. शाखाया [2] को. सति [3] को. प्राप्नुवतो नि°
[4] को. तस्यैवेयम् । ज्ञा अनि° । [5] को. °यमन्निरुक्ता [6] को. प्रजन्तानि°
[7] को. पथ्यावहन्ति इति लेखकशोधितः पाठः [8] को. पथ्यावहन्ति [9] को. °नमेवमत्यतिदे°
[10] को. ततः

यत्प्रमाणं तदुदयनमन्वग्[1] इति चायमर्थवादः। प्रथमोत्तम एव सुब्रह्मण्ये ऽनिरुक्ते इति। [2]एवमर्थमवलम्ब्य प्रवर्तमाने[2] बहुत्वे तासां दुःसंपादार्थः स्यात्। अत इदमन्यथा व्याख्यायते—

**क्रीते···[सुब्रह्मण्यो]मिति।** सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमित्येवं रूपां सुब्रह्मण्यां[3] वक्ष्यमाणेषु त्रिषु कालेषु त्रिराह्वयति।

नन्वेवमस्या अभ्यस्तरूपत्वात् काचिदपि सुब्रह्मण्या पराची[4] न स्यात्। सत्यमेतत्। एवं तु तत्र कल्पयिष्यामः, प्रणवान्तयेत्यनिरुक्तोपलक्षणार्थः, पराचीत्यभ्यासनिवर्तनार्थ[5] इति।

**एव[मेव प्रागवर्त]माने।** अयं प्रथम आह्वानकालः कथ्यते। उक्तरूपां सुब्रह्मण्यामस्मिन् काले सकृदाह्वयन्ति। एवं चेदेवमेवेत्यनर्थकम्। लाक्षणिकस्य प्रज्ञेसथो नाम इमे ब्रूमः। एवमेव[6] यथापठितमेवेत्यर्थः। ननु लाक्षणिकः स्वरो यत्रेष्टः तत्र पाठेनैव क्रियते। निरुक्तायामत्र तद्वदकरणान्नैवायं प्राप्नोति। यद्येवम्, असौ यजत इत्येवमादिष्वपि न प्राप्नोति। किमतः, इदमतो भवति, उभयत्र प्राप्तमैकस्वर्यमत्र पुनर्विधानात्तत्र न भवतीति। एवं दक्षिणत एवमुदक्। पूर्वस्मिन् व्याख्याने दक्षिणानयनकाले आह्वाने सुब्रह्मण्योमिति त्रिरेव वक्तव्यं स्यात्, उत्तरस्मिंस्तु नवकृत्व एनमाह्वयति[7]। आवर्ते शकट एवास्य क्रियमाणे दक्षिणमनड्वाहं द्विः शाखया पाणिस्थया संस्पृशति। अथवा निष्ठान्तो ऽयमावर्तशब्दस्तस्मादावर्ते शकट इति व्याख्येयम्। नन्वावर्त इति निष्ठायां भवितव्यम्। सत्यमेतत्। आवर्तशब्दो ऽपि तु निष्ठान्त एवासंशयं दृश्यते। यथा—दक्षिणत उदक् प्रागावर्त इव इति। तत्रावश्यमाचार्यप्रामाण्यान्निष्ठान्तः स्यात्। वर्तशब्दस्य साधुत्वमनुमन्यामहे, तद्वदत्रापि द्रष्टव्यक्तश्चायमादिकर्मणि। तस्मात् प्रवर्तमानादौ शकटस्यानुडुहो न संस्पर्श (न) म्।

अथवापरं व्याख्यानम्। संस्पर्शनप्रदेशोऽयं कथ्यते, [8]यः पृष्ठे [9]रोम्णामावर्तस्तस्मिन्ननड्वाहं[9] संस्पृशति[10]।

**सकृद्वामम्।** वाममनड्वाहं सकृत् स्पृशति। **[11]पर्यावहन्ति राजवाहनम्[11]।** राजवाहनमिदं शकटं तदेव यजनं परीत्यावहन्ति शालाम्।

नन्विदं परकर्म। सत्यमेतत्। उत्तरत्रापि बहूनीव परकर्माण्येवानुक्रम्यन्ते[12]—आतिथ्यया[13] चरन्ति, प्रवर्ग्योपसद्भ्यां चरन्तीति, तेनायमर्थो ज्ञाप्यते, अन्योऽन्यस्यापि तन्त्रमृत्विजो यथाशक्ति विज्ञायैव याजयेयुरिति।

**विमुक्त···प्रपादयन्ति।** द्वयोरनुडुहोः विमुक्तयोः राजानं शालां प्रपादयन्ति। एतावन्तं कालमनस्येव[14] सुब्रह्मण्यस्तिष्ठेत्। तत्र तत्र राजाहवनीयौ सुब्रह्मण्येन व्यवेतौ तस्माद् व्यवायनिवृत्त्यर्थं

---

[1] °को. मन्वदित्येव° [2] को. प्रवर्तमानो [3] को. सुब्रह्मण्यों
[4] को. पराचि [5] को. पराचेत्यभ्यास°
[6] कोषे अतः परं लेखकस्य प्रमादात् पाठभंगो जातः। स च यथास्थानं सुविचार्य योजितः।
[7] को. एवं आवशति [8] को. यं पृष्ठे रोम्णामावर्तं° [9] को. °न्ननड्वाहः
[10] को. सा स्पृशति [11] को. पर्याहनं राजेह्यतेनेति [12] को. °नुकर्म्यन्ते
[13] को. आतिथ्यायां [14] को. कालं मनस्येव

सुब्रह्मण्यमग्रेण पर्यावृत्य राजाहवनीयौ[1] प्रपाद्य। यदि तु प्रवेशकाल एवायमपरेण शकटं हृतवान्, नैवं वक्तव्यम्।

[2]प्रपन्ने···पाहीति[2]। शालां प्रपन्ने राजनि यथैतम्[3] उपनिःसृप्य येन प्रदेशेन शकटमारूढस्तेनै-वावरुह्य शकटमुत्तरेण पूर्वया द्वारा शालां प्रपद्य शालाया उत्तरस्मिन् भागे शाखामुपनिगूहत्यनेन मन्त्रेण।

अत्रै[त···सुब्रह्म]ण्याय—अत्रास्मिन् सुब्रह्मण्याह्वाने निमित्त एतद्राजवाहनं [4]शकटमनडुद्भ्यां युक्तं[4] यजमानः सुब्रह्मण्याय ददाति। अनसि वा युक्तमनडुद्द्वयमनोयुक्तशब्देनाभिधीयते। तस्मादनड्वाहावेव ददाति।

आति[थ्यया]···चरन्ति। आतिथ्यया नामेष्ट्याऽस्मिन् काले ऽध्वर्यवश्चरन्ति व्याप्रियन्ते[5]। आतिथ्यया व्यापृत्य[6] प्रवर्ग्येणोपसदा च व्याप्रियन्ते। अनेन क्रमणक्रमेणैव पौर्वापर्ये सिद्धे आतिथ्यया चरित्वेत्यनर्थकम्। नानर्थकम्। परपदार्थानामिह दृष्टस्य क्रमस्यानित्यत्वज्ञापनार्थत्वात्। ततश्च या अग्न्याधेयेऽन्वाहार्य-पचनाधानात् पूर्वकालता उद्धरणस्य परस्य वामदेव्यस्यास्माकमुद्दिश्यते इष्टस्यानित्यता[7] सिद्ध्यति, एवमौ-दुम्बरीव्यापारस्यापि विष्ण्वनिवापोत्तरकालता [8]सिद्ध्यति[8]।

उपसदि समाप्तायामुत्करे तिष्ठन्नेतां निरुक्तां सुब्रह्मण्यां त्रिराह्वयति। आह्वातुरवचनेऽपि सुब्रह्मण्या त्रिः इति समाख्यया सुब्रह्मण्य आह्वयति। निरुक्तेत्यन्वर्थसंज्ञा। इन्द्रस्य देवताया निर्वचनाद् व्यवहारा-भावान्निरुक्तेति संज्ञावचनमनर्थकम्। नानर्थकम्। सर्वत्र निरुक्तायास्त्रिस्त्रिराह्वानार्थत्वात्। ततश्च यासु सुब्रह्मण्यासु निरुक्तासु त्रिरिति नोच्यते, उपवसथसुत्याकालासु तासामपि त्रिराह्वानं सिद्धम्। प्राक् प्रधानोत्करोत्पत्तेः। सुब्रह्मण्या क्व तिष्ठताह्वातव्या, योऽस्ति शालायामुत्करस्तत्र तिष्ठता।

उपांशु[9]। एवं त्रिराहूय सुब्रह्मण्यां यजमानमिमान् मन्त्रानुपांशु एव वाचयति। यजमानं प्रत्युपांशुता चोद्यते, सुब्रह्मण्येन तु यथा यजमानः शृणोति तथा वक्तव्यम्। आहूय सुब्रह्मण्याम् इति पदद्वयमनर्थकम्। नानर्थकम्[10]। पितापुत्रियास्वपि प्रापणार्थत्वात्। एवं चेन्न पितापुत्रिया[11]स्ववतिष्ठति[11]। अनिरुक्तास्वपि सुब्रह्मण्यासु अयं विधिः प्राप्नोति। न प्राप्नोति। यदि हि तास्वप्यवास्थास्यत्[12] अनिरुक्तास्वपि, अनि-रुक्तायामेवादौ व्याधास्यत।

अथैवमुच्येत, अनिरुक्ताकारे ऽस्य विधेरकरणं निरुक्ताकारे ऽप्राप्तिभयादिति सिद्धो नः पक्षः। अत्रापि निरुक्ताधिकारान्नानिरुक्तासु प्रसजति।

एव[मेवा···संस्थि]तायाम्। अपराह्णे उपसदि समाप्तायामेवमेव सुब्रह्मण्यामाह्वयति। एते···बर्तयते। एते एव पौर्वाह्णिक्यापराह्णिक्यावुपसदावनु आ उपवसथात् सुब्रह्मण्या प्रवर्तते। अयमाङ् मर्यादायामुताभि-विधौ, मर्यादायामिति ब्रूमः। उत्तरस्मिन् हि वाक्ये मर्यादायामेव गृहीतव्यः।

---

[1] को. राजा
[2] को. प्रवनीति
[3] को. यथेति
[4] को. °टमनडुग्भ्यामुक्तम्
[5] को. व्याप्रचन्ते
[6] को. व्यावृत्य
[7] को. इष्टस्या अनित्यता
[8] को. °रकालतां सास्विदिति
[9] को. अपांतु ?
[10] को. नास्ति पाठः
[11] को. त्रियास्वेवे तिष्ठति
[12] को. तास्वप्यैतिष्ठति।

उपवसथे ऽद्यसुत्याविधेः प्रागेवोपवसथात् सुत्याविधिरुपपद्यते अनुरूपाणाञ्च शब्दानामसति सम्भवे तुल्यार्थतैव युक्तोपवसथेन[1]। तस्मादत्राप्युपवसथात्[1] प्रागित्येव वर्णनीयम्। क्व पुनरुपवसथस्य मन्त्रस्य लिङ्गेनेति व्याख्येयम्। उपवास उपवसथः, स चात्र समीपे वा समसौकर्यात्[2] पूर्वस्मिन्नहनि कर्तव्यः[3]। वक्ष्यते च आग्नीध्रे च पत्नीशालायामिति [4]संविशन्ति च[4]। कर्मण्येवोपगा[5], भवन्ति इति। तमुपवसथे यः कर्मकालो न व्यभिचरति समान एवाहनि क्रियते घर्मोद्वासनादिरग्निप्रणयनादिर्वा स इहोपवसथशब्देन लक्ष्यः।

ननु मुख्यासम्भवे लक्षणोपादानं युक्तम्। सत्यमेतत्। असम्भव एव त्विह मुख्यस्योपवसथशब्दस्य ग्रहणम्। कथमिति चेत्, उपवसदन्ते क्रियमाणं सुब्रह्मण्याह्वानं प्रवर्ग्योद्वासनादि बहुकर्मव्यवहिताद् रात्रि-कालादुपवसथात् प्रागिति न युक्तं वक्तुम्, तस्मादुपवसथसन्निहितप्रवर्ग्योद्वासनादिकर्मकलापो लक्षणमात्र उपवसथ इति गृह्यते।

ननु यस्मिन्नहन्युपवसथं तदहरुपवसथशब्देनाभिधीयत इति गृहीतव्यम्। तथा च परेषां दृश्यते— उपवसथे प्रातरुभे चरुणे संस्थाप्य इति। नैवं युज्यते। उक्तं हि पूर्वं मर्यादायामाङिति, तत्र सर्वस्मिन्नहनि उपवसथत्वेन गृह्यमाणे तदस्वकालयोरुपसदोरन्ते सुब्रह्मण्याह्वानमविहितं स्यात्, तच्च नेष्यते। सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्य तत्रापि विद्यमानत्वात्। तस्मादुक्तवदेवोपवसथस्य[6] ग्रहणं युक्तम्। सुत्यावसथा-च्छ्वस्सुत्यामागच्छेतेति[7] आ उपवसथाद् वदन्ति।

सुब्रह्मण्यापाठादेवास्यार्थस्य सिद्धेरिदं वाक्यमनर्थकम्। नानर्थकम्। ये सुब्रह्मण्ये उपवसथीये ऽहन्युप-सदे तदागामिन्यौ, तयोश्च शब्दप्रसङ्गस्य निवृत्यर्थत्वात् कुतः पुनः तस्य[8] प्रसङ्गः। श्वः सुत्यामित्युपवसथ इति वचनान्न युक्तम्। प्रवर्ग्योद्वासनादि कर्मकलापः अत्रोपवसथ इति। सत्यमेतत्। यदि त्वेतद्वाक्यं न स्याद-धस्तनवाक्यान्तर्भूतस्याङो मर्यादावचनतैव नावधास्येत्। अभिविधावप्याङ् गृह्यते। तत्रोपवसथशब्दस्य अहरभिधाने यो दोष उक्तः स स्यात्। अस्ति चोपवसथे सति तदहःकालासु चतसृष्वपि सुब्रह्मण्यासु श्वस्सु-त्यापदम्। प्रसजति सति त्वस्मिन् वाक्ये निवर्तते।

श्वःसुत्यामित्युपवसथे। उपवसथे ये सुब्रह्मण्ये विधास्येते, वपान्ते परिहृतासु वसतीवरीष्विति तयोः श्वस्युत्यामिति ब्रवीति। आद्यसवे श्वस्सुत्यादिवसः[9], तस्मिन् या सुब्रह्मण्या विधास्यते, अन्यग्रहणात् गृह्णन्त्विति तस्यामद्यसुत्यामिति[10] ब्रवीति। एवं व्याख्यायमाने पुनरुक्ततताप्रसङ्गात् तत्रापि हि वक्ष्यते।

सुब्रह्मण्यामाह्वयत्यद्यसुत्यामिति तस्मादन्यथा व्याख्यास्यते। उपवसथकालयोरेव सुब्रह्मण्ययोरयं विधिरुपयुज्यते। सुत्यादिवस एवोपवसथे क्रियमाणे श्वस्सुत्यामिति प्रकृतितः प्रसक्तं निवर्त्य सद्यस्क्रयादद्य-सुत्यामिति[11] विधिरयं क्रियते। तस्मात् सद्यस्क्रयादोपवसथान्तकालाद्यासु[12] तिसृष्वपि सुब्रह्मण्यासु अद्यसुत्या-मिति वचनं सिद्धम्।

---

[1] को. युक्तोवदां
[2] को. समसौक्यात् ?
[3] को. कर्तव्यम्
[4] को. °न्तिश्च
[5] को. कर्मन्नेन पगा
[6] को. °देवोपसदस्य
[7] को. °थात् ससात्यमा°
[8] को. सत्यप्रसंगः
[9] को. सवस्सुत्या°
[10] को. °तस्यामस्यसुत्यामिति।
[11] को. सद्यस्क्रयादापद्य सुत्या°
[12] को. सद्यस्क्रयादोपनान्त°।

ननु अथदिव सद्यस्क्रयांश्च शब्दो निवर्तते । कामं निवर्तताम् । अद्यशब्दः[1] स्वविहितो न प्रवर्तते, अतस्तु वचनात् प्रवर्तते ।

सुब्रह्मण्या श्रुता सत्रसमीपे प्रकृतिं गता ।
दक्षिणानयनाग्निष्टुदादियोगेन हेतुना[2] ॥१॥

इति महोपाध्यायश्रीभवत्रातेन[3] विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ सुब्रह्मण्याह्वानविधिः
तृतीयः खण्डः



[1] को. अदुश्शब्दः

[2] कोषे अतः परम्—'अग्निष्टुतीन्द्रेपि अग्न्यागन इति ग्न इति स्थाने परं स्थानमप्यत्र विश्वेदेवा इत्यर्थतो बहुवत्परम्' इत्यधिकः पाठो दृश्यते ।

[3] को. भवत्रातृ°

# अथ चतुर्थः खण्डः

अथ यद्यग्निं चिन्वीत, पञ्च स्वर्णज्योतिर्निधनानि सामानि गायेत् । सत्यमिति पुष्करपर्णं उपधीयमाने । पुरुष इति पुरुषे । भूरिति प्रथमायां स्वयमातृण्णायाम् । भुव इति मध्यमायाम् । स्वरित्युत्तमायाम् । सञ्चितमग्निं सामभिरुपतिष्ठते । अग्न आयूंषि पवस इत्येतासु शरीरवद् गायत्रं तेन शिरो, रथन्तरेण दक्षिणं पक्षं, बृहतोत्तरमृतुष्ठा यज्ञायज्ञीयेन पुच्छम्, वारवन्तीयेन दक्षिणमंसं, श्यैतेनोत्तरम् प्रजापतेर्हृदयेन दक्षिणमपि पक्षमग्नेर्व्रतेनोत्तरमग्नेरर्केण शिरो वामदेव्येनात्मानम् । अत्र शान्तो ऽग्निर्भवति । अत्रोद्गात्रे वरं ददाति ॥४॥

अथ···गायेत् । अथेत्यग्निचयनमधिक्रियते । अग्निं यदि चिन्वीत यजमानस्तत्र पञ्च सामानि [1]स्वर्णज्योतिश्शब्दनिधनान्युद्गाता गायेत् । पञ्चानां साम्नामनुक्रमिष्यमाणत्वात् पञ्चेत्यनर्थकम् । नानर्थकम् । अन्यान्यपि सामान्यग्निचये सन्ति गेयानीति ज्ञापनार्थत्वादन्येष्वपि विद्यमानेषु [2]स्वर्णज्योतिर्निधनानां साम्नां संख्यया विशेषणमुपपद्यते । तानि चाग्निपक्षगौणानि परेषां विहितानि खल्वग्निपरिगाणेष्विति । पर्यध्याये ऽस्माकमपि दृश्यते । यदि चिन्वीतेति वचनाद् वैकल्पिको ऽग्निचयः ।

सत्यमिति । माला पुष्करपर्णमध्वर्युरुपदधाति । तस्मिन्नुपधीयमाने[3] सत्यम् (जै. सं. १.२८.१) इति व्याहृतिसाम गायेत् । अत्रावचने ऽपि शिष्टाचारतः प्राङ्मुखता ग्राह्या । स्थानासने तु विकल्प्येते इव । न वा विकल्पो तिष्ठतैवानादेशे गातव्यं, तदग्न्याधेये प्रतिपादयिष्यामः ।

ततश्च पश्चादासने स्थितेनैतानि गेयानि । पुरुषहिरण्मये पुरुष उपधीयमाने पुरुष (जै. सं. २.३.८) इति व्याहृति साम गायेत् । भूरिति···तृण्णायाम् । कश्चिदुपलविशेषः स्वयमातृण्णाख्या । तिस्रः स्वयमातृण्णाः प्रथमद्वितीयोत्तमासु[4] चितिषूपधीयन्ते । अपराश्चतस्रस्त्ववमायामेव[5] । तत्र प्रथमायां स्वयमातृण्णायां भूरिति साम गायेत् । [6]भुव इति मध्यमायाम्[6] । पूर्वोक्तासु तिसृष्वेव या मध्यमा तस्यामिदमुच्यते । नेतराभिः सह सप्तसु । नहि ताभिरासां साधर्म्यम् । स्वरित्युत्तमायाम् ।

सञ्चि···तिष्ठते । सञ्चितपरिनिष्ठितचयनमग्निं[7] सामभिर्वक्ष्यमाणैरुपतिष्ठते । चयनादुपरितनेषु केषुचित् संस्कारेषु कृतेषु[8], तस्मिन् हि काले अध्वर्यवश्चोदयन्ति, तदर्थं सञ्चितमित्युक्तं न चितमिति[9] । अत्राग्निचयस्य[10] गायत्रस्योद्गीथे ऋगक्षरसंस्पर्शो[11] नास्ति । तदशरीरममृतगायत्रम् । गायत्रप्रकरणे हि श्रूयते-

[1] स्वर्ज्योतिरिति मुद्रितपुस्तकपाठः
[2] को. सुवर्ण°
[3] को. तस्मिन्नुपरि यजमाने
[4] °मतृतीयो°
[5] को. °क्तपराश्चतस्रस्तेमायामेव
[6] को. भवमायाम्
[7] सन्तिष्ठतं
[8] को. कृतेषूपर्थेयं
[9] को. त्रित्रमिति
[10] को. अत्रग्निरयस्य
[11] ऋत्विगक्षर°

तस्याः शरीरेण साम्ना शरीराण्यधुनोत्, इति यस्य त्वृगक्षरेष्वेव नानन्तच्छरीरवत् । अग्न आयूंषि पवस (जै. सं. २.६.२) इत्येतासु ऋक्षु यद्गायत्रं शरीरवत्, तेनाग्नेः शिर उपतिष्ठते । [1]अत्र [1]गायेच्छब्दमनध्याहृत्य वाक्यभेदं कृत्वा व्याख्येयम् । तत्र गायत्रमित्यन्तं वाक्यं भवति ।

नन्वस्मिन्नापि पक्षे अस्तीत्यध्याहार्यमेव, नैष दोषः । पूर्वस्मिन्नपि पक्षे विद्यमानत्वात् । **रथन्तरेण दक्षिणपक्षं बृहतोत्तरम्** । अग्नेर्दक्षिणं पक्षं रथन्तरेणोपतिष्ठते, बृहतोत्तरम् । **ऋतुष्ठा यज्ञायज्ञीयेन पुच्छम्** । **वारवन्तीयेन दक्षिणमंसं श्यैतेनोत्तरं, प्रजापतेर्हृदयेन दक्षिणमपि पक्षम्** । प्रजापतिशब्दो हृदयशब्दश्च यस्मिन् साम्नि विद्येते तत् प्रजापतेर्हृदयम् । **अग्नेर्व्रतेनोत्तरम्** । **अग्नेरर्केण शिरः इति** । **वामदेव्येनात्मानम्** । बृहद्-रथन्तर-वामदेव्येषु संशयः । किमत्र तृचस्थानि तानि ग्राह्याणि उतैकर्चस्थानीति । तत्राग्न्याधेयमादौ तृचस्थानामिष्टेर्ग्रहणे तेषां यानि तृचस्थानि तृचेषु तानि गायेत् इति वचनादत्र तदवचनादेकर्चस्थान्येवात्र ग्रह्याणीति प्राप्ते तृचस्थानामेवात्रापि ग्रहणं युक्तं ब्रूमः । कुतः । आम्नायात् । तृचस्थयोर्बृहद्रथन्तरयोरूहरहस्ये समाम्नायो विद्यते न तु[2] अग्न्याधेये । तृचस्थानामेषामुपयोगात्[3] कृतार्थः समाम्नायः स्यात् । नैवं युक्तम् । क्रमादयमाम्नायो योग्यार्थ एव[4] । शरीरवतो हि गायत्रस्यानन्तरे तृचस्थे बृहद्रथन्तरे एव । एवमत्राम्नायत एव तृचस्थग्रहणसिद्धेस्तदर्थमकृतो यत्नः, कृतार्थस्य चात्र समाम्नायस्याग्न्याधेयादावप्रयोजनप्रसङ्गे[5] तत्रास्ति नो यत्नः । बृहद्रथन्तरयोस्तावदेवं भवतु, कथं वामदेव्ये, तदपि तृचस्थमेव ग्राह्यम्[6] । बृहद्रथन्तरसहचारित्वाद्यच्चेदं शरीरवद् वामदेव्यं तृचे समाम्नायते तस्य स्थानं न स्मर्यते । तत्राग्निक्रम एव । स न इन्द्राय (जै. सं. २.५.४) इत्यस्मात् सैन्धुक्षतात् प्राक्तनमिदं वामदेव्यमनुमातव्यम् । अथवानारभ्याधीतमिदं वामदेव्यमनुमातव्यम् । अथवा नारभ्याधीतमिदं वामदेव्यं, प्रकृतिप्रवेशार्हत्वात् प्रकृतौ ज्योतिष्टोमे मैत्रावरुणप्रतिष्ठानात्[7] समानं[7] प्राकरणिकेन वामदेव्येन साधितमनर्थकं सदनर्थं स्यात्, तदङ्गेष्विति न्यायाज्ज्योतिष्टोमाङ्गं प्रवर्ग्यमग्निचयनं च प्रविशति ।

**अत्र शान्तो ऽग्निर्भवति** । अत्रास्मिन्नुपस्थाने कृते शान्तो ऽग्निर्भवति, अयमर्थवादः सामभिरुपस्थानस्य स्तुत्यर्थः । सर्वत्र चार्थवादानां सूत्रे वचनमर्थवादज्ञापनपूर्वे प्रयोगे फलभूयस्त्वज्ञापनार्थम् । **अत्रोद्गात्रे वरं ददाति** । वरो वरणीयो ऽभिलषणीयः । यदुद्गाताभिलषति तदस्मिन् कर्मणि ददाति यजमानः । अथवा गौर्दातव्यो वरः । परतन्त्रे हि परिभाषितं गौर्ब्राह्मणस्य वरः इति ।।

न्यायतः [8]प्रकृतावग्नेर्विकृतावप्यनित्यता[8] ।
नित्यता त्वस्य विकृतौ श्रूयते तु क्वचित् क्वचित् ।।१।।

इति [महोपाध्यायश्रीभवत्रातेन विरचितायां] जैमिनीयश्रौतसूत्रवृत्तौ अग्निचयनपक्षविधिः

चतुर्थः खण्डः ।

---

[1] को. अथ रायच्छब्दः    [2] को. नु    [3] को. तृचस्थानमेषा°
[4] को. एवं    [5] को. °दावप्रयोज प्रसंगे    [6] को. ग्राह्यः
[7] को. °ष्ठानान्मात्समानं    [8] को. प्रकृतावग्नेर्विकृतावग्नेर्विकृतावप्यनित्यता ।

# अथ पञ्चमः खण्डः ।

उद्वास्य प्रवर्ग्यमथैनमामन्त्रयन्ते । स यज्ञोपवीतं कृत्वाप आचम्य तदेवानपगो भवति । तं यदाध्वर्युः संप्रेष्यति प्रस्तोतः साम गायेति, स पदाय पदाय स्तोभमाह । सर्वे निधनमुपयन्ति सपत्नीकाः । देवान् वा एतस्मिन् काले रक्षांस्यन्वसचन्त । स एतदग्नीरक्षोहा सामापश्यत् । तेन रक्षांस्यपाघ्नत । तद्यत् सर्वे निधनमुपयन्ति रक्षसामेवापहत्यै । त्रिः प्रतिष्टापं हरन्ति । प्रतिष्ठिते प्रतिष्ठिते गायति । त्रयो वा इमे लोकाः । एषां लोकानां विधृत्यै । अपरेणास्मिंस्तिष्ठति प्रवर्ग्यं युञ्जन्ति । यदा द्वितीयमपः परिषिञ्चत्यथैनमाह प्रस्तोतः साम गायेति । स हिंकृत्य वार्षाहरं त्रिर्गायति । अत्रैव तिष्ठन् हिंकृत्येष्टाहोत्रीयं त्रिर्गायति । इष्टाहोत्रीयस्य निधनमुपयन्ति न वार्षाहरस्य । अथैतत् प्रस्तोता वास आदत्ते येन पत्न्यावृता भवति । श्यैतं प्रत्याव्रजन् गायेत् ।।५।।

उद्वास्य···मामन्त्रयन्ते । उद्वास्य प्रविश्य महावीरमन्तरमेनं प्रस्तोतारमामन्त्रयन्ते । अत्र प्रवर्ग्योद्वासनार्थमादानमुद्वासनमभिप्रेयते । प्रसिद्धे तु प्रवर्ग्योद्वासने गृह्यमाणे उद्वास्येति पौर्वकालिकप्रत्ययो नोपपद्यते । पूर्वमेव हि प्रसिद्धादुद्वासनात् प्रस्तोतामन्त्रणीयोद्वासने सामगानार्थम् । अथवा । प्रसिद्धमेवोद्वासनमस्तु । एकमेतत्पदम् उद्वास्यप्रवर्ग्यमिति । 'उद्वास्यः प्रवर्ग्योऽनेनेत्युद्वास्यप्रवर्ग्यः प्रस्तोता[1] । छन्दोगेषु प्रस्तोतैव प्रवर्ग्योद्वासने उपयुज्यते । तस्मादुद्गात्राद्यपेक्षया प्रस्तोता उद्वास्यप्रवर्ग्यस्तमामन्त्रयन्ते[2] । किं पुनरप्रकृतस्य प्रस्तोतुरेनमित्यभिधातुं युज्यते । प्रकृत एव प्रस्तोता प्रवर्ग्योपसदोः सामगानात् । कस्मात् पुनरधस्तनवाक्यापेक्षया प्रकृतस्योद्गातुरेवेदमामन्त्रणं न गृह्यते । नामन्त्रितेनात्र प्रयोजनमुद्गात्रा । न ह्यत्रोद्गातृकर्तृकं कर्म वक्ष्यते । तस्मात् प्रस्तोतुरेवेयं चोदनाय । अयं चार्थः प्रस्तोतुरनादेशेन ज्ञाप्यते । अग्निपरिचरणानि[3] प्रस्तोता गायतीति ।

स यज्ञोप···भवति । स प्रस्तोता यज्ञोपवीत्याचान्तस्तत्रैव भवति । अनवगतकर्मदेश एव स्यात् । नावगच्छेदित्यर्थः । आचमनप्रभृति व्यवसायपरिहारार्थमेतदुक्तं सर्वत्रापि परिभाषारूपेण ग्राह्यम् । तदुक्तं कौषीतकिना आचमनप्रभृति येनाधिकरणेन संयुज्येत न तेन व्यावर्तेत न च व्यवेयात् इति ।

तं यदाध्वर्युः···मुत्तमम्। तं यदाध्वर्युः[4] प्रस्तोतः साम गायेति संप्रेष्यति, स तदा हिंकृत्य अग्निं होतारं मन्ये दास्वन्तम् (जै. सं. १.४८.१०) इत्यस्यामृचि अतीतानामेतेषां नाम्नामुत्तमं साम त्रिर्गायति । नात्रैव[5] त्रिर्गायति, प्रतिष्ठिते प्रतिष्ठिते इति विधास्यमानत्वात् सकृदेवास्मिन् काले गायति । यदि चात्रैव त्रिर्गायेत्,

---

[1] को. उद्वास्यप्रवर्ग्योनेनैत्युद्वास्यप्रवर्ग्यप्रस्तोता
[2] को. उद्वास्यप्रवर्ग्य तमामन्त्रयते
[3] को. अग्निपरिशाणानि
[4] को. यदाध्वर्यव
[5] को. वात्रैव

प्रतिष्ठिते प्रतिष्ठित इति द्विरुक्ते[1] द्विरुत्तरत्रापि । [2]द्वयोः पञ्चकृत्वो[2] ऽपि गानं सम्पद्येत । तस्मादुत्तरगानद्वयापेक्षया त्रिरुच्यते । एवं चेत् त्रिरित्यनर्थकं वचनम् । नानर्थकम् । यदि कैश्चिदध्वर्युभिः त्रिः प्रतिष्ठापनं, तन्न रोचते । तत्राभावे त्रिर्गातव्यमित्येतदर्थत्वात् ।

**पदाय…स्तोभमाह** । अत्र [3]हिंकारं कृत्वा यो ऽत्र[3] साम्नि स्तोभस्तं प्रतिपदं[4] ब्रूयात् । पुरस्ताच्च पदानां ब्रूयात् । तथा प्रथमे दृष्टत्वात् । चतुर्थी चेयं तादर्थ्ये, स्तोभस्य पदगुणत्वज्ञापनार्था ।

**सर्वे…सपत्नीकाः** । सर्वे ऋत्विग्यजमानाः[5] सह पत्न्या अस्य साम्नस्त्रिर्निधनमुपयन्ति । अस्य निधनोपायनस्य प्रवर्ग्योद्वासनाङ्गत्वात् सर्वादीनाञ्च शब्दानामधिकृतापेक्षत्वाद् ये प्रवर्ग्यसंसिद्धास्तैरिदं निधनमुपेतव्यं नान्यैरुद्गात्रादिभिरपि । तथा च तण्डिनां[6] निधनोपायविधौ एवमुपयुक्ताः स्युरिति बह्वृचानां च घर्मसंबन्धात् होतुरेव निधनोपायनं चोद्यते न प्रशास्त्रादीनाम् (प्रस्तोत्रादीनाम्?) एवं हि कौषीतकिनाप्युक्तम्[7] तत्र प्रस्तोता साम गायति तत्र होतुर्निधनोपायः इति । तस्मिन् ब्रह्माग्नीध्रावध्वर्यु प्रतिप्रस्थातारौ होता प्रस्तोता यजमानश्च सह पत्न्या प्रवर्ग्योद्वासने निधनमुपेयुः । सप्तानां त्वियं चोदना, न प्रस्तोतुः । सामगान उपादानस्यैव[8] सिद्धत्वात् ।

**देवान्…रक्षसामेवापहत्यै** । अयं वाक्यशेषोऽर्थवादः । स च सर्वेषां विहितस्य निधनोपायस्य स्तुत्यर्थस्यैवमर्थो योज्यः । देवान् खलु एतस्मिन् प्रवर्ग्योद्वासनकाले [9]रक्षांस्यनुसचन्ति[9] स्म स देवेष्वेतददो[10] रक्षोहा नामाग्निरेतत् सामापश्यत् । तेन साम्ना देवा रक्षांस्यपाघ्नत । तस्मिन् यत् सर्वे निधनमुपयन्ति रक्षसामेवापहननार्थं तद् भवति इति ।

**त्रिः…हरन्ति** । आहवनीयोत्तरवेद्योर्मध्यतस्तु [11]प्रतिष्ठापं प्रवर्ग्यं[11] हरन्ति । **प्रतिष्ठिते…विधृत्यै** । पूर्वोक्तं साम प्रतिष्ठिते गायति । एवं त्रिर्गातव्यमिति । त्रयो हीमे लोकास्तस्मादेषां लोकानां विधरणाय त्रिर्गायन्ति । **अपरेणास्मिंस्तिष्ठति**[12] । साम गायतः स्थानमिदं विधीयते । अपरेण प्रवर्ग्यमस्मिन्नुद्वासाङ्गभूते सामगाने प्रस्तोता तिष्ठति । प्रवर्ग्यं युञ्जन्ति । प्रवर्ग्यमध्वर्यवो युञ्जन्ति[13] तथा ते वदन्ति । प्रस्तोताप्युत्तरं संप्रैषमाकांक्षमाणस्तत्रैव तिष्ठति ।

केचिदेतद् वाक्यद्वयमेकवाक्यतया व्याचक्षते । तिष्ठतीति शतः सप्तमी । अपरेण प्रवर्ग्यमस्मिन्नुद्वासनाङ्गभूते सामगाने प्रस्तोतरि तिष्ठति प्रवर्ग्यं युञ्जन्तीति । अस्मिन् व्याख्याने सामगायतः प्रस्तोतुः स्थानविशेषो न ज्ञायेत ।

**यदा…गायति** । द्वौ पक्षौ[14] तत्र विद्येते । यस्मिन् काले द्वितीयमपः परिषिञ्चति, अथैनमेवं संप्रेष्यति [प्रस्तोतः साम गायेति] । युगपदेव केचित् । सामद्वयाय संप्रेष्यति, प्रस्तोतर्वार्षाहरं[15] साम गाय, अष्टाहोत्रीयं चेति ।

---

[1] को. चरिधे
[2] को. दोः पञ्चकृत्वेपि
[3] को. हिंकारकृत्वयोत्र
[4] को. प्रतिपादं
[5] को. यजमानां
[6] को. ताण्डिनां
[7] को. कौषीतकिनामुक्तम्
[8] को. उपादानयैव
[9] रक्षांस्याग्रयन्ति
[10] को. देवेषं तदतो
[11] को. प्रतिष्ठापप्रवर्ग्य
[12] को. अवतिष्ठति
[13] को. अञ्जन्ति
[14] को. पक्षैकौ
[15] को. त्रस्तोतुर्वा°

ननु परिषिञ्चत्याप इति न युज्यते । सत्यमेतत् । आचार्यप्रामाण्यात्तु लक्षणमत्रानुमातव्यम् । आ अव इति वा व्याख्येयम् । आङ् पुनः किमर्थः[1], ईषदर्थो वाक्यालङ्कारार्थो वा ।

**स···गायति । अत्रैव···गायति ।** अन्यस्य देशस्याविहितस्याप्रसङ्गादत्रैव[2] तिष्ठन् इत्यनर्थकम् । नानर्थकम् । ईषदपि वार्षाहरणस्थानान्न चलितव्यमित्येतदर्थत्वात् । विसृज्यापि हि वार्षाहरणस्थानात्[3] तदग्रेण जघनेन वा किञ्चिदपसृत्य प्रवर्ग्यमपरेणैव स्थातुं शक्यम् । तदत्रैव तिष्ठन्निति वचनात् निवर्तते ।

**इष्टा···मुपयन्ति ।** इष्टाहोत्रीयग्रहणं तेन प्रयोजनम्, तं यदि ब्रूयुः विश्वरूपा गायेत्यादौ सन्निहितस्य सुब्रह्मण्यादेरग्रहणं न वार्षाहरस्य[4] । यान् प्रति पूर्वयोः साम्नोरत्र निधनोपायश्चोदितस्ते वार्षाहरस्य निधनं नोपयन्ति । प्रस्तोतुरन्य[5] इत्यर्थः । कुतस्तेषामत्र प्राप्तिर्न लक्ष्यते, प्राप्ति [प्रति] प्रतिषेधाकरणे[6] सामर्थ्यात्तु मन्यामहे । वार्षाहरस्य निधनोपायः कस्यां चितौ सर्वेषां विहित इति, एवं चेदयमाचार्यस्य श्रुतिविरुद्धप्रतिषेधो दोषः । प्रतिषेधकमपि वचनं दृष्टमित्यदोषः[7] । वचनद्वयमिदमश्रुतं कल्पयित्वा प्रस्तोतुरेव वार्षाहरं गायतो निधनमात्रं प्रतिषिध्यत इति गृह्णात्यन्तं[8] घटत इति । एवं हि गृह्यमाणे वार्षाहरस्य निधनमात्रं न ब्रूयादिति श्रुतिमात्रकल्पनमस्त्येवेति । किन्तु उपयन्तीति बहुवचनान्तमनुवर्तते । मानं विना प्रस्तोतुर्ग्रहणेनैकवचनान्तत्वेन[9] विपरिणमितुमशक्यं भवेत् । साम्नश्च निधनादृते गानं क्वचिदप्यदृष्टं परिगृह्यते । अस्मिंश्च वाक्ये प्रस्तोतुर्ग्रहणमयुक्तं स्यात् । उत्तरवाक्यार्थमपि प्रस्तोतुर्ग्रहणमभविष्यद् यद्यत्रैवाकरिष्यत् ।[10] नचैवं कृतम्, तस्मादयं पक्षो बहुदोषत्वान्नाश्रीयते । कल्पवचनाद् द्वयोरपि[11] पूर्व एव पक्षः श्रेयानिति[12]। सर्वत्र कल्पसूत्रकाराणां[13] वचनमसत्यां प्रत्यक्षश्रुतौ श्रुतिवचनानुमोदनेनैव प्रामाण्यं लभते । तस्मात् श्रुतिः किमेतस्य ज्ञापने प्रयोजनम् । सन्ति प्रवर्ग्यपरिगाणानि, तेषां च ब्रह्मजज्ञानीयादिभिस्तुल्यस्थानीयतां वक्ष्यामः । अतस्तान्यपि सकृदेवोदङ्मुखेनैव सता गातव्यानीति । अथवैकसंप्रैषाणां तुल्यधर्मतैषा ज्ञाप्यते । तेनाप्युक्तोऽर्थः सिध्यति ।

ननु ब्रह्मजज्ञानीयाद्यर्थ एवासौ संप्रैषः, कुत इदं लभ्यते । यदि प्रवर्ग्योपरिगाणानि गायेरन् तत्र विशेषाग्रहणादुभयार्थ एव संप्रैषः सम्पद्यते ।

**अथैतत्···भवति ।** अथास्मिन् कर्मणि समाप्ते एतद्वासः प्रस्तोतादत्ते । येन पत्नी आच्छादिता भवति । **इयैतं···गायेत् ।** शालां प्रत्याव्रजेत् ॥

घर्मो न सामे प्रथमे श्रोत्रियस्य न वा भवेत् ।
उक्थे च न स्यात् सर्वस्मिन् स्यादेव यदि विश्वजित् ॥१ ।

इति महोपाध्यायश्रीभवत्रातेन[14] विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ[15] [प्रवर्ग्योद्वासनं नाम]

पञ्चमः खण्डः

---

[1] को. किमर्थम्
[2] को. °तस्याप्रशंसादत्रैव
[3] को° °स्थाना
[4] को. वारस्य
*[5] को. प्रोस्तोतुरन्य
[6] को. प्रतिषेधकरणे
[7] को. दृष्टमत्यदोषः
[8] को. गृह्णत्यन्तं
[9] को. ° णेनैववचना°
[10] को. यद्यत्रैव करिष्यत
[11] को. कल्पावचनद्वयोपि
[12] को. श्रेयानि
[13] को. कल्पसूत्रकारणगं
[14] को. °श्रीभवत्रातृवि°
[15] को. जैमिनिसू°

## अथ षष्ठः खण्डः

यदा धिष्ण्यान् निवपन्त्यथाज्यस्थालीं स्रुवामादायोत्तरेणाग्नीध्रं च सदश्च परीत्यापरया द्वारा सदः प्रपद्यौदुम्बरीमन्वारभते । आयोष्ट्वा सदने सादयाम्यवश्छायां समुद्रस्य हृदये । नमः समुद्राय नमः समुद्रस्य चक्षसे । मा मा योनोर्वा हासीरिति । । अथैनामुच्छ्रयति, उद्दिवं स्तभानान्तरिक्षं पृण । पृथिवीमुपरेण दृंहेति । अथैनां मिनोति । द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेति अथैनामाज्येनाभिजुहोति । अग्रादुपक्रम्यामूलात् सन्तन्वन्निव घृतेन द्यावापृथिवी आप्रीणीथां सुपिप्पला ओषधीः कृधि स्वाहेति । अथैनां त्रिः प्रसलीपुरीषेण पर्यूहति । ब्रह्मवनिं त्वा क्षत्रवनिं सुप्रजावनिं रायस्पोषवनिं पर्यूहामीति । अथैनां दीक्षितदण्डेन दृंहति । ब्रह्म दृंह, क्षत्रं दृंह, प्रजां दृंह, रयिं दृंह, रायस्पोषं दृंह, सजातान् यजमानाय दृंहेति । अथैनामूर्ध्वाग्रैस्तृणैः प्रदक्षिणं परिवेष्टयति । अथैनां वाससा परिदधात्यनग्नत्वाय । अथैनां हस्ताभ्यां परिगृह्णाति । मय्यूर्जमन्नाद्यं धेहीति । एवमेव स्तोत्रे स्तोत्रे परिगृह्णाति ।।६।।

यदा…न्वारभते । प्रवर्ग्योद्वासनादूर्ध्वमग्निं प्रणीय सदो हविर्धानव्यापारं परिनिष्ठाप्य । धिष्ण्यान् निवपन्ति । तत्र यदा[1] धिष्ण्यानध्वर्यवो निवपन्ति तदनन्तरमुद्गातान्तरेण चात्वालोत्करौ प्रपद्याज्यस्थालीं स्रुवामादायाग्नीध्रं च सदश्चोत्तरेण परिवृत्यापरया[2] द्वारा सदः प्रपद्य सदसः [3]स्थूणामौदुम्बरीमारभमाणेनाध्वर्युणान्वारभतेऽनेन[3] मन्त्रेण ।

अथैनामुच्छ्रयति । अथैनाममनेन मन्त्रेणोच्छ्रयत्युत्थापयति । अथैनां मिनोति । पूर्वमेवाध्वर्युसम्प्रेषितेनोद्गात्रा । औदुम्बर्या वा खानितं भवति तस्मिन्नेनाममनेन मन्त्रेण मिनोति । यथोच्चं[4] वंशं धारयेत्तथैनां सम्पादयति ।

अथैनामाज्येनाभिजुहोति । अथैनामाज्यस्थाल्याः स्रुवेणोपहतेनाज्येनाग्रादुपक्रम्यामूलादविच्छिन्दन्नेव धारामनेन मन्त्रेणाभिजुहोति । अथैनां…पर्यूहति । अथैनां त्रिः प्रदक्षिणं चाम्बुना पर्यूहति । अनेन मन्त्रेण सकृदेव मन्त्रवचनम् । एवंविधासु चोदनासु [5]न्याय्यमधुप्राशनाधिकार एव प्रसङ्गेनावादिष्म । समस्तमवटं पूरयति ।

अथैनां…दृंहति । अथैनां दीक्षितस्य दण्डेन[6] षड्भिरेभिर्मन्त्रैरभितो[7] दृंहति[7] अभितो हन्ति । नचैकमन्त्र-

---

[1] को. यथा
[2] को. परिवृज्यापरया
[3] को. °मौदुम्बरीमारभमाणमध्वर्युमन्वारभते
[4] को. यथोदंचं ?
[5] को. न्यायं°
[6] को. मण्डेन
[7] को. अभितस्तद्रहति

त्वमेषामभिप्रेतव्यम्, अन्योन्याकाङ्क्षत्वादाख्याताभ्यासाच्च । तस्मात् प्रतिमन्त्रमत्र द्द्ंहणमावर्तेत । अवदच्च कौषीतकिः—'मन्त्रपृथक्त्वात् कर्मपृथक्त्वम्' इति । अथैनां···परिवेष्टयति । अथैनामूर्ध्वाग्रैः स्तृणैः परितो वेष्टयति यथा च तानि नापभ्रंशेरन् तथा रज्वा बध्नाति । अथैनां···दधात्यनग्नत्वाय । अथैनामुपरिदशेन वाससा परिदधाति समस्तां वेष्टयति तस्या अनग्नत्वभावाय । अथैनां···धेहीति । अथैनां हस्ताभ्यामनेन मन्त्रेण पर्यारभते । एवमेव···परिगृह्णाति । एवमेवानेन मन्त्रेण स्तोत्रे स्तोत्रे उपक्रम्यमाणे औदुम्बरीं परिगृह्णाति । किं बहिष्पवमानेऽपि, नेति ब्रूमः । नहि तस्यौदुम्बर्या सम्बन्धः । अतो ऽस्याः कृतः संस्कारो बहिष्पवमानस्य नोपकरोति ।

ननु [1]विहितत्वादुदुम्बरीपरिग्रहः[1] क्रियमाणो बहिष्पवमानस्याप्युपकरोति, इति मन्तव्यम् । नैवं युक्तम् । इत्थमवगम्यताम्, एकचोदनाप्रापितमङ्गं बहूनामप्युपकुर्वदेकधैवोपकरोतीति । अतश्च तेषां स्तोत्राणामैकरूप्येणोपकरोतीत्यनेन जनयितुं शक्यम्, तेषामेवैतदङ्गं विधीयत इति मन्तव्यम् । तस्मान्नायं विधिर्बहिष्पवमानमुपसर्पति । यत्र तु बहिष्पवमानं सदसि गीयते ऽहर्गणेषु तत्र सम्बन्धाद् बहिष्पवमाने ऽपि परिग्राह्यैवौदुम्बरी ।

यदि कर्मेदमध्वर्युरन्यदा कर्तुमिच्छति ।
तदैव कुर्यादुद्गाता समस्तमिदमञ्जसा ।।१।।

इति महोपाध्यायश्रीभवत्रातेन[2] विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ [औदुम्बर्युत्थापनविधिः]
षष्ठः खण्डः

[1] को °तत्वादुदुम्बरि° [2] को. भवत्रात्रा

## अथ सप्तमः खण्डः

अग्नीषोमौ प्रणीयाग्नीषोमीयमालभते । तस्मिन् वपान्त उत्करे तिष्ठन् सुब्रह्मण्यामाह्वयति पितापुत्रीयाम् । कौषिकब्राह्मण कौषिकब्रुवाणेति । आत उक्त्वा नामान्यावपति । असौ यजते ऽमुष्य पुत्रो यजते ऽमुष्य पौत्रो यजते ऽमुष्य नप्ता यजत इति चतुष्पुरुषम् । अमुष्य पितामुष्य पितेति पुत्राणां यथाजातम् । स्त्रीणामप्येके । जनिष्यमाणानां पिता पितामहः प्रपितामहो यजत इत्युत्तममाह । यथाम्नातं शेषम् । अत्रर्षभं ददाति सुब्रह्मण्याय । नैतां रात्रिं सदः कश्चन प्रपद्येत । ऋक्सामे अत्र मिथुनीभवतः, इति ब्राह्मणम् । परिहृतासु वसतीवरीषु श्वः सुत्याप्रवचनीं सुब्रह्मण्यामाहूयाग्नीध्रे पत्नीशालायामिति संविशन्ति । श्वः कर्मणो ऽनपगा भवन्ति ।।७।।

**अग्नीषोमौ···मालभन्ते** । अग्निं च सोमं च प्रणीयाग्नीषोमीयदेवताकं पशुमालभन्ते ऽध्वर्यवः । वक्ष्यमाणस्य विधेर्विषयप्रदर्शनार्थमिदमुक्तम् । **तस्मिन्···पुत्रीयाम्** । तस्मिन् पशौ वपाया अन्ते वपाहोमे कृते उत्करे तिष्ठन् सुब्रह्मण्या पितापुत्रीयाख्यां सुब्रह्मण्यामाह्वयति । पितापुत्रीयामिति संज्ञाकरणं संव्यवहाराभावादनर्थकम् । नानर्थकम् । उत्तरत्र सुब्रह्मण्याग्रहणे पितापुत्रीयायाः संप्रत्ययार्थत्वात् । अयमभिप्रायः—अत्र सुब्रह्मण्यां पितापुत्रीयामिति सामानाधिकरण्येनोक्तेः सार्थवत्वायोत्तरत्र सुब्रह्मण्याग्रहणे पितापुत्रीया ग्राह्येति। अथवा । पितापुत्रीयामिति पृथगेवेदं परिभाषावाक्यम् । तत्र पूर्वस्माद् वाक्यात् सुब्रह्मण्यामाह्वयतीत्यनुवर्तते । अयमर्थः—सुब्रह्मण्यामाह्वयतीत्युक्ते पितापुत्रीयां विद्यादिति । अत इदं सिध्यति द्वे अप्युत्तरे सुब्रह्मण्ये पितापुत्रीयेत्यवदद्[1] बोधायनः । पितापुत्रीयामधिकृत्याग्नीषोमीयस्य हुतायां वपायां परिहृतासु वसतीवरीषु द्वितीया, प्रातरनुवाके तृतीयेति ।

**कौशिकब्रुवाणेति**[2] । का सा पितापुत्रीया सुब्रह्मण्येत्याकाङ्क्षायामस्यामुपदेशे लक्षणतः क्रियते, कौशिकब्राह्मण कौशिकब्रुवाणेति। **आत···वपति** । सुब्रह्मण्यावयवमुक्त्वास्मिन्नवसरे[3] वक्ष्यमाणानि नामानि आवपति । आ अत इत्यनर्थकम् । पितापुत्रीयेति विशेषनामधेयदर्शनादन्येयम् । इहाम्नातमात्रैव सुब्रह्मण्येति कृत्वा कौशिकब्राह्मणेत्येवास्या उपक्रमस्य प्रसजतो निवृत्यर्थत्वात् । कौशिकब्रुवाणेत्यनेनैवोपलक्षणे सिद्धचति उभयस्य वचनं श्रुत्यनुकरणार्थम् । श्रुतावपि हि द्वयोरनयोरुत्तरस्यैव सत्यां[4] विवक्षायां पूर्वमप्युपादीयते । अथ ह वा एके कौशिकब्राह्मण गौतमब्रुवाणेत्याह्वयन्ति तस्मात् कौशिकब्राह्मणे कौशिकब्रुवाणेत्याह्वयेत् इति च ।

**असौ···चतुष्पुरुषम्** । असावित्यस्य[5] स्थाने यजमानस्य नाम प्रथमया निर्दिशेत् । अमुष्येति षष्ठचा पितृपितामहप्रपितामहानाम् । एवं चतुःपुरुषम्, चतुरः पुरुषान् नाम्ना निर्दिशेत् । तच्च सुखावगमाय कथ्यते ।

---

[1] को. पितापुत्रीयेति वदत्  [2] को. कौशिवपति  [3] को. स्मिन्नवसरो
[4] को. सुत्यां  [5] को. सोपीत्यस्य

देवदत्तो यजते, यज्ञदत्तस्य पुत्रो यजते, विष्णुमित्रस्य पौत्रो यजते, हरदत्तस्य नप्ता यजत इति । यच्च नाम अथातो नामकर्मेत्यधिकृत्य विहितं तदेवात्र निर्देष्टव्यम्, तदेव हि व्यवहार्यम् । पाठसिद्धेः चतुष्पुरुषमित्य-नर्थकम् । नानर्थकम् । चतुष्पुरुषमवश्यं निर्दिशेदित्येवं योज्यमाने वक्ष्यमाणानां पितापुत्रादीनां क्वचिदनिर्देश-ज्ञापनार्थत्वात् । तस्मादेवं ग्राह्यम्, जीवतामेवात्र पुत्रादीनां निर्देशो न मृतानामपि पुत्रादीनामिति । ननु यजमानस्यापि मृतस्य सत्रे निर्देशः प्रसजति, न प्रसजति । नहि मृतो यजते । मृता अपि तु पुत्रादिभावेन निर्दिश्यन्त एव । ननु पित्रादिभिरपि मृतैरस्यैव लोके निर्देशः, सत्यमेतत् । प्रसक्तमेव लोकतो मृतैरपि पुत्रा-दिनिर्देशमयं यतो निवर्तयति । अमुं जातं यजत इत्यनुवर्तते । अग्निशर्मणः पिता यजत इति, नारायणशर्मणः पिता यजत इति पुत्राणां जन्मक्रमेण नामानि गृह्णाति । [ननु] अमुष्य पितेत्येतावतैव पुत्राणामिति विज्ञातुं शक्यत्वात्, तथा च पुत्रपौत्रनप्तृग्रहणे च गतत्वात्. पितुः पितामहस्य प्रपितामहस्येति चाप्रयुक्तत्वात् पुत्रा-णामित्यनर्थकम्, नानर्थकम् । अकृतनामकानपि पुत्रान्निर्दिशेदिति ज्ञापनार्थत्वात् । कथमेषां निर्देशः, अस्ति जातमात्रस्यैव देवकृतं नाम, यन्नक्षत्रनामेति कथ्यते । तेनात्र निर्देशः । शतभिषजस्य प्रौष्ठपदस्येति पूर्ववयसां पूर्वग्रहणस्य लोकत एव सिद्धत्वाद् यथाजातमित्यनर्थकम् । नानर्थकम् ।

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ।।

**स्त्रीणामप्येके** । स्त्रीणामपि नामान्येके निर्दिशन्ति । एके इति वचनं विकल्पार्थम् । अतः स्त्रीणां नामानि गृह्णीत वा न वा । किं पुनरेतद् दुहितृविषयमेव आहोस्विदन्यविषयमपि, इति ब्रूमः । यदि हि दुहितृविषयमेवाभविष्यद् दुहितॄणामित्येवावक्ष्यत न स्त्रीणामिति । तत्रैवं योज्यम् । पुत्रः पौत्रो नप्ता पितेत्यनुक्रान्ते विषयचतुष्टये मातुः पितामह्या दुहितुश्च नामानि अमुष्या इति निर्दिशेदिति ।

ननु पत्न्या[1] अप्यसौ यजत इति निर्देशो यजमानवत् प्राप्नोति । यजति शब्दं हि पत्नीविषयं न क्वचिदप्युपलभामहे । पत्नीयजमानाविति च दृश्यते प्रयोगो, न यजमानाविति । यद्यपि यजमानेति पत्नी क्वचिदुपलक्ष्यते तथापि नात्र पत्नीनिर्देशः प्राप्नोति । एवमध्वर्युणा यजमानो ऽवबोध्यते[2] ।

नामग्रहांन्ते[3] पितृभि :पितामहैः प्रपितामहैः पुत्रैः पौत्रैः[4] सुब्रह्मण्यामाह्वयति । पत्न्या अपि चेन्नामग्रहण-मभिप्रैष्यत नामग्रहः[5] आवयोरित्यवक्ष्यत । यतस्तु नामग्रहं त इत्युक्तं, तस्मान्न पत्न्यादि-निर्देशः । अथवा स्त्रीणामपि नामभिरेके यजमानं विशेषयन्तीति व्याख्येयम् । ततश्च पत्न्यामप्रसङ्गः ।

**जनिष्य···त्तममाह** । जनिष्यमाणानामित्येतद्वाक्यं सर्वस्मान्नामनिर्देशादुत्तममाह । उत्तमग्रहण-मनर्थकम् । नानर्थकम् । पौत्रनप्तृनिर्देशज्ञापनार्थत्वात् । कस्मात् पुनः पौत्रनप्तृनिर्देशः स्पष्टं नाभिहितः, नियो-गतः पौत्रोत्पत्तेः प्राक् सोमेन यष्टव्यमिति ज्ञापनार्थत्वात् । नच पुरस्ताज्जातैः पौत्रनप्तृभिरनुपलक्षितस्य पश्चाज्जनिष्यमाणैर्युक्तमुपलक्षणम् । तस्मादमुष्य पितामहो यजते, अमुष्य प्रपितामहो यजत इति पौत्रनप्तॄ-न्निर्दिश्य पश्चाज्जनिष्यमाणानामिति वाक्यं प्रक्षेप्तव्यम् ।

ननु आद्यन्तपदानुषङ्गेण वाक्यत्रयमेतत् कल्पयितव्यम्, नैवम् । एकवाक्यतयाप्यभिप्रेतार्थावगमात् । यद्ययमेकवाक्यतया नैषिष्यत, असौ यजत इत्यादिवज्जनिष्यमाणानां पिता यजत इत्येवं भेदेनैवावक्ष्यत । यतस्त्वेवं नोक्तं तस्माद्यथाम्नातमेव वक्तव्यम् ।

---

[1] को. पत्या [2] को. नोऽवसोध्यते [3] को. नामग्रहन्ते
[4] को. पवित्रैः [5] को. नमग्रहः

**यथाम्नातं शेषम्** । शेषमवशिष्टं सुब्रह्मण्यावयवं यथाम्नातमाह । किञ्च [जनिष्यमाण] शब्दस्यायं प्रतिषेधो यथाम्नातमिति, नैवम् । श्वःसुत्यामित्युपवसथ इति वाक्यस्यानर्थकत्वप्रसङ्गात्[१] । एवं चेद् यथाम्नातमित्यनर्थकम् । नानर्थकम् । असौ यजत इत्यादेर्जनिष्यमाणवाक्यान्तस्य यथाम्नातवचननिवारणार्थत्वात् । तस्मादिमानि वाक्यान्यैकस्वर्येणाम्नातानि लाक्षणिकेनैव स्वरेण वक्तव्यानि । स्वरलक्षणं चात्र व्याकरणतो ग्राह्यम् ।

नन्वयत्नसिद्धमेतत्, लाक्षणिकः स्वरो ग्राह्य इति । सत्यमेतत् । सर्वस्या अपि सुब्रह्मण्यायाः व्याकरणत एव स्वरः सिध्यति । एवं सिद्धे सति यत् पूर्वस्यां सुब्रह्मण्यायां लाक्षणिकमेकस्वरमाचार्यः पाठेन प्रदर्शयति तज्ज्ञापयति ऐकस्वर्यपठितेषु लक्षणतो न स्वरः प्रवर्तत इति । ततश्च सर्वेषु ऋग्यजुर्निगदेषु यः स्वरोऽस्माकमाम्नाये दृश्यते स एव प्रयोगे ऽपि गृह्यते । तस्मादेषां नामवाक्यानां व्याकरणोक्तमपि स्वरमुक्तज्ञापनार्थानुरोधार्थमनुवादित्सितमतो यत्नादुपाददमहे । अथवा । पूर्वेण विधानेनास्य सम्बन्धं जनिष्यमाणानामित्येतन्निगदं यथाम्नातमाहेति । तत्र च वाक्यत्रयं न कल्पयितव्यमित्युक्तं भवति । ततश्च शेषमिति वाक्यं शेषमाहेति ।

**अत्रर्षभं······सुब्रह्मण्याय**[२] । अस्मिन् कर्मणि निमित्ते ऋषभं यजमानः सुब्रह्मण्याय ददाति । अधिकारादेवास्य विधेः पितापुत्रीयासंबन्धसिद्धेरत्रेत्यनर्थकम् । नानर्थकम् । अस्यामेव पितापुत्रीयायामृषभदानं नोत्तरयोरित्येतदर्थत्वात् । उत्तरे ऽपि हि पितापुत्रीये इत्येवावादिष्म[३] । तत्र नामधेयेन धर्मप्राप्तिरिति प्रसक्तमृषभदानमतो यत्नान्निवर्तते ।

**नैतां······प्रपद्येत** । एतामुपवसथीयां[४] रात्रिं[४] कश्चन पुरुषः न सदः[५] प्रपद्येत न प्रविशेत् । को हेतुरिति चेत्, ऋक्सामे इत्यत्र[६] मिथुनीभवतः । इत्यस्मिन्नर्थे ब्राह्मणमस्ति । ऋक्सामे अधिकृत्य श्रूयते— ताभ्यां सदो मिथुनाय पर्यश्रयन्त तस्मादुपवसथीयां रात्रिं सदसि न शयीत, अत्र ह्येतामृक्सामे उपवसथीयां रात्रिं सदसि सम्भवतः इति । अथवा नैतां रात्रिमित्यादि मिथुनीभवत इत्यन्तं शाखान्तरीयमिदं वाक्यं ब्राह्मणमिति प्रदश्यते ।

**परिहृतासु······संविशन्ति** । परिहृतासु वसतीवरीष्वध्वर्युसंप्रेषितं सुब्रह्मण्याः[७] श्वः[७]सुत्याप्रवचनीं नाम सुब्रह्मण्यामाहूय स्वयमुद्गात्रादयश्चाग्नीध्र पत्नीशालायाञ्च संविशन्ति । अत्रोत्करे तिष्ठन्नित्यवचने ऽपि स्थानान्तरस्याविज्ञानादुत्करमास्थाय सुब्रह्मण्यामाह्वयतीति । श्रुतिवचनस्य शाकवर्जंसुब्रह्मण्यविषयत्वादुत्कर एव तिष्ठन् आह्वयति । अत्रोत्करस्याचोदनायां ज्ञाप्यते देशावचने स्वजातीयदेश[८]ग्रहणमिति । एतेन[९] संसत्रविश्वरूपाणामपि पश्चादक्षमेवोपरि गानं सिध्यति ।

**श्वः···भवन्ति** । कर्मवन्तश्च कर्तव्यं कर्म च[१०] । कर्मार्थिमनपगा[११] भवन्ति । आग्नीध्रपत्नीशालासंवेशनविधानादेव यज्ञदेशाद् ऋत्विग्यजमानानामनपगमनस्य[१२] सिद्धत्वादिदं वाक्यमनर्थकम् । नानर्थकम् । सर्वपुरुषार्थत्वात् । तस्मात् सुब्रह्मण्याह्वानकाले ये यज्ञदेशान्तर्वर्तिनः पुरुषास्ते च कर्मण्यपरिसमाप्ते नापगच्छेयुः ।[१३] यज्ञमेवेक्षमाणा आसीरन् ।

अन्त्यं सुबन्तस्योदात्तं न मान्तस्यास्य मध्यमे ।
आद्यं य-जे-स्य-तं पूर्वं षष्ठचन्तः प्रश्च[१४] हृस्तथा[१४] ।।१।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ पितापुत्रीया विधिः सप्तमः खण्डः ।

---

[१] कों. स्यानर्थकवत्वप्र॰ [२] को. सुब्रह्मन्याया [३] को. इत्येवादिष्म [४] को. एतामुपवसथोयारात्रं
[५] को. सदा [६] को. ऋक्सामेत्यत्र [७] को. सुब्रह्मण्यास्ससुत्या॰ [८] को. यदेशाग्रहणम्
[९] को. इतेन [१०] को. कर्म च कर्म च [११] को. कर्मार्थिमनवगा [१२] को. नामनवगमनस्य
[१३] नावगच्छेयुः [१४] षष्ठयाः पुश्च हान्तये

## अथाष्टमः खण्डः

काल एनमामन्त्रयन्ते । स यज्ञोपवीतं कृत्वाप आचम्यान्तरेण चात्वालं चोत्करं च प्रपद्यते । ज्या असि सुधां मे धेह्यायुष्मन्तस्तद्वर्चस्वन्त उद्गेष्म । एतदेव प्रपदनमेतदुदयनम् आज्यग्रहान् गृह्णत्सूत्करे तिष्ठन् सुब्रह्मण्यामाह्वयत्यद्यसुत्यामिति । तं यदि ब्रूयुर्विश्वरूपा गायेत्यकर्मण एतत्त्रयोदशं स्तोत्रमिति ब्रूयाद् विराजं लोभयतीति । संसवे तु कार्यम् । अभिषवस्य काल आगच्छति स पूर्वया द्वारा हविर्धानं प्रपद्य विष्णोः पृष्ठमसीति दक्षिणं हविर्धानमभिमृशति । विष्णो रराटमसीत्युत्तरम् । सोऽन्तरेण हविर्धाने गत्वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपविशति । अहे दैधिष व्योदतिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरस्तस्य सदने सीद निरस्तः परावसुरिति । तृणं निरस्यति यत् प्रतिशुष्काग्रं भवति यद्वा प्रतिच्छिन्नाग्रम् । अप उपस्पृश्य आ वसोः सदने सीदामीति सीदति । एतेनैवोपविशति यत्र यत्र करिष्यन् भवति । अथाह नमः पितृभ्यः पूर्वसद्भ्यो नमः साकं निषद्भ्यः । युञ्जते वाचं शतपदीं गाये सहस्रवर्तनीम् । गायत्रं त्रैष्टुभं जगद् विश्वारूपाणि संभृतं देवा ओकांसि चक्रिर इति । अथास्मा अधोऽक्षं द्रोणकलशं प्रयच्छति । तं प्रतिगृह्णाति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति । तं प्रतिगृह्य दक्षिण ऊरौ निधायोपर्यक्षं पवित्रमपहृत्य पवयति । वसवस्त्वा पुनन्तु गायत्रेण छन्दसा सुप्रजावनिं रायस्पोषवनिमिति । तं पवयित्वा पश्चादक्षं सादयति । बार्हस्पत्यमसि वानस्पत्यं प्रजापतेर्मूर्धात्यायुपात्रमिति । तं पश्चादक्षं सादयित्वा गायत्रं विश्वरूपासु गायतीति ब्राह्मणम् ॥८॥

काल......यन्ते । श्वः कर्मण इति पूर्वमुक्तवान् । अस्य[1] कमणः काल आगत एनमर्थतस्तस्य कर्मणः कर्तारमामन्त्रयन्ते । एवं चेत् कर्तॄणां बहुत्वादेनमिति[2] न वक्तव्यम्, एकवचनप्रयोगेऽप्यामन्त्रमाणान् पुरुषान् प्रत्यामन्त्रणस्य गुणभूतत्वात् 'प्रतिप्रधानं गुणभेदः' इति न्यायेन सर्वेषां चामन्त्रणं सिध्यति । यदि चैकस्यैव गृह्येत विशेषो नावगम्येत । नचात्र समाख्यया शक्यमुद्गातुरेवामन्त्रणं वक्तुम्, कर्तृविषया हि समाख्या, आमन्त्रणञ्च प्रति कर्मभूताः पुरुषाः । अतः सर्वेषामुद्गात्रादीनां कर्मकरणार्थमिदमामन्त्रणं चोद्यते ।

स यज्ञोपवीतं......उद्गेष्मेति । स आमन्त्रितः कर्ता यज्ञोपवीत्याचम्य चात्वालं चोत्करं चान्तरेणानेन यजुषा महावेदिं[3] प्रपद्यं प्रपद्यते । येषामन्तर्वेदि[4] प्रयोजनं तेषामेवैतद्विधानमतः सुब्रह्मण्यो बहिर्वेद्येवासीत उद्गेष्मेति लिङ्गस्यानवक्लृप्तिप्रसङ्गान्नानेन यजुषा ब्रह्मयजमानौ प्रपद्येताम् । [5]एतदेव प्रपदनम्[5] । प्रपद्यन्तेऽने-

---

[1] को. असु
[2] को, बहुत्वादेनानिति
[3] को. माहावे
[4] को. तेषां
[5] को. एततदनम् ।

नेति प्रपदनम् । यदन्तरेण चात्वालोत्करावुक्तं वर्त्म तदतिदिश्यते । एतदेव सर्वत्र महावेद्यां प्रपदनं प्रवेशवर्त्म भवति । एतदुदयनम् । उद्यत्यनेनेत्युदयनमुत्तममेव[1] वर्त्म[1] निर्दिश्यते । एतदेव सर्वत्र महावेद्या उदयन[2]-निष्क्रमणं वर्त्म भवति । तद्द्वयमिदं परिभाषावाक्यम् । अतः स्नानभोजनाद्यर्थमपि महावेदेर्निष्क्रमतां पुनश्च तां प्रपद्यमानानामिदमेव वर्त्म स्यात् ।

**आज्यग्रहान्···सुत्यामिति** । सन्त्याज्यग्रहा नाम ग्रहाः, तानध्वर्युषु गृह्णत्सु सुब्रह्मण्य उत्करे तिष्ठन् अद्यसुत्यामिति[3] निर्दिशेत् । सुब्रह्मण्यामाह्वयति । **तं यदि······लोभयतीति** । प्रकृतस्य सुब्रह्मण्यस्य गानानुपपत्तेरत्रोद्गाता निर्दिष्यते । [तम्] उद्गातारं विश्वरूपा गायेति यदि ब्रूयुरध्वर्यवः, अकर्मण[4] एतत्[5] त्रयोदशं स्तोत्रं[5] विराजं लोभयतीति प्रतिब्रूयात् । प्रतिवचनस्यायमर्थः—अकार्यं चैतत्[6] त्रयोदशं स्तोत्रं विराजं लोभयतीति विनाशयतीति हेतुना । विश्वरूपाणां गाने विराजो लोभनं दोषः कीर्त्यते । अग्निष्टोमस्य हि प्रकृतस्य नवतिशतं स्तोत्रया सम्पद्यन्ते,[7] तासु नव दशाक्षरा[7] विराजः दशाक्षरा विराट् (ऐ. ब्रा. ६.२०) इति दर्शनात् । अस्ति च वचनम् विराट्सम्पदैव यज्ञेन यजेत इति । यदि चास्मिन् काले विश्वरूपागानं क्रियेत वसतीवरीग्रहेण[8] प्रातरनुवाकेन शस्त्रेण त्रयोदशमिति वेदं स्तोत्रं भवेत् । उक्तं हि बोधायनेन वसतीवरीग्रहमधिकृत्य[9] विश्वरूपा उ हास्य स्तोत्रभक्तिर्भवति, प्रातरनुवाक उ शस्त्रभक्तिः इति । यदस्माभिरस्मिन् काले विश्वरूपागानमकुर्वद्भिः स्तोत्रभावोऽस्य परिह्रियते । वसतीवरीग्रहणं प्रातरनुवाकान्तर्वर्तिता हि विश्वरूपाणां स्तोत्रत्वे कारणम् । तस्मादित्थं प्रत्याख्याय पश्चादेव विश्वरूपागानं करिष्यते ।

**संसवे तु कार्यम्** । द्वयोर्यजमानयोरेकस्मिन्नग्नीषोमाभिषवः संसवः, स च शत्रुविषय एव । नाविपद्विषयः[10] संसवो विद्यते इति वचनात् । सोऽयं संसवोऽस्माकमपि श्रुतौ दृश्यते यदि सोमौ संसुतौ स्याताम् (तां ब्रा. ४.१) इति । तत्रेदमुच्यते— संसवे तु विराजो लोभनमनपेक्ष्यास्मिन्नेव[11] काले विश्वरूपागानं कार्यम् । संसवे हि यस्य सोमस्तोत्रं तत्रैवाधिकः स यजमानो जयति । तस्मादिदं त्रयोदशमपि स्तोत्रं गुणायैव तत्र भवतीति ।

**अभिषवस्य···आगच्छति** । सोमाभिषवस्य काल आगच्छत्युत्तरस्य विधेः कालावगमार्थमिदमुक्तम् । **स पूर्वया···अभिमृशति** । स उद्गाताभिषवकाले पूर्वया द्वारा हविर्धानं प्रपद्य दक्षिणं हविर्धानमनेन मन्त्रेणाभिमृशति । **विष्णो···त्युत्तरम्** । अनेन मन्त्रेणोत्तरं हविर्धानमभिमृशति । उत्तरस्मिन् वाक्ये सोऽन्तरेण हविर्धाने गत्वेत्यभिधानात्[12] पुरस्तादेव तिष्ठन् हविर्धाने अभिमृशेत् । **सोऽन्तरेण···समुपविशति** । सोऽन्तरेण हविर्धाने प्रत्यङ्मुखो गत्वा दक्षिणस्य हविर्धानस्य पश्चादक्षं वक्ष्यमाणेन क्रमेणोपविशति । **अहे···नाग्रम्**[13] । **अप उप···सीदति** । **एतेनैवोप···विशति** । यत्र यत्र देशे आसीनः कर्म करिष्यन् भवति तत्र तत्रोपविशन्नेतेनैव क्रमेणोपविशति । नन्वयमुपवेशनक्रमो मधुप्रवेशने विधीयेत तत्रैवेयं परिभाषा कस्मान्न क्रियेत, तत्र च कृतायामत्रोपवेशनक्रमस्यावचने ग्रन्थलाघवो[14] भवतीति । तत्र

---

[1] को दमुत्तमेव
[2] को. उदयनीं
[3] को. अद्यसुतामिति
[4] को. अकर्म न
[5] को. एकत्रयोदशवस्तोत्रं
[6] को. नैतत्
[7] को. ता नवदश
[8] को. वसतीवरीभिगृहेण
[9] को. गृहमधि°
[10] को. नाविपद्विषया एवो
[11] को. नमवेक्ष्या°
[12] को. गत्येत्यभि°
[13] को. लाघवं
[14] को. णाग्रम्

ब्रूमः—यद्येषा परिभाषा मधुप्राशनाधिकारेऽकरिष्यत उद्गातुरेवायमुपवेशनक्रमोऽभविष्यत्, स एव हि तत्र प्रकृतम्। अत्रापि स एवेति चेन्न। कालत्यक्तोक्तेन न्यायेन सर्वेषां प्रकृतत्वात्। तस्मात् प्रस्तोत्रादीनामपि कमर्थिमुपविशतामस्य क्रमस्य प्रापणार्थमत्रैव परिभाषा क्रियते। एवं चेदनेन परिभाषावाक्येन सर्वत्र सिद्धत्वान्मधुप्राशने वचनमनर्थकम्। नानकर्थम्[1]। तस्याः परिभाषायाः सामगानार्थोपवेशनविषयत्वज्ञापनेनैवार्थवत्वात्। ततश्च भिक्षाचयनहोमाद्यर्थं[2] यदुपवेशनं तत्र तूष्णीमेव कर्तव्यम्। अस्मिन् विषये पश्चात् प्राञ्च उपसीदन्ति (जै. ब्रा. १।७७) इति। श्रुतौ बहुवचनदर्शनात् प्रस्तोतृप्रतिहर्त्रोरप्युपवेशनं केचिदिच्छन्ति, तत्त्वनाचर्यम्[3]। उद्गातुरेवात्र कर्मदर्शनात्। बहुवचनदर्शनं चैवं परिहार्यम्। अस्ति द्रोणकलशप्रोहणेऽपि श्रुतौ बहुवचनं यत् अधोऽधोक्षं[4] द्रोणकलशं प्रोहन्ति (जै. ब्रा. १.७७ तां. ६.५.१४) इति। तस्मिन् पक्षे सर्वेषामुपवेशनार्थं बहुवचनं पश्चात् प्राञ्च उपविशन्ति इति। आचार्येण तु यदधोऽधोक्षं[5] द्रोणकलशं प्रोहन्तीति यद्, एकवचनयुक्तं प्रोहणं, तदाश्रीयते। तथा हि वक्ष्यति, तैः प्रोहतीति। तस्मादस्य प्रोहणस्य कर्तोद्गातैवोपविशेत्।

**अथा···चक्रिर इति।** अथ नमः पितृभ्य इत्येतान् सप्त पदानुद्गाता हविश्चरू वेति बहुवचनेनासामन्यत्र ग्रहणात् साम्नि चैवं दर्शनात् तिस्र एता ऋचस्तासां प्रथमा गायत्री। उत्तरे द्विपदे पदद्वयाभ्यासेन साम्नि सर्वगायत्र्यः। तत्र द्वाभ्यां द्वाभ्यामेकेन द्वाभ्यां द्वाभ्यामित्यवस्येत्। एकमेवार्धर्चेश उक्ता भवन्ति। प्रतीकग्रहणेनापि सिध्यति लिङ्गप्रदर्शनार्थमासामत्र पाठः क्रियते। ततश्च गायत्रं त्रैष्टुभं जगदिति लिङ्गानुरोधेन सवनत्रयार्थोऽयं प्रायो ग्राह्य इति ज्ञापितं भवति। तेनोत्तरस्मिन् सवने आसामप्रयोगः सिद्ध्यति। अथवा यत्रैताः पठ्यन्ते[6] तत्रैवासां प्रयोगो ग्राह्य इति विज्ञापितं भवतीति। अयमर्थः पाठेन ज्ञाप्यते। एवमप्युक्तोऽर्थः सिध्यति, इदमादि जपकरणवर्जं सवनस्यैव प्रयोगः।

**अथास्मा···प्रयच्छति।** अथास्मा उद्गात्रे अधोऽध अक्षस्य समीपत एव अधस्ताद् द्रोणकलशमध्वर्युरन्यो वा प्रयच्छति। **तं प्रति गृह्णाति···प्रतिगृह्णामीति।** **तं प्रतिगृह्य···पवयति।** तं प्रतिगृह्य दक्षिण ऊरौ निधायाक्षमुपर्युपर्यक्षस्य समीपत एवोपरि पवित्रमपहृत्य तेन पवित्रेण त्रिभिरेभिर्मन्त्रैस्त्रिः पवयति।

**तं पवयित्वा···सादयति।** तं पवयित्वा पश्चादक्षमक्षस्य पश्चादनेन मन्त्रेण सादयति। **तं पश्चादक्षं···गायतीति।** तं द्रोणकलशमक्षस्य पश्चात् सादयित्वा विश्वरूपासु गायत्रं गायति। नमः पितृभ्यः (जै. ब्रा. १.७४) इत्येताः विश्वरूपा विद्यन्ते[7] ह्यासु। विश्वारूपाणि सम्भृतम् (जै. ब्रा. १.७४) इति ब्राह्मणम्। इति शब्दः पूर्वविधिं परामृशति। इत्थं ब्राह्मणमपि विद्यते तं पश्चादक्षं सादयित्वा गायत्रं विश्वरूपासु गायति (जै. ब्रा. १.७३)। इत्यर्थमिदमुच्यते। अस्य विश्वरूपागानस्य द्रोणकलशव्यापारमध्यवर्तिनस्तदङ्गत्वाशङ्कानिवृत्यर्थमयमभिप्रायः। कस्यचित् कर्मणो मध्ये तदसम्बन्धस्य कर्मणोऽन्याय्या क्रिया, तथाप्यत्र विश्वरूपा गीयन्ते, यत इदं ब्राह्मणम्। नहि वचनविहितमनाचर्यं भवति[7]। अथवा। यानि प्रातःसवनाङ्गानि श्रुतावेव विधीयन्ते तैरस्य साधर्म्यमनेन वाक्येन प्रतिपाद्यत इति ब्राह्मणं न विदधाति।

---

[1] को. नास्ति पाठो मूले [2] को. भिक्षाचमन० [3] को. तत्वनार्यम्
[4] को. अधोक्षं [5] को. यदधोक्षं [6] को. पमते
[7] को. विद्यते

ब्राह्मणत एवेदमङ्गत[1] इति[2] मन्तव्यं, देवसोमभक्षणादिवदित्यर्थः, किमर्थं फलमित्युत्तरसवनादौ[2] वक्ष्यामः।

द्वौ कालौ विश्वरूपाणां गाने श्रुत्या विकल्पितौ।
तयोरुत्तरमाचार्यः संसवार्थममन्यत ॥१॥

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ विश्वरूपागानविधिः अष्टमः खण्डः

## अथ नवमः खण्डः

तं प्रोहति वसवस्त्वा प्रोहन्तु गायत्रेण च्छन्दसा रुद्रास्त्वा प्रोहन्तु त्रैष्टुभेन च्छन्दसादित्यास्त्वा प्रोहन्तु जागतेन च्छन्दसेति। उपर्युपर्यक्षं पवित्रमत्यस्यति। नाक्षमुपस्पृशेत्। यथैतं परेत्यापरेणोपरवान् प्राङ्मुख उपविश्य द्रोणकलशमभिमृशति तनूपा असि तन्वं मे पाहि वर्चोधा असि वर्चो मे धेहि आयुर्धा असि आयुर्मे धेहि वयोधा असि वयो मे धेहीति। सम्मुखान् ग्राव्णः कृत्वाभिमृशति श्येना अजिरा ऋतस्य गर्भाः प्रयुतो नपातः पर्वतानां ककुभ आ नस्तं वीरं वहत यं बहव उपजीवामो ऽभिशस्तिकृतमनभिशस्त्यमन्यस्याभिशस्त्याः कर्तारमिति। तेषु द्रोणकलशमध्यूहतीदमहं मा ब्रह्मवर्चसे ऽध्यूहामि यजमानं स्वर्गे लोक इति। तं दृंहति देवी त्वा धिषणे निपातां ध्रुवे सदसि सीदेष ऊर्जे सीदेति। तमन्तरीषे पवित्रमपहृत्य संमार्ष्टि वसवस्त्वा संमृजन्तु गायत्रेण च्छन्दसा रुद्रास्त्वा संमृजन्तु त्रैष्टुभेन च्छन्दसादित्यास्त्वा संमृजन्तु जागतेन च्छन्दसेति। तदुदीचीनदशं पवित्रं वितनोति पवित्रं ते विततं ब्रह्मणस्पत इत्येतेन तृचेन। राजानमानयन्ति। तमभिमन्त्रयते स पवस्व सुधामा देवानामभि प्रियाणि धामा त्रिर्देवेभ्यो ऽपवथास्त्रिरादित्येभ्यस्त्रिरङ्गिरोभ्यो येन तुर्येण ब्रह्मणा बृहस्पतये ऽपवथास्तेन मह्यं पवस्व। स नः पवस्व शं गवे शं जनाय शमर्वते शं राजन्नोषधीभ्य इति। संततं शुक्रं पवयन्ति। ग्रहान् गृह्णन्त्यध्वर्यवः। आग्रयणग्रहं गृह्णन् हिंकरोति। तदेव हिंकृतं भवति। अथोद्गातैकर्चं गायत्रं गायत्युच्चा ते जातमन्धसेति। गृहीतेषु ग्रहेष्वप उपस्पृश्य पृथिवीमभिमृशति द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्रा इति। आ मास्कान्सह प्रजया रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्यात्मानं प्रत्यभिमृशति ॥ ९ ॥

---

[1]को. वचनविहितमनार्याणामेति [2]को. फलमुत्तारस्वनादौ

**तं प्रोहति···सेति** । तं द्रोणकलशं त्रिभिरेभिर्मन्त्रैरक्षमधोऽधोऽक्षं[1] प्रोहति । **उपर्यु···स्यति** । अक्षमुपर्युपरि तं द्रोणकलशे न्यस्यति । तमन्तरिक्षात् पवित्रमवहृत्येत्युत्तरत्र दर्शनाद्धविर्धान इत्यध्याहर्तुं युक्तम् । न द्रोणकलश इति । सत्यमेवमेवाभविष्यद्, यदस्यैव पवित्रस्य तदपि दर्शनमभविष्यत् । अन्यकृतं पवित्रं येन द्रोणकलशसंमार्गं सोमपवनं च क्रियते । श्रुतौ हि स्वर्भानुर्वा असुर आदित्यं तमसाविध्यत (जै. ब्रा. १.८०) इत्यधिकृत्य गुणमस्य पवित्रं कुर्यात् (जै. ब्रा. १.८१) इति । सगुणस्य पवित्रस्य विधिर्द्रोणकलशग्रहणविध्यनन्तरं क्रियते, तदनन्तरं च श्रूयते तदन्तरेषे अवहृत्य संमार्ष्टि, तदुदीचीनदशं पवित्रवत्या वितनोति (जै. ब्रा. १.८१) इति च । यदि चैकेनैव पवित्रेण सर्वोऽप्युद्गातृव्यापारः स्याद् द्रोणकलशपवनाधिकार एव प्राथम्यात् पवित्रोत्पत्तिः कथ्येत । तस्माद् द्रोणकलश एवेदं पवित्रमत्यस्येत्[2] । तदध्वर्युर्ग्रहसंमार्गार्थमाददीत ।

**नाक्षमुपस्पृशेत्** । अक्षं नोपस्पृशेत् । अक्षस्य समीपे व्याप्रियमाणप्रमादे नाक्षमुपस्पृशेत् । अपीति कृत्वा तत्प्रतिषेधः क्रियते । **यथैतं···धेहीति** । यथैतमन्तरेणैव हविर्धाने परेत्योपरवानपरेण प्राङ्मुख उपविश्यानेन यजुषा द्रोणकलशमभिमृशति । अस्मिन्नुपवेशने साम गेयं वक्ष्यते । तस्मादत्रावृतैवोपविशेत् । **संमुखान्··· मृशति** । सङ्गतमुखान् [ग्राव्णः] कृत्वानेन मन्त्रेणाभिमृशति । **तेषु···स्वर्गे लोक इति** । तेषु सम्मुखेषु ग्रावसु अनेन मन्त्रेण द्रोणकलशमध्यूहति अधिश्रयति । तं दृंहति । तमनेन यजुषा दृंहति दृढीकरोति । यथा न कम्पते तथा करोति । **तमन्व···छन्दसेति** । द्वितीयपवित्रमन्तरिक्षादवहृत्य तेन द्रोणकलशं त्रिभिरेभिर्मन्त्रैस्त्रिः संमार्ष्टि । **तदुदीचीन···तृचेन** । तत्पवित्रमुदीचीनदशं पवित्रन्त (जै. सं. १.५७) इत्यनेन तृचेन वितनोति द्रोणकलशस्योपरि[3] । तत्र हि सोमः पवयिष्यते । अथवा तच्छब्दोऽयं च पवित्रविशेषणार्थः निपातोऽयं सप्तम्यर्थः । तस्मात् तदिति द्रोणकलश इति व्याख्येयम् । मन्त्राणां पृथगुक्तत्वात्[4] त्रिः[4] वितनोति ।

ननु तिसृभिरित्यनुक्तत्वात्तृचेनेत्युक्तत्वात् तृचस्यान्ते सकृदेव वितनितव्यम् । यदि च त्रिः वितन्येत पूर्वं निपातद्वयं व्यर्थं भवेत् । अत्र ब्रूमः—तिसृभिरेभिरिति पदद्वयेन योऽर्थो वाच्यः स एवोच्यते तृचेनेति । यदि चात्र भेदो न गृह्येत पुरुषसूक्तेन जुहुयात् इत्यत्र सूक्तान्ते सकृदेव हूयेत । नच तत्रैवं क्रियते, तस्मादत्रापि त्रिभिरेव वितनितव्यम् । वितानद्वयवैयर्थ्यं चैवं परिह्रियते[5] । प्रथमया पवित्रस्यैको भागो वितनितव्यो[6] द्वितीययाप्येकस्तृतीययाप्येक इति[7] ।

**राजानमानयन्ति** । सोममुन्नेता पवित्र आनयति । **तम···पवस्व** । तमानीयमानमुद्गाता आभ्यामृग्यजुषाभ्यामभिमन्त्रयते । मह्यं पवस्वेत्यन्तं यजुः । ऋगुत्तरा । **सन्ततशुक्रं पवयन्ति**[8] । शुक्रं सोमम् । तं सन्ततं विच्छिन्नधारमुद्गातारः पवयन्ति । कथं पवयन्ति । **पवित्रं परिगृह्णन्ति** । ननु सेचने मुख्यता[9] पवनशब्दे, नेति ब्रूमः । उभयस्मिन्नस्मिन् क्रियमाणे वपनपरिग्रहणयोर्विवेको[10] भवति सोमानयने पवित्रग्रहे च । तत्र सोमानयनमुन्नेतुश्चोदितमतः पवित्रमेवोद्गातारः परिगृह्णन्ति सोमं पवयन्ति । अस्मिन् पवित्रग्रहणकाले[11] प्रस्तोतृप्रतिहर्तारौ प्रपद्येताम्[12] । सामगानाभावाच्च तूष्णीमेवोपविशेताम्[13] । आवृतेव तु प्रस्तोता परिगाणग्रहण उपविशेत् । **ग्रहान् गृह्णन्त्यध्वर्यवः** । सोमग्रहानध्वर्यवो गृह्णन्ति । **आग्रय[14]···हिं करोति[14]** । आग्रयणं[15] नाम

[1]को. धोस्त्रं [2]को. परिक्रमत्य. [3]को. द्रौणकलशः सोपरि
[4]को. पृथगुक्तत्वादत्र [5]को. परिहूयते [6]को. वितनितव्यम्
[7]को. द्वितीयाप्येकं त्रितीयाप्येकं [8]को. सन्नयन्ति [9]को. मुख्या
[10]को. रसजिषयोर्वि. [11]को. पूरिग्रह. [12]को. प्रपद्येयाताम्
[13]को. तूष्णीमेवोपरिशेताम् [14]को. अध्वरोति [15]को. आश्रयणं

ग्रहं गृह्णन्नध्वर्युर्हिंकरोति । लक्ष्यमाणस्य विधेः कालज्ञापनार्थमिदमुक्तम् । तदेव हिंकृतं भवति । तदेव[1] हिंकृतं[1] हिंकारो भवति यदुत्तरस्मिन् वाक्ये उद्गात्रा गेयं साम विधास्यते । तस्याध्वर्युकृतो हिंकारो भवतीत्यर्थः । नचैतदयुक्तमित्याशंक्यम्, तदाश्रयणाङ्गत्वेनाध्वर्युणा क्रियमाणोऽयं हिंकार उद्गात्रा गीयमानस्य साम्नोऽप्यंगत्वेनोपकरोति । श्रुत्या ह्ययमर्थो विहितः—अध्वर्युराग्रयणग्रहं गृह्णन् हिंकरोति यदेव हिंकृतं भवत्यथोद्गातैकर्चे गायत्रं गायत्युच्चा ते जातमन्धसः इति । नचास्ति श्रुतिविहितमयुक्तं नाम । अथवा न विधिः अर्थवादोऽयं तदेव हिंकृतं भवतीति । अर्थवादेषु च सतोऽसतो वार्थस्य स्तुत्यर्थमुपादानमदोषः । किं पुनरर्थवादेन, सूत्रे प्रयोजनं शास्ति, प्रयोजनं, शीलमेवाचार्यस्य[2] यत् क्वचिच्छ्रौतमर्थं श्रुतिवाक्येनैव वदतीति । श्रुत्यनापत्तये च ग्रन्थगौरवपरिहरणार्थमर्थवादमपि नोद्धरति ।

**अथोद्गा···मन्धसेति ।** अध्वर्युहिङ्कारानन्तरमुद्गाता[3] उच्चा ते जातमन्धसेत्यस्मिन्नेकर्चे गायत्रं गायति । श्रुतिवाक्यत्वादुद्गातृग्रहणमपरिहार्यम् । अथवा सत्यस्मिन्नुद्गातृग्रहणे आनन्तर्याङ्गभूतहिङ्कारकर्तृत्वाच्चाध्वर्युर्नेदं वा साम गेयमाशंक्येत । यद्यप्याशङ्क्येत, अथोद्गातैकर्चे गायत्रं गायति इति श्रुतिरेवेयमाशंकां निवर्तयति । एवं चेदिदमुद्गातृग्रहणं कुर्वन्नाचार्यो ज्ञापयति--अनादिष्टकर्तृकं गानमनुद्गत्रिमपि क्वचिदानन्तर्यात् कुर्यादिति । किं प्रयोजनम्, सन्ति परिगाणानि दीक्षणीयायां[5] तार्क्ष्यसामानि, गायेदित्यारभ्य विहितानि, तानि कर्तृनाशादुद्गातुः प्रसक्तानि । ज्ञापकादस्मात् प्रस्तोतुर्गातव्यानि । अस्तीह तस्यानन्तर्यं[6] यतोऽयमनन्तरविहितानि प्रवर्ग्यसामानि गायति । उक्तञ्च तण्डिनां सूत्रे सर्वत्रानादेशे परिगाणानि प्रस्तोता गायेत् इति । अस्माकमप्यन्यार्थदर्शनमेवमेवोपपद्यते[7] यदुद्गाता प्रथमेन कर्मणौदुम्बरीमन्वारभते इति ।

**गृहीतेषु···होत्रा इति ।** सर्वेषु ग्रहेषु[8] गृहीतेष्वप उपस्पृश्याद्भिर्हस्तौ प्रक्षाल्य पृथिवीमनयर्चाभिमृशति । **आ मा स्कान्···प्रत्यभिमृशति ।** अनेन यजुषात्मानं प्रत्यभिमृशति उरः प्रत्यात्मानं प्रत्यभिमृशति इति परवचनदर्शनादुरो निमृष्टव्यः । अथवा प्रतिशब्दोऽयं नोपसर्गः, कर्मप्रवचनीयोऽयं[9] लक्षणेऽत्र प्रवर्तते । तस्मादेवं योज्यम्—आत्माभिमर्शनं प्रत्यात्माभिलक्षितं देशमभिमृशतीति । अतश्चात्मनः स्थानं हृदयमभिमृष्टव्यम् । कुतो ननु सर्वगतस्यात्मनो हृदयमेव विशेषेण स्थानं[10] कथ्यते, श्रुतावेवं दर्शनात् "तस्येह तस्यै देवतायै हृत्पिण्ड···इति । भगवद्गीतासु च दृश्यते—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।। (भ. गीता १८.६१)
उपस्पृशेदपो नित्यमात्मनस्त्वभिमर्शने ।
हिंसासुरपितृस्थाणुरक्षोयुक्तासु गीर्ष्वपि ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ विश्वरूपागानविधिः नवमः खण्डः ।।

---

[1] कोषे नास्ति पाठः
[2] को. शीलमेकाचा.
[3] को. नन्तरमुद्गात्रा
[4] को. बंनून्नाचार्यो
[5] को. दीक्षणीयां
[6] को. तस्यानार्यं
[7] को. मेवोपपद्यन्ते
[8] को. गृहेषु
[9] को. कुर्मः प्रवन.
[10] को. स्फानं

# अथ दशमः खण्डः

अप उपस्पृश्य सन्तताः सर्पन्ति । अध्वर्युः प्रथमः सर्पत्यथ प्रस्तोताथोद्गाता यजमानो ब्रह्मा षष्ठः सर्पति । प्रवृतहोमाञ्जुह्वति । जुष्टो वाचो भूयासं जुष्टो वाचस्पत्युर्देवि वाक् । यत्ते वाचो मधुमत्तस्मिन् मा धाः स्वाहा सरस्वत्या इति । द्वितीयां जुहोति सूर्यो मा देवो दिव्येभ्यो रक्षोभ्यः पातु, वात आन्तरिक्षेभ्यो ऽग्निः पार्थिवेभ्यः स्वाहेति । त उदञ्चो बहिष्पवमानाय सर्पन्ति । सर्पत्स्वध्वर्युमनुमन्त्रयत एतदहं दैव्यं वाजिनं सम्मार्ज्मीति । दक्षिणेन चात्वालं तृणानि संस्तृणात्युदपात्रेण सह । तेषूपवेशनस्यावृतोपविशन्ति ॥१०॥

**अप···सर्पन्ति ।** अप उपस्पृश्य अन्योऽन्यस्मादविच्छिन्ना वक्ष्यमाणाः पुरुषा हविर्धानात् सर्पन्ति । इदमपामुपस्पर्शनं सहविर्धानात् सर्पणाङ्गम् । **अध्वर्युः प्रथमः सर्पति ।** प्रथमो भूत्वाध्वर्युः सर्पति । **अथ प्रस्तोता ।** अनन्तरमध्वर्योस्तमन्वारभ्य प्रस्तोता सर्पति । अथोद्गाता । अथ प्रतिहर्ता । अथ यजमानो[1] ब्रह्मा षष्ठः । पूर्ववदथवक्तव्ये षष्ठः सर्पतीति वचनादेव षष्ठत्वं, तत्राचार्येण षष्ठत्वमेवेदं नियम्यते ।

**प्रवृत···जुह्वति ।** प्रवृतहोमा नाम होमास्तानध्वर्य्वादयोऽस्मिन् काले जुह्वति । ननूपरिष्टात् प्रवरस्य प्रवृतहोमा हूयमाना दृश्यन्ते । समाख्यापि चैषामेव युज्यते । सत्यमेतत् । अत्र त्वेषां चोदितत्वादेवमेव मन्तव्यम् । प्रकरणतः पशुकर्म सोमाभिषवात् प्रागेव केचिदिच्छन्ति ।

**जुष्टो···त्या इति ।** अनयर्चैतामाहुतिमुद्गातारो जुह्वति । सन्निधानादाहवनीये । केन[2] द्रव्येण, अन्यस्यावचनात् सर्वर्थस्याज्यस्याध्वर्युभिः संस्कृतस्य विद्यमानत्वाज्जुहोतीत्युक्ते सर्पिः प्रतीयेतेति च परिभाषितत्वादाज्येन । यद्यपि चानादिष्टे स्रुचैव[3] होतव्यमिति परिभाषा परेषामस्ति तथाप्यस्माभिः स्रुवेणैव होतव्यमिति चायं[4] ह्याचार्यः औषधमपि स्रुवेणैव होतव्यं वदति । स्रुवे[5] सकृदाज्यमुपस्तृणाति द्विर्हविषोऽवद्यति इति । अथवैकमेवेदं वाक्यं प्रवृतमिति । प्रवृतहोमामृचमाहुतिं वोद्गातारो जुह्वति जुष्टो वाच इति । यस्मादनयर्चा प्रवृता ऋत्विजो जुह्वति तस्मादियं प्रवृतहोमा । व्यधिकरणोऽयं बहुव्रीहिः कथं विग्रहः, प्रवृतैर्होमोऽस्या इति ।

**द्वितीयां जुहोति ।** सूर्यो मा[6] इत्यनेन यजुषा द्वितीयामाहुतिं जुहोति । उद्गातैव जुहोति । नैवम् । यद्यप्येकवचनादुद्गातुरेव प्राप्नोति तथापि सर्वेषामत्र प्रकृतत्वाद् ब्राह्मणे च अरण्यमिव वा एते यन्ति (जै. ब्रा. १.८३) इति सर्वानेवाधिकृत्य विहितत्वात्सर्वे जुह्वति । ननु तत्राप्येकवचनमेव शस्यते अथ[7] द्वितीयां जुहोति (जै. ब्रा. १.८३) इति । को नेत्याह । प्रकरणाद्धि सर्वे जुह्वतीत्युक्तम्[8] । नन्वेकवचनस्य श्रुतेरेकस्य प्राप्नोति, प्रकरणात्सर्वेषाम् । श्रुतिश्च प्रकरणाद् बलीयसी । अत्र ब्रूमः—एवं पार्थविदो व्यवस्यन्ति

---

[1] को. मान.
[2] को. तेन
[3] को. सुचैव
[4] को. नायं
[5] को. स्रुः वे
[6] को. मूले पाठः त्रुटितोऽवभाति
[7] को. स द्वि.
[8] को. जुह्वन्तीत्यु.

'उपक्रमवशेन समाप्तिर्ग्राह्या' इत्येतस्य वाक्यस्योपक्रमो बह्वाश्रयः। "अरण्यमिव वा एते यन्ति" (जै. ब्रा. १.८३) इति। तेऽत्रोपक्रमवशेनार्थे गृह्यमाणे 'स द्वितीयां जुहोति'[1] इत्येकवचनमेकत्वविवक्षया न श्रूयते, विध्यर्थमेवेदमिति। किञ्च मन्त्रलिङ्गेनार्थवादेन चेयमाहुतिः पुरुषसंस्कारार्था। तस्याः पुरुषभेदे युक्ते वावृतिः। प्रतिप्रधानं हि गुणो भिद्यते तस्मात्सर्वत्रापि पुरुषार्थानि कर्माण्येकवचनविहितान्यपि कर्त्रनादेशे सर्वैरधिकृतैः कर्तव्यानि।

त उदञ्चो······सर्पन्ति। तेऽध्वर्युप्रभृतयो बहिष्पवमानार्थमुदञ्चः सर्पन्ति। आनन्तर्यविधानदृष्टोपकारकत्वाच्च सर्पणस्य बहिष्पवमानत्वावगमाद् बहिष्पवमानायेत्यनर्थकम्। नानर्थकम्। प्रह्वारा इव प्रकुचिताः सर्पन्तीति विधिद्वयस्य परिग्रहणार्थत्वात्।

सर्पत्स्व······संमार्ज्मीति। सर्पत्सु सर्पणकालेऽनेन यजुषाध्वर्युमनुमन्त्रयते। सर्पत्स्वित्यनर्थकम्[2]। नानर्थकम्[3]। विधिक्रमेण सर्वेण समाप्तावस्य विधेः प्रसक्तस्य समर्पणमध्ये क्रियार्थत्वात्। निर्धारणे वेयं सप्तमी सर्पत्स्विति। तथापि वर्तमानकालोपदेशादिष्टं सिद्धचति। दक्षिणेन······सह। अस्मिन् काले कश्चित् कर्मकरश्चात्वालदक्षिणेन तृणान्युदपात्रेण सह संस्तृणाति[4]। संस्तृणातीति[5] विकरणव्यत्ययोऽयं छान्दसः। [सं] स्तृणोतीति हि प्राप्नोति। तृणानि संस्तीर्य तेषूदपात्रं निदधातीत्यर्थः।

नन्वनादिष्टकर्तृकं कर्मोद्गात्रा कर्तव्यमिति। सत्यमेतत्। उद्गातुः सर्पणाविच्छेदेनास्य विधेरसौ[6] न कुर्यात्। कर्मकर एव करोति। तेषूप······शन्ति। तेषु तृणेषूपवेशनस्य[7] क्रमेण[7] 'अहे दैधिष व्योदतिष्ठ' इत्यादिनोपविशन्ति। विशेषश्च वक्ष्यते। उदगावृत्त[8] उद्गातेत्येतेनैवोपविशन्तीति परिभाषयैव सिद्धत्वादुपवेश[9]नस्यावृतेत्यनर्थकम्। नानर्थकम्। इममेकमुपवेशनमुत्तरयोः पवमानयोरनावृतैव कर्तव्यमित्येतदर्थत्वात्।

ननु तत्र सवनादुपवेश[10]नमावृतैव कर्तव्यमिति मतमिदमतो भवति, पवमानकाले यदुपवेशनं तदसत्यस्मिन् यत्नेऽनावृतैव तत्र सिद्धम्। इति नैव युज्यते। उभयथाप्युपवेशनमावृतैव तत्र प्रसक्तम्। सवनादौ वचनेन, पवमानकाले परिभाषया। तत्रायमुक्तार्थसिद्धचर्थं यत्नः क्रियते। केचिदन्यथा व्याचक्षते, यासौ परिभाषा 'एतेनैवोपविशति इति सोद्गातृ[11] विषयैव।

यस्मादक्रममाश्रित्य[12] विधानमुपदिश्यते।
तस्मादक्रममासीरन्नावृतानावृतैव वा[13]॥१०॥

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ उपवेशनविधिः
दशमः खण्डः

---

[1]को. द्वितीया [2]को. सर्वात्सिति [3]को. नास्ति
[4]को. नास्ति मूले पाठः। त्रुटितो भाति [5]को. सास्तृणोति [6]को. विधेरधे
[7]को. तेषूपवेशनस्याक्रमेण [8]को. उदगावर्त [9]को. त्वादुपनिशेष्यावृते.
[10]को. त्वादुपवेशनमाद्यतैव [11]को. सोयमुद्गा. [12]को. यस्मादस्माक्रमाश्रित्व
[13]को. तस्मादस्मादक्रमासीरन् नासनस्यावृतोपगा

# एकादशः खण्डः

उदगावृत्त उद्गाता। पुरस्तात् प्रस्तोता प्रत्यङ्मुखः। पश्चात् प्रतिहर्ता दक्षिणामुखः। स्तोत्रं प्रतिगृह्य पवमानजपं जपति। भूर्भुवः स्वर्मधु करिष्यामि, मधु जनयिष्यामि, मधु भविष्यति, भद्रं भद्रमिषमूर्जं सोमोद्गयोद्गाय सोम मह्यं तेजसे मह्यं ब्रह्मवर्चसाय मह्यमन्नाद्याय मह्यं भूम्ने मह्यं पुष्ट्यै, मह्यं प्रजननाय, प्रजानां भूम्ने, प्रजानां पुष्ट्यै प्रजानां मह्यं प्रजननाय, प्रजानां भूम्ने, प्रजानां पुष्ट्यै प्रजननाय, सोमस्य राज्ञो राज्याय, मम ग्रामण्याय। दिशः प्रदिश आदिशो विदिश उद्दिशो दिशि इति। प्रत्येति वाग् भूर्भुवः स्वरोमित्यावर्तिषु। दिश स्थ श्रोत्रं मे मा हिंसिष्ठेत्युपगातॄन् प्रत्यभिमृशति। अथ संप्रेष्यति। ब्रह्मन् स्तोष्यामः प्रशास्तरिति। प्रस्तोता ब्रह्माणमाह प्रसव उक्त उपदधाति। ते सकृद्धिंकृतेन पराचा बहिष्पवमानेन स्तुवते। अहिंकृता रेतस्या भवति हिंकृतानीतराणि गायत्राणि। स्तुते यजमानं वाचयति श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे स्वस्ति मा संपारया मा स्तुतस्य स्तुतं गम्यदिन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषमापं समापं साम्ना समापमिति। वृषकोऽसि त्रिष्टुप्छन्देति माध्यन्दिने पवमाने। स्वरोऽसि गयोऽसि जगतीछन्देत्यार्भवे। स्तुतस्य स्तुतमस्यूर्जस्वत् पयस्वदित्यावर्तिषु। अथ स्तुवानः पवमानेषु मध्यमामध्वर्यवे प्राहोत्तमामावर्तिषु होत्रे। अथैतदुदपात्रं चात्वालेऽवनयति समुद्रं वः प्रहिणोम्यक्षिता स्वां योनिमपिगच्छतारिष्टा अस्माकं वीराः सन्तु मा परासेचि न स्वमिति। स यदेवान्य उत्तिष्ठेत्तमुत्तिष्ठन्तमारभ्यानूत्तिष्ठेत्। उत्थायोत्तरे वेद्यन्ते यजमानं विक्रमयति मा स्वर्गाल्लोकादवच्छैत्सीरिति। दक्षिणं पादमन्तर्वेदि मास्मदिति सव्यं बहिर्वेदि ॥११॥

उदगावृत्तउद्गाता। उदङ्मुख उद्गातोपविशति। पुरोमुख आस्तावस्य पुरस्तात् पूर्वार्द्धे प्रत्यङ्मुखः[1] प्रस्तोतोपविशति पश्चान्मुख आस्तावस्य। पश्चादपरार्धे दक्षिणामुखः प्रतिहर्तोपविशति।

ननु प्रथमे वाक्ये उद्गातृशब्दो विद्यते तस्मादुद्गातुः पुरस्तात् उद्गातुः पश्चादिति व्याख्यातुं युक्तमत्र ब्रमः—यद्येवं व्याख्यायेतान्योऽन्यप्रातिमुख्यमुद्गातॄणां किंचिदपि न स्यात्। दृश्यन्ते च लोके प्रातिमुख्येनैवान्योऽन्यस्य सह गायन्तो वदन्तश्च। उपकारश्च कश्चित् प्रातिमुख्ये विद्यत एव। तस्मादास्तावस्येत्येव वाक्यद्वयेऽध्याह्रियते नोद्गातुरिति।

अस्ति श्रुतिविहितं देवसोमभक्षणं नाम, तस्यायं कालः। इदञ्चास्य रूपम्— समीप आसीनाना-

[1] को.—प्रत्यङ्मुखं

मृत्विजामन्येषां वा ब्राह्मणानां यं विशेषेण शुचिं मन्येत तं ब्रूयादाहर हस्तमिति। ततस्तस्य दक्षिणं हस्तमालभ्य 'असावुपह्वयस्व' इत्युक्त्वा लब्धोपहवस्तस्मादिदं यजुर्जपेत्। यो देवानामिह सोमपीथो अस्मिन् यज्ञे बर्हिषि वेद्यां तस्येदं भक्षयामसि इति। अस्मिन् कृते स्तोत्रमध्वर्युः प्रयच्छति।

स्तोत्रं ···दिश इति। स्तोत्रमित्यध्वर्युणा दीयमानस्य बर्हिर्द्वयस्य संज्ञा। पवमानेषु तु प्रस्तरं बर्हिर्द्वयं च कासुचिद्विकृतिष्वन्यदपि द्रष्टव्यं स्तोत्रत्वेन वक्ष्यते। स्तवस्य च करणं वेदमुपचर्यते, स्तुवन्ति तेनेति हि स्तोत्रं भवति। स्तोत्रमध्वर्युर्हस्ततः प्रतिगृह्येमं पवमानं जपति। पवमानजपमित्यनर्थकम्। नानर्थकम्। अत्र विधीयमानानां मर्माणां सर्वस्तोत्रेषु प्रापणार्थत्वात् स्तोत्रप्रतिग्रहादीनां बहिष्पवमानाङ्गतैव प्रकरणात् प्राप्ता तत्राप्येवं[1] जपस्य पवमानेन विशेषाणामन्येषां सर्वस्तोत्राङ्गता गृहीतुं शक्या।

प्रत्येति···वर्तिषु। आवर्तिषु[2] स्तोत्रं प्रतिगृह्येदं यजुर्जपति। कानि पुनरावर्तीनि, यानि पवमानेभ्यो भिन्नानि स्तोत्राणि तान्यावर्तीनि। आवृत्या हि ऋक्सामयोस्तानि निष्ठीयन्ते। एवं चेत् सन्धिमनासीनयोरयं[3] जपो न प्राप्नोति, नहि तयोः ऋक्सामावृत्तिः। अत्र ब्रूमः—नैवमस्माभिः प्रतिज्ञातम्, येषु त्रिवृत्सामावृत्तिस्तान्येवावर्तीनीति[4]। येष्वावृत्तिशब्दो दृश्यते तान्यावर्तीनि। स च शब्दो याज्ञिकैः पवमानेषु सर्वस्तोत्रेषु प्रयुज्यमानो दृश्यते। केवलन्तु शब्दप्रवृत्यवलम्बनमावर्तिः[5] कथिता, न च तावता येषु नावृत्तिस्तान्यनावर्तीनीति[6] भवन्ति। यथा गमनाद् गौरिति निश्चीयते। निसर्गगमनत्वेऽपि[7] गवि गोशब्दो मुख्य एवाभ्युपगम्यते। तस्मात् सन्धिमासीनयोरप्यावृत्तित्वादयं जपः प्राप्नोत्येव। यदि च सन्धेरनावृत्तित्व उत्तमावृत्तिषु होतृ[8] इत्ययं विधिः सन्धौ स [न] स्यात्तत्रापि तु बोधायनेनानूदितोऽयं विधिः होतृ एषोत्तमेति प्राहुः इति। तेन ज्ञाप्यते सन्धिरावर्तिरिति[9]। औदुम्बरीपरिग्रहो यत्रास्ति ततोऽस्मिन्नवसरे कर्तव्यम्।

दिशस्थ······अभिमृशति। अनेन मन्त्रेणोपगातॄन् प्रत्यभिमृशति। बहुवचनप्रयोगान्मन्त्रस्य सकृदेवोक्तेन सर्वेऽभिमृष्टव्याः। के पुनः उपगातारो भवन्ति, इदं ब्रूमः—एषामृत्विजामुद्गातृभ्योऽन्येषां स्तोत्रसम्बन्धः कश्चिद् विद्यते। तेष्वेव त्रयो यजमानचतुर्था उपगायन्ति। स्तुतानुशंसनाच्छस्त्रीणां स्तोत्रोपकरणादध्वर्योः स्तोत्रप्रसवानि। ब्रह्मणश्चास्ति सम्बन्धः स्तोत्रेण। तत्र स्वशाखायामेवाध्वर्योरुपगानं प्रतिषिध्यते। तत्रापि चतुर एवोपगातॄनिकुंशते इति ब्राह्मणाद् ब्राह्मणाच्छंस्यच्छावाकयोरेको न गृह्यते। अन्यैस्त्रिभिरुपगातव्यम्। यजमानेन च तस्य हि कामं ह तु यजमान उपगायेद् यद्[10] यजमानस्य[11] हितं भवति इति अस्मच्छ्रुतौ। अथ यजमानः स्तोत्रमुपगायति, प्राणा वा उद्गातारः प्राणानेव तदात्मन्धत्ते इति। इत्यादेश्च परश्रुतौ विवेकदर्शनादुपगातव्यम्।

अथ संप्रेष्यति[12]। अथाध्वर्युः संप्रेष्यति। [न शक्यमुद्गात्रा संप्रेषितुं, न ह्यत्र कथ्यत इत्थं

---

१. को. तत्राप्येव। २. को. आवृत्तिषु ३. को. सन्धिमानसीनयो.
४. को. मावृत्तिः तान्येवंवृत्तिनीति ५. को. वलम्बनमावृत्तिः ६. को. तान्यानावृत्तीनीति
७. को. निसर्गपठत्वामपि ८. को. गोत्र ९. को. सन्धिरावृत्तीति
१०. को. पकरणादेरध्वर्तोः ११. को. ह्यप्यजमान १२. को. संप्रैष्यतीति

संप्रेष्यतीति[१]। यदि च व्याख्यायेत ब्रह्मन् स्तोष्यामः प्रशास्तरिति संप्रेष्यतीति[१], तदप्ययुक्तम्। संप्रैषो नाम किञ्चित्कर्मोद्दिश्य परस्य शासनम्। नचैवं विधं ब्रह्मन् स्तोष्यामः प्रशास्तरित्यत्र दृश्यते । आहेति चाख्यातेनास्य सम्बन्धो वक्ष्यते। अन्यथा किमाहेत्याकांक्षयैव तिष्ठते । तस्मादध्वर्यु रेवात्र संप्रेष्यति। तस्य संप्रैषेषु प्रसिद्धेनं कृतमध्वर्यु ग्रहणम्।

ननु इत्थमित्यवचनेऽध्वर्यु णाप्यशक्यमेव संप्रैषितुम्[२]। सत्यमेतत्। स्वशाखायामेव कृतध्यायः[३] संप्रैषो विहितः[४], ओं स्तुध्वमिति । एवमाध्वर्यवस्य विधेरत्र वचनमनर्थकम् । नानर्थकम्। स्तुध्वमित्यध्वर्यु णा संप्रेषिते ब्रह्मन् स्तोष्याम इत्यादिरुत्तरो विधिरित्येतदर्थत्वात्।

**ब्रह्मन्···ब्रह्माणमाह**। प्रस्तोता ब्रह्माणं मैत्रावरुणं च ब्रह्मन् स्तोष्यामः प्रशास्तरित्याह । कुतः आगतो मैत्रावरुणः, प्रशास्तरिति लिङ्गात्। एवं चेद् ब्रह्मन्निति लिङ्गादेव ब्रह्मणोपीति सिद्धे ब्रह्माणमित्यनर्थकम् । नानर्थकम् । प्रशास्तरित्यस्यानित्यत्वज्ञापनार्थत्वात्। एवं हि बह्वृचब्राह्मणे श्रूयते— अथ यत् प्रस्तोता ब्रह्माणमामन्त्रयते ब्रह्मन् स्तोष्याम इति मनो वा अग्रणीर्भवत्येषां प्राणानां मनसैव प्रसूता स्तोमेन मन्त्रयामेत्यथो अपवानमेव तन्मनसां तनोतीति प्रसवे ब्रह्मशास्तृभ्यां युक्ते उपदधात्येष, गातारो[५] गायन्तीत्यर्थः[५]।

ननु दधातिर्गानं नाभिदधाति, सत्यमेतत्[६] । अत्रोपधानद्रव्याश्रुतेः[७] स्तवनप्रसवानन्तर्यविधानाच्च गानार्थो दधातिः कल्प्यते[८]। कस्मात् पुनरुपगायन्तीत्येवानुक्तम्, उद्गातृकर्मत्वार्थमुपगानं हि समाख्ययोपगातृभिः कर्तव्यं, तदत्र परः शब्देन चोद्यमानं सत् समाख्याप्राप्यं कर्तारमलभमानमुद्गातार एव कुर्वन्तीतियुक्तम् । किं पुनरिदमुपगानं नाम, इदमुच्यते । पूर्वस्याः गायत्रपरिषदः षष्ठसप्तमयोरनुवाकयोः सधर्मकमुपगानं निरूपितम्। तत्र सप्तमे तद्धे तदेकटमिति गायन्ति इत्युक्त्वा तत्तथा न गायेत् इति प्रतिषिध्य ओ इत्यहैके गायन्ति इति पुनरुक्त्वा तदपि नो एव तथा गायेत् इति प्रतिषिद्धम् । पुनरपि द इत्येव गायेत् इत्युपगानस्य रूपं निरूपितम्, तत्र मध्यमस्य पक्षस्य निगीतिता[९] दोषेण प्रतिषेधात् तस्मादविशेषे चोत्तमस्य पक्षस्य व्यर्थत्वप्रसङ्गात् केनचिदुदितेन गीतिविशेषेण संयुक्तस्यास्य ओंकारस्य सि यौ हुं मा ता या हुंमेतिवत् इहावुभौ वावुवो सोरवोहा इतिवच्चैकस्वर्येणेदं ग्रहणमिति मन्तव्यम्। स्वगीतिविशेषो गायत्रस्य प्रकृतत्वात्तदुद्गीतस्य योऽवयवो विशेषेणोदितस्तत्सदृशो[१०] मन्तव्यः। तस्मादयमोंकारः क्रुष्टादिस्वरचतुष्टयं क्रमेण प्राप्य पुनः प्रथममारूढः पुनश्चतुर्दशमात्र उपगानसंज्ञो निश्चीयते। तदिदमुपगानमुपदधातीति विहितमिहोपगातारं कुर्युः। कृते कृते प्रस्तावं कुर्युः। एवं हि श्रूयते हि—तद्ध वै सम्नोत्तररण्य यत् प्रस्तुतमनभिस्वरितमादीयते, स्वरेण सम्पाद्योद्गायेत् इति । स्वर इति चोपगानस्याख्यातेभ्यः स्वरं प्रायच्छत् इत्यादौ ग्रन्थे समुपलक्ष्यते। तस्मात् स्वरेण सम्पाद्योद्गायेत् इति उपगानेन सम्पाद्योद्गायेत् इत्युक्तं भवति । वक्ष्यति पर्यध्याये— अथ खलु प्रस्तुतं साम न पुरोचगेभ्य, आददीत सहैतवोपगैराददीत इति। साममध्ये ये प्रस्तावाः कथं तेष्वविकृतेषु अन्तररण्यस्यानुपायार्थं सहैवोपगातृभिराददीत। ते सर्वेतेऽन्तोयं सामसु बहुशो दृश्यते हुं इति। इति शब्दैः सहिंकारम्। सकृत् कृतो हिङ्कारो यस्य तत् सकृद्धिंकृतम्। एवं चेत् सकृत्कृतहिङ्कारमिति प्राप्नोति। सत्यमेतत्। प्रामाण्यादाचार्यस्य आहिताग्न्यादिषु पठितं हिंकृतशब्दं मन्यामहे, तस्माददोषः। ते उद्गातारः सकृद्धिंकृतेन पराचानावृत्तास्तोत्रेण बहिष्पवमानेन बहिष्पवमाननामस्तोत्रेण स्तुवते। किं पुनरस्य रूपम्,

---

[१]को. संप्रैष्यतीति [२]को. संप्रेषितुम् [३]को. कृतध्यायं
[४]को. विहितम् [५]को. गातारः वेगायन्तीत्यर्थः [६]को. स अमेत्
[७]को. अत्रोपधातद्र० [८]को. कल्पेत [९]को. निगितिता
[१०]को. विशेषेणोदितं तत्सदृशो

अत्र ब्रूमः—ऋक्सामक्लृप्तिः[1] प्राकृतमन्त्रतो ब्राह्मणतश्चावगन्तुं शक्या। ततोऽयमाचार्यो बहिष्पवमानादीनि स्तोत्राणि नावकल्पयति, सिद्धवन्नाम्नैव निर्दिशति। अस्माभिस्तु प्रकृतिभेदाः पञ्चविंशतिः पृथगेव सप्तमाध्यायपरिसमाप्तौ कल्पयिष्यन्ते। आवर्त्यवचनादेव[2] परत्वात्सिद्धेः पराचेत्यनर्थकम्। नानर्थकम्। परात्वं सकृद्धिकरणे हेतुरिति ज्ञापनार्थत्वात्।

ततश्च सस्तिशिरोमनसि नेषु निसर्गपराक्षु (षु) प्रतितृचं प्रत्यृचं हिंकारं विधाय पुनः पक्षो भाल्लविपरिगृहीतो वक्ष्यते। अप्युं हेभिः सकृद्धिकृतैरेव भाल्लविनः स्तुवते इति। तस्मादस्माभिरपि विकल्पेन परिग्रहः सिध्यति। अहिंकृतस्य बहिष्पवमानस्य प्रथमस्तोतृतृचा[3] रेतस्या[3] सा[4] हि[4] अहिंकृता भवति यद्[5] गायत्रं हुंवागित्येवं[5] रूपं तस्यायं प्रतिषेधः। हिंकृतानीतराणि गायत्राणि रेतस्याया इतराणि गायत्राणि हिंकृतानि भवन्तीति। किमयं द्वितीयो हिंकारश्चोद्यते। नेति ब्रूमः। य एवास्ति हिंकारस्तस्येदं वचनम्। तत् किमर्थम्। हिंकृतत्वमेव रेतस्याया अतुल्यमितरेषां गायत्राणामिति ज्ञापनार्थस्तेन धुरामगानमुक्तं भवति। प्रस्तूयमाने गायत्रे मनसा हिंकृत्य वा अन्यवागिति ब्रूयात्। एष गायत्रस्य प्रतिहारः श्रुतिविहितः आचार्येणापि स्तुवत इति बहुवचनचोदनया ज्ञापित एव। स्तुते...समाप्तमिति। स्तुते[6] बहिष्पवमाने इदं यजुरुद्गाता यजमान वाचयति। वृषकोऽसि...वमाने। माध्यन्दिने पवमाने स्तुते इदं यजुर्वाचयति। स्वरो...भवे। स्वरोऽसीत्यार्भवे स्तुते। स्तुत...आवर्तिषु। आवर्तिषु स्तुतेष्विदं यजुर्वाचयति। एतेषु त्रिषु विधानेषु अनु त्वा रभ इत्यादि मन्त्रावयवोऽर्थसम्पदर्थमनुषज्येदिति केचिदुत्तमे विधाने आ मा स्तुतस्येत्यादि[7] मिममेवानुषङ्गं तण्डिभिस्तथा[8] प्रतिपन्नत्वादिच्छन्ति। वयं तु निश्चिनुमहे—अनु त्वा रभ इत्यादिरेवावर्तियजुषोऽप्यनुषङ्गो भवितुमुत्सहते, सङ्गतार्थत्वात्। तस्मात् सर्वत्रापि स एवानुषंग इति। मन्त्रैकदेशपरित्यागे हि नात्र प्रमाणमुपलभामहे। यस्तु तण्डिनां[9] पाठः स तैरेवाश्रयितव्यः। न हि सरूपा एव मन्त्राः सर्वेषां भवन्ति। यजमानवाचनानन्तरं स्तोत्रभूतयोर्बहिपोरेकमन्तर्वेद्युपास्येत्। अत्यस्येदपरं बहिर्वेदि। अथ...प्राह। अथ स्तुत इत्यथस्तुवानः[10] प्रस्तोता भवति। स पवमानेषु मध्यमां स्तोत्रीयामेषां मध्यमामध्वर्यवे[11] प्राह।

ननु प्रस्तोतृग्रहणमेव कर्तव्यम्, किमप्रसिद्धेन अथ स्तुवान शब्देन। अत्र ब्रूमः। नायमथ[12] स्तुवानशब्दो निर्देशार्थं एव केवलम्। प्रस्तोतुः प्रस्तावानन्तरं प्राहेत्येतदर्थोऽपि। कोऽभिप्रायः, वर्तमानसामीप्ये स्तुवानशब्दो ग्राह्यः। अथशब्देन[13] प्रस्तावो लक्ष्यते। तत्रायमर्थो लभ्यते—प्रस्तुत्य किञ्चिदपि अविलम्ब्य प्राहेति। यद्ययं स्तुवानशब्दोऽस्य विधेः प्रस्तावानन्तर्यावगमार्थः, नेदानीं प्रस्तोता निर्दिश्यते। अर्थत एव प्रस्तोतेत्यवगम्यते। उक्तं हि—अथशब्देन[13] प्रस्तावो लक्ष्यत इति। तत्र प्रस्तावं कुर्वन् प्राहेत्यस्मिन्नर्थे लब्धे प्रस्तोता प्राहेति न दुर्लभम्। प्रस्तोत्रैव हि प्रस्तावः क्रियते।

ननु प्रस्तावात् पूर्वमप्यस्यां प्रोच्यमानसामीप्यं[14] नावहन्यते। अस्मात् प्रस्तावं कृत्वा करिष्यता वा एषा प्रोच्या। सत्यमेतत्। उभयथापि वर्तमानसामीप्यमनुरुद्धं भवति। यदि तु पूर्वं प्रस्तावादेषां

---

[1]को. सामक्लृप्ति  [2]को. आवृत्य०  [3]को. मस्नोतृचामेतस्या
[4]को. सहि  [5]को. यो गायत्रहुमागि०  [6]को. स्तुतेः
[7]को. दिमिमवानु.  [8]को. काण्डिभि.  [9]को. ताण्डिनाँ
[10]को. इत्यधस्तु  [11]को. मात्यध्वर्यवे  [12]को. नायमधस्तु०
[13]को. अधश्शब्देन  [14]को. प्रोच्यमासामीत्यन्नवह०

प्राप्येत, उत्तरयोः सवनयोर्निधनप्रस्तावसन्धानासम्भवात् स्तोत्रविच्छेदः प्रसज्येत । तस्मात् सम्यगवादिष्म, प्रस्तुत्य ब्रूयादिति । युग्मस्तोमेषु पवमानेषु द्वे स्तोत्रे यमर्द्धममका, तत्र प्रोच्या उत्तरेति ब्रूमः ।

ननु पूर्वापि मध्यमैव, तस्याः असति कारणेऽतिक्रमणमन्याय्यम्, अत्र ब्रूमः । मध्ये भवा मध्यमा इह चैतयोः स्तोत्रयोरन्तरालं[1] मध्यं[1] तत्र पूर्वस्या अपरार्धो[2] मध्यमः सन्निकृष्टः उत्तरस्याः पूर्वार्धम् । पूर्वार्धञ्चापरार्धात् प्रधानम् । उद्गीथश्च साम्नि प्रधानम् । स च पूर्वस्याः प्रतिहारोपद्रवनिधनव्यवेतत्वात् विप्रकृष्टो मध्यमस्य प्रस्तावेनैव तु व्यवायादुत्तरस्याः सन्निकृष्टः । सर्वसन्निकर्षासम्भवे च प्रधानसन्निकर्षो ग्राह्यः । तस्मात् पवमानोत्तरभागस्य या प्रथमा सैव युग्मस्तोमेष्वप्रोच्या । होत्रवृत्तिषु[3] योत्तमा स्तोत्रिया तामेषोत्तमेति होत्रे प्राह । अत्र होतृशब्दः[4] होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकोपलक्षणार्थो ग्राह्यः । तत् किमर्थोऽस्य विधेः सार्थकत्वार्थः । मैत्रावरुणादीनां हि स्तोत्रेषु किमुत्तमा जानता होत्रा क्रियते । आवर्त्तिषु हि स्तोत्रशस्त्रयोरुपसंतानं बाह्वृच्ये[5] विहितम् । तत्तु शस्त्रस्तोत्रान्तमजानन् न शक्नुयात् कर्तुम् । तत्र च[6]शस्त्र[6] होत्रादिषु तस्मिन्नेषोत्तमेति ज्ञाप्यमानेऽर्थवदिदं विधानं भवति । तस्मात् साध्ये य उक्तो[7] होतृशब्दो ऽत्र होत्राद्युपलक्षणार्थं इति । दृश्यते च मैत्रावरुणादिष्वपि होतृशब्दो यथा— सप्त होतारः ऋतुशो यजन्ति इति । एवं च मैत्रावरुणा यैषोत्तमेति प्राह इत्येवमादिषु बोधायनवचवमुपपद्यते । अथैत···स्वमिति । अथैतत्सन्निहितमुदपात्रमनेन यजुषोद्गाता चत्वालेऽवनयति । नरप्रस्तोतात्र प्रकृतः । सत्यम् । अथशब्दस्त्वयं प्रकृतादन्यमुद्गातारमधिकरोति । एतदित्यनर्थकम् । नानर्थकम् । उक्तपवमानांगभूतस्योदपात्रस्यावनयननिवृत्यर्थत्वात् । स[8] यदेवान्य उत्तिष्ठेत्[8] । यदुत्तिष्ठेदन्य[9] पुरुषः ऋत्विगन्यो वा तमुत्तिष्ठन्तमारभ्यावलम्ब्य च पाणिना सोऽनूत्तिष्ठेत् । स इति कोऽत्र निर्दिश्यते । अनादेशा[10]दुद्गातेति प्राप्तः । सर्वैस्तु पुरुषसंस्काररूपत्वात् श्रुतौ ते वै तन्मतं कुर्वन्ति । ये मर्त्यं सन्तममृतत्वं गमयन्ति ते रूपेण वर्चसा व्यर्ध्यत इति बहुवचनोपक्रान्तत्वात् सर्वैरुद्गात्रादिभिः[11]कर्तव्यमिति विधिं[11]निश्चिनुमः[11]। तस्मात् स इति शब्दः प्रस्तोत्रादिभिः प्रत्येकं सम्बध्यते । श्रुतिवाक्यस्यैवास्य प्रक्षेपादक्षरगौरवमपरिहार्यम् । स्तुत्वोद्द्रवन्ति, बाहूनुद्गृह्णन्तीति । अनयोर्विध्योरयमवसरस्तस्मादुत्थायोदङ्मुखाः किञ्चिदुद्धृत्य बाहून् उद्गृह्णीयुः । बाहूनित्यविशेषविहितत्वाद् यजमानमेव तत्स्वर्गे लोके समादधति इति । अस्याश्च श्रुतेरेवमेवोपपन्नतरत्वात् सर्वान् बाहूनुद्गृह्णीयुः ।

नन्विमौ विधी उत्थानात् पूर्वमेव श्रुतौ विहितौ तस्मात् पूर्वमेव कर्तव्यौ । अत्र ब्रूमः—स्तुत्वैव[13] तैरुद्द्रवणं[13] शक्यं कर्तुम्, तदुत्तरकालं चाभूदुद्ग्रहणम्, अतोऽर्थक्रमेण बलवता पाठक्रममुल्लंघ्य परस्तादेवोत्थानादिमौ विधी कर्तव्यौ । एवमप्युत्थानानन्तर्यमनयोर्विध्योर्न भवति । यतो यजमानविक्रमणमुत्थानानुवादेन विधास्यते । उत्थायोत्तरवेद्यन्ते यजमानं विक्रमयतीति नैष दोषः । इमौ विधी कृत्वापि विक्रमणे क्रियमाणे नोत्थानानुवादो घटते[14] । नहि तस्यानन्तर्यात् प्रयोजनम् । किं तर्हि । तत्रैव वक्ष्यामः—तस्मादुत्थानोद्द्रवणबाहूद्ग्रहणयजमानविक्रमणानि क्रमेण कर्तव्यानि

---

[1]को. रन्तरालमध्यं [2]को. अपरर्धो [3]को. होत्रमवृतिषु
[4]को. तृशब्द [5]को. बह्वृच्ये [6]को. यशस्त्री
[7]को. उक्तं [8]को. स य तिष्ठेत् [9]को. तिष्ठेदन्या
[10]को. अनादेशोद्घातेति [11]को. सर्वैरुद्गात्कर्तव्यमिमं विधिनिश्चिनुम [12]को. स्तुते०
[13]को. ननुत्वितैरुद्रवण [14]को. को. न घटते

उत्थाय…विक्रमयति । उत्थायोत्तरस्मिन् वेद्यन्ते यजमानं विक्रमयति । उत्थायेत्यनर्थकम् । नानर्थकम् । यत्रोत्थानं तत्रैव विक्रमणमित्येतदर्थत्वात् । तस्मादुत्तरस्मिन् सवने न विक्रमणं प्रवर्तते[1] । तत्र ह्युपरितनस्यापि कर्मणः सदस्येवासीनैः कर्तव्यत्वात् उत्थानस्याभावः । कथं पुनः विक्रमयति । वक्ष्यते । **मा स्वर्गा…बहिर्वेदि** । यजमानस्य दक्षिणपादमनेन मन्त्रेणान्तर्वेदि विक्रमयति । मा स्मान्तर्वेदि[2] मास्माल्लोकादवाच्छैत्सीरिति[3] सव्यं पादं बहिर्वेदि विक्रमयति । लिङ्गाद्यजमानेन विक्रमणयजुषी वक्तव्ये । अस्मिन् कर्तव्यस्याभावाद्यथाप्रपन्नं निष्क्रम्यासीरन् ।

चतुश्चेष्टैकचेष्टा वा योक्ता युक्तिरिति श्रुतौ ।
पवमानेऽत्र तां कुर्यादुद्गाता प्रसवोपरि ।।१।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ बहिष्पवमानविधिः

एकादशः खण्डः

---

[1]को. प्रवृते [2]को. मास्मार्वेदि [3]को. मस्माज्लोका दपाच्छेत्स्यगीति

## अथ द्वादशः खण्डः

यदा सवनीयस्य वपया चरितं भवत्यथोद्गातारश्चात्वाले मार्जयन्त आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ।। यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ।। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।। इदमापः प्र वहतावद्यं च मलं च यत् । यद्वाभि दुद्रोहानृतं यद्वा शेपे अभीरुणम् । आपो मा तस्मादेनसो विश्वान्मुञ्चन्त्वंहस इति ।। १२ ।।

यदा...इति । सवनीयस्य पशोः वपया यद्याचरितः व्यापृतः[१] हुतो भवति तदनन्तरमुद्गातार आभिः पञ्चभिः ऋग्भिश्चात्वाले मार्जयन्ते । आद्यास्तिस्रो गायत्र्यः चतुर्थ्यनुष्टुप्, पञ्मी प्रतिष्ठा द्विपदा । इत्येताः पञ्च भवन्ति । किं पुनरिह ग्रन्थगौरवं क्रियते । चरितं भवतीति[२] चरन्तीत्येव कर्तव्यम् । तावताप्ययमर्थः सिध्यति । तथा चान्यत्र वदति । यदा द्वितीयामापः परिषिञ्चति, यदा धिष्ण्यां निवपन्ति इति । सत्यमेतद् । वचन-वैरूप्येण तु । अतो[३] नास्य विधेर्विशिष्टविषयता ज्ञाप्यते । तस्मात् सत्रेष्वेवैतत् मार्जनम् । उक्तं ताण्डिसूत्रे—चात्वाले तु मार्जनं पूर्वं सत्रेष्विति । उपपत्तिं चात्र ब्रूमः—पश्वङ्गमेतन्मार्जनं परतन्त्रे हि पशुसम्बन्धाना मेवर्त्विजां ब्रह्माग्नीध्रा[४]ध्वर्यु प्रतिप्रस्थातृहोतृप्रशास्तॄणां पत्नीयजमानयोश्च । तस्मादुद्गातॄणामेव यत्र पशुसम्बन्ध-स्तत्रैव कर्तव्यं मन्यामहे । सत्रे च तेषां यजमानत्वादस्ति पशुसम्बन्धो नान्यत्र । तस्मात् साधूक्तम्—सत्र एवेदं मर्जनमिति । एवं चेद्, यजमानस्यैव मार्जनं विधातव्यम् । यजमानत्वादेवोद्गातॄणां सत्रे सिध्यति, यद्येवं विधीयते, कियद् यजमानकर्मोद्गातृभिः सत्रे कार्यं कियन्नेति न ज्ञाप्यते । इह पुनः पुरुषार्थस्यास्य यजमानस्योद्गाता स प्रतिसत्रे विधीयमानत्वात् पुरुषार्थान्युद्गातारोऽपि[५] कुर्युः । क्रत्वर्थानि गृहपतिरेवेत्ययमर्थो लभ्यते । तस्मादचोद्यमेतत् । प्रकृतत्वादुद्गातॄणामुद्गातृग्रहणमनर्थकम् । नानर्थकम् । सत्रोद्गात्रापरिग्रहार्थत्वात्[६] । ततश्च सुब्रह्मण्यस्यापि सिध्यति ।

सत्रे कर्मर्त्विजां[७] कार्यं यजमानैरिति श्रुतिः ।
अतः श्रुत्यविरोधेन याजमानं यदिष्यते ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ सत्रोद्गातृमार्जनविधिः

द्वादशः खण्डः ।।

---

[१] को. व्यापृतः [२] को. भवन्तीति [३] को. अनो
[४] को. ब्रह्माग्नीदध्वर्यु । [५] को. र्थान्युद्गदा. [६] को. को. सर्वोद्ग्दा आपरि.
[७] को. कर्मर्त्विजामपि

# त्रयोदशः खण्डः

प्रपदनस्यावृता प्रपद्य वेद्याक्रमणेन वेदिमाक्रामति । मृदा शिथिरा देवानां वेदिरसि नमस्ते अस्तु । मा मा हिंसीरित्यादित्यमुपतिष्ठते ऽध्वनामध्वपते स्वस्ति मेऽस्मिन् देवयाने पथि कृणु रौद्रेणानीकेन स्वस्त्यग्ने परिदेहीति । धिष्ण्यानुपतिष्ठते सम्राडसि कृशानू रौद्रेणानीकेन पाहि माग्ने पिपृहि मा, नमस्ते अस्तु, मा मा हिंसीरित्याहवनीयम् । तुथोऽसि जनधा इति बाहिष्पवमानीयमास्तावं । नभोऽसि प्रतक्वा इति चात्वालम् । असंमृष्टोऽसि हव्यसूदन इति शामित्रम् । कृष्णोऽस्याखरेष्ठ इत्युत्करम् । ऐन्द्रीमावृतमन्वावर्त इति दक्षिणं बाहुमनु पर्यावृत्योत्तरेणाग्नीध्रं परीत्य पश्चात् प्रागावृत्तस्तिष्ठन् विभूरसि प्रवाहण इत्याग्नीध्रमुपतिष्ठते । पुरस्तात् सदसः प्रत्यगावृत्तस्तिष्ठन् वह्निरसि हव्यवाहन इति होतुर्धिष्ण्यम् । श्वात्रोऽसि प्रचेता इति मैत्रावरुणस्य । तुथोऽसि विश्ववेदा इति ब्राह्मणाच्छंसिनः । उशिगसि कविरिति पोतुः । अंघारिरसि बम्भारिरिति नेष्टुः । अवस्युरसि दुवस्वान् इत्यच्छावाकस्य । शुन्ध्युरसि मार्जालीय इति मार्जालीयम् । अमृतधामासि स्वर्ज्योतिरित्यौदुम्बरीम् । परिषद्यो ऽस्यास्ताव इत्यास्तावम् । समुद्रो ऽस्युरुव्यचा इति ब्रह्मसदनम् । समुद्रोऽसि विश्वव्यचा इति होतृषदनम् । उत्तरेण सदः परीत्य पश्चात् प्रत्यगावृत्तस्तिष्ठन्नजोऽस्येकपात् इति गार्हपत्यमुपतिष्ठते । अहिरसि बुध्न्य इति प्राजहितम् । सगरोऽसि बुध्न्य इतीतरं प्राजहितम् । कव्योऽसि कव्यवाहन इति दक्षिणं वेद्यन्तम् । सव्यमंसमनु पर्यावृत्य समस्तान् धिष्ण्यानुपतिष्ठते ऽग्नयः सगराः सगरैर्नामभी रौद्रैरनीकैः पात माग्नयः पिपृत मा ।। नमो वो अस्तु मा मा हिंसिष्टेति । सदसो द्वारौ समीक्षत ऋतस्य द्वारौ विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृतमिति । सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं सनिं मेधामयासिषमित्येतयर्चा सदः प्रपद्य दक्षिणेनौदुम्बरीं परीत्योत्तरत उपवेशनस्यावृतोपविशन्ति उदगावृत्त उद्गाता पुरस्तात् प्रस्तोता प्रत्यङ्मुखः पश्चात् प्रतिहर्ता दक्षिणामुखः ।।१३।।

प्रपद...अस्तु[1] । प्रपदनस्य प्रवर्तेः आवृताक्रमेण यज्ञोपवीताचमनप्रपदनमन्त्रात्मकेन चात्वालोत्करावन्तरेण प्रपद्य वेद्याक्रमणेनानेन मन्त्रेण वेदिमाक्रामति अधितिष्ठति । एकवनप्रयुक्तमप्येतद् वेद्याक्रमणादि आसमीक्षणाद्[2] द्वारयोर्यदस्ति[2] विधिजातं तत् पुरुषसंस्काररूपत्वात् सर्वैः कर्तव्यं, येषामन्तर्वेदि कर्मास्ति । वेद्याक्रमणसंज्ञया तृतीयसवने संव्यवहारः करिष्यते । अत्र पूर्वं, प्रस्तोता गच्छति, तत उद्गाता, ततः प्रतिहर्ता । एष हि सामगाने क्रमः[3] ।

---

[1]को. प्रचरति [2]को आसमीक्षणाद्वरोर्यदस्ति [3]को क्रमात्तहीति

मा मा हिंसीरिति । अन्तर्वेदि तिष्ठन्ननेन यजुषादित्यमुपपद्यते[1] आदित्यमुपतिष्ठते । धिष्ण्यानधितिष्ठते वक्ष्यमाणान् । धिष्ण्यानुपतिष्ठते इदं वाक्यमनर्थकम् । नानर्थकम् । वक्ष्यमाणानामाहवनीयादीनां दक्षिणवेद्यन्तपर्यन्तानां धिष्ण्यत्वज्ञापनार्थत्वात् । प्रयोजनं समस्तधिष्ण्योपस्थाने एषामभिसन्धानम् ।

सम्राडसि[2] इत्यनेन[2] युजुषोपतिष्ठते आहवनीयम्[3] । तत्समीपे प्राङ्मुखस्तिष्ठन्नुपतिष्ठते । तुथो[4]... स्तावम्[4] । बहिष्पवमानस्यास्तावं स्तवनदेशमनेन यजुषोपतिष्ठते । इदमादिषु कव्योऽसीत्यन्तमन्त्रेषु रौद्रेणानीकेनेत्यादि पूर्वमन्त्रावयवोऽनुषज्यते[5] ।।

ननु धिष्ण्यान्[6] इति पदमनग्निष्वादिषु विरुध्येत । अत्र ब्रूमः – उक्तमस्माभिः सर्वेषां धिष्ण्यत्वं, यस्माच्च समस्तधिष्ण्योपस्थानमन्त्रः आग्नेय एव विधास्यते, अग्नयः सगरा इति । तस्मादेवं ग्राह्यम्, उपपन्न एवानग्निष्वपि अग्नि शब्दो धिष्ण्याष्विति[7] । तस्मादयमनुषङ्गः सर्वानपि धिष्ण्याननूपसर्पति । नभोऽसि[8] इति चात्वालम्,[8] असंमृष्टोऽसि इति शामित्रम्[8] । यस्मिन्नग्नौ पशुः श्रप्यते स शामित्रः । स बहिर्वेदि तिष्ठति । तमन्तर्वेद्येव तिष्ठन्त उपतिष्ठेरन् । कृष्णो[9] ऽसीत्युत्करमुपतिष्ठते[9] ।

ऐन्द्रीत्यनेन यजुषा दक्षिणं पर्यावृत्याग्नीध्रमन्तरेण परीत्यास्य[10] पश्चात् प्राङ्मुखस्तिष्ठन्ननेन यजुषाग्नीध्रमुपतिष्ठते । प्राङ्मुखस्य स्मृतिसमाचारसिद्धेः सुब्रह्मण्यादिषु च तदविधानस्यैवमेवोपपद्यमानत्वात् प्रागावृत्त इत्यनर्थकम् । नानर्थकम् । उदङ्खत्वस्यापि स्मृतिसदाचारप्रापितस्यैव निवृत्त्यर्थत्वात् । एवं चेदुदङ्मुखत्वं सुब्रह्मण्यादिष्वपि विकल्पेन प्राप्नोति । सत्यमेतत् । वितानपराङ्मुखत्वादिना तु दोषेण तत्र निवार्यते । यत्र तु दोषो नास्ति तत्र विकल्पेन भवेदेतत्[11] । परैरप्युक्तम्—देवकर्माण्यधिकृत्य प्राङ्न्यायान्युदग्न्यायानि वा इति । तस्मात्सर्वत्रापि प्राङ्मुखग्रहणं नियमार्थमेव । पुरस्तात्······धिष्ण्यम् । सदसः पुरस्तात् प्रत्यङ्मुखस्तिष्ठन्ननेन यजुषा होतृधिष्ण्यमुपतिष्ठते । स्वात्रो···त्रावरुणस्य । मैत्रावरुणस्य धिष्ण्यो होतृधिष्ण्याद्दक्षिणतः । वक्ष्यमाणाश्चत्वार[12] उत्तरे । तुथोऽसि···ब्राह्मणाच्छंसिनः । उशिगसि·· पोतुः । अंघारि···नेष्टुः । अवस्युरसि ··स्याच्छावाकस्य । शुन्ध्युरसि···मार्जालीयम् । मार्जालीयो दक्षिणेऽस्मिन् वेद्यन्ते तिष्ठति[13] । ऋतुधा··· दुम्बरीम् । परिषद्यो···आस्तावम् । समुद्रो···ब्रह्मसदनम् । सदसि यत्र ब्रह्मास्ते तद् ब्रह्मसदनम् । यत्र होतास्ते तद्धोतृषदनम् । यत्र स्थितैरुपस्थितं[14] होतृधिष्ण्य तत्रैव स्थिताः सर्वानेतान् मैत्रावरुणधिष्ण्यादीन् होतृषदनान्तान्[15] अवलोकयन्तः उपतिष्ठेरन् । उत्तरेण...तिष्ठते । सदस उत्तरेण परीत्य सदसः पश्चात् प्रत्यङ्मुखस्तिष्ठन् अनेन यजुषा गार्हपत्यमुपतिष्ठते । यः पूर्वमाहवनीयाग्निप्रणयनादूर्ध्वं[16] गार्हपत्यो भवति । अहिर···हितम् । पुराणगार्हपत्यान्वाहार्यपचनयोः प्राजहितसंज्ञा[17] याज्ञिकेषु प्रसिद्धा । सगरो···हितम् । इतरत्राजहितोऽन्वाहार्य-

---

[1]को. यजुशातिष्ठमुपपद्यते [2]को सम्रानीयमनेन [3]को हवनीयम्
[4]को. स्तुतोस्तावं [5]को. रौद्रेणेत्यादि पूर्वमज्ञा [6]को. नन्वधी
[7]को. धिष्विति [8]को. न गोत्वालं असन्मित्रम् [9]को. कृष्णोत्करमैन्द्रीं तिष्ठते
[10]को. परीत्यस्य [11]को. भवतेन [12]को. वक्ष्यमाण च०
[13]को. तिष्ठन्ति [14]को. स्थितैरुपस्थितो [15]को. होतृषदनान्तानि
[16]को. हवनीययोग्निप्रणयता दूर्ध्वगोहवत्यो [17]को. प्रानहितसंज्ञा

पचनः । कव्यो⋯वेद्यन्तम् । अनेन यजुषा दक्षिणं महावेद्यन्तमुपतिष्ठन्ते । शालायां[1] हि या वेद्यस्ति[1] सेदानीमपवृत्तप्रयोजनत्वाद् अवेदी[2] । यत्र स्थितैरुपस्थितो गार्हपत्यं[3] तत्रैवस्था प्राजहितवेद्यन्तानवलोकयन्त उपतिष्ठेरन् । सव्य⋯तिष्ठते । सव्यमंसमन्वपसव्यं[4] पर्यावृत्य तत्रैव तिष्ठन् सर्वान् धिष्ण्याननुसंधाय ये द्रष्टुं शक्यास्तानवेक्ष्यानेन यजुषोपतिष्ठते ।

सदसो⋯भिति । सदसो द्वारौ, द्वारमभितः स्थूणे ऽनेन यजुषा समीक्षते । किमिदमुच्यते, स्थूणे इति द्वारावेव सदसः पूर्वापरे समीक्षितव्ये । सत्यम् । एवमेव प्राप्तम् । मन्त्रः स्वयं पूर्वं द्वारम्, अंगभूतां सदसः प्रपदनस्यांगभूतां चापरां सहाभिदधदर्थसम्पदं न लभते । अस्मिन् पक्षे तु यया द्वारा सदसः प्रपदनं तामभितो ये स्थूणे तयोर्मन्त्रेणाभिधानं, तत्रार्थसम्पदुच्यते । द्वाश्शब्द एवात्र केवलमवेक्षणया स्थूणया गृह्यते । दृश्यते च लोकवेदयोरर्थविरोधे लक्षणा । यथाग्नौ तिष्ठतीति श्रुत्वा अग्निसमीपे इति गृह्णन्ति । मर्जालीये स्तुवीरन् इति च मार्जालीयसमीपे इति । तस्मादत्र स्थूणयोरेव समीक्षणम् । अस्मिन्नेव च विषये बोधायनस्य वचनमेवमेवोपपद्यते—अपरे द्वारौ, सदसः, पूर्वे द्वारौ इति । सदसस्पतिं⋯पविशन्ति । सदसस्पतिमित्येतयर्चा सदः प्रपद्यौदुम्बरीं दक्षिणेन परीत्य तस्या उत्तरत उपवेशनस्य क्रमेण निरसनादिना उपविशन्ति । द्विविधमृक्पाठस्य प्रयोजनम् अधिवर्चे इत्यत्रैव प्रत्यपादि । परिभाषयैव सिद्धत्वादुपवेशनस्यावृतेत्यनर्थकम् । नानर्थकम् । माध्यन्दिनेऽपि सवने सदः प्रपदनानन्तरमुपवेशनावृतैवोपविशेयुरित्येतदर्थत्वात् । वक्ष्यते हि—तत्र वेद्याः क्रमेणादिसदः प्रपदनानन्तरसवनादावेव कर्तव्यमिति । उपवेशनतदावृत्ते तु तस्मिन् काले उपविष्टैः कर्तव्यस्याभावान्न प्राप्नुतः । अतस्तु वचनात् उपवेशनावृत्[5] प्राप्नोति । तत्प्राप्तावुपवेशनमप्यर्थसिद्धम् । अथवा । यद् बहिष्पवमान अत्र उपवेशनस्यावृतेति वचनं तदेव व्याख्येयम् । उपवेशनस्यावृतोदगावृत्त[6] उद्गाता इत्यनंतरं वक्ष्यमाणयेति तत्र पूर्वं वचनं, सर्वस्तोत्रेषूदगावृत्तत्वात् । दि⋯प्रापयति[7] ? इदञ्च सर्वस्तोमभक्षेषु ।

[1]मध्ये सवनमिच्छेयुः सदः प्रपदनात् परम् ।
निर्गमः पूर्वयैव स्यात् परोक्तेर्दर्शनाच्च यः ।।[8]

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ धिष्ण्योपस्थानविधिः त्रयोदशः खण्डः

---

[1] को. शाखायां—वेद्यसे
[2] को. अवेदि
[3] को. ०गानुपत्यं
[4] को. ०मन्ववस.
[5] को. ०नावृक्
[6] ०तोद्गावृत्त
[7] कोशेऽत्र पाठस्त्रुटितः
[8] को. मध्ये सवनमिच्छेयुर्निर्गमः सदसो द्वारा पूर्वयैवस्यात् । परोक्तेर्दर्शनाच्च यः ।

## चतुर्दशः खण्डः

**चमसानाहरन्ति । इडायामुपहूयमानायां चमसानुद्गृह्णन्ति । हुतस्य भक्षयन्ति नाहुतस्य । होतुर्भक्षमनु भक्षयन्ति । पुरोडाशान् भक्षयन्ति । पुरोडाशान् भक्षयित्वा राजानं भक्षयन्ति । राजानं भक्षयित्वा वा पुरोडाशान् । अत्रास्मै स्वयमाहरन्ति । यदु चान्यद् भक्षयिष्यन् भवति । अथ चमसमवेक्षत उद्गाता श्येनो नृचक्षा अस्यग्नेस्त्वा चक्षुषावपश्यामीति । एवमेवेतरे यथापूर्वम् । अथोपहवमिच्छते, होतरुपह्वयस्व प्रस्तोतरुपह्वयस्व, प्रतिहर्तरुपह्वयस्व, सुब्रह्मण्योपह्वयस्वेति उद्गातैव होतर्युपहवमिच्छते । उद्गातरि प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्यश्च ॥१४॥**

चमसानाहरन्ति । एकान् सोमचमसांश्चाध्वर्यवः सदस्याहरन्ति । इडाया...उद्गृह्णन्ति । अभक्षयित्वैव चमसानिडामुपह्वयते । तस्यामुपहूयमानायां चमसानुद्गृह्णन्ति उच्चैर्धारयन्ति । इडापात्रसमीप एव चमसोद्ग्रहणं कर्तव्यम् । इडोपह्वाने हि चमसानां कञ्चित्संस्कारं जनयितुमुद्यमं क्रियत इति मन्तव्यम् । सति च सामीप्ये संस्कारो युज्यते नासति । तथा च परतन्त्रे वचनम्—उपोद्यच्छन्ति चमसानिति । हु...तस्य । हुतस्य सोमस्यावयवं भक्षयन्ति । नवा सोमस्येत्यध्याहार्यं, चमसग्रहणमेवानुवर्तयितव्यम्, तद् अर्थतः षष्ठ्यन्तं भवति । शक्यते च लक्षणया चमसशब्देन चमसगतः सोमो निर्देष्टुम्[1] । हुतानामेव चमसानामत्राह्नियमाणत्वादुत्तरत्र च तद्भक्षणस्य विधास्यमानत्वादिदं वाक्यमनर्थकम् । नानर्थकम् । भक्षणस्य प्रतिपत्तिकत्वावगमार्थत्वात् । द्रव्यस्य हि क्वचिदुपयोगात् कृतार्थस्य सतो यदन्यदुच्यते कर्म तस्य प्रतिपत्तित्वं न्याय्यम् । तदाचार्येण विव्रियते—हुतस्य होमेनैव कृतप्रयोजनस्य सोमस्य शेषं भक्षयन्तीति । तत्रायमर्थो लभ्यते-हुतशेषस्य भक्ष्यमाणत्वात् प्रतिपत्तिर्भक्षणमिति[2] । किं पुनरस्य प्रतिपत्तित्वज्ञापने प्रयोजनमिदमाचार्येणैवोच्यते । नाहुतस्य । अहुतस्य सोमस्यावयवं न भक्षयन्ति । यस्मात् प्रतिपत्तिकर्म भक्षणम्, तस्मादिदमुक्तम् । यदि हि भक्षणमर्थकर्म स्यात्[तदा]चमसं गते सोमे प्रमादात् सर्वस्मिन् हुते हि, केनैव वा भक्षिते सति शेषस्याभावे 'श्रुतस्याभावे प्रतिनिधिः' इति न्यायेन व्रीह्यभावे नीवारैरिव वान्यस्य[3] भक्षणस्याप्यन्यो ऽनेन सोमस्य निवृत्तिः प्राप्नोति, तदनेन वाक्येन निवार्यते । तत्र भक्षणं लुप्यते । सत्येतस्मिन् ये द्रव्यार्थाः संस्कारद्रव्याभावे लुप्यन्ते[4] । अस्ति परेषां वचनम् –हुतशेषाभावमधिकृत्य लुप्यते स्विष्टकृदिडाभक्षणञ्च इति । पूर्वेण तावद्वाक्येन प्रतिपत्तिकर्मत्वं भक्षणस्य ज्ञापितम्, अनेन तत्फलमभिहितम् । तयोरिदमभिमतं[5] समासेन—यस्माद्धुतशेषस्य भक्षणं प्रतिपत्तिस्तस्मादसति हुतशेषे लुप्यत एव भक्षणम् । नान्यः सोमो भक्षयितव्य इति । अन्यथापि वाक्यद्वयं व्याख्यायते—हुतस्य भक्षयन्ति, येषां वषट्कारे सोमो हूयते तान् होत्रादीन् प्रत्ययं भक्षणविधिः । तत्रायमर्थः, स्वस्मिन् वषट्कारे हुतस्य चमसस्य होत्रादयो भक्षयन्तीति । उक्तं मीमांसायाम्—वषट्काराच्च भक्षयति । [पू० मी० ३.५.३१] इति । पठन्ति च बह्वृचाः—वषट्कर्ता प्रथमो भक्षयतीति बह्वृचपदार्थस्यात्र विधिरनर्थकः । नानर्थकः । वक्ष्यमाणस्य होतुर्भक्षमनु भक्षयतीत्यस्य होतृभावार्थत्वात् तत्रैव योजयि-

---

१ को. निर्दिष्टम्  २ को प्रतिपत्तिभक्षणं०  ३ को. वागस्य
४ को. लुप्यंनेति  ५ को तयोरयमत

ष्यामः । नाहुतस्येदमुद्गातॄन् सर्वान् प्रत्युच्यते । स्वस्यापि चमसस्याहुतस्य न भक्षयन्ति । होत्रादीनां वषट्कारे हुतस्यैव भक्षयन्तीत्यर्थः । यदुक्तमधस्तनविधिद्वयस्य विधिमेतत्प्रति हेतुत्व, तदिदमत्राप्रसङ्गात्[1]। अहुतभक्षणस्य प्रतिषेधो ऽनर्थकः । नानर्थकः । उत्तरस्यैव निषेधहेतुभावार्थत्वात् । तदपि तत्रैव योजयिष्यामः । **होतु···यन्ति ।** होतुर्भक्षमनु होतरि भक्षितवन्ति उद्गातारः सर्वे भक्षयन्ति । स्वं स्वं चमसम् होत्रा भक्षितं भक्षयन्तीत्यर्थः । यदुक्तमधस्तनविधिद्वयस्य विधिमेतं प्रति हेतुत्वं विज्ञायते । यस्माद्धुतस्य चमसस्य होत्रादयो ऽवश्यं भक्षयन्ति, अहुतस्य चोद्गात्रादयो न भक्षयन्ति, तस्माद्धोतुरुद्गात्रादीनां चैकस्मिंश्चमसे भक्षणं प्राप्नोति, तत्र कः पूर्वं भक्षयतीति तत्क्रमाकांक्षायामिदमुच्यते—होतुर्भक्षमनुभक्षयन्तीति ।

नन्वनेनैव विधिनास्यार्थस्य सिद्धत्वाद्धेतुद्वयमनर्थकम् । नानर्थकम् । प्रशास्त्रादिभिर्वषट्कृतांश्च-मस्यांस्तेषामेव भक्षणमनु भक्षयन्तीति, नाराशंसांश्चानाकाङ्क्ष्यैव[2] होतृभक्षं भक्षयन्तीत्येतदर्थत्वाद्[3] यस्य[3] वा वषट्कारे हूयन्ते चमसाः सोऽत्र होतृशब्देन निर्दिश्यते । हवनस्य कर्ता होतेति । तस्मादुत्तरमेव हेतुद्वयस्य प्रयोजनम् ।

**पुरो···यन्ति ।** हुतावशिष्टान् पुरोडाशानिडोपह्वानानन्तरमध्वर्य्वादयो भक्षयन्ति । **पुरोडाशान् भक्षयित्वा राजानं भक्षयन्ति ।** हुतावशिष्टान् पुरोडाशान् भक्षयित्वा तदनन्तरं सोमं वक्ष्यमाणेन चमसावेक्षणादिना प्रक्रमणे सर्वे भक्षयन्ति । **राजानं भक्षयित्वा वा पुरोडाशान् ।** राजानं भक्षयित्वा वा पुरोडाशान् भक्षयन्ति ।

ननु पुरोडाशाः पूर्वमेव सोमादिज्यन्ते, तस्मात् पूर्वमेव सोमा भक्षयितव्याः, अतोऽयं भक्षो न युज्यते । युज्यत एवायं पक्षः । न ह्युक्तमाचार्यो वदति । न चैतदेकान्तेन दृश्यते यागक्रमेणैव भक्षितव्यमिति[4] । पुरस्ताद्धि पुरोडाशेभ्यस्त्रये ग्रहा द्विदेवत्या इज्यन्ते, पूर्वं तु भक्ष्यन्ते[5] । अथैतन्मतं द्विदेवत्यान् भक्षयित्वेडामुपह्वयते इति वचनदर्शनादतिक्रम्य यागक्रमं पूर्वमेव पुरोडाशेभ्यो द्विदेवत्या भक्ष्यन्ते । अत्र तु वचनं न दृश्यते इति । अत्रापि श्रुतिवचनमाचारप्रामाण्यादनुमातव्यम् । अथवा सत्रविषयमेवैतद् वाक्यम्, न भक्षितुं क्रम-विकल्पकम्, राजानं वा भक्षयित्वा पुरोडाशानिति । तत्रायं वाशब्दः समुच्चये । राजानं भक्षयित्वा च सत्रे पुरोडाशान् भक्षयन्तीति प्रस्तुतभक्षोत्तरकालं हि सर्वयजमानानां सत्रे पुरोडाशभक्षः परतन्त्रे हि चोद्यते, सोऽयमस्माकमप्युच्यते । तस्मादुद्गातारोऽपि सत्रे सवनमुखीयान् भक्षयित्वा पुरोडाशान् भक्षयेयुः ।

**अत्रास्मै स्वयमाहरन्ति ।** अत्रास्मिन् प्रदेशे सोमभक्षादूर्ध्वमस्मा उद्गात्रेऽध्वर्युः स्वराय हितं यजमान-पुरुषा आहरन्ति । विधानक्रमेणैव सोमभक्षोपरितनत्वमस्य विधेः सिध्यति । तस्मात् सर्वत्रविषयतानिवृत्त्य-र्थमस्य विधेरत्रेति प्रकृत एवैकाहो निर्दिश्यते । पूर्वस्य सत्रविषयत्वमुक्तम् । तदस्यापि सन्निधेराशङ्क्य तन्निवर्त्यते । अथवा पूर्वो विधिः सत्रविषय इति ज्ञापनार्थमिदमत्रेति वचनम् । **यदु···भवति ।** यदु इति निपातो वाक्यालङ्कारार्थः । यदन्यद् भक्षयिष्यन् भवति क्षुन्निवृत्त्यर्थमोदनादि तच्चास्मिन्नेव कालेऽस्मै आहरन्ति । विकल्पे वा अयम् उ शब्दस्तस्मादयं विधिरनित्यः । कथमिति । यत् पूर्वं विहृतं राजानं भक्षयन्तीति तस्येयमितिकर्तव्यता कथ्यते ।

---

१ को. यदिदमत्रा०    २ को. शंसांश्चैनाका०    ३. को दर्थत्वायस्या
४ को. भक्षितमिति    ५ को. भक्ष्यते

**अथ…श्यामिति।** अथोद्गाता स्वं चमसं होत्रा भक्षितमादायानेन यजुषावेक्षते। उद्गातृग्रहणमनर्थकम्। नानर्थकम्। गानक्रमप्रापितस्य प्रस्तोतृपूर्वत्वस्य निवृत्त्यर्थत्वात्। **एवमेवेतरे…र्वम्।** एवं [1]पूर्ववदेवेतरे[1] प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्यश्च यथापूर्वं चमसमवेक्षन्ते। प्रस्तोता पूर्वमवेक्षते। ततः प्रतिहर्ता। ततः सुब्रह्मण्यः। इदमेषामानुपूर्व्यं वरणम्। तत्प्रतिमन्त्रणयोर्दृष्टं, तद्यथापूर्वमिति वचनाद् गृह्यते। अवेक्षणोपह्वानयोः राजानं भक्षयन्तीति भक्षणं विधाय विहितत्वाद्, भक्षणाङ्गत्वे चापरिकल्प्य प्रयोजनत्वाद्, भक्षणं प्रति वोपकर्तुं समर्थत्वाद् भक्षणाङ्गता निश्चीयते। अङ्गप्रधानयोश्चैककालता नैयायिकैरिष्यते। तस्मादत्र विधिरवेक्षणस्य स्वरूपपरिज्ञानार्थ एव न कालार्थः। प्रस्तोत्रादीनामुद्गातारं प्रति विहितमवेक्षणं प्रसङ्गेन तेषामपि विधीयते। एवमुपह्वेऽपि द्रष्टव्यम्। तस्मात् प्रस्तोत्रादयोऽपि यदा चमसभक्षणार्थमाददीरन् तदैवावेक्ष्य उपहवमिच्छेयुः॥

**अथो…स्वेति।** अथोपहवमननुज्ञानं भक्षणम्। भक्षणं प्रति होतरित्यादि पदचतुष्टयमुपपद्यते। ह्वयस्वेत्यादिभिर्वाक्यैरुद्गाता इच्छते होतुः, प्रस्तोतुः, प्रतिहर्तुः सुब्रह्मण्यायाश्च[2]। एवं हि होतरित्यादि पदचतुष्टयमुपपद्यते नान्यथा। नहि होतरुपह्वयस्वेत्युपहवाकाङ्क्षणमध्वर्युस्तं नाराशंसं कर्तुमेवास्मै भक्षणं प्रत्यनुज्ञामाकाङ्क्षमाणायावश्यमनुज्ञा[3] कर्तव्या, न वात्रोक्तमेवमनुजानीयात्[4]। तत्र लघुत्वात् समर्थकान्यत्वात् परोऽपि परि [ज्ञा]-तत्वादुपहूत इत्यनुज्ञानीयः। **उद…च्छते।** उद्गातैव होतर्युपहवमिच्छते। **उद्गातरि प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्यश्च।**

ननु उद्गातुर्होतुरुपहवाकाङ्क्षणस्य पूर्ववाक्यसिद्धस्याविधेयत्वात् प्रस्तोत्रादीनां च अविहितस्य अनिवृत्तत्वाद्[5] इदं वाक्यमनर्थकम्। नानर्थकम्। एकस्मिंश्चमसे यावतां भक्षस्समवैति ते सर्वेऽन्योन्यस्मादुपहवमिच्छेयुरिति ज्ञापनार्थत्वादिदं हि वाक्यं प्रस्तोत्रादीनां होतुरुपहवेच्छानिवृत्त्यर्थम्। निवृत्तिश्च सत्यामेव प्राप्तौ युक्ता। तस्मादेषां होतारं प्रति उपह्वेच्छा एकपात्रत्वात् प्राप्नोतीति मन्तव्यम्। उक्तञ्च मीमांसायाम् वचनादनुज्ञातभक्षणम् [पू० मी० ३.५.४०] इत्यधिकृत्य तदेकपात्राणां समवायात् [पू० मी० ३.५.४३] इति। एवं चेदनेन मार्गेणोद्गातुरपि होत्रादिभ्यः प्राप्तत्वादुपहवेच्छापूर्वं[6] वाक्यमनर्थकम्। नानर्थकम्। होतरुपह्वयस्वेत्यादीनामुपहवाकाङ्क्षणनिदानां विधानार्थत्वादुपहवमिच्छत इति प्राप्तमेवानूद्यते। तत्र गुणविधानार्थमुद्गातुश्च प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्यश्चोद्गातर्युपहवमिच्छेयुः, उद्गातरुपह्वयस्वेति।

ननु पूर्ववाक्योदितेनैव मार्गेणास्यार्थस्य सिद्धत्वादिदं वाक्यमनर्थकम्। नानर्थकम्। उद्गातरुपह्वयस्वेत्यस्य निगदस्योत्पादनार्थत्वात् सिद्धस्य हि पुनर्वचनं विशेषविधित्सया क्रियते। सर्वं चेदं सिद्धमेवोद्गातरि प्रस्तोतृप्रतिहर्तारौ सुब्रह्मण्यश्चेति। अतः सर्वोऽयमनुवाद एव। विध्यवयवस्त्वस्य[7] वाक्यस्यार्थादध्याह्रियते उद्गातरुपह्वयस्वेति। एवं हि श्रुतसदृशमेवाध्याहृतं भवति। सुब्रह्मण्यग्रहणं सत्रार्थम्। नात्र भक्षः सुब्रह्मण्यस्य। एवं हि बौधायनेनोक्तम् – के नु खल्वृत्विजामेकाहे[8] सोमं न भक्षयन्ति इति। उन्नेता ग्रावस्तुत् सुब्रह्मण्य इत्येवं ब्रूयात् इति। पुनश्चोक्तम् कथमु खलु सत्रे दीक्षिता भक्षयेयुरिति नेष्टश्चमस उन्नेता भक्षयेदच्छावाकचमसे ग्रावस्तुदुद्गातृचमसे सुब्रह्मण्य इति। अथवा भक्षयत्येवात्र[9] सुब्रह्मण्यः, नहि दृश्यते प्रमाणं सत्रार्थत्वे सुब्रह्मण्यग्रहणस्य।

---

१ को. पूर्वमेव इति रे २ को. सुब्रह्मण्या च ३ को. याविश्यम०
४ को. पात्रो० ५ को. अनिपत्यत्वात् ६ को. ०त्वादुपहवेच्छोयपूर्वं
७ को विविध्यव० ८ को. के नु ले खलुत्विजा० ९ को. भक्षयेत्येवात्र

ननूक्तं बौधायनवचनं, न बौधायनवचनाश्रयेणैवास्य सत्रार्थता निश्चेतुं शक्या । अस्ति हि मतभेदो[1] ऽप्याचार्याणाम् । नैकमत्यमेव सर्वत्र । तस्मादेवं शंसताम्[2]—भक्षणमेव सुब्रह्मण्यहविर्धानस्य अस्मदाचार्येणाभिप्रेयते, बौधायनेन त्वभक्षणमिति । यथान्यत्रापि—अथोद्गाता प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृत्य प्राञ्चं ग्रावसु द्रोणकलशमभ्यूहति इति बौधायनेनोक्तं न वयमनुवर्तामहे । उद्गात्रैव द्रोणकलशकर्म कर्तव्यमिति निश्चिनुमहे । तद्वदत्रापि द्रष्टव्यम् । कामं बौधायनवचनमभक्षणकारणं मा भूत्, अस्माकमेव च श्रुतौ सुब्रह्मण्यो बहिर्वेदि करोति इति दर्शनमभक्षणकारणं भवति । इदं हि दर्शनमन्तर्वेदि सुब्रह्मण्यस्य न किञ्चित् कर्मेत्यवगमयति । भक्षणञ्च सदसि भक्षयन्ति इति वचनमतिक्रम्य न बहिर्वेदि कर्तुं युक्तम् । तस्मादस्यार्थलुप्तं भक्षणम् । नेदं दर्शनमस्याभक्षणे कारणम्, इदं हि सुब्रह्मण्याप्रकरणे दृश्यते । अतो बहिर्वेदि कर्तुरित्थं तस्यामेवावतिष्ठते । नास्य सदसि भक्षणं निवारयति । तस्मात् सदस्येवासीनः सुब्रह्मण्यो भक्षयेत् ।

अथवा । सदसि सुब्रह्मण्यदेशस्याविधानात् सदसि भक्षयन्ति इति वचनस्य प्रायिकः स्यात् । यथाग्नीध्रः[3] शालायामेवासीनो भक्षयति तद्वत् सुब्रह्मण्यो ऽपि स्वस्मिन् देशे[4] उत्कर[4] एवासीनो भक्षयेत् । एवं बहिर्वेदि कारित्वस्य सर्वविषयत्वेऽपि न दोषः । मीमांसायाञ्च सुब्रह्मण्यस्य भक्षोऽस्ति वा न वेति विचारो विद्यते, तत्र शबरस्वामिना तावद् भक्षण एव सिद्धार्थत्वेन निश्चितः । भवदासेनाप्येवमेव निश्चित्य पुनर्व्याख्यानान्तरेण अभक्षणपक्षः साधितः । पुनरपि संशयिनम् एतानि चात्र सूत्राणि—उद्गातृचमसमेकःश्रुतिसंयोगात् । [पू० मी० ३. ५. २३] सर्वे वा सर्वसंयोगात् [पू० मी० ३. ५. २४] स्तोत्रकारिणां वा तत्संयोगात् बहुश्रुतेः [पू०मी० ३. ५. २५] सर्वेतु वेदसंयोगात् कारणादेकदेशे स्यात् [ पू० मी० ३. ५. २६ ] इति । अवश्यं चैवमवगन्तव्यम् । एक एव पक्षसिद्धान्तः[5] यः[5] सूत्रेषु न्यस्त इति । तं तु पक्षमनवधारयन्तो वृत्तिकारा विप्रतिपद्यन्ते । अलमतिप्रसङ्गेन । कोऽनयोः पक्षयोरस्माभिरादरणीयः, न वयमनुजानीमः । संशय एवात्र श्रेयान् । नैकपक्षाश्रयिणः[6] संशये चालोपो लोपो वा न्याय्य इति कैश्चिदुक्तत्वाद् भक्षणमेव कर्तुं युक्तम् । ताण्डिनस्तु अभक्षणमाश्रयन्ते । अस्माभिरपि भगवतो बौधायनस्य वचनक्रियायां नाशिवमिति भक्षणं नाचर्यते । न तु सन्देहस्त्यज्यते । यदि तु भक्षयेद्, वेद्याक्रमणादि सर्वं कृत्वा सदस्येव यथावकाशमुपविश्य भक्षयेत् ।

सुब्रह्मण्यस्य चास्माभिः सोमभक्षणमिष्यते ।
लङ्घितुं च समर्थाः स्म न बौधायनशासनम् ।। १ ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ
चतुर्दशः खण्डः

---

१ को. मतिभेदो० २ को. शंस्यतां ३ को. यथाग्नीध्रस्थ
४ को. देशोत्कर ५ को. पक्षमसिद्धान्तम या ६ को. क्षाश्रीयनः

# अथ पञ्चदशः खण्डः

उपहवमिष्ट्वा भक्षयन्तीन्द्रविन्द्रपीतस्य त इन्द्रियावतो गायत्रच्छन्दसः प्रातःसवनस्य मधुमतो विचक्षणस्य सर्वगणस्य सर्वगण उपहूतस्योपहूतो भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति । एवमेवेतरयोः सवनयोश्छन्दःसवनोपदेशं गणवत्सवनमुखीयेषु । गणांश्च परिहाप्य विचक्षणं च नाराशंसेष्वनाराशंसेषु च गणान् । भक्षयित्वेन्द्रियाणि संमृशते नृमणसि त्वा दधामि पिन्व मे गात्रा हरिवो गणान्मे मा वितीतृष इति । अथात्मानं प्रत्यभिमृशत्यूर्ध्वः सप्तर्षीनुप तिष्ठस्वेन्द्रपीतो वाचस्पते सप्तर्त्विजो ऽभ्युच्छ्रयस्व जुषस्व लोकं मा मावगाः सोम रारन्धि नो हृदि पिता नो ऽसि भगवो नमस्ते अस्तु मा मा हिंसीरिति । प्रस्तोता दक्षिण ऊरौ निधाय चमसमाप्याययत्याप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं भवा वाजस्य संगथ इत्येतया गायत्र्या प्रातःसवने । तदसर्वभक्षेषु सं ते पयांसि समु यन्तु वाजा इत्येतया त्रिष्टुभा माध्यन्दिने सवने । आप्यायस्व समेतु त इत्येतयैव द्विरुक्तया तृतीयसवने । सा जगती संपद्यते ॥ १५ ॥

उप॰॰॰यन्ति । इयं परिभाषा सर्वसोमभक्षविषया । उपहवमिष्ट्वा । भक्षयन्तीति, नानिष्ट्वा । चमसगते सर्वस्मिन्नथोपहवमिच्छत इत्यनेनैव सिद्धत्वात् षोडशग्रहादावस्योपयोगः । तस्मात् पुनस्तत्रोपहवेच्छा येषां तत्र भक्षस्तेभ्यो ऽध्वर्य्वादिभ्यः[1] । इन्द्र॰॰त्विति । अत्र भक्षयन्तीत्यनुवर्तते । अनेन मन्त्रेण सोमं भक्षयन्ति । अथवा षोडशिग्रहादावपि उद्गातैव होतरित्यत्रोक्तेनैव मार्गेण एकपात्रे ऽन्यस्थानस्थ[2] उपहवेज्ययोः[3] सिद्धत्वात् एकमेवेदं वाक्यम् उप—त्विति । उपहवमिष्ट्वा तस्मादनन्तरमनेन मन्त्रेण भक्षयन्ति । स्वभाव एवायमाचार्यस्य, वाक्यक्रमसिद्धमेव[4] क्रियाणामानुपूर्व्यं पूर्वक्रियायां, पुनर्वचनेन क्वचिद् दृढीकरोति । प्रयोजनमप्यस्य पूर्वमेवावादिष्म ।

एव॰॰॰मुखीयेषु । एवमेवेतरयोरपि[5] सवनयोः सवनमुखीयेषु सवनमुखवर्तिषु चमसेषु च्छन्दस्सवने उपदिश्य गणवद् भक्षयन्ति । गायत्रच्छन्दसः प्रातःसवनस्येति मन्त्र एव छन्दःसवनयोरुपदिष्टत्वात् छन्दस्सवनोपदेशमनर्थकम् । नानर्थकम् । विशिष्टयोश्छन्दःसवनयोर्ग्रहणार्थत्वात् । तस्मादुत्तरयोः सवनयोर्ये नामनी ये च च्छन्दसी तेषामयमुपदेशश्चोद्यते । ततश्चैतत्सिद्धम् त्रिष्टुप्छन्दसो माध्यन्दिनस्य सवनस्य, जगतीच्छन्दसः तृतीयसवनस्येति । कस्मात् पुनरेतयोरेकस्यासमासेन एकस्य समासेनाभिधानं क्रियते आचार्येण । एवमेव माध्यन्दिने सवने, माध्यन्दिनसवनमिति । ततीये[6] सवने, तृतीयसवनमिति च । तत्र एकस्यासमासेनाभि-

---

१ को. वध्वर्यादि० ।
२ को. स्मानुस्थ ।
३ को. वेद्ययोः ।
४ को. वामक्रम ।
५ को. एवमेवान्यरयो ।
६ को. ततीयस० ।

धीयमानत्वात् श्रुतौ च सर्वत्रैवमेव दृश्यमानत्वाद् गणवदित्युच्यते[१]। इदं वदामः—यत्[२] सर्वगणस्य सर्वगण इति पदविशेषौ गणपरिग्राहिणौ[३], ततो ऽप्यत्र लभ्यते सर्वगणस्य सर्वगण इत्येतत् पदद्वयवत्तेति[४]। एवं चेद् गणवत्तायां पाठसिद्धत्वाद् गणवद्ग्रहणमनर्थकम्। नानर्थकम्। गणवत्त्वस्य सवनमुखीयेभ्यो ऽन्यत्र निवारणार्थत्वात्त्वनिवार्यते षोडस्यादौ, तत्रापि हि अयमेव मन्त्रो ऽनुष्टुप्छन्दस इत्यादि विकार्यमापद्य विधास्यते।

नन्वनाराशंसेषु च गणानिति करिष्यमाणेनैव यत्नेनैव षोडश्यादेर्गणवत्ता निषिध्यते। न निवर्तिष्यते, (इति) अत्रानभिधाय पृथगभिहितत्वात् अनुष्टुप्छन्दस इत्येतावानेव तत्र मन्त्रविकारः स्यात्। अतस्तु यत्नात् गणवत्त्व[५] निवर्तते।

अथवा वाक्यत्रयमेतत। तत्कथं भवतीदमुच्यते—**एवं नयोः**। एवमेव अनेनैव मार्गेण चमसो नाहरन्तीत्यारभ्य विहितेनात्तरयोः सवनयोर्भक्षयन्ति। सोमभक्षाधिकारात् स्वयंभोजनयोरनतिदेशः। **छन्दःसवनोपदेशम्**। यथात्वं भक्षमन्त्रे छन्दःसवने उपदिश्योत्तरयोः सवनयोर्भक्षयन्ति। भक्षमन्त्र छन्दःसवनोपदेश कुर्वन्तीति व्याख्येयम्। एवमिदं त्रिष्वपि सवनेषु सवनमुखीयानामेव साङ्गं भक्षणं विहितमन्येषामपि विधास्यते। **गणवत्सवनीयमुखेषु**। अस्य प्रयोजनं पूर्वमेवोक्तम्, **गणांश्च "नाराशंसेषु**। वक्ष्यन्ते नाराशंसाः, सीदन्ति नाराशंसा, इति। तेषु नाराशंसेषु गणान्विचक्षणं च परिहाप्य वर्जयित्वा भक्षयन्ति।

ननु त्रयाणामपि सवनानां नाराशंसमन्त्रा आम्नास्यन्ते। सत्यमेतत्। न तत्र प्रउगनिष्केवल्यामिन्द्रविन्द्रपीतस्येत्यनेन वोक्तमन्त्रविकारेण[६] भक्षणम्। क एवमाह। नातो वाक्यादयमर्थो निष्पन्नः। कस्तर्हि वाक्यार्थः। गणान् विचक्षणं च परिहाप्य ये मन्त्रा आम्नास्यन्ते तैरेव सर्वनाराशंसेषु भक्षणमिति। तस्मादवमैरूर्वैरित्याभ्यामेव निष्केवल्यानुवर्तिनो ऽपि नाराशंसान् भक्षयेत्। एवमप्यस्यार्थस्य नाराशंसाधिकार[७] एव वक्तव्यस्यात्र वचनमनर्थकम्। नानर्थकम्। अवेक्षणादेर्भक्षणधर्मस्य छन्दःसवनोपदेशस्य च नाराशंसेषु प्रापणार्थत्वात्। प्रापितेषु भक्षणधर्मेषु होतुरुपह्वेच्छा निवर्त्यते। नहि तत्र होतुर्भक्षणम्। **अनाराशंसेषु च गणान्**। न नाराशंसा[८] अनाराशंसा, अनाराशंसेषु चमसेष्वेवमेव भक्षयन्ति। भक्षमन्त्रे तु गणान् परिहाप्य।

ननु 'गणवत् सवनमुखीयेष्विति' वाक्येन सवनमुखीयेष्वेव गणव्यवस्थापनाद् गणानित्यनर्थकम्। नानर्थकम्। गणेभ्यो ऽन्यस्य सवनमुखीयोक्तस्य सर्वस्य विधेर्ग्रहणार्थत्वात्। अतो ऽत्रापि छन्दस्सवनोपदेशः प्राहृतो भवति। अथवा। उत्तरस्मिन् सवनद्वये सवनमुखीयानामनाराशंसेषु च गणानित्यनेन प्रकृतेषु स्तोत्रेषु गणा निवर्तन्ते। वैकृतेषु वाजपेयसामादिषु गणवानेवायं मन्त्रः प्रसजति। निवारणार्थं गणवत्सवनमुखीयेष्विति[९] गणनियमः कृतः। न ह्येकं विधानं[१०] प्रकृतिविकृतिसमेनानुसर्पति। **भक्षयित्वा...इति**। सोमं[११] भक्षयित्वा इन्द्रियाणि चक्षुर्घ्राणकर्णास्यान्यनेन[१२] मन्त्रेण संमृशते। अत्र संमर्शनस्य इन्द्रियाणि प्रति गुणभूतत्वात् प्रतीन्द्रियमावर्तमानस्य सह मन्त्रेणावृत्तिः प्राप्नोति, तन्निवृत्तये सम. प्रयोगः। संमृशते। संमृशतीत्यर्थः। एवञ्च संमर्शनमिन्द्रियाणां[१३] सह कृतं भवति, यत् सकृदुक्तेनैव मन्त्रेण सर्वाण्येकवन्मृश्येरन्। तस्मात् सकृदेव मन्त्रमुक्त्वा तदन्ते चक्षुरादिक्रमेण संमृष्टव्यानि। एवञ्च क्रियमाणे गात्रा गणानिति बहुवचनान्तयोर्मन्त्रपदयोरर्थसम्पद् भवति। मा मा हिंसीरित्यन्तेन[१४] यजुषात्मानं प्रत्यभिमृशति।

---

१ को. गवदिति मुच्यते। २ को. यावम्। ३ को. परिग्राहिणी।
४ को. व्यवतेति। ५ को. गवत्व। ६ को वोक्तमात्रवि०।
७ को. शंस धिकारा। ८ को. अननारा। ९ को. गणवपस :
१० को. विविनानं। ११ को. सोमः। १२ को. कर्णास्यन्यनेन।
१३ को. सदर्शनमि०। १४ को. आत्मासिरित्यनेन

प्रस्तोता[1]···प्रातःसवने[1] । सर्वैर्भक्षितं चमसमादाय प्रस्तोता आत्मनो दक्षिणस्मिन्नूरौ[2] निधाय तमेतयर्चा गायत्र्याप्याययति । आप्यायतीति प्रथमान्तपठितम्, छान्दसो वा । चमसं मन्त्रेणाभिमृशति तदाप्यायनं भवति । एतयेत्यनर्थकम् । नानर्थकम् । आप्यायस्वेत्यस्या ऋक्त्वप्रतिपादनार्थत्वात् । किमतः सिध्यति, अवसानमर्धर्चे । इदमित्थं भवतु । गायत्र्येत्येकान्तेनानर्थकम् । नानर्थकम् । अस्य प्रातस्सवनाप्यायनमन्त्रत्वे गायत्रीत्वस्य हेतुत्वप्रतिपादनार्थत्वात् । यथा देवदत्तेन वाक्यार्थः सम्यङ् निरूपितो मेधाविनेति श्रूयमाणे सम्यङ् निरूपणस्य मेधावित्वं हेतुरुक्तो ऽवगम्यते । एवमत्रापि द्रष्टव्यम् । इयञ्चात्र युक्तिः गायत्रे प्रातस्सवने गायत्र्याप्यायनमुपपन्नं भवति । किं पुनरस्य प्रयोजनम् । त्रैष्टुभजागतयोः प्रातस्सवनयोस्त्रिष्टुब्जगत्योराप्यायनमन्त्रत्वेन परिग्रहः । व्यूढच्छन्दसि हि द्वादशाहे, चतुर्थादिषु षट्स्वहस्सु सवनानां छन्दांसि विनियन्ति । तत्र जागतैतानि[3] त्रैष्टुभानि च प्रातस्सवनानि । के पुनस्त्रिष्टुब्जगत्यौ, याभ्यां तत्राप्यायनं, ये उत्तरयोर्वक्ष्येते । न ह्येतयोरग्रहणे ऽन्ययोश्चान्वेषणे कारणम्,[4] तस्माद्यया तृतीयसवने तया जागतेषु प्रातस्सवनेषु आप्यायनं भवति । यया माध्यन्दिने सवने तया त्रैष्टुभेषु । अधिकारेणैवार्थसिद्धेः प्रातस्सवन इत्यनर्थकम् । नानर्थकम् । अधस्तनस्य वाक्यद्वयस्य सवनत्रयविषयताज्ञापनार्थत्वात् । अथवा । भक्षयित्वेन्द्रियाणीति भक्षणानुवादादेवास्यार्थस्य सिद्धत्वादुत्तरवाक्यस्य सवनत्रयविषयता अस्मिन् हि[5] विधौ[5] प्रातस्सवनग्रहणेन ज्ञाप्यते । तदसर्वभक्षेषु ।[6] तदाप्यायनमसर्वभक्षेषु[7] सर्वभक्षभ्योऽन्येषु चमसेषु कर्तव्यम् । उक्तमेतत्, सवनत्रयार्थैषा परिभाषेति । आप्यायनञ्च प्राहृतं प्रातस्सवने, उत्तरयोश्च प्रापयिष्यते । तत् सर्वचमसेषु प्रवर्तमानया परिभाषया सर्वभक्षेभ्यो निवर्त्यते । ते च सर्वभक्षा ये नाराशंसत्वाय न परिशिस्यन्ते[8] । तस्मात् सवनमुखीयानामाज्यमुखानुवर्तिनां[9] चमसानामाप्यायनम् । तेषां हि नाराशंसत्वेन सादनमुत्तरत्र वक्ष्यते । सं ते पयांसि...सवने । एतया त्रिष्टुभा माध्यन्दिने सवने चमसमाप्याययति । पूर्वेण गायत्रीग्रहणेन समपरिहारस्त्रिष्टुब्ग्रहणम् । तस्माद् गायत्रं जागतेषु माध्यन्दिनसवनेषु प्रातस्सवनतृतीयसवनाभ्यामाप्यायनमन्त्रावादेयौ । आप्यायने एतयैव द्विरुक्तया तृतीयसवने आप्याययति । सा जगती संपद्यते । सा द्विरुक्ता जगती सम्पद्यते । जगत्याप्यायितं भवतीत्यभिप्रायः । इदं वाक्यं गायत्रीग्रहणेनैव समपरिहारम् । तस्मादस्य सवनस्य[10] गायत्रतायां त्रैष्टुभतायां[10] च पूर्वस्मात् सवनद्वयाद्वाप्यायनमन्त्रावादेयौ ।

उच्छिष्ट—आस्य—वचनात् सोमपानमकारणम् ।  
आशौचस्येव यजमानर्त्विजां मृतिजन्मनी [ नोः ] ।।

इति [महोपाध्यायश्रीभवत्रातेन विरचितायां] जैमिनीयश्रौतसूत्रवृत्तौ भक्षणाप्यायनविधिः  
पञ्चदशः खण्डः

---

१ को. प्रस्तोवने । २ को. णास्मिन्त्ररोधाय । ३ को. जंगतानि ।  
४ को. कारणः । ५ को. हविधो । ६ को, तरक्षेषु ।  
७ को. प्यायनसर्वभक्षेषु । ८ को. परिशेष्यते । ९ को. यानामाज्यमर्थीयानुवर्तीनां  
१० को. सवनगायत्रतायास्त्रैष्टु ।

# अथ षोडशः खण्डः

सीदन्ति नाराशंसाः। ऋतुयाजैश्चरन्ति। शस्त आज्ये नाराशंसान् भक्षयन्ति। अवमैस्ते पितृभिर्भक्षितस्य गायत्रच्छन्दसः प्रातःसवनस्य मधुमतो नाराशंसस्योपहूतोपहूतो भक्षयामि। वाग्जुषाणा सोमस्य तृप्यत्विति। ऊर्वैरिति माध्यन्दिने सवने। काव्यैरिति तृतीयसवने। अनुष्टुप्छन्दस इति षोडशिनि रात्रेश्च। हिरण्यं संप्रदाय षोडशिना स्तुवन्ति। अश्व उपतिष्ठते साम्येक्षाय। यस्माज्जातो न परोऽन्यो अस्ति य आ बभूव भुवनानि विश्वा। प्रजापतिः प्रजया सं रराणस्त्रीणि ज्योतींषि सचते स षोडशीति षोडशिग्रहमवेक्षते। अथ यदि हरिवतीषु षोडशी स्यादिन्द्रश्च सम्राड् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतत्। तयोरहं भक्षमनु भक्षयामि। वाग्जुषाणा सोमस्य तृप्यत्विति। बृहतीच्छन्दस इति सन्धेरिष्टयजुष इति वा। कस्त्वा कं भक्षयामीति। मानसस्य मनसा। कस्मै त्वा कं भक्षयामीति वा। अतिच्छन्दस इति वाजपेयसाम्न्यतिरिक्तोक्थेषु च। द्विः पूर्वयोः सवनयोर्नाराशंसाः सीदन्ति। सकृत्तृतीयसवने। अथाह वैष्टुतं वास आहरेति। श्रीर्वा एषा साम्नां यद्विष्टावाः। श्रीर्वासः। श्रियमेवास्मिंस्तद्दधाति। औदुम्बराः प्रादेशमात्रा विष्टुतयो भवन्ति। ऊर्ग्वा अन्नमुदुम्बरः। ऊर्ज एवान्नाद्यस्यावरुद्ध्यै। स्तोत्रमाहरति। दक्षिणेन होतुर्धिष्ण्यं द्विरुत्तरेण द्विः। ते पञ्चदशेनाग्नेयेनाज्येन स्तुवते यथास्तोमं वा। अथ मैत्रावरुणेनाथैन्द्रेणाथैन्द्राग्नेनेति। सन्तिष्ठते प्रातः सवनम्॥ १६॥

सीदन्ति[1] नाराशंसाः[1]। आप्यायिताः[2] चमसाः सीदन्ति। नाराशंसाः नाराशंसनामानो भूत्वा। चमसानां सदनं, नाराशंससंज्ञा चोभयमप्यनेन वाक्येन क्रियते। अथवा द्वे एवैते वाक्ये। सीदन्तीति [पृथग्] वाक्यं,तस्यार्थः--ये आप्यायिताश्चमसाः सीदन्ति ते नाराशंसा इति। अस्य चायमर्थः, ते नाराशंसा[3]भवन्तीति। अथवा नात्र नाराशंससंज्ञा क्रियते, याज्ञिकप्रसिद्धैवैषा भक्षिताप्यायितेषु चमसेषु। चमसाननूद्य[4] सदनमत्र विधीयते। एकमेवेदं वाक्यम्, तस्यायमर्थः ये नाराशंसास्त इह सीदन्ति। ऋतुयाजैश्चरन्ति। ऋतुयाजा नाम केचित् सोमयागास्तैरध्वर्यवो व्याप्रियन्ते। शस्त[5]···भक्षयन्ति[5]। अस्ति शस्तमाज्यानाम्[6], अस्मिन् शस्ते[7] नाराशंसानागतान् अनेन मन्त्रेण भक्षयन्ति। ऊर्वैरिति···सवने। ऊर्वैस्ते पितृभिरित्यनेन माध्यन्दिने सवने नाराशंसान् भक्षयन्ति। अत्रानुक्तो ऽपि छन्दःसवननिर्देशः कर्तव्यः। तस्य कारणं पूर्वोक्तैः। काव्यैरिति

---

१ को. दसी दशंसो। २ को. आप्ययितां। ३ को. नाराशंसो।
४ को. तृतीया चमसा। ५ को. क्तिती। ६ को. शस्त्रमा। ७ को. वस्ते।

यः सोमो राथन्तरस्य सन्धेस्तं बृहतीच्छन्दसा[१] बृहतीच्छन्दसपदेन[१] तार्तीयसवनिकेन वा मन्त्रेण इष्टयजुषस्त इत्यनेन वा भक्षयन्ति ।

नचायमियानेव मन्त्रः इष्टयजुषस्त इति । परशाखागतस्य महतो मन्त्रस्य प्रतीकमेतद् गृह्यते । इत्थं पुनर्ग्रहणे को दोषः, उक्तमात्र एव मन्त्र इति खलु दोषः । अपरिमितार्थमिदं[२] मन्त्रवाक्यं भवेत् । नहि किञ्चिदर्थः इष्टयजुषः । स्तुवन्तो वा तत्समाप्यते, तत्र साकांक्षमेवेदं पदद्वयमवतिष्ठेत । तस्मात् परशाखागतस्य एवमादिग्रहणं क्रियते । कुतः पुनः कारणात्तु परशाखागतान् आ मे वोच इत्यादीन् महामन्त्रान् पठन्ति, ममैवाचार्यो न पठति, सन्ति विधिशेषाः परतोऽप्यस्माभिः ग्राह्या इति ज्ञापनार्थम् । ततश्च प्रजापतिं मनसा ध्यायेत्तूष्णीं होमेषु सर्वत्र इत्येवमादीनां ग्रहणं सिध्यति ।

कस्त्वा···मनसा । कस्मै त्वा[३]···इति वा ।[३] मानसस्य स्तोत्रस्य यः सोमः तमनयोरेकेन मन्त्रेण मनसा भक्षयन्ति । मनसा मन्त्रं जप्त्वा मनसैव भक्षयन्ति । भक्ष्यते ऽस्माभिः सोम इति स्मरन्ति । न तत्र हि सोम एव परमार्थेन विद्यते, क्व भक्षणम् । अतिच्छ···क्थेषु च[४] । वाजपेयसाम्न्यतिरिक्तोक्थेषु च यः सोमः तमतिच्छन्दस इति ऊहच्छन्दसा तृतीयसवनमन्त्रेण भक्षयन्ति । [५]द्विः पूर्वयोः··· सीदन्ति[५] । पूर्वयोर्द्वयोः सवनयोः द्विर्नाराशंसाः सीदन्ति । कथमिदमभिप्रेयते । किमेकस्मिन् सवने सकृदन्यस्मिन्नपि सकृत्, इत्येवं द्विः सीदन्ति, उताहो द्विरेकैकस्मिन् । कुतः संशयः, उभयथा लोके दृश्यमानत्वात् । यथा द्विः शिवदासो भुङ्क्ते [६]देवरातकृष्णरातगृहयोरित्युक्ते सकृदेकैकस्मिन् भुज्यते । द्विः समनसो वास्यन्तां प्रावारकंबलेयोः, इत्युक्तेः द्विर्द्विर्वास्यन्ते । अत्र ब्रूमः—काममुभयथापि लोके भवतु, अत्र त्वेवमेव गृह्णीमः । द्विरेकस्मिन् द्विरेवान्यस्मिन् सीदन्ति । यदि सकृदेकैकस्मिन्निति गृह्येत, द्विर्ग्रहणमनर्थकं स्यात् । अथवा सीदन्ति नराशंसा इत्यतो वाक्यात् प्रातस्सवने तदावृदतिदेशाच्च माध्यन्दिने सकृत् सादनाय सिद्धत्वात् सर्वमेवेदं वाक्यमनर्थकं स्यात् । द्विः पुनरेकैकस्मिन्निति ग्राह्यमाणे नात्र किञ्चिदप्यनर्थकम् ।

नन्वस्मिन्नपि पक्षे सवनमुखीयशेषाणां सवनद्वयेऽपि पूर्वोक्तेनैव प्रकारेण सिद्धत्वात्, सादनस्याज्यमरुत्वतीयानुवर्तिनामेव विधेयत्वाद् द्विर्ग्रहणमनर्थकम् । नानर्थकम् । पूर्वयोः सवनयोः नाराशंसाः सीदन्तीत्युक्ते सवनयोरनयोर्ये भक्षशेषास्तेषां[७] सादनस्य प्रसजतो निवृत्त्यर्थत्वात्[८] । तस्मात् साधूक्तम् द्विर्द्विरेकस्मिन्निति । न पुनर्बहुकृत्वः सोमो भक्ष्यते । कथितानां भक्षशेषाणां साधनमेतच्चोद्यते । एवं चोदनेनैव गतार्थाः, सीदन्ति नाराशंसाः इति पूर्वं वाक्यमनर्थकम् । नानर्थकम् । ऋतुयाजेभ्यः पूर्वं नाराशंसाः सीदन्तीति क्रियाक्रमविधानार्थत्वात् । अथवा प्रथमनाराशंससादनविधानार्थमेवेदं वाक्यं भवतु सीदन्ति नाराशंसा इति । यच्चेदं वाक्यं द्वि पूर्वयोः इति, तदप्यसति द्विः शब्दे के प्रयुज्यन्ते ।

---

१ को. बृहतीच्छन्दनु इति विकृतीच्छन्दपदेन
२ को. अपरिपरीणार्थमिदं
३ को. कस्त्वा एव
४ को. अतिशुच
५ को. द्विपदेति
६ को. •रात कृष्णरात कृष्णरात गृह०
७ को. भक्षशेषां तेषां
८ को. निवृत्यर्थनि०

तेषां द्विर्नाराशंसानां सादनमात्रं विदध्यात्। तत्र केन वेदमवगम्यते, एतदावृत्तिकथनादिति[1]। तदवगमनार्थं द्विः शब्दः प्रयुज्यते। कोऽभिप्रायः, अयमुच्यते—एते शब्दा द्विस्त्रिरित्यादयस्तेषामयं स्वभावो यदेकस्मिन्नेव द्रव्ये क्रियाया आवृत्तिमवगमयन्ति[2]। तत्रायं द्विः शब्दः प्रयुज्यते, यत्र[3] पूर्वं नाराशंसीभूय[4] सन्नानामेव सोमानां द्वितीयं सादनमवगमयेत्यर्थो[5] भवति। यथा लोके प्रातरेव देवदत्तस्य भोजनमाज्ञाप्य भुक्तवति तस्मिन् पुनर्गृहपतिर्वदति देवदत्तो भोजयितव्य इति। नचैवं श्रुत्वा पुनरेव द्विर्भोजयति। द्वितीयभोजनपरमेव वचनं मन्यमानाः सायमाशमस्मै ददति। एवमनेनापि वाक्येन द्वितीयमेव नाराशंसानां सादनं विधीयते, नापूर्वं सादनद्वयम्। तस्मात् साधूक्तम्—प्रथमद्वितीयानां सादनम् इति। सकृत्तृतीयसवने। तृतीयसवने सकृन्नाराशंसाः सीदन्ति प्रथमत एव[6]। अथाह...आहरतेति। अथ नाराशंससादनानन्तरमिमं संप्रैषं कर्मकरानुद्दिश्य प्रस्तोताह। कथं प्रस्तोता, किमिदमिदानीमसदादिष्टं[7] कथनोद्गातेति। अत्र ब्रूमः—प्रस्तोतृकर्तृकस्तोत्रावयवसंख्यानुकरणभूतौदुम्बरखण्डोपधानार्थवस्त्रलाभोपायत्वादयं संप्रैषः प्रस्तोत्रैव कर्तव्यः। यो हि प्रधानस्य कर्ता तस्यैवाङ्गानामप्यनादेशे[8] कर्तृत्वं युक्तम्।

ननु अवयवसंख्यानमपि स्तोत्राङ्गम्, ततश्चोक्तेनैव क्रमेण संप्रैषः स्तोत्राङ्गं भवति। तत्राङ्गप्रधानयोरेककर्तृत्वाश्रये सर्वैः स्तोत्रकारिभिरस्य संप्रैस्य वचनं संप्राप्नोति। आहेति त्वेकवचनश्रुतेरनियमेन त्रयाणामेकेन नियमहेतोर्वा समाख्यानादुद्गात्रैव। सत्यमेवं प्राप्नोति। यद्येष संप्रैषः स्तोत्राङ्गं भवेत्, न चैष स्तोत्रावयवसंख्यानस्यैव प्रथमतोऽङ्गभावादुपलब्धप्रयोजनः स्तोत्रांगतामाकांक्षते। कस्मात् पुनः प्रस्तोतैव स्तोत्रियां[9] परिसञ्चष्टे। यस्मादयमध्वर्यवे होत्रादिभ्यश्चोत्तमां प्राह तस्मादेतज्ज्ञायते, प्रस्तोतैवासां परिसंख्यातेति। य एव हि यानि कानिचित् संख्यातवान् स एवैवं वदितुं शक्नोति, एतावन्तीमानि, एतावदिदमेष्वेतदिति[10]। तस्मादेतन्निश्चेतव्यम्, प्रस्तोतैव स्तोत्रियां परिसञ्चष्टे, संप्रेषयतीति[11]। एवं संप्रेषिताः परिकर्मिणो वास आहरन्ति, तदास्तावमध्ये विस्तृणाति, यथा वक्ष्यमाणा विष्टुतयः तस्मिन्नवधीयेरन्। एवं हि वैष्टुतमिति वाससोऽभिधानं संप्रैषं दृष्टमुपपन्नं भवति। विष्टुतीनामिदं वैष्टुतमिति।

श्रीर्वा एषा साम्नां यद्विष्टावाः। श्रीर्वासः। श्रियमेवास्मिंस्तद्दधाति। अयमर्थवादो वाससः स्तुत्यर्थस्तस्यायमर्थः कथ्यते। विस्तीर्णं, पुनः पुनः स्तोमपूरणार्थमभ्यस्यमानं स्तवनं, विष्टावस्तोत्राणां महत्वजननिमित्तत्वात् साम्नः श्रीर्भवति, वाससश्च श्रीरेव भवति, शोभाकारित्वात्। तत्रैवमर्थयोजना—यतः श्रीरेवैषा साम्नां यद्विष्टाववासः। विष्टाववासश्च[12] श्रीरेव, तस्माद् विष्टावार्थं वासो य आहरन्ति ते श्रियमेव भूयसीमस्मिन् सादयन्तीति[13]। अयमभिप्रायः—पृथगपि संमतयोः परस्परसंगमो महीयसीं संमतिं विदधाति मणिकर्णयोरिव च, ज्ञानकर्मणोरिव चेति। औदुम्बराः प्रादेशमात्रा विष्टुतयो भवन्ति। ऊर्वा अन्नमुदुम्बरः। ऊर्ज एवन्नाद्यस्यावरुद्ध्यै। औदुम्बरविटपाः प्रादेशप्रमाणसहिताः विष्टुतयो भवन्ति। करणसाधानश्चात्र विष्टुतिशब्दः[14]। विष्टूयते आभिरिति।

ननु सामभिर्विष्टूयते। सत्यमेतत्। यद्यपि तु परमार्थतो नासां विष्टावकरणत्वमस्ति, विष्टावसंख्या आभिः परिच्छिद्यत इत्यौपचारिकमस्त्येव, तदत्राश्रीयते।

---

१ को. एतावतिथाजादिति
२ को. आवृत्तिमवगमयेति
३ को. मानं
४ को. नाराशंसीभूयः
५ को. ०वगमयतीत्यर्थो
६ को. एवं
७ को. कथमिदानीमसत् अनादिष्टं
८ को. तवैवांगाना०
९ को. स्योत्रयां
१० को. एतावतिथमेष्वे०
११ को. संप्रेष्यतीति
१२ को. यद्विष्टाववासश्च
१३ को. सादयतीति
१४ को. ०तिशब्दाः

ननु विष्टुतिशब्दस्य स्त्रीलिगङ्गत्वात् औदुम्बर्यः प्रादेशमात्र्यः इति प्राप्नोति। न प्राप्नोति। उदुम्बरखण्डानां हि प्रादेशमात्राणां सतां विष्टुतिभावोऽत्र विधीयते। तस्मादित्थमेव साधु। अर्थवादो वाक्यशेषस्तस्यायमर्थः। ऊर्गित्ययं शब्दो रसवचनः, अत्र लक्षणया रसवद्वचनं कल्प्यते। वै इति निपातो हेतौ। तत्रैवं योजना, यतो रसवदन्नमुदुम्बरस्तस्मादुदुम्बरावयवा विष्टुतित्वेनोपादीयन्ते, तस्य रसवत एवान्नाद्यस्यावरोधायेति।

**स्तोत्रमाहरति। दक्षिणेन होतुर्धिष्ण्यं द्विः।** सर्वस्तोत्रेषु होतुर्दक्षिणेन[1] धिष्ण्यं द्विः स्तोत्रमध्वर्युराहरति तत् स्वस्मिन्नेव तन्त्रे विहितम्। आचार्येण च स्तोत्रं प्रतिगृह्य जपतीति, विदधता सर्वेष्वापत्तिपवमानेषु स्तोत्रमस्तीत्यवगमितम्। तस्यैवासिद्धत्वस्यास्तावं प्रत्याह्रियमाणस्य स्तोत्रस्य प्रपदनमार्गोऽयं विधीयते, स्तोत्राहरणं त्वनूद्यते। स्तोत्रमध्वर्युर्दक्षिणेन होतुर्धिष्ण्यं द्विराहरति। इदानीमेव वक्ष्यति, चत्वारि स्तोत्राणि. तेषु द्वयोरयं स्तोत्राहरणमार्गः कथितः, द्वयोस्तु वक्ष्यते।

**उत्तरेण द्विः।** उत्तरेण होतुर्धिष्ण्यं द्विः स्तोत्रमाहरति प्रतिप्रस्थाता, स हि तत्राध्वर्युरिष्यते। आज्येष्वयं मार्गो भवतु, पृष्ठे च, कथमन्येषु स्तोत्रेषु, इदं वदामः—द्वावेतौ सञ्चारौ। सदसो दक्षिणेन, होतुर्धिष्ण्यमेकः, उत्तरेणैकः तेषां हि वचनमन्त्रेण होतुर्मैत्रावरुणस्य च धिष्ण्यानां विसंस्त्वितसञ्चारः[2] इति। अन्येषां पुनः—अथैषां विसंस्त्वितसञ्चारो ऽन्तरेण होतुश्च धिष्ण्यं ब्राह्मणाच्छंसिनश्च ये धिष्ण्याः इति। तत्रास्माकमवचनेऽपि द्वयोरेकः सञ्चारः प्रतिस्तोत्रमनियमेन प्रसजति। तत्र पूर्वयोराज्ययोरध्वर्युकर्तृकत्वात् स्तोत्राहरणस्य द्वारश्च दक्षिणभागेनाध्वर्योः प्रवणत्वाद्दक्षिणमेव सञ्चारमृजुत्वात् पूर्वं वाक्यं नियच्छति। उक्तयोश्च प्रतिप्रस्थातृकर्तृत्वात् उत्तरभागेन च तस्य प्रवणत्वात् उत्तरवाक्यमपि-वाक्यमृजुत्वादेवोत्तरं सञ्चारं नियच्छति। दृष्टार्थप्रतिपत्तित्वाच्चायं सञ्चारनियमः सर्वेष्वपि स्तोत्रेष्ववगम्यते[3]। तस्मात् सर्वत्रापि यदध्वर्युः स्तोत्रमाहरति तद्दक्षिणेन होतुर्धिष्ण्यमाहरति। यत् प्रतिप्रस्थाता, तदुत्तरेण। एवमेवैकं वर्त्म भवति।

**ते पञ्चदशेनाग्नेयेन [आज्येन स्तुवते]। यथा स्तोमं वा।** त उद्गातारः पञ्चदशस्तोमेन अग्निदेवताकेन आज्येन स्तुवते। यथास्तोमं वा। वा शब्दो हेतौ। यथास्तोमं हि स्तोतव्यमित्यर्थः। पञ्चदशान्याज्यानि भवन्ति इत्येवमादिभिः श्रुतिवाक्यैरेव स्तोत्रमभिहितं[4] तदपेक्षया यथास्तोममित्युक्तम्। अयमभिप्रायः—श्रुतिविहितस्तोमपरिग्रहार्थमनेनाज्येन पञ्चदशेन स्तुवत इति। तत इदमुक्तं भवति—सर्वस्तोत्रेषु श्रौता एव स्तोमा ग्राह्याः इति। प्रतिस्तोत्रं हि स्तोमवचने ग्रन्थस्य गरिमा प्रसजति। अथवा ते पञ्चदशेनाग्नेयेनाज्येन[5] स्तुवत इत्येतावतैव वाक्येन सर्वत्र श्रौता एव स्तोमा इत्युपलक्ष्यन्ते। नाग्नेयस्यैव[6] पञ्चदशत्वं विवक्ष्यते। न ह्यस्ति कारणम्। अस्यैव स्तोमोऽपि विधेयो नान्येषामिति।

नन्वस्मिन् अन्येषु च स्तोत्रेषु श्रुतितः स्तोमाः प्राप्ताः। किमतः, अत एतद् भवति—अन्येभ्यः श्रौतस्तोमनिवर्तनार्थमेतद्वचनमिति। अत्र वदामः—अस्यैवायं परिसंख्यातः[7] इह तु सपञ्चदशान्याज्यानि भवन्ति इति श्रुतिविरोधप्रसंगा गृह्यन्ते, तस्मादुपलक्षणार्थमेवेदं वचनं, न परिसंख्यानार्थम्।

ननु श्रुतिसिद्धानां स्तोमानामुपलक्षणमप्यनर्थिकैव। यद्येवं, सर्वेयमनर्थिका दशाध्यायी संवृत्ता[8]। अस्यां हि श्रुतिसिद्धमेव कथ्यते। व्याख्यानादावेव चेदमुदितम्,[9] श्रौता एव विधयः सूत्रैरनुक्रम्यन्त इति। यदि

---

१ को. तृणद्वयमन्यद्वा २ को. विसंस्वीत० ३ को. स्तोत्रेषु चमयते ४ को. स्तोताहविहितां
५ को. ०ग्नेनायेज्य ६ को. नानेय० ७ को. ख्याताः ८ को. संवृता ९ को. ०मुदिता

च कल्पसूत्राणि श्रुत्यसिद्धमर्थं विदध्युः[१] न प्रामाण्यमुपलभेरन् । अतः[२] श्रतिसिद्धकथनमत्र न दोषाय, गुणायैव तद्भवति । एवमनेन वाक्येन श्रुतित एव स्तोमानां ग्रहणमवगमितम् । स्तोमप्रसंगेन तत्क्वचित् । संशये स्तोमस्य निश्चयोपायः कथ्यते, **यथास्तोमं वा** । स्तोम शब्दोऽत्र स्तोमकल्पमुपलक्षयति । वाशब्दो ऽवधारणार्थः[३] । अयमर्थः—यथास्तोमकल्पमेव स्तोमा ग्राह्या इति । स्तोमकल्पस्य श्रुत्यापि विरोधशंकाया-मिदमुच्यते । यथाऽमुष्य व्योम्न एकाहस्य श्रुतौ स्तोमविधिः स सप्तदशो भवतीति, तस्यैकविंश आर्भवात्य-ग्निष्टोम[४] सामेति च । स्तोमकल्पे तु सप्तदशस्यैकविंशमग्निष्टोमसामेति ।

नन्वत्र यथास्तोमकल्पमेव गृह्यमाणे श्रुतेः प्रामाण्यं हीयेत, अत्र ब्रूमः—श्रुत्यर्थस्यैव परिग्रहार्थमिदं यथास्तोममुच्यते । अयमभिप्रायः । पूर्वोक्तस्यार्भवस्यैकविंशतो वाशब्देन विवृत्याग्निष्टोमसाम्न एकविंशत्वं सिद्धान्तत्वेन श्रुतावप्युपात्तमिति । नहि[५] श्रुतिविरुद्धमाचार्यः कल्पयति । अथवा श्रुतिविहितानां स्तोमा-नामन्यथाभावोऽपि प्रकृतावेवास्ति । वक्ष्यति ह्यग्निचितिके—सप्तदशं[६] माध्यन्दिनम्, पञ्चदश होतुः पृष्ठमिति । तस्यापि परिग्रहार्थं[७] यथास्तोमं वेत्युच्यते ।

**अथ मैत्रावरुणेनाथै...नेति** । अपवमानेष्वयं क्रमः । यदुक्तस्तोत्रानन्तरं[८] शस्त्रं ततः सोमेज्या ततः सोमभक्षणमिति । तदेतदपि भक्षणानन्तरमुच्यते । अथ मित्रावरुणदेवतं केनाज्येन स्तुवते, अथैन्द्रेण अथैन्द्राग्नेनेति ।

**सन्तिष्ठते प्रातःसवनम्** । सवनशब्दः सोमाभिषवमभिदधत् सहचरितं क्रियाकलापं सकलमपीह लक्षणयाऽवगमयति । सूयतेऽस्मिन् सोम इति वाधिकरणसाधनः सन् संज्ञात्वेनास्मिन् कर्मकलापे प्रवर्तते, तस्यात्र प्रातः शब्दोऽपि विशेषकः । तत्प्रातःसवनमित्थं संतिष्ठते । सवनानन्तरारम्भादेवैतत् सवनसमाप्ति-ज्ञाननिष्पत्तेरिदं वाक्यमनर्थकम् । नानर्थकम् । यदर्थं देवयजनभूमिः प्रपन्ना तत् प्रातःसवनम् । यतः सन्तिष्ठते तस्मात्ततो निष्क्रामेयुरित्येतदर्थत्वात्[१०] । अनन्तरसवनादौ प्रपदनमपि प्रातस्सवनतः प्राप्नोति, अत एतद्भवति, निष्क्रमणमर्थसिद्धिमिति । सत्यमेतत् । किन्तु अर्थकृते निष्क्रमणे आह्रियमाणे येन केनचित् यथा निष्क्रामेयुः । वचनावगमिते पुनः यद्वाचनिकं सदः प्रपदने वर्त्म, तेनैव निष्क्रमणमपि सिध्यति । तस्मात् प्रदक्षिणमपि सिद्धयति । तस्मात् प्रदक्षिणमौदुम्बरीमेत्य[१२] सदसोऽपरया द्वारा निष्क्रम्य आग्नीध्रीयमुत्तरेण गत्वा चात्वालोत्करावन्तरेण वृजित्वा ततो यथार्थं गच्छेयुः, अन्यतरस्मिन् वा स्यात् । पूर्वयोराज्ययोः श्रुतेरविशेषविधेरान्तादादौ जगती । यथा । किं च श्रूयते—यस्य नावृत्तिविधिवाक्ये, तदात्मना सहैवावर्तते । [ [१३]यन्मैच्छो आद्यैः सामानि यथा यस्य तु श्रूयते न तैर्विना पर्यूहणं, यथा मन्त्रेण रक्षोघ्नादीनि यथा हिंकारेण पक्षप्राप्ताम्यन्ते ये धर्मास्तैस्सहैव तु ऊर्ध्वं प्रसव्यङ्गुलीभिरित्येभिस्तत्क्रिया[१३] ।]

तैश्चैवं च स्थिते[१४] न्याये आवृत्तिः[१५] विधिवत् सदः ।
उक्तं पञ्चदशेनेति प्रत्यावृत्तिस्ततश्च न ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ प्रातःसवनविधिः
षोडशः खण्डः

---

१ को. विवदध्युव  २ को. ०अथ  ३ को. ०रणाय
४ को. ०वत्य०  ५ को. नहीत्युताश्रुति०  ६ को. सप्तदशो  ७ को. परिग्रहार्थः
८ को. मदुत०  ९. को. भक्षणान्तर०  १० को. निष्ठामेयु०  ११ को. नअन्तर०
१२ को. औदुम्बरीत्य १३ को. कोष्ठगतः पाठः स्वयं विशोध्यः पठनीयः १४ को. स्मिते १५ को. सहावत्य ददह सता

## अथ सप्तदशः खण्डः

एतयैवावृता माध्यन्दिनं सवनं प्रसिद्धम् । संप्रसर्प्य[1] सदसि पवमानेन स्तुवते । साम्ने साम्ने हिं कुर्वन्ति । स्तुते दधिघर्मेण चरन्ति । अथ पुरोडाशैरथ राज्ञा । राजनि भक्षिते दाक्षिणानि जुहोति । अथ दक्षिणा नयन्ति । आत्रेयाय प्रथमां गां दत्वा ब्रह्मणे दक्षिणा नयन्त्यथ होत्रे ऽथाध्वर्यवे ऽथोद्गात्रे ऽथ सदस्यायाथ होत्रकेभ्यो ऽथ प्रसर्पकेभ्यः । दक्षिणासु नीयमानासूत्करे तिष्ठन् सुब्रह्मण्यामाह्वयति त्रिरनिरुक्ताम् । यत् प्रायणं तदुदयनमसदिति ॥ १७ ॥

एतयैवा...प्रसिद्धिम् । एतयैव[2] प्रातः सवने विहितयैव, त्रिवृतक्रमेण माध्यन्दिनमपि सवनं प्रसिद्धम् । या[3] प्रातःसवनस्येतिकर्तव्यता सैवास्य सवनस्यातिदिश्यते । उत्तरैस्तु वाक्यैर्विशेषो वक्ष्यते । किमर्थमिदम् एतयैवावृता इति वचनम्, प्रातस्सवनधर्मणामत्र प्रापणार्थमेवमिदमर्थमेवैतत् । एवं चेत् 'एवमेव' इति वक्तव्यम्, तावताप्ययमर्थः सिध्यति । यथान्यत्राप्यतिदिश्यते—एवमेव प्राग्वर्तमाने, एवमेवापराह्ण उपसदि संस्थितायाम् इति ।

अत्र ब्रूमः—यदि 'एवमेव' इत्यवक्ष्यत; यदत्र वचनेनातिदिश्यते, अपवदिष्यते तत् सर्वमपि। कृतमेव प्रातस्सवनादिकं कर्म अत्रापि प्रासंक्ष्यति[4] । इष्यते ऽत्र केषांचित् कर्मणां क्रमविकारं केषांचिदकरणं च । तत्सिध्यर्थमेतयैवावृतेत्युक्तम् । किं तत् सर्वमितः सिध्यति, कः सन्देहः । इत्थं हि गृह्यते आवृता क्रमेण न्यायेनेति । तत्र न्यायालम्बने कानिचित् कर्माणि न क्रियन्ते, क्रियते च केषाञ्चित् क्रमः ।

कथं पुनरत्र प्रयोगः, इमे वदामः—आदित एव कृतयज्ञोपवीताचमनका वेदिं प्रपद्येरन् । अस्मिन्नेव चावसरे वेद्याक्रमणादि सदउपवेशनान्तं कर्म कुर्युः । कुत इदमेव क्रियते, न्यायादिति ब्रूमः । इदं हि कर्म यस्मिन् काले प्रातःसवने कृतं, न तस्मिन् कालेऽत्र कर्तुं शक्यते । पवमानेन स्तुत्या कृतमेतत् प्रातस्सवने । अत्र तु स्तुते दधिघर्मेण चरन्तीति वक्ष्यमाणत्वात् तस्मात् स्थानादवगच्छति । एवं चैवाभिप्रेमो वयम्—कृतवेद्याक्रमणादिपदार्थजातैरेव प्रातःसवनवदत्रापि सदः प्रवेष्टव्यमिति । तथा परैरप्युक्तम्—धिष्ण्यानुपस्थाय सदः प्रसर्पन्ति इति । वक्ष्यते च—सदसि पवमानेन स्तुवत इति । तत इदमर्थसिद्धं प्राक् पवमानादवश्यमत्र वेद्याक्रमणादि कार्यमिति । एवं चेद्धविर्धानप्रचारापदनादूर्ध्वमेतत् कर्तव्यम्, प्रातस्सवनकालस्यासत्तये । सत्यम्, एवमपि प्राप्नोति, इत्थमेव सहकारिभिस्तु आदित एवास्येष्यमाणत्वात् अस्माकमपि तृतीयसवने तथैव वक्ष्यमाणत्वात् इत्थमेव निश्चिनुमहे । आदावेव वेद्याक्रमादि कृत्वा सदस्युपविशेयुरिति, ततोऽभिषवकाले दक्षिणेन होतुर्धिष्ण्यं सदसो निष्क्रम्याध्वर्युपथेन गत्वा हविर्धानं प्रपद्येरन् । ततो हविर्धानाभिमर्शनादिप्रवृतहोमान्तकर्मकलापः प्रतायते[5] न त्वत्र विश्वरूपाणां वचनं प्रवर्तते । तस्य कारणं पूर्वमेवोक्तम् ।

---

१ को. संप्रसृप्य इति मुद्रितपुस्तकपाठः २ को. हितयैव ३ को. यं
४ को. प्रासंक्ष्य ५ को. प्रताप्यते (एष हि लिपिकर्त्रा कोष्ठके धृतः पाठः

न चात्र विश्वरूपागानं कर्तव्यम् । यत् पूर्वोक्तम्, देवसोमभक्षणादिवदिदं मन्तव्यमिति, तस्येदं फलं, देवसोमभक्षणादिवत् अस्मिन् सवने विश्वरूपागानस्याकरणम् । कुतः पुनः देवसोमभक्षणादीनामत्राकरणम्, यस्मादेतानि श्रुतावेव चोदितानि न सूत्रे । तस्मादत्रैतानि नातिदिश्यन्ते[१] । यदेव हि प्रातस्सवने विहितवा- नाचार्यस्तद्देवसन्निधानादेवेत्यतिदेष्टुं शक्यते[२] । न सर्वं प्रातस्सवना [दिवत्] । इदमर्थमेव च देवसोम- भक्षणादीनामाचार्येणाकल्पनम् । यदेषामत्राकरणं तस्मादित्थं मन्तव्यम्, यानि हृच्छदित आगतानि प्रातस्स- वनाङ्गानि तान्यत्र न प्रवर्तेरन्, तद्भावप्रतिपादनाद् विश्वरूपगानं चेति । किं च निश्वरूपगानस्यात्राभावः सविकारिप्रत्ययोऽप्यवगमयति—स उ खलु वासतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्च, विश्वरूप उ हास्य स्तोत्रभक्तिर्भवति, प्रातरनुवाक उ शस्त्रभक्तिः इति । तत्र ग्रहत्वेन शस्त्रतया चोपात्तयोर्वासतीपरिग्रह- प्रातरनुवाकयोरनावर्तमानत्वात् अस्यापि स्तोत्रत्वेनोपात्तस्य तथात्वमेव स्वदते । तस्मादेव स्थितमेतत्, नात्र विश्वरूपाणां प्रवृत्तिरिति । अत्र च सदसि पवमानगानस्य विधास्यमानत्वात् प्रवृत्तहोमानन्तरं प्रदक्षिणमावृत्य प्रत्यञ्चः सर्पन्ति तदा चाध्वर्युमनुमन्त्रयेत ।

**संप्रसर्प्य...स्तुवते** । सङ्गताः सन्नता वा प्रसृप्य सदसि माध्यन्दिनेन पवमानेन स्तुवते । संप्रसृप्येति भवितव्ये संप्रसर्प्येति छान्दसो गुणः । आचार्येण वा संप्रसृप्येत्येव कथितं, पठितं प्रमादादध्येतृभिरेवं कृतम् । अथवा णिजन्ताद्धातोरयं प्रत्ययः । उद्गातॄणामेवेदमुच्यते, आत्मभिस्सममध्वर्य्वादीन् प्रसर्प्येति । एवञ्च सर्पणस्तवनयोः समानकर्तृकता श्रूयमाणा किंचिदपि नापहन्यते । इतरथा हि ये सर्पन्ति तैः सर्वैः स्तूयमान- त्वात् विहन्येत ।

**साम्ने साम्ने हिंकुर्वन्ति**[४] । सामार्थं सामार्थं हिंकुर्वन्ति । साम्नः साम्नः पुरस्ताद्धिंकुर्वन्ति इत्यर्थः । अत्र श्रुतौ आमहीयवे वषट्कारोऽपिहितः प्रथमस्तोत्रीयायामेव चावधारितं वषट् कुर्याद्वौषट् भूमिददा इति । तस्मा- देवोषादभू इति गाये ?

**स्तुते...चरन्ति** । पवमानेन स्तुते दधिघमसमाख्येन हविषा अध्वर्य्वादयो व्याप्रियन्ते । अथ··· पुरौडाशैः । दधिघर्मानन्तर पाशुकसवनीयैः पुरोडाशैश्चरन्ति । अथ राज्ञा । अथ सोमेन चरन्ति । राजनि... जुहोति । सोमे भक्षिते सवनेषु नाराशंसेषु दक्षिणासंबद्धानि यजूंष्यध्वर्युर्जुहोति ।

**अथ...नयन्ति** । द्वादशं शतं गवां दद्यादेकविंशतिप्रभृति वा यथोपपादमिति ज्योतिष्टोमस्य दक्षिणाः शाखान्तरे विहिताः । ताः गाः परिकर्मिणो दक्षिणापथेन नयन्ति उपाञ्जन्ति । **आत्रेयाय...नयन्ति** । तासां[५] गवां[५] दक्षिणापथेन नीयमानानां वा गौः प्रथमा पुरस्तात् तामात्रेयाय दत्वा ततो ब्रह्मणे दक्षिणा नयन्ति ददति । ब्रह्मणस्तां[६] गां[६] दक्षिणां तत्प्रदिष्टं देशं नयन्ति । हिरण्यदानमात्रेयाय श्रुतौ दृश्यते—सर्वेषु लोकेषु ज्योतिर्धत्ते य एवं विद्वानत्र हिरण्यं ददाति इति । तस्माद् गोरनन्तरं हिरण्यमप्यात्रेयाय दातव्यम् । इदमेव वा हिरण्यमवेक्ष्य गोः प्राथम्यवचनम् ।

**अथ...होत्रे** । अथ होत्रे दक्षिणां नयन्ति । अथाध्वर्यवे, अथोद्गात्रे, अथ सदस्याय । अथ होत्र- केभ्यः । ऋत्विजां नाम । होत्रका[७] इति महर्त्विग्भ्यो ऽन्ये ये ऋत्विज एते होत्रकाः[७] तेभ्यः सर्वेभ्यः सहैव दक्षिणां नयन्ति ।

---

१ को. तिदिश्यते २ को. चार्यमयदेवसन्निधानादेतुवे ३ को. विश्वरूपंगा
४ को. वन्ति ५ को. तां गवांसां ६ को. ब्रह्मा त्वां वा ७ को. होतृका

**अथ प्रसर्पकेभ्यः** । ये ब्राह्मणा यजमानेनाहूताः, यज्ञं वा द्रष्टुमागच्छन्ति ते प्रसर्पकास्तेभ्यो दक्षिणादानमिदमदृष्टार्थमेव चोद्यते, नानमनार्थम् । नहि तैरानतैः ऋत्विग्भिरिवास्ति प्रयोजनायातश्च[1] दक्षिणाः क्रतुं प्रति श्रुतौ विहिताः । नासामृत्विगानमनार्थतैवेति[2] न्यायविद्भिर्निश्चितम् । तस्मात् परिसंख्यातदक्षिणा अनपेक्षणीया । यथोत्साहमन्यदपि[3] प्रसर्पकेभ्यो[3] दातव्यम् । एवं चेदात्रेयदक्षि णाया अप्येवंभावः प्राप्नोति, को नेत्याह ।

ननु पूर्वमुक्तं प्रथमां गामात्रेयाय[4] दत्वेति तदन्यस्यां गवि दीयमानायां विरुध्येत,[5] नायं विरोध आपद्यते । एवं हि तत्राभिप्रेता[6] या[6] गौरात्रेयाय दीयते सापि परिसंख्याताभिः सह दक्षिणापथेन नीयेत[7] इति । सन्ति दक्षिणादानार्था मन्त्राः श्रुतिविहिताः ब्रह्मन् मनस्ते इत्यादयः तैरेता दक्षिणा दातव्याः । तत्रानेनेदमिति मन्त्रलिङ्गस्याविरोधाय दक्षिणाद्रव्यं सन्निधाववस्थाप्य प्रत्यक्षीकृत्य दद्यात् । स्थावरस्य तु द्रव्यस्य पूर्वविज्ञापनेन प्रत्यक्षीकरणम् । एवं ददतो दक्षिणेन प्रसन्नेन मनसा ऋत्विजः प्रतिगृह्णीयुः । प्रत्यग्रहैषमिति ब्रूयुः । होत्रकास्तु[8] प्रत्यग्रहैष्मेति । यदन्येन विधिना दक्षिणा दीयेरन् तत्रापि यथार्थमेव प्रतिगृह्णीयुः । तूष्णीं भावेनैव वा प्रतिग्रहणमवगमयेयुः । केचित् परविहितेन विधिना प्रतिग्रहणमिच्छन्ति, न तु तदस्माभिर्मृष्यते ।

**दक्षिणासु नीय...नमसदिति** । दक्षिणासु दक्षिणापथेन नीयमानासु उत्करे तिष्ठन् अनिरुक्तां सुब्रह्मण्यां सुब्रह्मण्यस्त्रिराह्वयति । स्तुत्यर्थो वाक्यशेषस्तस्यायमर्थः— यत् प्रायणमुपक्रमणं सुब्रह्मण्यानां तदेवोदयनं समापनं स्यादिति, एवमर्थमनिरुक्तामेवात्राह्वयतीति ।

स्वयं कर्तृकता सत्रे दानं तत्रास्ति नर्त्विजाम् ।
ददामि निष्क्रीणामेति मन्त्रे प्रासर्पके दिदा ??

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ माध्यन्दिने पवमानदक्षिणाविधिः सप्तदशः खण्डः

१ को. नायाश्च २ को. ०तैव न्याय० ३ को. ०न्यद्रूपप्र० ४ को. गानामा
५ को. हि रुध्येत ६ को. ०भिप्रेतया ७ को. नीयत ८ को, होतृ

## अथ अष्टादशः खण्डः

शस्ते मरुत्वतीये नाराशंसान् भक्षयन्ति । भक्षितेषु नाराशंसेषु पूर्वया द्वारा सदसोऽधि निष्क्रम्यापरया द्वाराग्नीध्रं प्रपद्याग्नीध्रे पृष्ठाहुती जुहोति । रथंतरं पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । इमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहेति । तूष्णीमुत्तराम् । बृहदिति वा । यत् पृष्ठं स्यात्तदादिशेत् । रथन्तरस्य स्तोत्रमाहरति । तत्प्रतिगृह्य पृथिवीमभिमृशति, नमो मात्रे पृथिव्यै रथंतर मामा हिंसीरिति । अथ महिम्नः संभरति यस्ते अग्नौ महिमा यस्ते अप्सु रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथंतर द्रविणस्वन्न एधीति । अथ वामदेव्यं पुरस्ताच्छान्तिमभिव्याहरति प्रजापतिरसि वामदेव्यं ब्रह्मणः शरणं तन्मा पाहीति । अथैता अमृता व्याहृतीरभिव्याहरति भूर्भुवः स्वः । क इदमुद्गास्यति स इदमुद्गास्यतीत्येतदुक्त्वाभ्यानिति । यदि बार्हतं स्तोत्रं स्याद् बृहतः स्तोत्रं प्रतिगृह्य ब्रूयाद् दिवं पितरमुपश्रये बृहन् मा मा हिंसीरिति । समानं परम् । स रथन्तरेण स्तुते बृहता वा । रथन्तरे स्तुते हो इत्युक्त्वादिमाददीत । बृहति प्रस्तुत आ इति । रथन्तरे प्रस्तूयमाने संमीलयेत् । स्वर्दृशं प्रति विपश्येद् । यावत् स्तोभेत् तावत् पृथिव्यां हस्तौ स्याताम् । देवरथस्यानपव्याथाय । वामदेव्यस्य स्तोत्रमाहरति । तत्प्रतिगृह्यैता व्याहृतीरभिव्याहरति गौश्चाश्वश्चाजाश्चाविश्च व्रीहिश्च यवश्चापो वायुरापो वायुरिति । स वामदेव्येन मध्यमया वाचानेजत् । आप्रतिहारादनवानं गायेत् । प्रतिहार एव प्रतिह्रियमाणे वागित्युद्गाता ब्रूयात् । अथ नौधसेनाथ कालेयेनेति । सन्तिष्ठते माध्यन्दिनं सवनम् ॥ १८ ॥

शस्ते...भक्षयन्ति । अस्ति मरुत्वतीयं नाम शस्त्रं, तस्मिन्[1] शस्ते[1] नाराशंसान् भक्षयन्ति । 'द्विः पूर्वयोः' इति वचनादाप्याय्य सादयन्ति । अस्मिन्नवसरे 'वैष्टुतं वास आहर[2]' इति संप्रैषस्य वचन प्रातस्सवनगतमप्राप्तमपि[3] पूर्वस्मिन्नेव वाससि[4] विष्टुत्युपधाने शक्ये नोपादानस्यान्याय्यत्वाद्ददतो निवर्तते । न ह्यस्ति वस्त्रलाभादन्य[द]स्य प्रयोजनम् ।

भक्षितेषु...स्वाहेति । भक्षितेषु नाराशंसेषु उद्गाता दक्षिणेन होतुर्धिष्ण्यं गत्वा सदसोऽधि पूर्वया द्वारा आग्नीध्रगृहं प्रपद्याग्नीध्रेऽग्नौ वक्ष्यमाणे प्रष्ठाहुती[5] जुहोति । सदस इति योऽर्थः स एव सदसोऽधीति । अधिनिष्क्रम्येति व्याख्येयम् । पृष्ठाहुती अनर्थकम् । नानर्थकम् । ब्रह्मसाम-अग्निष्टोमसाम-वाजपेयसाम-

---

१ को. तस्मि'''ब्दे  २ को. आविरत  ३ को. ०नतमप्रा  ४ का. वाससी  ५ को. पृष्ठाहुति

सन्धिषामत्वापत्तौ बृहद्रथन्तरयोरेतदाहुत्यभावार्थत्वात् पृष्ठाहुत्योः प्रयोजकं पृष्ठमेव, न बृहद्रथन्तरे इत्यभिप्रायः ।

**तूष्णीमुत्तराम्** । उत्तरामाहुतिं तूष्णीं जुहोतीत्यर्थः । ननु पृष्ठाहुती इति द्विवचनादेवोत्तरस्या आहुत्याः सद्भावसिद्धेः मन्त्रस्य च तस्यामप्रसक्तस्य चानिवृत्त्यर्थत्वादिदं वाक्यमनर्थकम् । नानर्थकम् । पूर्वस्यैव मन्त्रस्योत्तरस्यामपि प्रसक्तस्य निवृत्त्यर्थत्वात् । असति ह्यस्मिन् वाक्ये आहुतिद्वयेन मन्त्रः सम्बध्यते ।

ननु होमस्येष्टं रूपं यदुत कस्यचिद्द्रव्यस्य काञ्चिद्देवतामुद्दिश्याग्नौ प्रक्षेपः । अत्र पुनर्देवता न कीर्त्यते । नचास्ति मन्त्रः येनासाववगम्येत । तस्मादयमहोमः । सत्यमेतत् । न विना देवताया होमः संभवति । किन्तु होमविधानान्यथानुपपत्त्या एवात्र काचिद्देवता कल्पनीया । तत्राभिमुख्यत्वात् प्रजापतेरेव नियमनं न्याय्यम् । तस्मादन्यत्रापि विधावीदृशे प्रजापतिदेवतात्वेन यातव्या । परवचनमप्येतदर्थमुपोद्बलयति—प्रजापतिं मनसा ध्यायेत् तूष्णीं होमेषु सर्वत्र इति ।

**बृहदिति वा** । बृहत्पिबतु सोम्यमयीत्येव वा पूर्वाहुतिर्होतव्या, वक्ष्यति सरथन्तरं बृहता वा इति । रथन्तरे पृष्ठे सति पृष्ठाहुतिमन्त्रः पूर्वविहितः, बृहति त्वयमुच्यते । अथ का[1] हि[1] व्यवस्था युक्ता, नचैवं मन्तव्यम् । रथन्तर एवायं मन्त्रो बृहदर्थमूह्यत इति । अस्त्यवायं मन्त्रो बृहदर्थमूह्यत इति । अस्त्येवायं मन्त्रो भेदेन बृहदर्थः । तस्य तु पूर्वस्मान्मन्त्रात् भेदमात्रं ग्रन्थलाघवाय कीर्त्यते । नहि बृहतो रथन्तरं प्रकृतिः, यतोऽयमूह इत्युच्यते ।

**यत् पृष्ठं स्यात् तदादिशेत्** । बृहत्यनेनैव सिद्धत्वात् बृहदिति वेति पूर्वं वाक्यमनर्थकम् । नानर्थकम् । अन्यत्र बहुविषयेण वचनेन रथन्तरशब्दवतो मन्त्रस्य बृहत्यप्रापणार्थत्वात् । तेन किं सिद्ध्यति, इदं सिध्यति—समानं परमिति । बहु[2] ह्यनेन[2] वचनेन महिमसंगरणमन्त्रोऽपि बृहति प्रसक्तो रथन्तरशब्दवत्त्वान्निवर्तते ।

ननु पृष्ठप्रयुक्तत्वादेवायं मन्त्रो वैरूपादिष्वपि गच्छति, तत्र वैरूपाद्यादेशस्यार्थसिद्धत्वादिदं वाक्यमनर्थकम् । नानर्थकम् । पृष्ठाङ्गेषु धर्मेषु यस्य वचनं तस्यैव वैरूपादिषु गमनं नान्यस्येति ज्ञापनार्थत्वात् । तस्माद् वक्ष्यमाणा बृहद्रथन्तरधर्माः वैरूपादिषु न प्रवर्तेरन् ।

ननु महिमसंगरणादि धर्मचतुष्टयं दृश्यते महाव्रते । कामं दृश्यताम्, न तदन्यत्रैषां प्रवृत्तौ कारणं भवति ।

**रथन्तरस्य स्तोत्रमाहरति** । हुत्वा पृष्ठाहुतिं सव्यमावृत्य निष्क्रमणवर्त्मनैव सदः प्रपद्यास्तावाभजेते । ततो रथन्तरस्य स्तोत्रमध्वर्यु राहरति । तत्प्रतिगृह्य पृथिवीमभिमृशति । तत् स्तोत्रं प्रतिगृह्यानेन यजुषा पृथिवीमभिमृशति ।

**अथ...एधीति** । अथ रथन्तरस्य महिम्नो ज्वलनजलरथाशनिपवनेषु संकीर्णाननेन यजुषा संभरति । संभरामि (इति) अभिसंधाय मन्त्रवचनं संभरणम् । अथ...पाहीति । अथेमं मन्त्रं वामदेव्यं पुरस्ताच्छान्तिमभिव्याहरति । पुरस्ताच्छान्तिर्वामदेव्यमिति मन्त्रस्यैव[3] नामधेयम्[3] । अथवा वामदेव्यमित्येव मन्त्रस्य नाम । पुरस्ताच्छान्तिर्भूत्वा वामदेव्यमभिव्याहरति । अभ्यननं निवक्ष्यते तच्चाथाभ्यानिति प्राणो वै शान्तिः इति श्रुतिवचनात् शान्तिर्भवति । तदपेक्षयेदं वामदेव्यं यज्वपुरस्ताच्छान्तिर्भवति ।

---

१ को. कोहि २ को. बहव्ययेन ३ को. मन्त्रस्यै नामधी

**अथैता अमृता...इदमुद्गास्यतीति ।** अथैताः[1] पञ्चामृतव्याहृतीरभिव्याहरति । आद्यास्तिस्रः पदव्याहृतयः उत्तरे वाक्यव्याहृती[2] । **एतदुक्त्वाभ्यनिति ।** एतत् पृथिव्यभिमर्शनमन्त्राद्यमृतव्याहृत्यन्तं सर्वमुक्त्वा स्तोत्रमभ्यनिति । अनवानमेतद्विधिचतुष्टयमनुष्ठाय[3] तदन्ते स्तोत्रमभ्यस्यात् इत्यर्थः । अथवा श्वासवायुः स्तोत्रे निपतति तथा अभ्यनितव्यम् ।

**यदि...हिंसीरिति ।** बृहत्यृक्षु सोमो यदि स्यात्, बृहतः स्तोत्रं प्रतिगृह्येमं यजुर्भवेत् ।

**समानं परम् ।** 'स्तोत्रप्रग्रहणसम्बन्धाद्विधेः परं धर्मजातरथन्तरस्य बृहतश्च समानवामदेव्यादिव्यार्भव्याहरणादि धर्मत्रयम्', अतो वचनात् बृहति प्रवर्तते नतु महिमानः संभार्याः । पूर्वोक्तमप्यकारणं परवचनं ह्येकं कारणं रथन्तर एव यस्ते गोषु महिमेति । मीमांसकैश्चैवम[वि]रोधो भवति, येषामयं राद्धान्तः, नोऽपि प्रकृताविति । किं पुनरिमे पृथिव्यभिमर्शनादयो धर्मा ब्रह्मधारादिभावेऽपि बृहद्रथन्तरयोरिष्यन्ते, अत्र ब्रूमः—बृहतस्तावदित्थंभूताचार्येणैवेमे निवर्तिताः, एवं हीत्यनेनोक्तम् बृहद्धर्मोपक्रमे यदि बृहतः सोमः स्यात् इति । नच बृहतो ब्रह्मसामादिभावेन बार्हतः सोमो भवति, तस्माद् बृहति तावत् पृष्ठेन प्रसङ्गो धर्माणां, तत्तुल्यन्यायत्वाच्च रथन्तरधर्माणामपि सन्धावप्रसङ्गः सिध्यति । अथवा । श्रुतित एवायमर्थः सामद्वयेऽपि सिध्यति । एवं हि धर्माणां सन्निधौ श्रूयते—यदि राथन्तरः सोमः स्यात्, यदि बार्हतः सोमः स्यादिति ।

न पृष्ठमेषां धर्माणां हेतुः सोमश्च केवलम् ।
संयुक्तमुभयं हेतुराहुत्योः पृष्ठमेव तु ।।

यदा ते बृहद्रथन्तरयोर्वैशेषिका धर्माः, एभ्यः पश्चात् सामान्यधर्माणामावर्तिजपादीनां प्रयोगः ।

**स रथन्तरेण स्तुते बृहता वा ।** उद्गाता रथन्तरेण वा बृहता वा उपगायति । ननु बहुभिः स्तूयमानत्वात् ते स्तुवत इति प्रयोक्तुं युक्तम् । सत्यमेतत् । उपगातृप्राधान्यावगमस्त्वेकवचनप्रयोगः । एवमपि वचनवैरूप्यकरणे हेतुर्वक्तव्यम् । यदिदं पृष्ठयज्ञायज्ञीयानामेकवचने स्तुतिर्निधीयते । बहुवचनान्येषामन्यत्र हेतुर्यत् पूर्वोक्ते स्तोत्रपञ्चके नास्ति गायत्रम्, अस्ति चान्येषु । श्रुतिविहितगायत्रप्रतिहारपरिग्रहार्थो बहुवचनप्रयोग इत्यर्थः । किं पुनरयं पृष्ठभावे साम्नोस्तुल्यविकल्पः, कः सन्देहः । सत्यस्मिन् वचने अथ रथन्तरं वा बृहद्वा पृष्ठमिति । ननु प्राकृते समाम्नाये बृहत्या एतयो ऋचः श्यैतं न दृश्यते[4], रथन्तरनौधसे तु सार्धं————मृश्यते । तत्र तुल्यविकल्पाश्रयणं न युज्यते । अत्र वदामः—इत्थं गृह्णन्तो वयमिमम् आम्नायमनुवर्तेमहि । प्रथमसोमस्य रथन्तरमेव पृष्ठं कार्यमिति ।

**रथन्तरे प्रस्तुते हो इत्युक्त्वादिमाददीत ।** रथन्तरे प्रस्तुते हो इत्युक्त्वा तत उद्गीथादिमाददीत[5] । प्रस्तुत इत्यनर्थकम् । नानर्थकम् । प्रस्तावान्तहोवचनयोः सन्धानार्थत्वात् । इतरथा हि प्रस्तावकालान्तर्भाविनैव होशब्दमुक्त्वा उद्गीथादिरेव प्रस्तावेन सन्धीयेत, तदनेन निवर्त्यते । किं पुनरिदमाद्यायामेव स्तोत्रीयायां कार्यमाहोस्वित् सर्वासु, सर्वास्विति ब्रूमः । रथन्तरे प्रस्तुत इदं विधीयते । बहुकृत्वो रथन्तरं प्रस्तूयते । तस्मादयं विधिः प्रतिस्तोत्रं कार्यः[6] । किञ्च अङ्गमेतद्[7] रथन्तरस्य यद्धोवचनम्, रथन्तरं तावदत्रावर्तते । आवर्तमानं च तत् स्वाङ्गं होशब्दमप्यावर्तयति । भुक्तिरिव वादनिर्णेजनादीनि ।

नन्वस्य स्तोत्राङ्गता युक्ता, नेति ब्रूमः । रथन्तरमिति हि साम्नो नाम न स्तोत्रस्य । कामं वा कयाचित् कल्पनया स्तोत्रेऽप्यस्मिन् रथन्तरशब्दो वर्ततां, तथापि तु भवदभिप्रेता होशब्दानावृत्तिर्न सिध्यति ।

---

१ को. अथैतां  २ को. ०व्याहृति  ३ को. मनुषाय  ४ को. दृते
५ को. उपगीथा०  ६ को. कार्यम्  ७ को. अंगमेरथद्

स्तोत्रमपि हीदं बहुकृत्वः प्रस्तूयते । अथवा । न सकृदपि स्तोत्रं प्रस्तूयते, हिसमानावयवा हि प्रस्तावादयः, न स्तोत्रमेषां विशेषणत्वेनावकल्प्यते । यद्यपि कथञ्चिदवकल्प्येत तथापि हो इति ब्रूयादित्येतावतार्थसिद्धौ हो इत्युक्त्वादिमाददीतेत्यादिसम्बन्धेन विधानादादेरिदमङ्गं भवति तदावृत्तेतैवम् ।

ननु चास्याङ्गाङ्गिनः[1] स्तोत्रस्य किमतः, इदमतो भवति--तैरपि होशब्देनैवावर्तितव्यमिति[2] । सूत्रं ब्रूमः । पृष्ठाहुत्यादयः समाङ्गत्वेऽपि नावर्तन्ते । सकृदनुष्ठितैरेव प्रस्तोत्रीयमुपनीय तेन एते प्रथमस्तोत्रीयान्तभावेन[3] प्रयुज्यन्ते । यतस्तस्यादावेवोपकुर्युः[4]। होशब्दवचनन्तु प्रस्तुते साम्नि क्रियमाणं[5] स्वाश्रयस्यैव[6] स्तोत्रीयां विशेषणस्योपकर्तुं शक्तं[7], नान्यत्तस्मादिदमावर्तते[8] । न पृष्ठाहुत्यादयः दद्यात् । कनकविशेषणं गोशतमिति श्रुत्वा कनकशृङ्गता सर्वगवां क्रियते, ततः स्तोत्राङ्गत्वेऽपि निश्चितास्यावृत्तिः ।

बृहति प्रस्तुत आ इति । इयमधस्तनाद्भिन्नव्याख्या । रथन्तरे...संमीलयेत् । रथन्तरे प्रस्तूयमाने चक्षुषी सम्मीलयेत् । अत्रापि पूर्वस्येवावृत्तिमेव निश्चिनुमहे । किं पुनरिदं प्रस्तावाङ्गं, नेति ब्रूमः । यदि ह्यस्य प्रस्तावाङ्गतैवाभविष्यद्[9] रथन्तरं प्रस्तुवन् सम्मीलयेदित्यवक्ष्यत । प्रस्तावाङ्गं हि प्रस्तोत्रैव कर्तव्यम् । यतस्त्वेवमनुक्तं तस्मादुद्गात्रैव कर्तव्यम् । स्वर्दृशं प्रति विपश्येत् । अयमक्ष्णोः प्रस्तावकाले सम्मीलितयोरुन्मीलनकालः कथ्यते । स्वर्दृशमिति प्रतिपश्येत् । विवृणुयादुन्मीलयेदित्यर्थः यत्र[10] पुनः स्वर्दृशमिति शब्दोऽयं न श्रूयते तत्र कथम्, तत्रापि यानि स्वर्दृशमित्यनेन तुल्यस्थानान्युद्गीथान्त्याक्षरणचतुष्टयानि तानि वक्तुमुपक्रममाणो विधिमेतमनुतिष्ठेत्[11]। नहि स्वर्दृशमिति शब्देनात्र प्रयोजनम्, केन तर्हि; तदुपलक्षितेन कालेन । स च कालः तदभावेऽपि विद्यत एव । यथा—

पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् । मनु०

इति । विधिमेतमनुतिष्ठन् हि मेघादिच्छन्नमर्कमदृष्ट्वापि अर्कदर्शनलक्षिते काले उपरमति, तद्वत् अत्रापि । यावद्यावत्कालं स्तोभेत् तावत्कालमुद्गातुर्हस्तौ (पृथिव्यां[12]) स्याताम् । अर्थवादो वाक्यशेषः । तस्यायमर्थः रथन्तरं देवरथं तमिदानीमुद्गातारूढः क्षिप्रं गायेदिति वचनमनुवर्तमानमुद्गातारमाशु धावन्नपविध्येदपि तत्परिजिहीर्षया पृथिवीं हस्ताभ्यामालम्बते । तदुच्यते—देवरथस्यानपव्याथायेति[13]। षष्ठी कर्तरि । देवरथेनोद्गातुरनपव्याथायेत्यर्थः । अस्वयोनिरथन्तरं दशम एवाग्निः स्तूयते । तत्राग्निष्टुदादौ च किमयं विधि न गच्छति, अत्र ब्रूमः—यद्ययं विधिः स्तोभाश्रयोऽभविष्यत् नागमिष्यदग्निष्टुदादौ । रथन्तरनिमित्त एव त्वयं विधिः, न स्तोभनिमित्तः । एवं हि श्रूयते—एष वाव देवरथो यद्रथन्तरं, रथन्तरे प्रस्तुते पृथिवीं हस्ताभ्यां गच्छेद्देवरथस्यानपव्याथाय[14] इति । तस्मादग्निष्टुदादावपि रथन्तरं गायन् योऽस्य विधेः प्रकृतौ स्तोभोपलक्षितः कालस्तस्मिन् काले पृथिवीं हस्ताभ्यामालम्बेत । एषामपि धर्माणामधिकारे यदि राथन्तरः सोमस्यादिबार्हतः सोमस्यादिष्टिश्रुतौ दृश्यमानत्वाद ब्रह्मसामादिभावे बृहद्रथन्तरयोरेषामप्रवृत्तिः । अस्मिन्नर्थे वचनमेव ताण्डिसूत्रे विद्यते—तस्यापृष्ठस्य ततो निवृत्तेरन् धर्माः इति । पृष्ठेन स्तुते माहेन्द्रं नाम शस्त्रं शस्यते, अथ हूयते माहेन्द्रो ग्रहः, तमनुवर्तन्ते नाराशंसाः । तद्भक्षणानन्तरं वर्तमानस्यावसरम् ।

---

१ को. ०ङ्गनिनः
२ को. होशब्देन वा वर्ति०
३ को. ०न्तभानेन
४ को. यस्तस्यादालेपोपकुर्युः
५ को. क्रियमाणा
६ को. स्वाश्रयं स्वेव
७ को. शतं
८ को. नान्यस्त०
९ को. ०ङ्गतौवन्तष्य
१० को, अत्र
११ को. ०मनुतिष्ठन्
१२ को. नास्ति पाठः, त्रुटितोऽवभाति
१३ को. ०पविध्यायेति
१४ को. ०न्छेद्देवस्थस्या

**वाम···व्याहरति** । तत्प्रतिगृह्य एताः षट् व्याहृतीरभिव्याहरति । इति करणाध्याहारेणेदं वाक्यं व्याख्येयम् । आपो वायुरितीदञ्च यजुरभिव्याहरति । अथवा । एकमेवेदं वाक्यम् । तत्प्रतिगृह्य—वायुरिति । अस्मिन् व्याख्याने आपो वायुरापो वायुरित्यन्ताः सर्वा एवैता व्याहृतयः । यद्यपि षण्णामेव व्याहृतिसंज्ञायाः श्रुतावुपादानं व्याहृत्येति चोदितत्वादापो वायुरापो वायुरित्यस्यापि युक्तमेव व्याहृतित्वम् । एवं हि श्रूयते—यदि पुष्टिकामः स्यादापो वायुरापो वायुरिति पुरस्ताद्व्याहृत्य[1] वामदेव्येन स्तुवीत इति ।

ननु काम्यस्य[2] नित्यवद् विधानमनुपपन्नम्, नायमत्र दोषः । संपन्नायाः पुष्टेः सर्वपुरुषाभीष्टत्वाद् व्याहृत्यनन्तरं प्रेत्येतिवानिति प्रतिपद्येत ।

**स वामदे···वाचानेजत्** । स उद्गाता मध्यमया वाचा अनेजत् अकम्पयमानो वामदेव्येन स्तुते । मध्यमया वाचेति सवनस्वरापवादः । **आ प्रति···गायेत्** । आप्रतिहारात् वामदेव्यमनवानं गायेत् । उद्गीथमध्ये नारमेदित्यर्थः । **प्रति···ब्रूयात्** । प्रतिहारे प्रतिह्रियमाणे[3] एव वागिति[4] ब्रूयादुद्गाता ।

नन्वाम्नायतो ऽपि वाक् शब्दो वामदेव्येऽपि सिध्यति । सत्यं सिध्यति, ऊर्ध्वं तु प्रतिहारादाम्नायतः प्राप्तः । प्रतिहारतुल्यकाले तामनेन विधिना नीयेते । इदं हि वचनं व्यक्तिद्वयं नेत्युद्गाता ब्रूयात्, तत्प्रतिहारे प्रतिह्रियमाणे एवेति ।

नन्वेवमाचार्यस्याम्नायविरुद्धवादित्वं दोषः प्रसजति, अतो ब्रूमः । श्रुतावपि विद्यते—प्रतिहार एव प्रतिह्रियमाणे वागित्युद्गाता[5] ब्रूयात् इति । तस्मादित्थं मन्तव्यं, सहैव प्रतिहारेणायमाम्नातो वाक्छन्दः सहोच्चारणस्य द्वयोरभावात् प्रतिहारादूर्ध्वंमाम्नायत इति । उद्गातृग्रहणमनर्थकम् । नानर्थकम् । अनेजनमध्यमस्वरयोरेकवचनसंयोगात् उद्गातुरेव प्राप्तयोः प्रस्तोतृप्रतिहर्त्रोरपि प्रापणार्थत्वात् । अथवा । श्रुतिवाक्यस्यैवात्र प्रक्षेपादपरिहार्यमुद्गातृग्रहणम् । किं पुनरिमे ऽथर्वास्थानच्युतमपि वामदेव्यमुपसर्पन्ति, अत्र-ब्रूमः—बृहद्रथन्तरयोः स्थानच्युतौ धर्माभावः प्रत्यपादि, इदं तत्र कारणम्, रथन्तरः सोमो बार्हतः सोम इति धर्मविधिसन्निधौ दृश्यत इति । तेनैव न्यायेन वामदेव्यस्यापि स्थानाच्च्युतस्य धर्माभावो निश्चीयते । न्यायो हि कस्मिंश्चिदुपलब्धस्तत्सदृशे ऽन्यस्मिन्नपि भवति । वाक्शब्दस्त्वाम्नायमूलत्वाद्यत्राम्नायते तत्रैवावतिष्ठते । स्थानादपायमनपायं वा नापेक्षते । तस्मादयमग्निष्टुते वामदेव्ये न प्रवर्तेत । त्रैरात्रके तु प्रवर्तेतैव । अत्र केचिद् वदन्ति— साम्नो धर्माभावस्य स्थानच्युतिर्योनिच्युतिश्च द्वयं संयुक्तं भवति । ततश्च यथाच्युतमपि योनेः स्वस्थानवर्तिसामधर्मान् लभते तथैव च्युतमपि स्थानात् स्वयोन्यवस्थितं लभेतैव धर्मानिति । तथा सति बृहति ब्रह्मसाम्नि वामदेव्ये च त्रैरात्रके प्रवर्तेरन्नेव धर्माः ।

**अथ नौधसेन** । अथ नौधसेन स्तुते । रथन्तरपृष्ठाभिप्रायमेतद् वचनम् । बृहत्पृष्ठे तु श्यैतेन ब्रह्मसाम्ना भवितव्यम् । एवं हि श्रुतिराह—रथन्तरेण स्तुवन्तीदं रथन्तरमथ वामदेव्येन, इद वान्तरिक्षं वामदेव्यमथ नौधसेन[6] स्तुते, अदो वै नौधससमनन्तर्हितानेवैत ऊर्ध्वान् लोकान् जयति इति । यच्चादो वचनम् अथ नौधसं वा श्यैतं वा ब्रह्मसाम इति तदप्युक्तवचनानुरोधेन पृष्ठव्यवस्थायै साम्नो विकल्प इति मन्तव्यम् । कस्मादयं राद्धान्तः

---

१ को. व्यावृत्य २ को. कन्त्यस्य ३ को. ०वनिहि
४ को. वानिति ५ को. वानि० ६ को. नौधसेना

रथन्तरे पृष्ठे सति नौधसं ब्रह्म साम, बृहति श्यैतमिति। किमर्थं पुनराचार्येण श्यैतेनेवेत्यत्र नोक्तम्, यत् पूर्व ऋक्समाम्नायदर्शनवशेनोपलब्धं प्रथमसोमस्य रथन्तरमेव पृष्ठमिति तस्यादाढ्यार्थम्। **अथ कालेयेनेति। सन्तिष्ठते[१] माध्यन्दिनं सवनम्[१]**। दिनस्य[२] मध्यमो भागो मध्यन्दिनं तस्मिन् भवं माध्यन्दिनं सवनमित्थं संतिष्ठते।

श्यैतस्य ब्राह्मणात्प्राप्तिः शङ्कितामनायवीक्षणात्।
गानीकृत्य तु गीतत्वात् सिद्धाग्निष्टोमसामता ॥ १८ ॥

इति [महोपाध्यायश्रीभवत्रातेन विरचितायां] जैमिनीयश्रौतसूत्रवृत्तौ भक्षणाप्यायनविधिः
अष्टादशः खण्डः

---

१ को. वनं	२ को. मीनस्य

# अथ एकोनविंशः खण्डः

अथ तृतीयसवने प्रपदनस्यावृता प्रपद्य वेद्याक्रमणेन वेदिमाक्रम्यादित्यमुपतिष्ठतेऽध्वनामध्वपत इत्येतेनैव । अथैन्द्रीमावृतमन्वावर्त इति दक्षिणं बाहुमनु पर्यावृत्योत्तरेणाग्नीध्रं च सदश्च परीत्य पश्चात्सदस ईक्षमाणः समस्तान् धिष्ण्यानुपतिष्ठतेऽग्नयः सगरा इत्येतेनैव । अथ सदः प्रपद्येतयैवावृतोपविश्य[1] दक्षिणेन होतुर्धिष्ण्यं पूर्वया द्वारा सदसोऽधि निष्क्रम्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरस्मिन् हविर्धाने पूतभृतं पवयति वसवस्त्वा पुनन्त्वित्येतेनैव । पूर्व एव पूतभृदपर आधवनीयः । पूतभृतो मुखे पवित्रं वितनोति पवित्रं ते विततं ब्रह्मणस्पत इत्येतेनैव । तत्र यथादेशं शुक्रपवितारः कुर्वन्ति । तयैवावृता[2] संप्रसर्प्य[3] सदसि पवमानेन स्तुवते । साम्ने साम्ने हिं कुर्वन्ति । अनवानमुष्णिक्ककुभौ गायत्याप्रतिहारात् । स्तुते पशुना चरन्ति । अथ पुरोडाशैरथ राज्ञा । राजनि भक्षिते सीदन्ति नाराशंसाः । सन्नेषु नाराशंसेषु न्यावृत्पुरोडाशशकलान्युपास्यन्त्यत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति । अत्र पितामहाः । अत्र प्रपितामहा इति ॥ १९ ॥

अथ तृतीयसवने । अनन्तरं तृतीयसवने क्रियमाणं वक्ष्यामः । प्रपदन...इत्येतेनैव । प्रपदनस्यावृता यज्ञोपवीत्याचान्तोध आसीत । वेदिं प्रपद्य वेद्याक्रमणेन मृदाशीथिरित्यनेन वेदिमाक्रम्य अध्वनामध्वपते इत्येतेनैव यजुषा आदित्यमुपतिष्ठते[4] । अथैन्द्री...इत्येतेनैव । अथानेन यजुषा दक्षिणं बाहुमनुपर्यावृत्य आग्नीध्रसदश्चोत्तरेण परीत्य पश्चात् सदसस्तिष्ठन् समस्तान् धिष्ण्यान् आहवनीयादीनि[5] दक्षिणवेद्यन्तपर्यन्तानि वीक्षमाणो अग्नयः सगराः इत्येतेनैव यजुषोपतिष्ठते । अथ सदः...न्त्वित्येतेनैव । अथ सदः प्रपद्य दक्षिणेनौदुम्बरीं परीत्य तयैव प्रातःसवनोक्तयैवावृतास्ताव उपविश्य होतुर्धिष्ण्यं दक्षिणेन गत्वा सदसोऽधिपूर्वया द्वारा निष्क्रम्याध्वर्युपथेन गत्वा पूर्वया द्वारा हविर्धानं[6] गृहं प्रपद्योत्तरस्मिन् हविर्धानशकटे सन्नं पूतभृतं नाम मृन्मयं महत्पात्रं वसवस्त्वा पुनन्तु इत्येतेनैव मन्त्रत्रयेण दशापवित्रेण पवयति । शकटोपरि सन्नस्य पूतभृत उपरिष्टेन पवनासौकर्यादुपवेशनाविधानाच्च तिष्ठतैव पावयितव्यमेतेनैव पवित्रेणेति वा व्याख्यातव्यम् ।

**पूर्व एव पूतभृत्** । द्वयोरङ्गणयोरुत्तरहविर्धानावपूर्वयोरेव[7] पूतभृद्भवति । एवकारो गविरेव रथन्तरम्, इयमेव प्राची दिक् प्रथममहः इत्यादिष्विव[8] वाक्यालङ्कारार्थः ।

**अपर आधवनीयः** । तयोरेवापर आधवनीयसंज्ञो भवति । इदं प्रसङ्गेन ज्ञानार्थमुक्तम् ।

---

१ 'प्रपद्यं तयैवा' इति मुद्रितपुस्तके पाठः
२ 'एतयैवा' इति मुद्रितपुस्तके पाठः
३ 'संप्रसृप्येति' मुद्रितपुस्तके पाठः ।
४ को. तयेममुपतिष्ठते
५ को. आहवनीयादीनान्
६ को. हविर्धानि
७ को. ०नावन्हितेयो पूर्वयो०
८ को. ०दिप्वपि

**पूतभृतः...इत्येतेनैव ।** पूतभृतो मुखे 'पवित्रन्त' इत्येतेनैव तृचेन पवित्रं वितनोति । **तत्र यथादेशं... कुर्वन्ति ।** तत्र यथावचनं शुक्रस्य पवितारोऽध्वर्युप्रभृतयश्च कुर्वन्ति । राजानयनादीनामात्माभिमर्शनान्तानां प्रातस्सवनिकानां विधीनां सर्वेषामपि परिग्रहो यथादेशमिति क्रियते ।

**तयैवावृता . स्तुवते ।** तथा कृते तयैव प्रातस्सवनोक्तयैवावृता संप्रसर्प्य सदसि पवमानेनार्भवेन स्तुवते । **साम्ने साम्ने हिंकुर्वन्ति । अनवानमुष्णिक्ककुभौ गायत्याप्रतिहारात् ।** उष्णिक्ककुभौ[1] तदाश्रये सामनी वक्ष्येते । उष्णिक्ककुभौ अनवानमाप्रतिहाराद् गायेत् । स—पौष्कले इत्यवचनं शंकुसुज्ञानादिष्वपि प्रापणार्थम् । **स्तुते पशुना चरन्ति ।** पवमानेन स्तुते पशुनाध्वर्यवश्चरन्ति । **अथ पुरोडाशैः ।** अथ सवनीयैः पुरोडाशैश्चरन्ति । **अथ राज्ञा । राजनि भक्षिते सीदन्ति नाराशंसाः ।** राजनि भक्षिते नाराशंसाः सीदन्ति ।

नन्वयमर्थः सकृत्तृतीयसवन इति पूर्वमेव व्यधायि । सत्यमेतत् । तत्सिद्धस्यैवायमनुवादः क्रियते, क्रमावगमनार्थमन्यविवक्षया च, तस्माददोषः ।

**सन्नेषु नारा...प्रपितामहा इति ।** अथ सदसो निष्क्रम्यापरया द्वारा हविर्धानं प्रपद्य तत्र सन्नेषु नाराशंसेषु[2] । नाराशंसेष्विति[3] सामीप्यलक्षणा सप्तमी ग्राह्या । यथा 'गंगायां नवोवटे भुज्यत' इति । ततो नाराशंसानां समीपे दक्षिणत उपास्येयुः । उपशब्देनैव वा सामीप्यं लक्ष्यते ।

अस्मिन्नन्येषु च पितृकर्मसु प्राचीनावीतिना भवितव्यम् । तस्य मन्वादिवचनसिद्धत्वात् अत्रावचनात् ।

योऽसौ वृणीतोत्सेकादौ प्राचीनावीतिताविधिः ।
न तस्य परिसंख्यार्थं सः स्मृतेरुपलक्षकः ।। १ ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ [ तृतीयसवनक्रियमाणविधिर्नाम[4] ] एकोनविंशः खण्डः

---

१ का. उष्णंककुभ्यां  २ को. त्यक्तः पाठः  ३ को. नाराशंसेष्वतिसा०  ४ को. नस्ति पाठः

# अथ विंशः खण्डः

शस्ते वैश्वदेवे नाराशंसान् भक्षयन्ति । भक्षितेष्वग्नीञ्छालाकानुपकल्पयते । सौम्येन चरन्ति । चरित्वैनमाहरन्ति । तमवेक्षते यन्मे मनो—यन्मे मनो यमं गतं यद्वा मे अपरागतम् राज्ञा सोमेन तद्वयं पुनरस्मासु दधमसि ।। मनसि मे चक्षुराधाश्चक्षुषि मे मनः, आयुष्मत्या ऋचो मा छेत्सि मा साम्नो भागधेयाद् वियोषमिति ।। तद्वापि छायां पर्यवेक्षेत आत्मनोऽप्रणाशाय । अथो सर्पिषोऽक्ष्णोरादधीत । चक्षुष आप्यायनाय । तदपि विज्ञानमसद् । य आत्मानं न परिपश्येदपेतासुः स स्यात् । तस्मात् सत्यादप्याज्यं भूय आनीय पर्यवात्मानं विदृक्षेत । सर्वस्यायुषोऽवरुद्ध्यै । अथो सौम्यस्योपहत्याक्ष्णोरादधीत—येन ह्याजिमजयन्नृचक्षा येनश्येनं शकुनं सुपर्णम् । यदाहुश्चक्षु रदितावनन्तं सोमो नृचक्षा मयि तद्दधात्विति । तमवेक्ष्य दक्षिणेनौदुम्बरीं पर्याहृत्य जघनार्धे सदसः सादयति । प्रजापतेर्भागोऽसीति । यज्ञायज्ञीयस्य स्तोत्रमाहरति । तेन प्रावृत उद्गायति । द्वितीयां रथंतरवर्णां करोति । निधनमनु पत्नीमवेक्षते वामी नाम संदृशि विश्वा वामानि धीमहीति । वृष्णस्ते वृष्ण्यावतो विश्वा रेतांसि धीमहीतीतरा प्रतिसमीक्षते । भक्षितेषु यज्ञायज्ञीयस्य सोमेष्वपरया द्वारा सदसोऽधि निष्क्रम्यापरया द्वाराग्नीध्रं प्रपद्याग्नीध्रे स्रुवाहुती जुहोति अपां पुष्पमस्योषधीनां रस इन्द्रस्य प्रियतमं हविः स्वाहेति । तूष्णीमुत्तराम् । इति तृतीयसवनम् ।। २० ।।

शस्ते...भक्षयन्ति । वैश्वदेवं नामास्ति शस्त्रं, तस्मिन् शस्ते नाराशंसान् भक्षयन्ति । भक्षितेषु...नुपकल्पयते । तेषु भक्षितेषु आग्नीध्रः[1] शालाकानामाग्नीनुपकल्पयते । शालाकाम् प्रज्वलय्य धिष्ण्याग्नीनामस्मिन् सवने विहरणम् । तदिदमुक्तं शालाकानुपकल्पयते इति । केचित्तस्मिन्नपि[2] सवने पवमानानन्तरमेव धिष्ण्यान् विहरन्ति । सौम्येन चरन्ति । चरित्वैनमाहरन्ति । सोमदेवत्येन चरुणाध्वर्यवोऽस्मिन् काले व्याप्रियन्ते च चरन्ति[3] । चरित्वैतं[4] चरुं सदस्याहरन्ति । तमवेक्षते...भागधेयाद्वियोषमिति । तं चरुम् आभ्यामृग्यजुर्भ्यामुद्गातावेक्षते[5] । तद्वापि.. ०नोऽप्रणाशाय । तस्मिंस्तु चरौ आत्मनश्छायामपि[6] पर्यवेक्षते । आत्मनोऽप्रणाशायेत्यर्थवादः । आत्मन इति वा छायाविशेषणमप्रणाशायेत्येतावानेवार्थवादः । तत्राप्यर्थवादात् मन इत्येव कल्प्यम् । चरुश्चायमासिक्तसम्बन्ध्यत्वादादर्श इव च्छायां दर्शयति । तदपि.. स स्यात् । तत्र चरोरवेक्षणे विज्ञानमप्येकं स्यात् । य आत्मानम् आत्मनश्छायां[7] चरावस्मिन्नवेक्षमाणो न परिपश्येत् सोऽचिरादपेतासुः स्यात् इति । तस्मात्...अवरुद्ध्यै । यदिदमुक्तं विज्ञानं तस्मात् सत्यात् कारणात् आज्यं भूयश्च

---

१ को. आग्नीध्रं    २ को. ०त्तिन्नपि    ३ को. चरिरन्ति    ४ को. चरित्वेतं
५ को. ०लक्षते    ६ को. आन्छायामपि    ७ को. अत्मानं छायां

चरावानीयापि परिदिदृक्षेतैव आत्मानम् । छायां द्रष्टुं प्रयतेतैवेत्यर्थः । दिदृक्षैव हि शक्या, दर्शनमत्र दैवाधीनम् । अर्थवादस्यायमर्थः, सर्वस्य स्वायुष्यं[1] परिग्रहायेति ।

**अथो सौम्यस्योप...तद्दधात्विति** । सौम्यस्येति षष्ठी पञ्चम्यर्थे । सौम्याच्चरोः किञ्चिदुपहृत्य तदनया ऋचा अक्ष्णोरादधीत । सव्येऽप्यक्षिणि मन्त्रो वक्तव्यः । यथा चेदमुद्गात्रा सौम्ये चरौ व्यापृतं तथैव प्रस्तोतृप्रतिहर्तारावपि व्याप्रियेयाताम् । उक्तं हि—पुरुषसंस्काराणामेकवचनविहितानामपि सर्वार्थत्वात् यच्च किञ्चिदक्षरगौरवमग्निसौम्यसम्बन्धे[2] ग्रन्थे तदस्य श्रौतत्वादेव मृष्यताम् ।

**तमवेक्ष्य...भोगोसीति** । तं चरुमवेक्ष्य दक्षिणेनौदुम्बरीं पर्याहृत्यापरभागे सदसोऽनेन यजुषा सादयति । अवेक्ष्येत्यनर्थकम् । नानर्थकम् । न्यायसिद्धस्य प्रस्तोतृप्रतिहर्त्रोरवेक्षणादेः सद्भावज्ञापनार्थत्वात् । एवं चेदवेक्ष्य सादयति, समानकर्तृकत्वेन श्रवणात् प्रस्तोतृप्रतिहर्त्रोरन्यतरेण चरोस्सादनं प्राप्नोति । अवेक्ष्येति णिजन्तादयं प्रत्ययः । तत्रायमर्थः—प्रस्तोतृप्रतिहर्तृभ्यामवेक्षणं कारयित्वा सादयत्युद्गाता इति ।

**यज्ञायज्ञीयस्य स्तोत्रमाहरति** । यथेतं प्रतिव्रज्योपविष्टे उद्गातरि यज्ञायज्ञीयस्य स्तोत्रमध्वर्युराहरति । **तेन प्रावृत उद्गायति** । तेन यज्ञायज्ञीयेन प्रावृत उद्गायेत् । द्वौ पक्षौ श्रुतौ यज्ञायज्ञीयाधिकारे, प्रावरणमप्रावरणं च, तयोरयमाचार्येणेष्टः पक्षः परिगृह्यते ।

ननु ऋतावेव पूर्वं प्रावरणपक्षमुक्त्वा तस्मिन् दोषमुद्भाव्य पश्चादप्रावरणपक्षो[3] व्यवधारितः, सत्यमेतत्, श्रुत्यवधारितानां तु केषांचिदनित्यत्वज्ञापनार्थमप्रावृत इति अत्रोच्यते । किमेतस्य ज्ञापने प्रयोजनम्, इदमुच्यते, दशमेऽह्नि ब्रह्मसाम्नः पञ्चदशत्वं श्रुतिरवधारयति, ब्रह्मसाम्न एव नवस्तोत्रया उपादायात्रोपदध्यादिति तस्य नित्यत्वं सिध्यति । इष्यते हि संवत्सरमुपगतस्य चतुर्दशमेवास्याह्नो ब्रह्मसाम तत् तस्मादिति चेत् कारणं कल्पवृत्तौ कथयिष्यामः ।

**द्वितीयां रथन्तरवर्णां करोति** । यज्ञायज्ञीयमेव तत् गायत्रमिव प्रस्तुयात् इत्यादिवचनानुसारेण स्वस्यामेव ऊहरहस्ये गीयते, यत्तत्र सप्तमं तामेतस्य रथन्तरवर्णेति नाम । रथन्तरवर्णामस्य स्तोत्रस्य **द्वितीयां करोति** ।

**निधनमनु...धीमहीति** । रथन्तरवर्णाया निधनमनु निधनं कृत्वानेन मन्त्रेणोत्तरतन्त्रासीनां पत्नीमवेक्षते[4] ।

ननु 'वामीनाम' इत्यादेः 'रेतांसि धीमहि' इत्यन्तस्य एकत्वं मध्येन[5] इति करणाभावादुक्तम्, तस्मादयं विधिः समन्त्रकं कर्तव्यः[6] । **उत्तरस्तूष्णीं[7] विपर्ययो वा** । अत्र ब्रूमः—यद्यपि मध्येन इति करणं 'वृष्णस्ते' इत्यादेः पत्नीकर्तृकप्रतिसमीक्षणाङ्गत्वमेव लिङ्गसंपत्तये ग्राह्यम् । किं च तदाहुरा वा एतत् पत्युद्गाता प्रजां दत्ते इत्यादि ब्राह्मणमत्र मन्त्रभेदमवगमयति । तस्मादिति करणाध्याहारेणेदं वाक्यं व्याख्येयम् । किं पुनरिदं रथन्तरवर्णयैव निधनं विशेष्यते न पुनर्यज्ञायज्ञीयेन, अत्र ब्रूमः—आनन्तर्यविहितत्वात् रथन्तरवर्णा या तयैव निधनं विशेष्यते । यदि यज्ञायज्ञीयेन निधनं विशेष्यते, प्रागपि रथन्तरवर्णायाः प्रथमस्तोत्रायाः निधने पत्नी समीक्षेत । तत्र पूर्ववाक्यविहितरथन्तरवर्णगानमङ्गीकृत्योत्तरवाक्यविहिते पत्नीसमीक्षणे क्रियमाणे विधान-

---

१ का. स्वायुषं २ को. ०मग्निं सौ० ३ का. पक्षौ ४ को. पद्भीमवेक्षते
५ को. मध्ये ६ को. कर्तव्यं ७ को. उत्तरतूष्णी

क्रमो बाध्येत। तस्मादपि रथन्तरवर्णयैव निधनस्य निश्चिनुमहे विशेषणम्। **वृष्णस्ते**[1]···**क्षते**। अनेन यजुषोद्गातारमितरा प्रतिसमीक्षते। इतरशब्दे[2] पूर्वस्य विधेः कर्मभावेन सदसि सन्निहितान्तस्यैव कर्तुरुद्गातरितरां पत्नीमत्रोपलक्षयति। पत्नीत्यवचनं श्रुत्यनुकरणार्थम्। पत्न्यशक्तौ यजमानो[3] मन्त्रं वदेत्।

**भक्षितेषु···जुहोति**। यज्ञायज्ञीयस्य सोमेषु भक्षितेषु सदसोऽधि अपरया द्वारा निष्क्रम्यापरयैव द्वारा आग्नीध्रगृहं प्रपद्य आग्नीध्रेऽग्नौ यक्ष्यमाणे स्रुवाहुती जुहोति। केचिदाग्नीध्रशालाया एकामेव द्वारं दक्षिणतः कुर्वन्ति।

नन्वत्र भक्ष्यमाणानां सर्वसोमानामपि यज्ञायज्ञीयसंबंधाविशेषे विशेषणानर्थक्यात् यज्ञायज्ञीयेत्यनर्थकम्। नानर्थकम्। प्रथमसोमे राजन्यस्य षोडशिनो निवारणार्थत्वात्। वक्ष्यते हि—षोडशिनमधिकृत्य तदेकं स्तोत्रं स्यात्। षोडशीयज्ञायज्ञीययोः सोमानां यज्ञायज्ञीयेनैव विशेषणमुभयसाम्नः सोमस्य रथन्तरेणेव, इन्द्रेणेव चैन्द्राग्नस्यानुपपन्नमेवमस्य यज्ञायज्ञीयग्रहणस्य राजन्ययज्ञे विरुद्धार्थवादित्वादन्यत्र भूतार्थवादित्वात् प्रसक्ते नैरर्थक्ये प्रथमसोमाद् राजन्यस्य षोडशिनमस्य सार्थकत्वाय निवर्तयामः।

केचिदिदं सोमभक्षणस्य साम्नां विशेषणं सामसंबंधिनामेव छन्दोगानां सोमभक्षणं ज्ञापयतीति कल्पयित्वा सुब्रह्मण्यं सोमभक्षणं निषेधयन्तीति।

किं पुनरग्निष्टोमे विकृतावेतत्काले एवैते आहुती, नेति ब्रूमः। सवनसमाप्तावेवैते आहुती होतव्ये इत्यपरया द्वारा निष्क्रमणविधानादवगम्यते। यत्र हि सवनं समाप्तं तत्र पृष्ठाहुत्यादौ पूर्वयैव द्वारा निष्क्रमणविधिर्दृष्टः। अवदत् कौशीतकिः—नासंस्थिते सवने अपरया द्वारा निसर्पति इति। तस्मादुत्तरास्वपि संस्थासु यदन्त्यं स्तोत्रं तस्य सोमेषु भक्षितेषु स्रुवाहुत्योः कालः।

किं पुनरत्र स्रुवेणाहुत्योर्विशेषणात् प्रवृतहोमादिषु जुह्वाहोमः, नैतदवकल्प्यते। यद्येवं तत्रैष्यत, अत्र स्रुवेणाहुतिरित्यवक्ष्यत। सिद्धेनैव तु स्रुवसम्बन्धेन अनयोराहुत्योः स्रुवाहुती इति संज्ञा याज्ञिकप्रसिद्धा। अस्ति च बहुसाधारणगुणावलम्बिन्यपि संज्ञा। यथा—पङ्कजम्, फाल्गुनः[4] मनोभवः[4] इति। अथवा स्रुवपरिमिते द्रव्ये स्रुवाशब्दोऽत्र वर्तते अग्निहोत्रे यथा प्रथमं स्रुवमुन्नयति इति। तस्मात् पूर्णेन स्रुवेणैते आहुती होतव्ये।

**अपां···स्वाहेति। तूष्णीमुत्तराम्।**

सवनस्य समाप्तत्वात् सर्वेषां सह निर्गमः।
सदसो न तु वेदेः[5] स्याद्यतोऽस्यां[6] विधिरुत्तरः[7]॥

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ [उत्तरविधिः[8]]
विंशः खण्डः

---

१ को. वृष्णं　२ को. रशब्दं　३ को. यज मं मो
४ को. फल्गुनोत्मनोभवः　५ को. वेदे　६ को. यतेऽस्यां
७ को. ०रत्तरम्।　८ को. नास्ति पाठः

# अथ एकविंशः खण्डः

अनूयाजैश्चरन्ति । अनूयाजैश्चरित्वा हारियोजनेन चरन्ति । हारियोजनस्योच्छेषणादियतीर्वेयतीर्वा धाना आदायाहवनोयस्यान्ते निदधति । आपूर्या स्था मा पूरयत प्रजया च धनेन चेति ॥ शाकलैरेनांस्यवयजन्ते—देवकृतस्यैनसो ऽवयजनमसि, ऋषिकृतस्यैनसो ऽवयजनमसि, पितृकृतस्यैनसो ऽवयजनमसि, परकृतस्यैनसो ऽवयजनमसि, आत्मकृतस्यैनसो ऽवयजनमसि, एनस एनसो ऽवयजनमसि स्वाहेति । दक्षिणेन चात्वालमप्सुषोमान् सोमभक्षावृतावग्रेण भक्षयन्ति युगपत्समुपहूता इत्यभिव्याहृत्याप्सु धौतस्य देव सोम ते मतिविदो नृभि स्तुतस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो ऽश्वसनिर्गोसनिस्तस्य त उपहूतस्योपहूतो भक्षयामि । वाग्जुषाणा सोमस्य तृप्यत्विति । कामकाममावर्त इति दक्षिणं बाहुमनुपर्यावर्तते । तूष्णीं पुनः सव्यं बाहुमनुपर्यावृत्य शमद्भ्यः शमोषधीभ्यः प्राण सोमपीथे मे जागृहीति द्वितीयम् । भक्षयित्वा चात्वाले ऽवनयति समुद्रं वः प्रहिणोमीत्येतेनैव । आग्नीध्रे दधिषोमान् भक्षयन्ति चमसेन यथापूर्वं पाणिभिर्वा युगपद् दधिक्राव्णो अकारिषमित्येतयर्चा ॥ २१ ॥

अनूयाजैश्चरन्ति । अनूयाजा नाम यागविशेषास्तैरिदानीमध्वर्यवश्चरन्ति । अनूयाजैः चरन्ति । अनूयाजैश्चरित्वा हारियोजननामधेयेन[1] धानामिश्रेण ग्रहेण चरन्ति । हारियोज[1]...निदधाति । हुतस्य हारियोजनस्य[2] उच्छेषणात्[3] अवशिष्टादवयवात् इयतीर्वा इयतीर्वा धाना[4] आदाय ता आहवनीयसमीपे[5] अनेन यजुषा निदधाति । कियत्यः, पुनरियत्यो भवन्ति, इमे ब्रूमहे—इयतीर्वा इयतीर्वेति नेदं वचनं परिमाणद्वयस्यैव धानानां विकल्पनम् । सर्वपरिमाणापेक्षोऽयं विकल्पः । दृश्यते हि बहुविषया द्विरुक्तिः—अयमयमिति, इदं ब्रह्म इदं ब्रह्मेति, यदिति यदिति च[6]। तस्माद् यथालाभमत्र धाना आदेयाः । केचिद् व्याचक्षते—अंगुलीनामग्रात् प्रभृत्युक्तमापर्वद्वयं, तस्य परिमाणस्यैवायं विकल्प इति । इदं च कर्म धानाद्युपरिष्टाज्जपान्तं सुब्रह्मण्येनापि कर्तव्यम् । यत् तस्य नेष्यते तदुत्तरत्रास्माभिरपवदिष्यते ।

शाकलैरे...स्वाहेति । सप्तभिरेव मन्त्रैरेनांस्यवमोक्तुं यजन्ते । किमनादेशादाज्येन, अत्र ब्रूमः—मन्त्राणां शाकलत्ववचनादेवेष्टमत्र[7] द्रव्यम् । यदि शाकलैर्हूयते ततो मन्त्राः शाकलाः स्युः । तस्मात् पलाशादीना शकलैरत्र होतव्यम् । अथवा द्रव्यमेव शाकलशब्देनाभिधीयते । शाकलैः[8] शकलैरित्यर्थः । स्वार्थे तद्धितः । अथवा नायं तद्धितार्थः, तद्भिन्नमेवेदं प्रातिपदिकं शकलशब्देनैकार्थम् । दृश्यते हि—खड्गः खाड्गः, तलस्ताल इति ।

---

१ को. हार्योज० २ को. हार्योज० ३ को. उच्छेषणं ४ को. याना ५ को. ०यसुसमीपे
६ को. याय यदिति ७ को. ०नादेवाष्टमन्त्र ८ को. शाकः शकलैरित्यर्थः

स्वाहाकारेण विना होमस्यादर्शनात् एषामपि मन्त्राणां स्वाहाकारान्तानामेव शौनकेनाम्नातत्वादत्रापि स्वाहाकारान्तैरेव होमो निश्चीयते ।

**दक्षिणेन...तृप्यत्विति** । अप्पूर्णाश्चमसा अप्सुषोमानो भवन्ति । तानप्सुषोमान् दक्षिणेन चात्वालमुपविश्य सोमभक्षक्रमेण पृथगुपहवनिगदानभिव्याहृत्य वा अनेन समुपहूता.[1] स्म इति युगपदभिव्याहृत्य वा अनेन यजुषा अवघ्रेण भक्षयन्ति[2] । भक्षयन्तो ऽवजिघ्रन्तीत्यर्थः ।

**काम काम...पर्यावर्तते** । भक्षणानन्तरमनेन यजुषा दक्षिणं बाहुमनु पर्यावर्तते । भक्षनिमित्तोऽयमात्मसंस्कारस्तस्मादेकवचनविहितोऽपि सर्वैः कर्तव्यः । **तूष्णीं...द्वितीयम्** । सव्यं बाहुमनु पुनस्तूष्णीं पर्यावृत्यानेन यजुषा द्वितीयं भक्षयन्ति[3] । द्वितीयमित्यनर्थकम् । नानर्थकम् । अवघ्रेण भक्षयन्तीत्यस्यावबोधनार्थत्वाद् द्वितीयादयो हि शब्दास्तज्जातीयापेक्षयैव प्रवर्तन्ते[4] ।

**भक्षयित्वा...त्येतेनैव** । भक्षयित्वा सर्वेषां भक्षणादूर्ध्वं तानप्सुसोमानुद्गाता समुद्रं वः प्रहिणोमि इत्येतेनैव मन्त्रेण चात्वालेऽवनयति । **आग्नीध्रे...मित्येतयर्चा** । दधीत्येव दधिसोमाः, तानाग्नीध्रे उपविश्य चमसेन वा यथापूर्वं पर्यायेण पाणिभिरेव वा युगपदेतयर्चा भक्षयन्ति । यदि सुब्रह्मण्यः सोमं न भक्षयेत्, अप्सुषोमदधिसोमानपि न भक्षयेत् ।

नास्य वेदौ, 'बहिर्वेदि करोतीति' गिरा क्रिया ।
इष्यते कैश्चिदिच्छामो न वयं, प्राकृता हि गीः ।। २१ ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ उत्तरविधिः
**एकविंशः खण्डः**

---

१ को. समुपभूताः २ को. नास्ति पाठः ३ को. भक्षयन्त ४ को. प्रवृत्तंते

# अथ द्वाविंशः खण्डः

पत्नीसंयाजैश्चरन्ति । पत्नीसंयाजैश्चरित्वावभृथं संसादयन्ति । अवभृथे विष्टुतीरप्यजत्यौदुम्बरीं चासन्दीं च । अन्तरेण चात्वालं चोत्करं च निष्क्रामन्नाह प्रस्तोतः साम गायेति । स हिंकृत्य साम त्रिर्गायत्यग्निं होतारं मन्ये दास्वन्तमित्येतेषां तृतीयम् । पदाय पदाय स्तोभमाह । सर्वे निधनमुपयन्ति सपत्नीकाः । देवान् वा एतस्मिन् काले रक्षांस्यन्वसचन्त । स एतदग्नी रक्षोहा सामापश्यत्तेन रक्षांस्यपाघ्नत तद्यत् सर्वे निधनमुपयन्ति रक्षसामेवापहत्यै । त्रिः प्रतिष्ठायं हरन्ति । प्रतिष्ठिते प्रतिष्ठिते गायति । त्रयो वा इमे लोकाः । एषां लोकानां समष्टयै । अवभृथेष्टया चरन्ति । संस्थितायामवभृथेष्टयामुपावसृप्याप आचामति भक्षस्यावभृथोऽसि भक्षणस्यावभृथोऽसि भक्षितस्यावभृथोऽसीति । औदुम्बरीरार्द्राः सपलाशाः समिधः कुर्वत एधोऽस्येधिषीमहीति । गत्वाहवनीये समिधोऽभ्यादधाति समिदसि तेजोऽसि तेजोऽसि तेजो मयि धेहि स्वाहेति । अभ्याधायोपतिष्ठते ऽपो ऽन्वचारिषं रसेन समसृक्ष्महि, पयस्वा अग्न आगमं तं मा संसृज वर्चसेति । अथैतज्जपति शं च म उप च म आयुश्च मे भूयश्च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति । संतिष्ठते सुत्या । यथायथं विसृज्यन्त उद्गातारः । इत्यैकाहिकस्य कर्मणः ॥ २२ ॥

**पत्नी···चरन्ति** । पत्नीसंयाजैर्नाम याजैरन्तश्शालमध्वर्यवः चरन्ति । **पत्नीसं···संसादयन्ति** । पत्नीसंयाजैश्चरित्वावभृथं[1] प्रवृत्तप्रयोजनं यज्ञमग्रेणाग्नीध्रमध्वर्यवः सह सादयन्ति । **अवभृथे···चासंदीं च** । तस्मिन्नवभृथे विष्टुतीरौदुम्बरीं[2] चासन्दीं चाप्यजति प्रक्षिपति । किमियं[3] सोमासन्दी चोद्यते आहोस्वित् धर्मासन्दी, । न सोमासन्दी नापि धर्मासन्दी, ययोर्हि नास्माकं व्यापारः ।

ननु नातोऽन्यत्रासन्दी । सत्यमेतत् । अस्ति तु महाव्रते । तदर्थमासन्दीग्रहणम् । **अन्तरेण···गायेति** । अनेन मार्गेण निष्क्रमन्निमं संप्रैषमध्वर्यु राह । **सहिंकृत्य···तृतीयम्** । **पदाय···हरन्ति** । **प्रतिष्ठिते···समष्टयै** । एषां लोकानामाप्त्यै । **अवभृथेष्टया चरन्ति** । अस्त्यवभृथेष्टिर्नाम इष्टिः, तयाध्वर्यवश्चरन्ति । **संस्थितायां··· अवभृथोसीति** । समाप्तायामवभृथेष्टयामुपावसृप्यत्येर्थमेभिर्मन्त्रैस्त्रिरप आचामति । मन्त्राणां लिङ्गात् स यदेवानूज्जष इति चार्थवादात् सोमभक्षसंबन्धिभिः सर्वैरेवाचमनं कर्तव्यम् । तत्र नेदं[4] भक्षणं[4] पक्षे सुब्रह्मण्यस्य । **औदुम्बरी···महीति** । अथ निवृत्तास्तीर्थादुदुम्बरमयीरार्द्राः पर्णम्वतीः समिधोऽनेन मन्त्रे-

---

1 को. वभृथः  2 को. विष्टुतिशौदु०  3 को. किमयं  4 को. तेदमभक्षणं

णाददते । एकैका समित् सर्वैरादेया । गत्वाहवनीये···स्वाहेति । यो यः समिधमादत्तवान् स सर्वो गत्वाहवनीये अनेन यजुषा समिधमभ्यादधाति । अभ्याधाय···वर्चसेति । अभ्याधाय समिधमनेन यजुषाहवनीयमुपतिष्ठते । अथैतज्जपति···संतिष्ठस्वेति । अथैतद् यजुर्जपति । संतिष्ठते सुत्या । सोमिषवे सुत्याशब्दः प्रथमं[1] प्रवर्तते । यस्मिन्नहनि सुत्या च स दिवसः सुत्याशब्देनाभिधीयते । अत्र तु सुत्यादिवसे क्रियमाणं कर्मकलापमुपलक्षयति, संतिष्ठते सुत्या, यत् कर्तव्यं सुत्यादिवसे तत्सर्वमत्रावसीयत इत्यर्थः । समाप्तत्वात्कर्मणो निष्क्रामेयुः ।

यथायथं ··उद्गातारः । यथायथं यथास्वं गृहं प्रत्युद्गातारो विसृज्यन्ते यजमानेन । परिगाणपक्षे नेदानीं प्रस्तोता विसृज्यते । इत्यैकाहिकस्य कर्मणः । यज्ज्योतिष्टोमः स एकाह इत्युच्यते । तस्यांशभूतं यत् कर्म तदैकाहिकमित्यर्थः । महन्मेऽवोच इत्यादेरुपरिष्टाज्जपान्तस्यैकाहिकस्य कर्मणः क्रियाक्रमोऽत्र व्याख्यातः । सर्वं च विकृतिजातमयमस्मादेवैकाहादास्कन्दति । ये तु वैकृता विशेषास्तेषां कैश्चिदत्र विकल्पिताः । परिशिष्टाः पर्यध्याये कल्पयिष्यन्ते ।

अग्निष्टोमेन यष्टव्यमादौ राथन्तरेण[2] तु ।
ततः प्रभृति भेदानां येन केनचिदुत्तरम् ॥ १ ॥

इति [ महोपाध्यायश्रीभवत्रातेन विरचितायां ] जैमिनीयश्रौतसूत्रवृत्तौ [उत्तरविधिः]
द्वाविंशः खण्डः

---

१ को. प्रथम   २ को. रथन्तरेण

## अथ त्रयोविंशः खण्डः

अग्न्याधेये साम्नां गानकालमुपदेक्ष्यामः । यज्ञोपवीतं कृत्वाप आचम्योत्तरेण विहारदेशं परीत्यापरेण गार्हपत्यायतनं प्राङ्मुखस्तिष्ठन्नरण्योर्निहितो जातवेद इति । अरण्योः संधीयमानयोर्घृताचेराङ्गिरसस्य साम गायति । अग्निं नर इति मथ्यमाने राशिमरायम् । त्वेषस्ते धूम ऋण्वतीति धूम उद्यति कौल्मुदम् । अदर्शि गातुवित्तम इति जाते गाथिनः कौशिकस्य सामाग्नेश्च श्रैष्ठ्यम् । गार्हपत्य आधीयमाने रथन्तरम् । उद्ध्रियमाणे वामदेव्यम् । अन्वाहार्यपचन आधीयमाने यज्ञायज्ञीयम् । प्राञ्चं प्रणीयाहवनीयायतने निदधाति । तदग्नेर्निधि गायति । आहवनीय आधीयमाने बृहत् । आधिते वारवन्तीयं श्यैतमिति । सभ्यावसथ्यौ सभपौष्कलाभ्याम् । सर्वाञ्छ्र्यं तेनेत्येके । तान्युद्गाता गायेद् गानसंयोगाद् । वेदाधिकृतत्वाद् । अथ ब्रह्मौदने च लिङ्गदर्शनात् । तेषां यानि तृचस्थानानि तृचेषु तानि गायेद् । यान्येकर्चानि त्रिस्त्रिस्तानि । तिष्ठन् । न स्तोत्रभूतानि । मध्यमया वाचा । मनसा वा । ब्रह्मा सामानि गायेदित्येके । सदाग्निहोत्रे गोषूक्ताश्वसूक्ते गेये । सायं गोषूक्तं प्रातरश्वसूक्तमिति । पूर्वस्यामाहुतौ हुतायाम् । कमहमस्मि कं ममेत्येतदुक्त्वा वा । अग्न्याधेयस्य दक्षिणा षट् द्वादश चतुर्विंशतिः । अश्वश्च वानड्वांश्च वा । बहु देयम् । अपरिमितं देयम् । यावतीः संवत्सरस्य रात्रयस्तावतीर्देयाः । आग्नेयस्येडान्ते ऽपि सहस्रं दद्यादित्येके समामनन्ति । अनाढ्यो ऽग्नीनादधानो ऽप्येकां गां दद्यादिति पैङ्गकम् । अनग्न्याधेयमेव तद् यत्र गौर्न दीयते ॥ १३ ॥

ब्राह्मणाचार्यवचनालोचनालोचनसमुपजातप्रज्ञैरस्माभिरस्मिन्नवसरे प्रकृतीनामृक्सामपरिकल्पनार्थं कश्चिद् ग्रन्थः संगृह्यते ।[1]

सर्वत्र प्रथमानि प्रातस्सवनानि । रथन्तरसामाग्निष्टोमः । तस्य रथन्तरसाम्नः—प्रातःसवनम् उच्चा ते (जै. सं. १.४९.१) इति गायत्रमामहीयवम्[2] । द्वितीया तु गायत्रे अस्य व्रतानि (जै. सं० ४.७.३) पुनानः सोम धारया (जै. सं. १.५३.१) इति द्वे यज्ञायज्ञीये[3] । प्र तु द्रव (जै. सं. १.५४.१) इत्यौशनमन्त्यम् । राथन्तराणि पृष्ठानि । स्वदिष्टया (जै. सं. १.४९.२) इति गायत्रसंहिते । अया पवस्व देवयूरेभन् (जै. सं. ३.५.४) । पवते हर्यतो हरिः (जै. सं. १ ५८.११) । इति स पौष्कले एकर्चे । पुरोजिती वो अन्धसः ( जै. सं. १.५६.१ ) इति श्यावाश्वान्धीगवे[2] । अभि प्रियाणि[3] पवते च नो हितः (जै. सं. १.५७.१) इति कावमन्त्यम् । यज्ञायज्ञा वो अग्नये (जै. सं. १.४.१) इति यज्ञायज्ञीयमग्निष्टोम साम ।

---

१ को. सन्दह्यते
२ को. गायत्रीमहीयवे
३ को. रौरवयौधाजये
४ को. श्यावत्स्वान्धीगवो
५ को. प्रयाणि
६ को. मधुश्च निधनं

अथात्यग्निष्टोमः । तस्यैतस्यामेव क्लृप्तौ श्यावाश्वस्य स्थाने नानदं मधुश्च्युन्निधनं[1], श्यावाश्वमिति सामतृचं यज्ञायज्ञीयादूर्ध्वं हरिवतीषु गौरीवितमित्यग्निष्टोमसाम[2] ।

अथोक्थ्यः । तस्य सर्वमग्निष्टोमिकमुपरिष्टादुक्तानि तानि[3] साकमश्ववन्ति ।

अथोक्थ्यः षोडशिमान् । तस्यैतस्यामेव क्लृप्तावत्यग्निष्टोमक्यनुष्टुबुपरिष्टाध्वरवतीषु गौरीवितं षोडशिसाम ।

अथातिरात्रः । तस्यैतस्यामेव क्लृप्तौ नार्मेधसमन्त्योक्थ्यं[4] षोडशिनं परे पर्यायाप्तेभ्यो रथन्तरस्सन्धिते ब्राह्मणाः क्लृप्ताः ।

अथ बृहत्सामाग्निष्टोमः । तस्य बृहत्साम्नः प्रातस्सवनं, बार्हतानि पृष्ठानि, रथन्तरसाम्न इतरत् ।

अथात्यग्निष्टोमः । तस्यैतस्यामेव[5] क्लृप्तावत्यग्निष्टोमक्यनुष्टुप्प्रसिद्धं संस्थासाम ।

अथोक्थ्यः । तस्यास्मादग्निष्टोमात्[6] पराणि[6] सत्रासाहीयवन्त्युक्थानि ।

अथोक्थ्यः[7] षोडशिमान् । तस्यैतस्यामेव क्लृप्तौ अतिरात्रोक्थानि पर्यवसन्धिनां भावाः सर्वातिरात्रेषु येऽतिरात्र क्लृप्ताः सह ।

अथोभयसामा रथन्तरपृष्ठो ऽग्निष्टोमस्तस्य रथन्तरप्रधानस्य प्रातःसवनं श्यावाश्वश्यैतमान्धीगवमिति । पूर्वो बृहतः साम तृचो रथन्तरसाम्न इतरत् ।

अथात्यग्निष्टोमः । तस्यैतस्यामेव क्लृप्तौ नानदमान्धीगवं श्यावाश्वमिति सामतृचः प्रसिद्धं संस्थासाम ।

अथोक्थः । तस्यास्मात् अग्निष्टोमात् पराणि साकमश्वत्यवतानि ।

अथोक्थ्यः षोडशिमान् । तस्यानेनात्यग्निष्टोमेन समानमायज्ञायज्ञीयात् सामाश्ववन्त्युक्थानि, प्रसिद्धं षोडशि साम ।

अथातिरात्रम् । तस्यैतस्यामेव क्लृप्तौ नार्मेधसमन्त्योक्थं क्लृप्तमुत्तरम् ।

**अग्न्याधेये...पदेक्ष्यामः** । अनेन[8] कर्मणाग्नयो गार्हपत्यादय आधीयन्ते[9] । तस्य सोमात्पूर्वस्यापि ततः पूर्वमवचने पूर्वमेव कारणं प्रत्यपादि । इह तूच्यते अग्न्याधेये लिङ्गशाखान्तरीयवचनप्रापितानां साम्नां गानस्य कालमुपदेक्ष्यामः । अथ गानम्, तत्कालं चैकम् ।

**यज्ञोपवीतं...गायति** । यज्ञोपवीत्याचान्तोऽग्नीनां[10] विहरणदेशमुत्तरेण परीत्य[11] गार्हपत्यस्यायतनमपरेण प्राङ्मुखस्तिष्ठन् अरण्योर् (जै. सं. १.८.७) इत्यस्यामृचि घृताचेराङ्गिरस्य[12] सामाधारोत्तरयोः संयोज्यमानयोर्गायति[13] ।

**अग्निं नरा...मरायम्** । अग्निं नराः[14] (जै. सं. १.७.१०) इति[14] वैराजं मथ्यमाने गायति ।

---

१ को. मधुश्चनि० २ को. गौरिवीत ३ को. नानि ४ को. नामेध्य०
५ को. तस्याकस्यैव तस्यामे० ६ को. ष्टोमापराणि ७ को. अथोक्ष
८ को. प्येन ९ को. आसीयन्ते १० को. गिननां ११ को. परीत्या
१२ को. घृताचोरा० १३ को. मारयोर्गा० १४ को. अस्मि मद्विरास्मि

**त्वेषस्ते...कौल्मुदम्** । त्वेषस्ते धूमः (जै. सं. १.६.३) अस्यामृचि कौल्मुदमुच्यति[1] धूमे गायति[1] । **अदर्शि श्रैष्ठचम्** । अदर्शि गातु (जै. सं. १.५.३) अस्यामृचि गाथिनः कौशिकस्य, यच्च नोऽग्नेः श्रैष्ठचमिति तच्च जातेऽग्नौ गायति । अग्नेः श्रैष्ठचात् पूर्वस्मिन् सामचतुष्टये भूदादिग्रहणमनर्थकम् । नानर्थकम् । ऋग्गतलिङ्गपरिजिघृक्षयैषां साम्नां गानमिति ज्ञापनार्थत्वात् । किमेतस्य ज्ञापने प्रयोजनम्, वक्ष्यमाणब्रह्मसामगानग्रहणपक्षे सामचतुष्टयमिदमनादृश्यामेवासां वचनमुद्गातुरेव हि गानप्राधान्यं ब्राह्मणे[2] । अथवेदं विज्ञानमृग्ग्रहणस्य प्रयोजनम् । ऋग्गतलिङ्गात् सामचतुष्टयमिदं प्रवृत्तं न वचनादिति ।

**गार्हपत्य...रथन्तरम्** । गार्हपत्येऽग्नावाधीयमाने रथन्तरं गायति । रथन्तरवामदेव्यबृहद्वारवन्तीयश्यैतेषु केषुचित् संप्रेष्यन्ति, केषु[3] चिन्न । तत्पूर्वमेव पृष्ट्वाध्वर्युं तद्द्वयशमियात् ? **उद्ध्रियमाणे वामदेव्यम्** । गार्हपत्यादाहवनीयार्थमग्नावुद्ध्रियमाणे वामदेव्यं गायेत् ।

**अन्वाहा ··यज्ञायज्ञीयम्** । केचित्तदनुद्धित्यैवाहवनीयार्थमग्निमन्वाहार्यपचनार्थमादधति । अत्र सिद्धा यज्ञायज्ञीयादूर्ध्वं गायति[4] वामदेव्यस्य । **प्राञ्चं···निदधाति** । आहवनीयार्थमुद्धृतमग्निं प्राञ्चं प्रणीयाहवनीयस्य[5] स्थाने निदधत्यध्वर्यवः । परस्य विधेः विषयक्लृप्तिरियम् । **तदग्नेर्निधि गायति** । तदतीतार्थे[6] । अथवा तच्छब्ददर्शनात् यच्छब्दमप्यध्याहृत्य एकवाक्यतयैवेदं योज्यम् । तदानिम ··ति तदा गायन्ति ?

**आहवनीय आधीयमाने बृहत्** । **आधिते वारवन्तीयं श्यैतमिति** । आधिते आहवनीये वारवन्तीयं श्यैतं च गायति । आधित इत्याचारस्य प्रामाण्याद् दधातेर्हिः (पा. ७.४.४२) तस्य विधेः क्वचिदभावे लक्षणमनुमेयम् । अथवा । अधित इ एव पदच्छेदं[7] कार्यम् । इ शब्दोऽस्मिन् निपातः । स इहेति शब्दस्यार्थे वर्तते । आधित इ आहितवानिति । अस्यां वेलायां शायतीति कल्प्यम् ।

**सभ्यावसथ्यौ सभपौष्कलाभ्याम्** । यावग्नी सभायामावसथे च निधीयेते तौ सभ्यावसथ्यौ[8], तावाहितौ सभपौष्कलाभ्यामुपतिष्ठते । सभेन सभ्यम्, पौष्कलेन आवसथीयम् । **सर्वांञ्छ्यैतेनेत्येके** । सर्वाग्नीनाहितान् श्यैतेनोपतिष्ठेतेत्येक[9] आचार्या ब्रुवते । अस्मिन् पक्षे वारवन्तीयानन्तरं श्यैतं साम गीत्वा सभ्यावसथ्यौ स्वसामाभ्यामुपस्थापयते । पञ्चाग्नीन् सहैव श्यैतेनोपतिष्ठेत, सभ्यावसथ्ययोस्तु वैकल्पिकमाधानम् ततोऽनयोरनाधानपक्षे न श्यैतस्य कालः[10] पक्षद्वयेऽपि भिद्यते । तस्यादर्शनात्[11] ।

**तान्युद्गाता ··गानसंयोगात्** । तान्येतानि सामान्युद्गाता गायेत्, एभ्यः कारणेभ्यः— तत्र गानसंयोगादिति । गानेनोद्गातः संयोगात् । कुतोऽस्य गानसंयोगः, यतोऽयं गानकर्तृवचनेनोद्गातृवचनेनाभिधीयते । **वेदाधिकृतत्वात्** । अथ वेदाधिकृतत्वादिति सामवेदेनोद्गातुः कर्तृत्वेनाधिकृतत्वात् उपात्तत्वादन्यार्थे हि वाक्ये श्रूयते । तदाह यद्चा होतृत्वं क्रियते यजुषाध्वर्यवं साम्नोद्गीथः इति । तत्र सामवेदेनोद्गीथक्रियायामुद्गीथस्य कर्तुरङ्गकृतत्वसामवेदेनोद्गाता करोतीत्ययमर्थो लभ्यते । अथवा । सामवेदेनोद्गातुरधिकृतत्वमस्य वेदस्य समाख्यानादवगम्यते । लोके ह्यौद्गात्रो वेद इत्ययं वेदः समाख्यायते । **अथ ब्रह्मौदने च च लिङ्गदर्शनादिति** । येन श्रुतेन दृष्टेन वा कश्चित् प्रत्यक्षेणोह्यमानोऽर्थो निश्चीयते तत्तस्य लिङ्गं भवति ।

---

१ को. कौमुदमुद्यतिस्कमे नायति २ को. ब्रह्मणः ३ को. केम
४ को. तिता ५ को. प्राणीया० ६ को. तदतींतदर्थे ७ को. वदच्छेदं
८ को. ०सहथौ० ९ को. ०तिष्ठतेत्येक १० को. काल ११ को. तस्य दर्शानत्

यथा धूमोऽग्निसद्भावस्य, यथा च कमलोद्बोधो दिवाकरोदयस्य। एवमत्रापि तान्युद्गाता गायेदित्यस्यार्थस्य निश्चयः ब्रह्मौदन आग्न्याधेयिके लिङ्गदर्शनात् क्रियते। येन तल्लिङ्गमाचार्येण परशाखायां दृष्टं तेन नेहेद-मिति निर्दिष्टं शब्देन सामान्यशब्देनैवोक्तं, लिङ्गदर्शनादिति। तत् खलु लिङ्गं महर्त्विजो ब्रह्मौदनं प्राश्नीयुः इति परवचनम्। एते च महर्त्विजः यद्धोताध्वर्युर्ब्रह्मोद्गातेति। यदि चाग्न्याधेयसामान्युद्गातुरन्यो गायेत् निष्प्रयोजनस्याग्न्याधेये तदर्थे ब्रह्मौदने दर्शनमुद्गातुर्नाविकल्पेत, तस्मात् कारणत्रयादुद्गातैव सामानि गायेत्। योऽयं मध्यमो हेतुः स सर्वत्रापि सामवेदे विहितमनिर्दिष्टकर्तृकं कर्मोद्गाता कुर्यादित्यवगमयति।

**तेषां यानि...तानि गायेत्।** तेषां साम्नां यानि तृचस्थानि तृचेष्वपि विद्यन्ते तानि तृचेषु गायेत्। न स्तोत्रभूतानीति वक्ष्यति। तस्मादिमं विधिं बृहद्रथन्तरवामदेव्यानि प्रयोजयन्ति, न यज्ञायज्ञीय-प्रभृतीनीति।

**यान्येकर्चानि त्रिस्त्रिस्तानि।** यान्येकर्चो भजन्ते तानि त्रिस्त्रिर्गायेत्। न स्तोत्रभूतानीति। अत एव कारणात् यज्ञायज्ञीयप्रभृतीन्यपि इमं विधिं प्रयोजयन्ति। तर्कतः संशयः यतस्तान्येकर्चेष्वपि सतृचेष्वपि। अत्र ब्रूमः—यद्येकर्चेषु सत्तामात्रमाश्रित्य त्रिर्गानमेष्यन्तः सर्वाणीत्यवक्ष्यत, न ह्यत्र विहितं सामास्ति यदेकर्चं न स्पृशति, यतः स्वे कल्पे न विशिनष्टि तत एव लभ्यते, यान्येकर्चेष्वेव न तृचेष्विति। तस्माद् बृहद्रथन्तर-वामदेव्यानि सकृत्सकृदेव गायेत्। **तिष्ठन्।** तानि सर्वाणि सामानि तिष्ठन् गायेत्।

नन्वादावुक्तम् 'अपरेण गार्हपत्यायतनं प्राङ्मुखस्तिष्ठन्निति' तदधिकाररूपेण सर्वेष्वप्येषु भवितुं शक्नोति। ततो ऽयं विधिरनर्थकः[2]। नानर्थकः[3]। स्थानविशेषप्रतिपादनार्थत्वात्। ततो यज्ञायज्ञीयादीनि तस्य तस्याग्नेः पश्चात्तिष्ठन् गायेत्। **न स्तोत्रभूतानि।** स्तोत्रेषु भूतानि प्रवृत्तानि न गायेत्। येन रूपेण स्तोत्रेषु भूतान्येतानि तानि तेन रूपेण न गायेदित्यर्थः। अथवा। न स्तोत्रेषु भूतानीति कृत्वैव गेयम्, स्तोत्रेषु भूता उत्पन्ना ये विशेषाः स्तोत्रभूतास्ते येषु न सन्ति तान्यस्तोत्रभूतानि इति। उभयथापि ये रथन्तरादीनां स्तोत्रार्थपाठास्तेषामिहाग्रहणं सिध्यति।

अथान्यथा व्याख्यास्यामः। तिष्ठन् तानि। परिभाषावाक्यमिदम्। यानि सामान्यस्तोत्रभूतानि स्तोतृसमितेभ्योऽन्यानि विधीयन्ते[4] तानि तिष्ठन् गायेत्। येषु स्थानमासनं वा न विहितं तान्यस्य वचनस्य प्रयोजकानि। यथा—सुखं, ज्योतिर्निधनानि, अग्निपरिगाणानि, परिमाद इति। अस्मिन् व्याख्याने सर्वाण्य-ग्न्याधेयकानि अपरेणैव गार्हपत्यं तिष्ठता गेयानि, स्थानान्तरस्याविहितत्वात्। कथं पुनरूहसाम्नामिहा-ग्रहणम् अस्मिन् व्याख्याने सिध्यति, न्यायात् सिध्यति। इत्थं हि न्यायविद्भिर्निश्चितं, क्रियार्थं समाम्नाय इति। तत्रोहसमाम्नायस्य तावत् सवनत्रयाङ्गभावेनैवार्थः सिद्धः, यस्त्वयमाद्यः समाम्नायस्तस्य सवनत्रयाद् बहिर्भूतस्य क्रियाङ्गभावमुपजिगमिषतो योऽन्यत्र सवनेभ्यः सामगानविधिः स तस्य विषयः। इतरथा हि क्रियार्थत्वमस्य न स्यात्। किञ्च छन्दस्यानामेव सवनत्रयादन्यत्र भूयसां साम्नां विधिर्दृश्यते। तदुपलक्ष्य-मग्न्याधेयप्रवर्ग्यादिषु। गाने तत्र छन्दस्येव सह विहितानां रथन्तरादीनामूढानां छन्दस्यवद् ग्रहणन्यायाद् भवति। पूर्वस्मिन् व्याख्याने वचनादूहसाम्नां निवृत्तिम् अन्यायादुत्तरस्मिन् तत्तदूहवचनादूहसाम्नामग्न्या-

१ को. न· २ को. रनर्थकम् ३ को. नानर्थकम् ४ को. विधीयते

धेयमात्रनिवृत्तौ प्रवर्ग्यादिषु वचनाभावात् प्रवृत्तिरेषामनिष्टा प्राप्नोति । उत्तरस्मिंस्तु[1] समवायस्यानेकविषयत्वान्नायं[1] दोषः प्रसजति । तस्मादुत्तरमेव व्याख्यानं सिद्धान्तत्वेन ग्राह्यम् ।

**मध्यमया वाचा** । मध्यमया अमन्द्रया अनुच्चया वाचा अग्न्याधेयसामानि गायेत् । अथवा स्तोत्रपरिभाषावाक्यान्तर्भूतमेवेदं, न वाक्यान्तरम् । तिष्ठन् न स्तोत्रभूतानि मध्यमया वाचेति । ततः प्रवर्ग्यादिष्वपि मध्यमयैव वाचा गायेत् । अस्मिन् व्याख्याने यदि सामसु मध्यमया वाचा गायेदिति विधिरनर्थकः[2] । नानर्थकः[3] । सवनान्तर्भूतपरिणामार्थत्वात्[4] । पूर्वयोर्हि सवनयोरन्तर्भूतेषु परिगाणेषु[5] तत्स्वरौ मन्द्रोच्चौ परिभाषामिमां साधिकया प्रसजतः तन्निवृत्तये तत्र मध्यमया वाचेति विधास्यति । कतरत् पुनर्व्याख्यानयोर्गरीयः, यतः पूर्वस्मिन् व्याख्याने प्रवर्ग्यादिष्वनियतस्वरो भवति, नियतोऽस्मिन्, तत इदं गरीयः ।

**मनसा वा** । मनसेत्येके । मनसा वाचा वा । **ब्रह्मा सामानि गायेदित्येके** आचार्या ब्रुवते । किमर्थं मनसा वेत्यस्य ब्रह्मणैव सम्बन्धः क्रियते नोद्गात्रा । अत्र ब्रूमः । इत्थं न प्रतिभाति ब्रह्मोद्गात्रोरन्यतरेणाग्न्याधेयसामानि गेयानीति वचनमाचार्येण दृष्टम् । इदञ्च दृष्टं बह्वृचश्रुतौ--द्वे वै यज्ञस्य वर्तनी वाचान्या संस्क्रियते मनसान्या । सा या वाचा संस्क्रियते तामन्य ऋत्विजः संस्कुर्वन्ति । अथ या मनसा तां ब्रह्मा तस्माद्यावदृचा यजुषा साम्ना कुर्युस्तूष्णीं तावद्ब्रह्मासीतार्धं हि तद्यज्ञस्य संस्करोति (कौषी.ब्रा.६.११) । अस्मदुपनिषद्ग्रन्थश्च—अयं वाव यज्ञो योऽयं पवते (जै. उ. ३.१६. ) इत्यादि । तस्मात् स तूष्णीमास्ते (जै. उ. ३.१६. १) इत्यन्तः समुपलक्षितः । ततोऽग्न्याधेयकर्मणि ब्रह्मणस्तूष्णीमासननियमार्थं मनसा गानं विहितम् । मनसापि हि गीतं गीतमेव भवतीति ।

अथ चैवं पश्यन् वापक्षमपि ब्रह्मणोऽभ्युपगतवान् । ब्रह्मणः सामगानमागतं तत एव वाच्योऽप्यागत इति । उद्गातुस्तु मनसा गानं क्वचिदपि न दृश्यते । तेनास्य[6] ब्रह्मण इव तूष्णीमासने न कारणमुपलक्ष्यते, तस्मादेवमेव व्यवसातव्यम्, उद्गातापि[7] चेद् वाचैव । ब्रह्मा चेद् वाचा वा मनसा वेति च ।

**सदाग्नि···गेये** । नित्यमग्निहोत्रे एते गेये । विकल्पाप्रसङ्गात् सदा इत्यनर्थकम् । नानर्थकम् । अनस्मदीयेनापि विधिनाग्निहोत्रे हूयमाने सामद्वयस्य प्रापणार्थत्वात् । यदि हि सदेति नावक्ष्यत कमहमस्मि कं[8] ममेत्येतदुक्त्वा[8] वा इति वक्ष्यमाणत्वादस्मदग्निहोत्रविधावेव सामद्वयं प्रावर्तिष्यत । सदेति वचनात् सर्वत्रापि सिद्धा अस्य प्रवृत्तिः । कः पुनरत्र गाता, यजमानः । न ह्युद्गाताग्निहोत्रेऽस्ति, न च सामान्यध्वर्युरवगच्छति । उत्तरत्र च कारणं वक्ष्यामः । यजमानगेयत्वे पर आह । सदाग्निहोत्रे । अग्निहोत्रे इति द्वितीयाद्विवचनम् । सदा नित्यं द्वे अग्निहोत्रे जुहुयात् आहितेष्वग्निषु । कालोऽनयोः क इति चेत् परतः परस्मिन् वाक्ये विज्ञास्यति । गौषूक्ताश्वसूक्ते गेये । तयोः गोषूक्ताश्वसूक्ते गेये । **सायं गौषूक्तं प्रातरश्वसूक्तम्**[9] । यथासंख्यन्यायेनैव पूर्वस्मिन्नाग्निहोत्रे गौषूक्तस्य, परस्मिन्नश्वसूक्तस्य सिद्धेः वाक्यद्वयमनर्थकम् । नानर्थकम् एकैकस्मिन् सामद्वयप्रसङ्गनिवृत्त्यर्थत्वात् । अथवा । यथासंख्यन्यायेनैव सामद्वयमग्निहोत्राभ्यां कामं संबध्यताम् । अग्निहोत्रयोस्तु सायं प्रातःकालत्वं विज्ञापयति । नैवं वचनव्यक्तिः कार्या, यत् सायं हूयते तस्मिन् गौषूक्तमिति । कथं तर्हि, यद्गौषूक्तवदग्निहोत्रं तत्साय होतव्यमिति, पूर्ववाक्यात्[10] अयमुभयोः साम्नोः

---

१ को· उत्तरस्मिन् रस्तुमवायस्या०  २ को. ०रनर्थकम् ।  ३ को. नानर्थकम्  ४ को. सवनान्नभूत०
५ को. परिगानेषु  ६ को. तेनस्यास्य  ७ को. उद्गातानि
८ को. कर्ममेत्ये०  ९ को. प्रात सूक्तम्  १० को. पूर्वक्यावा

गानकालविशेषः कथ्यते । **पूर्वस्यामाहुतौ हुतायां** नैतद्यजुर्वचनान्तरं वा गेये । अत्र[1] यदि साम्नोर्हाविकेनैव गानमैषिष्यत पूर्वामाहुतिं हुत्वेत्येवावदिष्यत्[2] यतस्त्वनन्यकर्तृकमिव चोद्यते तस्माद्यजमानो गायेत् । न ह्यन्यो हावकादग्निहोत्रं त्विह जुहोति[3] । इत्थम्[4] अग्निहोत्रस्य यज्ञभूतेरेक[5] ऋत्विगस्ति । यच्चेदं यजुः '**कमहमस्मि कं ममे**' ति । तद् याजमानमिति निश्चेतुं युक्तम् । तत्रैतद्यजुरुपागेय इति समानकर्तृकत्वश्रवणादेव सामगानस्य याजमानत्वं सिध्यति । अस्य सामगानविकालविकल्पस्य व्यवस्थया ग्रहणं युक्तम् । अन्यस्मिन् होतरि पूर्वः कालः स्वयं होमे पर इति । अस्ति हि कदाचित् स्वयं होमोऽपि स्वयं पर्वणि जुहुयात् इति । स्वयमहुतवासं यजमानोऽग्निहोत्रं जुहुयात् इति च । किमर्थमग्न्याधेयस्य दक्षिणा विधास्यंस्ताभ्यः पूर्वमेव सशेषमग्न्याधेयमवस्थाप्याग्निहोत्रं ससामगानक्रमेण विहितवानिति चेत्; सशेषेऽप्यग्न्याधेये सति अप्रतीक्ष्य पवमानेष्टिमग्निहोत्रं होतव्यमिति ज्ञापनार्थम् ।

**अग्न्याधे...चतुर्विंशति** । षट् द्वादश वा चतुर्विंशतिर्वा गावोऽग्न्याधेयस्य दक्षिणाः स्युः । कथं समुच्चयो[6] गृह्यते[6] पृथक् पृथगासां वचनात् । समुच्चयेऽभीष्टे सति चत्वारिंशदुच्येत अग्न्याधेयग्रहणमग्निहोत्रप्रसङ्गनिवृत्त्यर्थम् । **अश्वश्च[7] वा अनड्वांश्च वा[7]** । षडादिभिः समुच्चीयेत । **बहुदेयम्** । बहुविधं द्रव्यं गवाश्वमहिषमणिसुवर्णव्रीहियवभूम्यादि देयम् । पूर्वोक्ता दक्षिणा नित्या, अयमाढ्यविषयो विधिः यश्चाढ्यः स्यान्न पूर्वोक्ताभिरेव इष्येत् । बहुविधं द्रव्यमन्यदपि फलसमृद्धये दद्यादित्यर्थः ।

**अपरिमितं देयम्** । अपरिमितमसंख्यातं द्रव्यं देयम् । बहुसंख्यस्य द्रव्यस्य दानार्थमिदमुक्तम् । तद्धि दुस्संख्यानत्वादपरिमि[तमि]ति वक्तुं शक्यम् । अधस्तनाद् विधेरस्य को भेदः, तज्जातिविषम्, इदं व्यक्तिविषयमिति । अथवैकतं द्रव्यं देयमित्यनयैव व्याख्येयम् । बहुद्रव्यदेयं दातुं शक्यं युक्तम् । यस्य विद्येत तेन पूर्वोक्ताः असंख्या अनादृत्य अपरिमितं बहुसंख्यद्रव्यं देयमिति । अस्मिन्नपि व्याख्याने नपुंसकलिङ्गोपादानादेवाद्य गवामपि दानं सिध्यति ।

**यावती...देयाः** । यावतीः तावतीरिति छान्दसौ[8] शब्दौ । यावत्यः संवत्सरस्य रात्रयस्तावत्यो देयाः । शक्तश्चैव पूर्वं[9] पक्षत्रयमतिक्रम्येममाश्रयेत । **आग्नेयस्ये...समामनन्ति** । अग्न्याधेयिकस्याग्नेयस्य पुरोडाशस्य इडान्तस्य इडासम्बन्धे कर्मणि समाप्ते सहस्रमपि गवां दद्यादित्येके याज्ञिकाः समामनन्ति । अथवा । आग्नेयस्येडान्ते[10] उक्ता दक्षिणा विकल्पाः तासामयं कालः कथ्यते । आग्नेयस्येडान्ते ता दक्षिणा देयाः । श्रूयते च परक्षुद्रे—आग्नेयोऽष्टकपालो ऽग्न्याधेयम् इति । उक्तञ्च बौधायनेनास्यैव पुरोडाशस्याधिकारे—अन्वाहार्यमासाद्याग्न्याधेयदक्षिणाः ददाति इति । परक्षुद्रेषु च दृश्यते—काममूर्ध्वं देयमपरिमितस्यावरुध्यै इति । इदमेव व्याख्यानमस्माभिरभिमन्यते । इतरत्र हि दक्षिणानां कालकीर्तनदोषः प्रसजति ।

**अनाढ्यो...पैङ्गकम्** । यो दरिद्रः षडपि गाः दातुं न शक्नोति तस्याग्न्याधेयप्रसङ्गे इदमुच्यते—अनाढ्यः सन्नग्नीनादधान एकामपि गां दद्यादिति पैङ्गकं ब्राह्मणं विदधाति । तस्मादेकयापि[11] गवा अग्नीनादधीत । नैव दरिद्रतां व्यपदिश्य नादधीत ।

---

१ को. यत्र
२ को. हुत्वेत्यवदिष्यत्
३ को. गस्ति
४ को. इत्थं नूयते
५ को. यज्ञभूतौ०
६ को. समुच्चयेऋह्यते
७ को. असगासां असश्च का
८ को. छदसौ
९ को. पूर्वः
१० को. आग्नेडान्ते
११ को. तस्मादेतयापि

अनग्न्या...दीयते। अनगन्यताहेतुकं[1] दक्षिणाह्लासं पूर्वस्माद्वाक्यादुपलभ्य मीमांसकानां च मुखात् 'असमर्थोऽपि सर्वाङ्गोपसहारे नित्यं कर्मानुतिष्ठेत् इति। श्रुतौ अग्न्याधेयादीनि कर्माण्यदक्षिणान्यपि प्रयुयुक्षमाणानां[2] दरिद्रतराणां निर्भर्त्सनं क्रियते। यावत्र चाग्न्याधेयशब्दो गोशब्दश्च विशेषवाचिनावपि सन्तौ प्रतिपाद्यार्थानुरोधाय सामान्यस्योपलक्षकौ गृह्येते तत्राग्न्याधेयशब्दस्तेषां[3] वैदिकानां कर्मणामुपलक्षकः, सर्वदक्षिणानाञ्च गोशब्दः एवं योज्यम्। अनग्न्याधेयमेव तद् भवति अस्मिन् कर्मणि [यत्र] गौर्न दीयते, दक्षिणा न दीयते। नहि दक्षिणा अन्यैरङ्गैस्तुल्या प्रपद्यते, ऋत्विजामनर्थत्वात्। मनुश्च भगवानेवमवोचत्—

इन्द्रियाणि यशः स्वर्गमायुः कीर्तिं प्रजां पशून्।
हन्त्यल्पदक्षिणो यज्ञस् तस्मान्नाल्पधनो यजेत्॥ इति॥

लिङ्गं च दृश्यते—दक्षिणाः स्वर्गं लोकं गमयन्ति॥ इति॥

आसनाद्याविसर्गाद् गोरग्न्याधेयेऽपि सोमवत्।
अहं करिष्यामीत्यूहेदुत्सृजेदित् पदादिकम्॥ २३॥

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ अग्न्याधेयसामविधिः त्रयोविंशः खण्डः

---

१ को. अनाम्यताहेतुकं २ को. प्रयुयुक्षमाणा ३ को. शब्दसंतेषां

# अथ चतुर्विंशः खण्डः

प्रवर्ग्ये साम्नां गानकालमुपदेक्ष्यामः । यज्ञोपवीतं कृत्वाप आचम्यान्तरेण वेद्युत्करौ प्रपद्यापरेण होतारं परीत्य दक्षिणतो घर्ममभिमुख उपविश्य वामदेव्येन मदन्तीभिः शान्ति कुरुते । तं यदाध्वर्युः संप्रेष्यति ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुहि प्रस्तोतः सामानि गायेति । ब्रह्मजज्ञानमित्येतयोः पूर्वं त्रिर्गायति । अज्यमाने महावीरे शार्ङ्गम् । रुक्म उपधीयमाने शुक्रम् । उत्तरस्मिञ्चन्द्रमभिधीयमाने । घर्मेन्धने घर्मस्य तनू घर्मव्रते च । रुचिते घर्मस्य रोचनम् । राजानं पूर्वस्मिन् रौहिणे हूयमाने । गव्युपसृष्टायां धेनु ककुभं वा । प्रत्तायां पूर्वं श्यावाश्वं गौर्धयति मरुतामिति । दुह्यमाने दोहादोहीयम् । पयस्याह्रियमाणे पयः । सिन्धु पयस्यासिच्यमाने । वसिष्ठस्य शफौ परिगृह्यमाणे । ब्राह्मणस्पत्यं ह्रियमाणे व्रतपक्षौ वा । घर्मे हुतेऽश्विनोर्व्रते । रौहिणकमुत्तरस्मिन् रौहिणे हूयमाने । घर्मे साद्यमान आरूढवदाङ्गिरसं त्रिर्गायति कावं वा । वामदेव्येन मदन्तीभिः शान्ति कृत्वा यथाप्रपन्नं निष्क्रम्य संस्थितायामुपसद्युत्करे तिष्ठन् सुब्रह्मण्यामाहूय यथार्थमेति ॥ २४ ॥

**प्रवर्ग्ये...मुपदेक्ष्यामः**[1] । प्रवर्ग्यो[2] नाम सोमाङ्गभूतः कश्चित् क्रियाविशेषस्तस्य तावत् पूर्वमेव चोदना कृता, प्रवर्ग्योपसद्भ्यां चरन्तीति । प्रथमे सोमे तु तस्यानित्यत्वं श्रुत्यन्तरसिद्धमवगमयितुं तदङ्गभूतानि तत्राविहितानि तानि विधित्सुराचार्यः प्रतिजानाति । प्रवर्ग्ये साम्नां लिङ्गतः परवचनतश्चोपस्थितानां गानस्य कालमुपदेक्ष्यामः ।

**यज्ञोपवीतं...कुरुते** । प्रवर्ग्य[3] आरभमाणे[3] यज्ञोपवीत्याचान्तो वेद्युत्करावन्तरेणासीनं होतारमपरेण परीत्य घर्ममभिमुखो घर्मस्यैव दक्षिणत उपविश्य मदन्तीभिर्गार्हपत्ये तप्ताभिरद्भिर्वामदेव्येन मार्जनं कुरुते इति । किमनादेशादुद्गाता, नैवम्, उत्तरस्माद् वाक्यात् प्रस्तोतेत्यवगम्यते । **तं यदा...गायेति** । तं कृतशान्तिकं यदाध्वर्युरेव संप्रेषति तत् तदाप्रभृति वक्ष्यमाणानि सामानि गायेति होतृब्रह्मसंप्रैषवचनमत्रानर्थकम् । नानर्थकम् । ब्रह्मणा प्रसवे कृते होत्रा चोपक्रान्तेऽभिषवे गानारम्भ[4] इति ज्ञापनार्थत्वात् । अथवा । प्रवर्ग्ये चोदनायामविधानात् साम्नामनित्यत्वं कश्चिदाशङ्केत तन्निरासार्थमसंशयनित्याभ्या ब्रह्महोतृप्रैषाभ्यां प्रस्तोतृसंप्रैषस्य सहवचनम् ।

**ब्रह्मजज्ञानं...त्रिर्गायति** । ब्रह्मजज्ञानं (जै. सं. १,३३.६) इत्येतयोः साम्नोः पूर्वं साम त्रिर्गायति । **आज्यमाने...शार्ङ्गम्** । महावीरे प्रथममाज्येनाज्यमाने शार्ङ्गं गायति । त्रीणि शार्ङ्गाणि, तेषामन्यतमं गायति ।

---

१ को. वक्ष्याम २ को. प्रवर्ग्या ३ को. प्रवर्ग्यमारभमाणेषु ४ को. ज्ञानारम्भ

नन्वसति कारणे प्रथमातिक्रमणमन्याय्यम्, सत्यमेतत् । अस्ति त्विह कारणं, यत् ब्रह्मजज्ञानं प्रत्तायामिति वाक्ययोः पूर्वग्रहणमुत्तरनिवृत्त्यर्थं करोति । शार्ङ्गाणामनियमः सिध्यति । अथवा विष्णुप्रवर्ग्यदिवसेषु त्रीणि क्रमेण गेयानि । पुनरपि एवमेव चतुर्थादिष्वपि विद्यमानेष्वावर्तेरन् । एवं यातयामदोषपरिहारः सम्भवति । कृतोऽपि भवति । अथवा यावन्तः प्रवर्ग्यास्तांस्त्रेधा विभज्य एकैकस्मिन् भागे क्रमेणैकैकं गायेत् । एवं भवतो यथासंख्यमनुगृहीतं भवति । **रुक्मउप...शुक्रम्** । रुक्म उपधीयमाने शुक्रं गायति । उपधाय रुक्मं वाधूलकाः संप्रेष्यन्ति । तथा सति पूर्वमेव संप्रैषाच्छुक्रं गेयम् । तत्र किं प्राथम्याच्छुक्रं त्रिर्गेयमुत प्राथम्यं जहदपि ब्रह्मजज्ञानीयमेव त्रिर्गेयम्, न त्रिर्गानमिति । अत्र ब्रूमः—न शुक्रमविधेस्त्रिर्गेयम्, न प्रथमम् । ब्रह्मजज्ञानीयत्रिर्गानस्येह प्रथमोत्तमधर्मत्वावगमात् । किं पुनः सकृदेव द्वे अपि, नैवम्, त्रिर्गाने विहिते सकृद्गातुमयुक्तत्वात् । का पुनर्गतिः, इयं गतिः, यथा शुक्रं तथा ब्रह्मजज्ञानीयमपि पूर्वमेव संप्रैषाद् गेयमिति । अस्य हि शस्कादिवत् अवयवकर्मभिन्नसम्बन्धोऽस्ति, एवं कृतेन भूयान् सिध्यति, क्रमः कृतो भवति, इयदेव सूत्रविहिताद् भिद्यते यदसंप्रैषं सामद्वयं गीयत इति । विधिक्रमश्च साम्नां सम्भवन्नेवमनुगृहीतो भवति । प्राथम्यं च ब्रह्मजज्ञानीयस्येत्युक्तं[1] भवति । अनङ्गमस्य प्राथम्यम् । शुक्रादिवत्[2] प्राथम्यमुपैतीति[2] चेन्न । अङ्गमेवास्य प्राथम्यं, प्रथमविहितत्वात् । शुक्रादिवच्च कर्मविशेषसम्बन्धेनापिधानात् ।

ननु संप्रैषपूर्वकत्वमस्यैव त्यक्तं भवति, न संप्रैषपूर्वकत्वं प्राथम्यवदस्यैव विशेषधर्मः । साधारणोऽयमेषां सर्वेषामपि, सौगत्या त्यज्यत इति नायुक्तं शुक्रस्यैव ।

**उत्तर···मभिधीयमाने** । अभिरत्रापरिभावते[3] वर्तते । उत्तरस्मिन् उत्तरस्मिन् द्रुमे महावीरस्योपरि धीयमाने चन्द्रं गायति । **धर्मे व्रतेच** । धर्मो महावीरः तस्येन्धने दीपने क्रियमाणे धर्मस्य । तत्र च धर्मव्रते गायति । नन्वत्र समुच्चये च शब्दो दृश्यते, यथा अग्नेश्च श्रैष्ठ्यं सोमस्य च व्रतमिति । इह च चशब्दाभावान्न समुच्चयो युज्यते । कथं पुन र्भवान् मन्यते, उत्तरंसामद्वयं पूर्वेण विकल्प्यते । यद्येवं, भवतोऽपि नानन्दितव्यम् । अदोषोऽपेक्ष इति । अन्यत्र हि विकल्पे वाशब्दो दृश्यते, यथा ककुभं वा कावं[4] वेति । तदत्र वाशब्दादर्शनाद् विकल्पोऽपि न युज्यते । किं च न प्रायेण वाशब्दादिभिर्लक्षणैर्विना विकल्पो दृष्टः । दृष्टस्तु समुच्चयो विनावाशब्दादिभिः । यथा रथन्तरं दैर्घश्रवसं[5] नौधसं समन्तम् आभीषवं यौधाजयमिति, होतुर्ब्रह्मण आज्ये इति च । तस्मात् समुच्चय एवात्र निश्चितः ।

**रुचिते घर्मस्य रोचनम्** । रुचिते घर्मे घर्मस्य रोचनं गायति, तदा पुनरयं रुचितो भवति यदा वदन्ति रुचितो घर्म इति । **राजनं···हूयमाने** । रौहिणौ नाम द्वौ पुरोडाशौ, तयोः पूर्वस्मिन् हूयमाने राजनं गायति । **गव्युप···ककुभं वा** । गवि वत्सेनोपसृष्टायां धेनुं वा ककुभं वा गायति । **प्रत्तायां···मरुतामिति** । पृत्तायां गवि गौर्धयतीत्यस्यामृचि ये द्वे श्यावाश्वे तयोः पूर्वं गायति । **दुह्यमाने···दोहीयम्** । पयसि दुह्यमाने दोहादोहीय गायति । शार्ङ्गवद्दोहादोहीययोरप्यनियमः । नैतयोरनियमः, नहि शार्ङ्गवदेनयोर्लिङ्गतः[6] साम्यमस्ति । विशेषविनियोगे हि लिङ्गं कारणं भवति । तच्चोत्तरस्मिन्नेवास्ति । उत्तरयोर्विधानयोः पयोग्रहणं करिष्यति, अत्रैव न करोति, यस्मादाहरणमासेचनं च बहूनामपि द्रव्याणां संभवति, दोहन तु पयस एव नान्यस्य संभवति ।

---

१ को. ०स्येत्यावतं २ को. तृतीयवत्यम्यतामपीति ३ को. ०रत्रोपरि०
४ को. कं वं ५ को. दैर्घश्रवसं ६ को. लैंगन्तः

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिध्यर्थमृग्यजुस्सामलक्षणम् ।। (मनुः)

इत्यादि दर्शनादपरिहारोऽयमिति चेन्न । तस्य प्रयोगस्य गौणत्वान्मुख्यो हि गोशब्दः पयोविषय एव विज्ञातव्यः । अविशिष्टायां दोहनचोदनायां पय इति लोकवेदयोः प्रतीयमानत्वात् । पयः...पयः । यस्मिन् काले पय आह्रियमाणं भवति, सकलं पय आह्रियमाणम् । नन्वेवमाह्रियमाणपय इति प्राप्नोति । सत्यमेतत् । विशेषणबहुव्रीहौ पूर्वं निपतति, विवक्षावशेन तु विशेषणविशेष्यभावस्यानियमो दृश्यते । यथा लोके—ब्राह्मण-गृहस्थो, गृहस्थब्राह्मणः, तस्करवृषभो वृषभतस्कर इति । यथा च वेदे तरुणदर्भा दर्भतरुणाः, महाराजश्रोत्रिया इति; तद्वदत्रापि पय आह्रियमाणेनाज्यं दधि वेत्यनया विवक्षया पयो विशेषणं भवति । पय आह्रियमाणे काले पयो गायति ।

अपरं मतम्—नायं समासः, पयोऽत्र आहरतिकर्म, ततः पय इति द्वितीया ।

नन्वभिहितेषु कर्मादिषु द्वितीयादयो भवन्ति; सत्यमेतत् । न त्विह कारकमभिहितं मन्तव्यम् । भाव एव आह्रियमाणशब्देनाभिहित इति कल्प्यम् । अयं त्वत्र दोषः, सकर्मकस्य धातोः भावोत्पत्तिरभ्यु-पगता भवति ।

अपरं मतम्—पय[1] इति सप्तम्यन्तशब्दः छन्दोऽभवदिति । अयमर्थः—पयस्याह्रियमाणे पयो गायतीति । अत्राप्ययं दोषः । यथा प्रत्तायामिति वाक्ये पूर्ववाक्यावस्थितस्यैव पयश्शब्दस्यानुवर्तनेनार्थसिद्धा-वुत्तरस्मिन् वाक्ये पयोग्रहणं व्यर्थं भवेत् । तस्मादुक्तसमासपक्ष एव साधीयान् । किञ्च घर्मोत्साद्यमान इति वक्ष्यति तत्र तावदवश्यमभ्युपगन्तव्यं समास इति । यत्तात्र लक्षण तदेवात्र भवति ।

**सिन्धु···पयस्यासिच्यमाने** । महावीरे पयस्यासिच्यमाने सिन्धु गायति । सिन्धु साम । सिन्धुरत्र पय आसिच्यते । सामवितितिर्गेयम् । अत्र ब्रूमः—गव्युपसृष्टायामिति गवाधिकारे विहितानि सामनि गव्येनैव पयसा संबंधमर्हन्ति[2] । प्रथममेव हि गव्यमासिच्यते । द्वितीयमाजं तृतीयमुभयं संसृष्टमिति सकृदेव गानं सिद्धम् । **वसिष्ठस्य शफौ परिगृह्यमाणे** । शफाभ्यां महावीरे परिगृह्यमाणे वसिष्ठस्य शफौ गायति । **ब्राह्मणस्पत्यं···पक्षौ वा** । आहवनीयं प्रति महावीरे ह्रियमाणे ब्राह्मणस्पत्यं वा व्रतपक्षौ वा गायति । व्रतपक्षपक्षे द्वौ, उभे प्रातरुभे सायमित्येकः पक्षः । पूर्वं प्रातः उत्तरं सायम् इत्येकः उत्तरपक्षः । किमवलम्बनम्, एकेन द्वयोर्विकल्पः । सत्यां गतौ युक्ततरः । शक्यते चैनयोः कालापेक्षया व्यवस्था कर्तुं, सा चेह विशेषतो युक्ता । यतः पूर्वमह्नः साम रात्रेरुत्तरम् । अहर्वै पूर्वाह्णो रात्रमपराह्णः इति श्रूयते इति । एतदवलम्बनं, या प्राणापानयो ऋक् सा तया गीत्या युक्ता व्रतपक्षावप्युपसर्पति । केचितु व्रतपक्षावनृचावेवेच्छन्ति, तत्र युक्ततरमास्थेयम् । किं वा संशयितसेवनयेति ब्राह्मणस्पत्यमेव गेयम् । **धर्मे···कावं वा** । उत्तरं गेयम् । कावशब्देनान्यत्रोपयुक्तासु कावम्, कावमन्यमिति । सामान्यचोदनायां हि प्रसिद्धग्रहणं न्याय्यम् । अयमेव न्यायः औक्ष्णोरन्ध्रादिष्वपि ।

**वामदेव्येन...यथार्थमेति** । पूर्ववच्छांतिं कृत्वा प्रपदनवर्त्मना उपनिष्क्रम्योपसदि संस्थितायामुत्तरे तिष्ठन् सुब्रह्मण्यां[3] समाहूय यथार्थं यथाप्रयोजनमेति । प्रयोजनवशेन गच्छतीत्यर्थः । अत्रैव कर्तव्यस्योत्तर-स्यापि कर्मणो विद्यमानत्वात् तदविरोधेन दूरगमनाभावार्थं यथाग्रहणम् ।

---

१ को. वय  २ को. महंति  ३ को. सुब्रह्मण्या

ननूपसदन्ते सुब्रह्मण्याह्वानं सुब्रह्मण्यकर्तृकं पूर्वमेव विहितं। तस्यैव किमिदं सुब्रह्मण्याह्वानस्य प्रस्तोतृकर्तृत्वं विकल्पेन विधीयते उतान्यदिदं प्रस्तोतुः सुब्रह्मण्याह्वानं विधीयते। अत्र ब्रूमः--नैदमुभयमप्यवकल्प्यते। पूर्वस्य समाख्याप्राप्तकर्तृपरित्यागो दोषः। उत्तरस्य निरुक्तामनिरुक्तामित्यवचने ऽन्यतरनिश्चयाशक्तेः प्रयोगासिद्धिकः पुनर् दोषःपक्षः। इमे ब्रूमहे—षोडशर्त्विजः सोमस्य विहिताः, तेषां यो यस्मिन् कर्मणि श्रुत्यादिभिः कारणैः विनियुज्यते स तन्निवर्तयति। तत्र यः षोडशपुरुषान् ऋत्विग्गुणयुक्तान् नोपलब्धुं शक्नोति तेनाप्यावश्यको मा हायि सोमयाग इत्येवमर्थमेकोऽपि बहून्यार्त्विज्यानि कर्तुं शक्यानि कुर्यात्, इति याज्ञिकैः निश्चितम्। तस्मिन् विषये प्रस्तोतुरस्यैव सुब्रह्मण्यया समानकर्तृत्वं स्यात्। मा भूदन्यस्येति ज्ञापनार्थम् प्रस्तोत्रधिकारे सुब्रह्मण्याह्वानमिदं कीर्तितम्। एवं चेत्, संस्थितं यामीत्यादिपदचतुष्टयमनर्थकम्। नानर्थकम्। पूर्वविहितमेवेदं सुब्रह्मण्याह्वानमनूद्यते, नापरं विधीयते इत्येतदवबोधनार्थत्वात्[1]। यौ देशकालौ पूर्वविहितया सुब्रह्मण्यया सह विहितौ तावेवात्राप्युच्येते। तत्र देशकालान्यत्वात् सैवेयं सुब्रह्मण्येति प्रज्ञायते।

हुतो ऽपि शान्तिं कुर्वद्भिः प्रस्तोता नाश्रयेत तान्।
तथैव सर्वोद्गातारः तानूनप्त्रं······मृशति ॥

इति [महोपाध्यायश्रीभवत्रातेन विरचितायां] जैमिनीयश्रौतसूत्रवृत्तौ प्रवर्ग्यसाधनविधिः
चतुर्विंशः खण्डः

---

१ को. दसोधनार्थत्वात्।

# अथ पञ्चविंशः खण्डः

अथ परिगाणानि । न गेयानि नाध्वर्युः संप्रेष्यति यदाध्वर्युः संप्रेष्यति गेयानीति । स्वे वा यज्ञे गायेद् यं वा श्रेयांसं कामयेत तस्य वा । दीक्षणीयायां ताक्ष्यर्यसामनी गायेत् । प्रायणीयायां प्रवद्भार्गवम् । आतिथ्यायामौशनं प्रेष्ठं वो अतिथिमिति । प्रवर्ग्ये च यथालिङ्गमुपतिष्ठेत् । अग्नेर्व्रतं सोमस्य व्रतं विष्णोर्व्रतमित्युपसत्सु । सदो निमीयमाने सदसा । हविर्धाने हविर्धानाभ्याम् । अग्निं प्रणयन्ति तदग्नेर्व्रतम् । अग्नीषोमौ प्रणयन्ति तदग्नेर्व्रतं सोमस्य चैव व्रतं तृतीयम् । पवित्रे राजन्यानीयमाने त्रीणि सोमसामानि गायेत् सोमः पवत इति यानि प्रथमादूर्ध्वम् । अहरहः सत्रे सत्रस्यर्द्धि गायेत् । संस्थिते ऽहनि पश्चाद् गार्हपत्यं यज्ञसारथ्यहीनैकाहेषु च । प्राक्छ्वःसुत्यां पश्चादेव गार्हपत्यमग्नेरगस्त्यस्यात्रेरिति राक्षोघ्नानि सामानि गायेत् । सर्वान् संश्रावयेद्यजमानान् सपत्नीकान् । अनूबन्ध्येषु च यथालिङ्गम् । औक्ष्णोरन्ध्रमुक्षणि । आर्षभमृषभे । वाशं वशायाम् । उन्नते त्रैककुभम् । आजीकमजे । पय आमिक्षायाम् । दधिनि दधिक्रम् । मधुनि मधुश्च्युन्निधनम् । आज्ये घृतश्च्युन्निधनम् । और्णायवमाविके मेषे च । अथोदयनीयायामुद्वत् । उदवसनीयायामुद्वंशीयम् । सौत्रामण्यां सुरायां सांशानानि सामानि गायेत् ।

अथ परिगाणानि । अथानन्तरं परिगाणानि वक्ष्यामः । उपदेक्ष्याम इति वानुवर्तयितव्यम् । यतश्चैनानि स्तोत्रान्तर्भावेन न प्रवर्तन्ते ततस्तानि परितः स्तोत्राणि वर्तन्त इति परिगाणानि भवन्ति ।

न गेयानि···गेयानीति । प्रथममेव तावत् परिगाणानि गेयान्यगेयानीति विचार्यन्ते । यदि हि गेयानि स्युस्तदैव हि विधेयानि, यतश्चैतानि गेयान्यगेयानीति संशय्यन्ते । ततो वयं मन्यामहे लिङ्गत एवैषां दीक्षणीयादिषु प्रवृत्ति र्न वचनादिति । वचनप्राप्तौ हि सत्यां न युक्तम् । संशन्ति तं न तावत् परिगाणानि गेयानि । कुतः इति चेन्नैतान्यध्वर्युः संप्रैष्यति । यच्चाध्वर्युः गेयानि प्रवर्ग्यसामादीनि संप्रैष्यतीति इतः कारणादित्यर्थः । हेतावपि हि इष्ट इति हि शब्दः । 'यथाभिरूपामिष्टां कन्यां ददाति' । इदं चास्य वाक्यस्य दृष्टान्तत्वेन लौकिकं वाक्यमनूद्यते । वर्षासु सूर्य उदितो नेति संशये वदन्ति नोदितः सूर्यः, कमलानि हि विकसन्ति, यतस्तानि विकसन्ति उदितः सूर्य इति, तद्वदिदं द्रष्टव्यम् । अत्रैवमर्थयोगस्तस्माद्र यानि सामान्यग्न्याधेयप्रवर्ग्याग्निचयनघर्मोद्वासनावभृथेष्वध्वर्युः संप्रेष्यति । न च ताक्ष्यर्यसामादीनि संप्रेष्यति, तस्मादेतानि न गेयानि इति ।

---

१ को. एवेषां

नन्वरणिसन्निधानादौ नाध्वर्युः संप्रेष्यति, गीयन्त एव सामानि, ततो ऽपि पक्षे सद्भावादयुक्तो हेतुः। नाध्वर्युः संप्रेष्यतीत्यत्र ब्रूमः—एष्वध्वर्युसंप्रैषो नास्ति तानि सर्वाणि पक्षभूतान्येवात्राभिप्रेष्यन्ते। यद्धि गानमस्तोत्रान्तर्भूतं तत्सर्वं परिगाणमिति शक्यं वक्तुम्। तद्वतंचेराङ्गीरस्य सोमेत्येवमादीन्यपि तार्क्ष्यसामादीनि वेदानीमगेयान्येव संवृत्तानि। अथवा। वाचनिकमरणिसन्निधानादौ सामगानं मन्तव्यम्। यः स्वयं विचारो गेयान्यगेयानीति स लिङ्गतः प्रवृत्तेषु तार्क्ष्यसामादिष्विति व्याख्यायां विपक्षमयं हेतुर्नोपसर्पति।

**स्वे वा यज्ञे गायेत्**। स्वस्मिन् वा यज्ञे गायेत्। सत्रे वा गेयमित्यर्थः। तत्र हि यजमानैरेवार्त्विज्यं क्रियते। अतः प्रस्तोतुरपि स्व एव स यज्ञो भवति। पूर्वमेव हि प्रस्तोतृगेयत्वं परिसाम्नामवोचाम। वा शब्दः पक्षव्यावृत्त्यर्थः। अधस्तने वाक्ये प्रतिषिद्धत्वात् परिसाम्नां सत्रे ऽप्यगानमेव प्राप्तम्। स पक्षो वाशब्देन निवर्त्यते। किं पुनरयं विकल्पार्थो न गृह्यते, सत्रे गायेद् वा न वेति। अत्र ब्रूमः—विकल्पार्थे ऽपि अस्मिन् सति न महान् दोषः, किन्तूत्तरस्मिन् वाक्ये द्वौ वाशब्दौ स्तः। तत्रैकेन विकल्पे समुच्चये वा सिद्धे इतरस्यावश्यं पक्षव्यावृत्त्यर्थता ग्राह्या। तत्तुल्यत्वमृज्वागनमस्य नोत्सृष्टव्यमिति कृत्वा पक्षव्यावृत्त्यर्थोऽयं निश्चितः। ततः सत्रे नित्यानि परिगाणानि। अपर आह—स्वे इत्यग्निष्टोमस्य प्राकृतस्याख्या। एवं हि श्रूयते— तदाहुः प्रथमं यजमानोऽतिरात्रेण यजेतेति[२] स्वं च ह्यनिमन्यते[३] द्वौ च यज्ञौ[४] तत्र ब्रह्म वा अग्निष्टोमो ब्रह्म वै ब्राह्मणस्य स्वमग्निष्टोमं च ह्यतिमन्यते उक्थं च षोडशिनं चेति। अयं ग्रन्थः स्वशब्दमग्निष्टोमाभिधायिनमवगमयति। तस्मात् स्वे यज्ञे गायेत्। अग्निष्टोमे गायेदित्यर्थः। एवं चेद् गायेदित्येवास्तु स्वे यज्ञ इति प्रकरणादेवाग्निष्टोमसम्बन्धः सिध्यति। सत्यमेतत्। अवधारणार्थं तु स्वे यज्ञ इत्युक्तम्। स्व एव यज्ञे गायेन्नान्यदिति। ततः सिद्धं नात्यग्निष्टोमादिषु, न च विकृतिष्विति। इयमनयोर्ज्यायसी व्याख्या। अयं वास्या वा एवं स्थितम्। यः स्वे यज्ञे[३] ततोऽन्यत्र न गेयानीति, स पक्षो वाशब्देनैकेन निवर्त्यते। विधिस्त्वयमेकेन विकल्प्यते। **[यं वा श्रेयांसं कामयेत तस्य वा]** यं वा पुरुषं श्रेयांसं कामयेत प्रस्तोता तस्य यज्ञे[४] गायेद्वा नवेति। न ऋत्विजो यजमानस्य श्रेयस्त्वं नित्यमेव कामयन्ते। किमर्थं विशेष्यते यं कामयेतेत्यत्र ब्रूमः—द्विविधा यष्टारो, ये च फलमभिसन्धाय प्रवर्तन्ते, ये च किञ्चिदनभिसन्धाय विहितमवश्यं कर्तव्यमित्येव शुद्धेन मनसा प्रवर्त्तन्ते। तत्र ये फलमनभिसन्धाय प्रवर्तन्ते तेऽन्येभ्यः[५] श्रेयांसो भवन्ति। तथा च भगवद्गीतासु[६] श्रूयते—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥ (भ. गी. २.४७.)
अनाश्रितः कर्मफलं कार्यं कर्म करोति यः
स संन्यासी च योगी च न निरग्निर्नचाक्रियः॥ (भ. गी. ६.१.)

इति च। ततोऽय वाक्यार्थः, यं श्रेयांसं फलाकांक्षिणं कामयेत मन्येत तस्येति। यं लोकश्रेयांसं कामयेतेति वा योज्यम्। एवं तावदिमानि परिगाणानि स्वे यज्ञे नित्यानि, यस्तु श्रेयान् काम्यते तस्य न यज्ञे

१ को. कालानिहिन २ को. यजतेति ३ को. मन्यन्ते. ४ को. यज्ञ

१ को. स्वरशब्द २ को. प्रकरणादेवाद्यग्निष्टो० ३ को. यज्ञ ४ को. यज्ञो

५ को. तेऽन्ये ६ को. भगवान् गीतासू ७ को. काङ्क्षसामनी

वैकल्पिकानि भवन्ति । तत्र पुनरेवं ब्रूमः—उभयत्रापि नित्यान्येवेति । तत इदं वर्ण्यते, समुच्चये वाशब्दो न विकल्पे इति । समुच्चयश्च पूर्वं विधिमपेक्ष्य क्रियते । अयमर्थः— यं विशेषेण श्रेयांसं कामयेत तस्य च यज्ञे गायेत् । न केवलं यज्ञ एवेति । एवं च सति यद् यज्ञस्य श्रुतं फलं तस्योत्कर्षकराणि परिगाणानीति मन्तव्यम् । ततः फलोत्कर्षाद् यजमानः श्रेयान् भवति ।

**दीक्षणीयायां तार्क्ष्यसामनी गायेत्** । दीक्षणीयायामिष्टौ तार्क्ष्यसामनी गायेत् । **प्रायणीयायां प्रवद्भार्गवम्** । प्रायणीयायामिष्टौ प्रवत् भार्गवं गायेत् । **आतिथ्या...अतिथिमिति** । आतिथ्यायामिष्टौ "प्रेष्ठं वः" (जै. स. १.१५) इत्यस्यां यदौशनं तद् गायेत् । औशनमित्युक्ते प्रसिद्धमौशनं तत्स्यादिति मत्वेदमृचा विशेष्यते, ततः संभ-वामदेव्य-कावादिषु प्रसिद्धं प्रसिद्धग्रहणम् । **प्रवर्ग्ये च ..मुपतिष्ठेत** । प्रवर्ग्ये च यथालिङ्गवन्ति सामानि, तैरुपतिष्ठेत । कानि पुनरत्र लिङ्गवन्ति, यानि घर्मशब्दवन्ति, नवा अनुगानादीनि, त्रीण्युत्तरं वैश्वानरव्रतमुद्यन् लोकानित्यादीनि[1] । कदा पुनरिमानि गातव्यानि, ऊर्ध्वं कर्मव्रताभ्यां प्राक् घर्मस्य रोचनात् तदैव ह्यस्त्येषामवसरः । यद्येषामपरिनिष्ठिते रुचितो घर्मः स्यात् गीयमानं साम समाप्यैव घर्मस्य रोचनं गायेत् । तत्र त्रिरभ्यासो गातुः प्राङ्मुखसंस्थानासनयोरनियमश्च । परिगाणधर्माश्च[2] वक्ष्यन्ते । प्रवर्ग्यसामानि उदङ्मुखेनासीनेन सकृद् गेयानि । प्रथमोत्तरयोरेव हि त्रिरभ्यासः तत्रैषां लिङ्गाद् गीयमानानां नवानुगा[ना]-दीनां परिगाणत्वाविशेषात् त्रिरभ्यासादयो धर्माः प्राप्नुवन्ति तेषां निवर्तनार्थं गायेदित्यनुवर्तमानेनैवार्थ-सिद्धौ सत्यामपि उपतिष्ठेतेति शब्दान्तरेण विधिः क्रियते । ततः शब्दान्तरचोदितसाधर्म्यान्तरग्रहणमेषां सिद्धम् । तस्मान्नित्ये प्रवर्ग्यसामभिस्तुल्यधर्मतैषां भवति । अस्मिन्नर्थे ऽन्यदपि ज्ञापकमुद्भासनाधिकारे ऽवादिष्म । इह घर्मस्यादित्यसंस्कृतत्वादस्मद्ब्राह्मणे ऽपि—तद्यज्ञस्य शिरो छिद्यतेति सोऽसावादित्यः स उ हि प्रवर्ग्यः इति दर्शनात् व्रतशुक्रियाण्यपि लिंगवन्ति भवन्ति ।

**अग्नेर्व्रतं...मित्युपसत्सु** । इति करणः समुच्चयार्थः । त्रीण्येतान्युपसत्सु गायेत्, यदुक्तं शाङ्र्गेषु तत् सोमव्रतेष्वपि तुल्यम् । किं च तृतीयस्य सोमव्रतस्याग्निष्टोमप्रणयने विधास्यमानस्य यातयामदोषः सति सम्भवे परिहार्य इति कृत्वा ते एवेह सोमव्रतैवादाय तयोः पूर्वं पौर्वाह्णिक्यामुपसदि गेयम् उत्तरमपराह्णिक्यामिति अयमप्यत्रैकः पक्षः । अयमेव च तेभ्योऽभिमततरः ।

**सदो...सदसा** । सदः सदसोपतिष्ठेत । तस्मिन् काले मीयमाने तस्मिन् । मीयमान इति विकरण-व्यत्ययश्छान्दसः । बहुस्थूणं सदः तत्र या स्थूणा प्रथमं मीयते[3] तस्यां साम गायेत् । औदुम्बरी कैश्चित्तत्र केचिद्वदन्ति । यदप्यन्या स्थूणा प्रथमं मीयते, तस्यां साम ( न ) गायेत्[4] । तामतिक्रम्य[4] औदुम्बर्यामेव साम गायेत् । सैव स्थूणानामभ्यर्हितेति[5] । गुरवस्तु ब्रुवते— सदोऽङ्गमेतत् साम, न तत् स्थूणाङ्गम् यदा च सदो मीयते सोऽस्य काल इत्युक्तं तत्र । यथा लोके शालायां मीयमानायां वाचयति शाला मीयत इति चावगच्छन्ति तद्वदत्रापि सदसः प्रथमायामेव स्थूणायां मीयमानायां सदो मीयत इत्यवगम्य सामैतद्गेयमिति ।

**हविर्धाने हविर्धानाभ्याम्** । हविर्धाने अनसि हविर्धानाभ्यामुपतिष्ठेत । कदेति चेत्, यदैते स्वस्थानं प्राप्ते तदोपतिष्ठेत् । **अग्नि...अग्नेर्व्रतम्** । यदाग्निं[6] प्रणयन्ति तदाग्नेर्व्रतं गायेत् । प्राणीयमाने गायेदित्यर्थः ।

---

१ अत्र मन्त्रप्रतीके संभ्रमः २ को. परिगानधर्माश्च ३ को. त्रुटितः पाठः
४ को. गायेथामिति० ५ को. स्थूणानामभ्यर्हिते ६ को. यदानीं

केचिदग्निं प्रणीय हविर्धाने प्रवर्त्य सदो मिन्वन्ति । तत्र साम्नां सिद्धक्रमविघातमेवमन्यत्राप्युपलक्ष्य कर्मक्रमानुरोधः कार्यः ।

अग्नीषोमौ...व्रतं तृतीयम् । यं यदाग्नीध्रीयमग्निं च सोमं च प्रणयति तदाग्नेव्रतं चैव यच्च[१] तृतीयं[१] सोमव्रतं तच्च गायेत् । प्रणीयमानयोर्गायेदित्यर्थः । अपरं व्याख्यानम्—अग्निं प्रणयन्ति, उत्तरविवक्षयैतच्चोदितम् । तदग्नेव्रतम् यत्राग्निः प्रणीतः । तत्राग्नेव्रतं गायेत् । [यत्र सोमस्तत्र] सोमस्य । सोमस्य व्रतमित्यर्थः । पूर्वस्मिन् व्याख्याने प्रथमा क्रियाङ्गसाम भवन्ति । यस्य च कर्मणः सामाङ्गं तद्देशापन्नेन गातव्यम् । वक्ष्यति हि तत्तत्कर्मार्पण इति । प्रणयनं खल्विदमग्नेरग्नीषोमयोः शालायामारभ्य महावेद्यन्तमाग्नीध्रागारमाहविर्धानं च बहुभिर्देशविशेषैः संबध्य निस्तिष्ठति । न यत्रोपक्रमस्तत्र । एवं च सति स्थितेनासीनेन वा गीयमाने कर्मदेशा[प्ति]विहन्येतेति । प्रजतेति प्रसजति । तदप्रसंगादुत्तरं व्याख्यानं साधीयः । प्रणयनारम्भदेशमेव चापन्नः प्रणयनदेशापन्नो भवति, ततः शालायामेव [संस्थिते[२] ऽहनि[२]] पश्चाद्गार्हपत्यं, गार्हपत्यस्य पश्चाद् वर्तमानः सत्रस्यर्धि[३] गायेत् । गायेदित्यस्यापि नित्यत्वार्थं यज्ञसारथ्यमहीनेष्वेकाहेषु[४] च । प्राक् सुत्यायाः सुब्रह्मण्यायाः पश्चादेव गार्हपत्यमुपवर्तमानो यज्ञसारथिं गायेत् । अथ वाक्यद्वये ऽपि गार्हपत्यस्येति वक्तव्ये द्वितीयाप्रयोगाद् गार्हपत्यमीक्षमाणः तस्यैव पश्चादिति व्याख्येयम् ।

ननु यज्ञसारथिं विधाय सोमसामानि विधातव्यानि क्रियाक्रमानुरोधाय । सत्यमेतत्, किन्तु अहीनैकाहेष्विति वचनमस्य सत्रेष्वभावार्थं, तत्र यदिति या क्रमानुरोधेनायं विधिरकरिष्यत सोमसाम्नामप्यभावः सत्रेष्वाशंक्येत, तत्परिहारार्थमत्रायं विधिः कृतः । एवमपि सत्रार्थं सत्रस्यर्धिनः पूर्वमहीनैकार्थं यज्ञसारथि विधातव्यम् । सत्यम्, एतदपि प्राक् श्वःसुत्यामिति यज्ञसारथिनः कालो विहितः । स एव वक्ष्यमाणानां रक्षोघ्नानामपीष्यते ।

ननु यः सत्रस्यर्धिनः कालासंस्थिते ऽहनीति[५] तत्सिध्यर्थं राक्षोघ्नसन्निकर्षेण यज्ञसारथिर्विधीयते । अग्नेः गायेदिति शब्दः समुच्चयार्थः । एतेषामृषीणां रक्षोघ्नान्येतैर्दृष्टानि प्राक् सुत्यायाः[६] गायेत् । द्वयोरनयोर्वाक्ययोः अहरहरित्यनुवर्तते । नानुवर्तते । यदि ह्यनुवर्तते, पूर्वस्मिन् वाक्ये पश्चाद्गार्हपत्यमिति वचनमनर्थकं भवेत् । तत्रापि हि सत्रस्यर्धिवाक्यादेवानुवर्तेत । तथा सिध्यति यत्तत्र पश्चादेव गार्हपत्यमिति वदति तज्ज्ञापयति, नानुवृत्तिरस्येति । तस्मादनियतदेशानि राक्षोघ्नानि । किं पुनः सर्वेषां राक्षोघ्नानामेतद्दृष्टिदृष्टानामत्र गानमाहोस्वित् त्रयाणामेव, सर्वेषामिति ब्रूमः । यदि त्रयाणामेवैषिष्यत त्रीणीत्यवक्ष्यत । सोमेस्विव सत्रार्थानि चैतानि तदुत्तरस्मिन् वाक्ये विवरिष्यते । अपरो मार्ग :— यज्ञार्हेषु अहरहः संस्थिते ऽहनि पश्चाद् गार्हपत्यमिति सर्वमनुवर्तते । अस्मिन् पक्षे विधिक्रमं प्रयोगक्रमो नातिक्रामति ।

नन्विदं प्रकृत्युपयोगात् सत्रस्यर्धिनः पूर्वं विधेयमत्र ब्रूमः—अहरहरहीनैकाहेषु यज्ञसारथिर्गायेत्, संस्थिते ऽहनि पश्चाद् गार्हपत्यमिति कृते ऽहरहरिति वीप्सावचनमहीनार्थकमेव माभूत्, एकाहार्थमप्येतदस्त्विति कृत्वा कालवाचिनामेवाहः शब्दं प्रसिद्धम् । उगोदये सूर्येऽस्तमिते गायेत् इति कल्पयितुं प्रसजेत् । इत्थं तु कृते सत्रस्यर्धि वाक्यात्स्थितस्याहरहश्शब्दस्य कर्मविशेषवाचिनः कृतार्थसाकल्यस्येहानुवर्तनं क्रियमाणमहीनार्थमेवापि सन्नानुपपन्नं भवति ।

---

१ को. य आतृतीयं २ को. षे त्रुटितः पाठः ३ को. सत्रस्यर्धि
४ को. यंजपत्यम० ५ को. हन्मीति ६ को. सत्याय

**पय आमिक्षायाम्** । पशुभ्योऽन्योऽपि द्रव्यविशेषः अनूबन्ध्यास्थानमापद्यते[1] तथाभावे सत्यामिक्षायां पयो गायेत् । इह विधानगतं लिङ्गं दधिकुम्भसामगतं लिङ्गमभिधानसारूप्यं च ।

**मधुनि मधुश्च्युन्निधनम्** । इह च पूर्ववत् । **आज्ये घृतश्च्युन्निधनम्** । **और्णायवमाविके मेषे च** । आविक इति स्वार्थे तद्धितप्रयोगः । अत्रौ मेषे च अनूबन्ध्ययोः[2] और्णायवं गायेत् । ऊर्णेत्यविलोमनाम, ततोऽविरूर्णायुः । एवमिहाभिधानसारूप्यसिद्धिः । अवावेवं सिध्यतु कथं मेषे, इदमुच्यते --अविजातेरेवेयमवान्तरजातिः या मेषजातिः । यथा पशुजातेर्गोजातिः । अजजातिरिति कुत इति चेत्, मेषस्याप्यविशेषशब्दो न लोके व्यवहारदर्शनात् । युक्ते च मेषवाशौ प्रैषेष्वपिशब्देन निर्देशात् । तथा चाश्वलीय उक्तम्---उष्ट्रो गौर्मेषोऽविको हयोऽश्व इति । ततो मेषेण दुश्शकमनाविना भवितुम् । यदेवमपेयमावि किमिति सिते मेषीपयो व्यपेयं भवति । नायं पर्यनुयोगः । पर्याप्तो बाधितुमपेयमेव मेषीपय इति ह्यस्माकं सिद्धान्तः[3] । क्वचिदस्य शिष्टैरपि दृष्टं पानमिति चेत्, नापरस्मृतिविरुद्धप्रमाणं भवितुमुत्सहते, यथा वनमारस्य ततो मेषस्याप्यूर्णायुत्वादभिधानसारूप्यादेवौर्णायवमस्मिन् भवति । सर्वेषामनूबन्ध्यासाम्नां[4] विधानादेव सिद्धे यथालिंगमुक्तमनर्थकम् । नानर्थकम् । उक्षण्यौक्ष्णो[5] रन्ध्रमिति च पय आमिक्षायामिति च लिंगोपादित्सया वचो विहित इति ज्ञापनार्थत्वात् । सिद्धमन्यत्रापि यथालिंगमुपादेयेषु सामसु स्पन्दलिंगानामभावे ईदृशैरपि[6] शब्दलेशैश्च लिंगत्वं साम्नामवधार्य ग्रहणं नादित्यादिषु पशुषु । आदित्यादिदेवतानि अदितिलिंगानि च न सन्ति सामानीति विरमे ।

**अथोदयनीयायामुद्वत्** । इह यज्ञप्रयोगे बहुशः प्रायणस्तुल्यमुदयनं बहुविधं दृष्टमिति च इष्टयोश्च प्रायणीयोदयनीययोस्तुल्यरूपत्वात् प्रवद्भार्गवसरूप्यात् जागतमेवोद्वद्गेयं नानुष्टुभः । इह तैत्तिरीयाः---प्रागनूबन्ध्यायाः उदयनीयया चरन्ति ।

**उदवसानीयायामुद्वंशीयम्** । वेदयजनाद् गृहान् प्रतिनिवृत्तो मध्य उदवसानीय इष्ट्वा च यजते । सोदवसानीयानामपीह केचिदिष्टिकप्रतिनिधिभूतां पर्णाहुतिं तस्यामपि गेयम् । इष्टिप्रतिनिधित्वाद् अविरोधाच्च ।

**सौत्रामण्यां'''सामानि गायेत्** । सौत्रामणी नाम हविर्यज्ञः सुरापशुपुरोडाशद्रव्यम् । सौत्रामण्यां या सुरा तस्यां सांशानानि[7] सामानि गायेत् । द्विविधा सौत्रामणी, काचिदग्निवाजपेयादीनां क्रतूनामङ्गभूता, काचित् पृथगेव कर्तव्या फलाय । तत्र क्रत्वङ्गभूतायां यः क्रतोः परिगाता स एव गायति प्रस्तोता । अन्यस्यां तु अधिकृतस्य गातुरभावात् संशयः, किमेषामेषामेहनार्थं कश्चिदुपादेय उत यजमान एतानि गायेदिति । किमत्राप्राप्तमित्युच्यते -- नास्य संशयेऽस्य विषयोऽस्ति, क्रत्वङ्गभूतायामेव सौत्रामण्यामिमानि विधीयन्ते, क्रत्वधिकारान्नेतरस्यामिहाधिकाराभावात् । यथा वक्ष्यमाणानि पशुबन्धसामादिक्रत्वङ्गभूतेष्वेव पशुषु भवन्ति न विरूढेषु तद्वत् । सामानीत्यनर्थकम्[8] । नानर्थकम् । यथैतानि सामानि स्युः तथा गायेदित्येतदर्थत्वात् । उदग्भावो ह्येषामप्रथमानानां श्रूयते तत्रासति यत्ने यथापामेव गायेरन् इति कृत्वा कृतोऽयं यत्नः । ततः

---

१ को. अमूसन्ध्या०  २ को. अनूसंध्ययोः  ३ को. सिद्धान्ताः
४ को. सामां  ५ को. ऊक्षण्यौ  ६ को. ईदृशीरपि
७ को. सामिशानानि  ८ को. सामनीत्य०

सिद्धं[१] प्रथमं[२] संपाद्योत्तराण्यपि[२] गेयानीति । एवमप्यनुषंगन्यायादेवास्यार्थस्य[३] सिद्धेरयं यत्नो ऽनर्थकः । नानर्थकः । अनुषंगन्यायानित्यत्वज्ञापनार्थत्वात् किमतः सिध्यति, अनश्नत्संहितायामेषामन्येषां चानुषंगाभावः सिध्यति । गायेदित्येषां नित्यत्वार्थं, सोमसामवत् ।

केचिदुद्गातृगेयत्वं, गायेदिति[४] पुनर्विधौ ।
इच्छन्ति, नेयतोद्गाता, स्वापः स्वाप तु नित्यता ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ परिगाणविधिः[५]
पञ्चविंशः खण्डः

---

१ को. सिद्धः २ को. प्रथमसंपाद्यो० ३ को. एवमप्यरूषंकगण्यया
४ को. गेयेदिति ५ को. परिगानः

# अथ षड्विंशः खण्डः

**अथ पशुबन्धेषु । सावित्राणि सावित्रे । आग्नेयान्याग्नेये । ऐन्द्राण्यैन्द्रे । वैश्वदेवानि वैश्वदेवे । प्राजापत्यानि प्राजापत्ये । यथालिङ्गं च यथादैवतं चान्येषु । तेषां यानि पशौ शिष्टानि वपान्ते तानि गायेत् । प्रदानकाल उपसत्सु चेष्टिषु च । तानि तत्तत्कर्मापन्नो यज्ञोपवीती प्रागावृत्तस्तिष्ठन्नुपविष्टो वा मध्यमया वाचा गायेत् । तेषां यानि तृचस्थानि तृचेषु तानि गायेत् । यान्येकर्चानि त्रिस्त्रिस्तानि तृचेप्सतायै । तत्र पदाय पदाय स्तोभाननुसंहरेदित्याचार्यसमयः । यथाधीतान्येव गेयानीत्यनुब्राह्मिणो वचनात् । तस्मान्मन्त्रैकदेशाभ्यासः स्याद् उद्वासनीय एव सर्वो निधनमुपेयादवभृथसाम्नि च । न वार्षाहरे । आवर्तिव्रतशुक्रियेषु चतुःकर्मापन्नाः कुर्युः । भ्राजाभ्राजाभ्यां तूपद्रवनिधने त्रिरुक्ते स्याताम् । कस्य हेतोरिति । एकविंशे भवतः । सर्वमावर्ति पञ्चोक्तं महाव्रते । अन्यत्र प्रक्षावेभ्यः प्रक्षावेभ्यः ।। २६ ।।**

**इत्यग्निष्टोमस्य जैमिनिसूत्रं समाप्तम् ।**

**अथ पशुबन्धेषु ।** अथानन्तरं पशुबन्धेषु क्रत्वङ्गभूतेषु गेयानि सामान्युपदेक्ष्यामः । अनूबन्ध्येषूपदिष्टत्वादग्नीषोमीयसवनपश्वर्थमिदमुच्यते । [ **सावित्राणि** ] **सावित्रे ।** सवितृदेवत्यानि सावित्राणि, सवितृदृष्टानि च सावित्राणि । सावित्राणीत्यवधारणमिह शक्यम् । सोमसामानि[1] त्रीणीति विशेषणात् त्रीण्येव हि तानि प्रथमादूर्ध्वं सन्ति । सिद्धे तु त्रित्वे त्रीणीति तत्र वचनमन्यत्र बहुश्रुतौ साम्नां त्रित्वमेव नावधार्यमित्येतदर्थम् । किं पुनरिहाश्रयणीयम्, यच्छ्रुतं तदाश्रयणीयम् । बहुत्वं च श्रुतं नान्यत्, ततो बहूनि गेयानि, नास्ति संख्यानियमः । एवं चेद् राक्षोघ्नसांशानानामपि सर्वेषां ग्रहणमुक्तं न सिद्ध्यति, शक्यत्वात् सिद्ध्यति । शक्यारम्भप्रसङ्गदोषाद्धि पशुष्विह सर्वग्रहणपक्षो निरस्तः । ततः सिद्धं पशुबन्धेषु त्रीणि चत्वारि पञ्चेति यथावसरं सामानि गायेदिति ।

**आग्नेयान्याग्नेये । ऐन्द्राण्यैन्द्रे ।** [**वैश्वदेवानि**] **वैश्वदेवे ।** [**प्राजापत्यानि**] **प्राजापत्ये ।** इह प्रयोगसौकर्यार्थं कानि चित् परिगणयामः । द्वे च मौक्षे । दोषो आगाद् (जै. सं. १.१९.३) इति चैवमादीनि सावित्राणि । आग्नेयान्यैन्द्राणि प्रस्थिततराणि त्वमिन्द्र प्रतूर्तिषु[2] (जै. सं. १.३२.९) तृतीयम्[3] । चतुर्थं वृषापर्वीयम् । विश्वेषां देवानां व्रतश्रुति योष इति वैश्वदेवानि परमेष्ठिनः । प्राजापत्यं प्रजापते रक्षं प्रयस्व । प्राजापत्यमिति मुख्यानि प्राजापत्यानि, बहूनि चान्यानि निधनकामादीनि ।

**यथालिङ्गं[4] च यथादैवतं चान्येषु ।** उक्तेभ्योऽन्येषु यथालिङ्गं च यथादैवतं[5] चान्विष्य सामानि

---

१ को. सोमयान्  २ को. प्रतूर्तीयं  ३ को. नास्ति
४ को. यथान्वेषु  ५ को. यथादेवतं

गायेत् । येन केनचिल्लिङ्ग न तं पशुमनुगतानि वा, या तस्य पशोर्देवता तद्देवत्यानि वा गायेदित्यर्थः । अत्र लिङ्गं बहुधोपादीयते । क्वचित् पशुगतो गुणः सामम्न्युपलक्ष्यमाणो लिङ्गं भवति । यथा धेनौ द्व्यनुगानं गृह्यते[1] । क्वचित् स एव सामनि, यथर्षभऋषभः पावमानम् । क्वचित् स एवोभयस्मिन् । यथा वृषो वृषक वृषाणि । क्वचित् पशुजातिः साम्न्युपलक्ष्यमाणं भवति । यथा रोद्रे पशौ कावषे वास्तोष्पतित्वं हि रुद्रस्य गुणः[2] । क्वचित् स एव सामनि । यथा तस्मिन्नेव मार्गीयवम् । क्वचित् स एवोभयस्मिन् । यथा वारुणे पाठव्रते अधिष्ठानं हि वरुणस्य आपः (जै॰ सं॰ ४. २९. २) । क्वचिद् देवता लिङ्गं भवति । यथा मैत्रदौशनशैरीषाणि । क्वचित् सैव सामनामनि, यथा तस्मिन्नेव सौमित्राणि, त्वाष्ट्रे च त्वाष्ट्रीयसामानि । क्वचित् सवोभयस्मिन् । यथा वैश्वकर्मणे पुरां भिन्दुर् (जै. सं. १.३७.८) इति वैश्वामित्रम् । अथवा क्वचिद् देवतासम्नि । यथा त्वाष्ट्रे । क्वचित् सैव सामनि[3] । यथा अदितिदेवत्ये कदा चन (जै. सं. १.३१.८) इत्यदितिसाम । क्वचिदेवोभयस्मिन् । यथा वरुणे घृतवती (जै॰ सं॰ १. ३९.९ ।।) इति वरुणसामनि[4] ।

अथ यथादैवतमिति[5] । यद्दैवत्यः[6] पशुः स्यात् तद्दैवत्यं साम तस्मिन् गायेत् । तद्दृष्टं वा । कथं पुनरिदं विज्ञेयम् इयमस्य साम्नो देवतेति, इत्थं विज्ञेयम्—या देवता[7] च साम्न इति । श्रूयते च— किंदैवत्यं साम वैयाघ्रपद्येति तद्दैवत्यासु स्तुवत इति होवाच तद्दैवत्यम् इति । ततः सारस्वते पावका नः (जै॰ सं॰ १. २. ५) इति भारद्वाजं गायेत् । ऐन्द्राग्ने वाचं साम इन्द्राग्नी अपात् (जै॰ सं॰ १. २९. ९) इति । या सौर्ये या च देवता साम्नैव स्तूयते सावित्रस्य देवता भवति । ततः सौम्ये असावि[8] सोमो[8] (जै॰ सं॰ १. ५७. ९) इति गायेत् । ततश्च वरं तत्सदृशे वा दैवत्ये[9] । एवं चेद् यथालिङ्गम् इत्येतावतैव सर्वं सिध्यति, लिङ्गेनैव हि देवता ज्ञायते, तस्माद् यथादैवतमित्यनर्थकम्[10] । नानर्थकम् । यथादैवेतं[11] गानमितरस्मान्मुख्यमिति[12] ज्ञापनार्थत्वात् ।

नन्वसत्यपि यत्नेऽनुक्रान्तात् प्रकाराल्लेशसंगीताल्लिङ्गितात्[13] लिङ्गाद यद्देवत्यः पशुस्तद्देवत्यानां तद्दृष्टानां वा साम्नां गानं मुख्यं भवत्येव, ततः पुनरेव यथादैवतमित्यनर्थकम्[14] । नानर्थकम् । प्रत्यक्षं तद्दैवत्याश्रयणे यथाकथंचिद् देवतामाश्रित्य तान्येतान्यैतानि सामानि भवितुमुत्सहेरन् तानि गायेत् । तथाप्यसम्भवे यथालिङ्गमित्येतदर्थत्वात् ततोऽग्नीषोमीये पशौ इमम् षु (जै॰सं॰ १.३.८) इत्याग्नेय्यामृचि । सोमेन दृष्टं साम सौमिषु च अयं विचर्षणिर्हितः (जै॰ सं॰ १.५२.१२) प्र सोम देववीतये (जै॰ सं॰ १ ५३.४) पवस्व देववीतये (जै॰ सं॰ १.५८.६) । इति । एतासु चान्यान्यग्निना[15] दृष्टानि तानि गायेत् । न ह्यग्निसोमदेवत्यान्यग्निसोमदृष्टानि वा लक्ष्यन्ते । दृष्टाग्नीषोमीययोः केचित् पृथक् प्रणयने स्तुतिं पशावपि तथेच्छन्ति, तदिच्छति नो गुरुः । यथा ह्यवस्थितौ यागेन हि प्रणयने यथाग्निः[16] तथा[17] सोमः केवलश्च प्रणीयते । ततश्च होता तत्राग्निं च सोमं च स्तौति । भेदतः सह गाने ततः साधु सोमक्लृप्तिरियं कृता । अग्निः सरस्वती सोमः पूषा अथ च बृहस्पतिः विश्वेदेवेन्द्रमारुता[18] इन्द्राग्नी सविता ततो वरुणश्च । एषु देवेषु प्रकृतौ पशुदेवतासिद्धानि तत्र सामानि वा गवि स्यात् सरस्वति । तेषां···गायेत् । तेषां साम्नां यानि पशौ विहितानि वपान्ते

---

१ को· गृह्येत  २ को. गुणं  ३ को. नामनि  ४ को. ०णसामनी
५ को. यथादेवतमिति  ६ को. यद्दैवत्यं  ७ को. देवतञ्च  ८ को. असौ सोमा
९ को. देवत्ये  १० को. यथादेवतमि॰  ११ को. यथादेवतं  १२ को. ०स्मान्मुख्य इति
१३ को. ०राल्लेशशंगी  १४ को. ०न्यैता०  १५ को. चान्यग्मिना  १६ को. तथा नियाग्नि
१७ को. ततः  १८ को. ०न्द्रमारुत

वपाकर्मसमाप्तौ गायेत् । मार्जनादूर्ध्वमित्यर्थः । इह पशावित्येकवचनं सामविषयेषु च पदेषु यानीत्यादिषु बहुवचनं प्रयुञ्जानो ज्ञापयति—प्रति पशु सामबहुत्वमिति । तस्मादिहादिष्टेषु अग्निष्टोमीयादिषु नैकं द्वे वा गीत्वोपरमेत्[1] ।

प्रदानकाल उपसत्सु चेष्टिषु च । प्रदानस्य कालः प्रदानकालः । याग इत्यर्थः । यद्धि हविषो देवतायै प्रदानं स यागः । यानि सामान्युपसत्सु चेष्टिषु च शिष्टानि तानि प्रदानकाले गायेत्[2] ।

तानि तत्तत्कर्मापन्नो···वाचा गायेत् । इयं परिभाषा सर्वपरिगाणसाधारणाय । यद्यत्कर्मप्रविहितानि[3] यानि तानि तत्तत्कर्मापन्नः[3] तं तं कर्मदेशं प्रपन्नः सन् यज्ञोपवीतवान् प्राङ्मुखस्तिष्ठन् वा उपविष्टो वा मध्यमया वाचा गायेत् । इमानि परिगाणानि ।

तेषां यानि···तानि गायेत् । यानि तृचेष्वेव गीयन्ते सन्तनि[4] बह्वपत्यादीनि[5] ? तान्यप्यत्रोदाहर्तव्यानि ।तान्यपि हि कदाचित् प्राप्नुवन्ति पशुषु । यान्येकर्चानि···तृचेप्सुतायै । तृचमाप्तुमिच्छतीति तृचेप्सुः तस्य भावः तृचेप्सुता, तृचेप्सुतार्थम् । अथवा हेतोः पञ्चम्यर्थे चतुर्थी । एकर्चानामपि त्रिरभ्यासे तृचसादृश्यं भवतीति किमर्थमिद तृचेप्सुतायै[6] इत्युच्यते, पूर्वं तावद्वाक्यं सन्तन्यादिभिरनेकर्चगीतैः कृतार्थम् । इदं च तार्क्ष्यसामादिभिरनेकर्चगीतैः । अथ यान्यनेकर्चेषु गीयन्ते तृचेषु च, यथा वामदेव्यं रथन्तरं बृहदिति तेषु संशयः स्यात्, तृचेष्वेकर्चेष्विति । तत्रायं वाक्यशेषः तृचगानसिद्धये न्यस्तः । एवमस्य योगः त्रिर्गीयते । एकर्चा तृचेप्सतायै गणतृचकल्पनार्थमसत्येव च मुख्ये गौणमाश्रयितव्यम् । शक्यते च बृहद्रथन्तरवामदेव्येषु मुख्यमेव तृचमाश्रयितुम् । तस्मात्तृचेष्वेतानि गेयानीति । अथवा आसन्नहेतोः पञ्चम्यर्थे चतुर्थी । एकर्चानामपि त्रिरभ्यासे तृचसादृश्यं भवतीति इत्यर्थमिदं तृचेप्सुतायै[8] इत्युच्यते । अथवा सन्तन्यादीनामनेकर्चगीतानां तृचगानस्यार्थप्राप्तस्याविधेयत्वात् पूर्वो विधिरिहाप्यग्न्याधेयवत् बृहदादीनां तृचगानार्थम्[9]··· । तृचेत्यन्तवादस्त्वयमन्यत्रा्प्येषां तृच एकर्च इति संशये तृचोपादानार्थं न्यस्त इति कल्पनं सम्यग् भवति । ततः शान्त्यादौ वामदेव्यस्य तृचोपादानं सिध्यति । सन्त्यनूचानि[10] सामानि । यथा वाचो वृत्ते सत्रस्यर्धिरिति ।[11] सन्ति द्व्यृचानि । यथातीषङ्गासु वः शाव्यमिति । सन्ति बह्वृचानि । यथा कश्यपव्रतम् आदित्यव्रतमिवान्दं च । पक्षिकानि सर्वाण्येकर्चेष्वेवान्तर्भवन्ति, इत्यर्थं हि कल्पनीयं यस्य साम्नो गीतिः सकृन्निष्ठिता न पुनरावर्तते । तदनूचं तृचं वा सदप्येकर्चसादृश्यादेकर्चमेवेति । अयुक्तेयं कल्पनेति चेन्न । आचार्येण ज्ञापितत्वादतीषंग एकस्यामिति ।

तत्र पदाय पदाय...समयः । तत्र तेषु परिसामसु ये स्तोभा अग्नेर्व्रतादिषु तान् पदाय पदायानुसंहरेत् अनुक्रमेण संहरेत् । यथैवं तेषु च तथा प्रतिपादं ब्रूयादित्याचार्याणां समयः । किमिदमाचार्यसमय इति, यथा वाचार्यैः कल्प्यते स आचार्यसमयः ।

यथाधीतान्येव गेयानीत्यनुब्राह्मिणो वचनात् । यथाधीतान्येव अधीतरूपाण्येव यथा वाम्नातमेव गेयान्येकतानीति वदन्त्यनुब्राह्मिणः । एवमिति वा योऽर्थस्तस्मिन्नयमेव शब्दो ग्राह्यः । तथा सति यथैतान्यधीतानि एव गेयानीति योज्यम् । अवचनात् प्रतिपादं स्तोभानामावृत्तौ वचनाभावादनुब्राह्मणादीनाम-

---

१ को: ०गीत्योपरमेत् २ को. गेयेत् ३ को. ०तान्यतत्तत्कर्मोपपन्न
४ को. सन्तनीप ५ को. ह्वपत्यादीनि ६ को. तृचेप्लुताया
७ को. मर्थसिदं ८ को. तृचेप्लुताया ९ को. पाठस्त्रुटितः
१० को. सन्त्यनूपानि ११ को. सत्रस्यर्धीति

ब्राह्मणादीनामब्राह्मणान्येवानुवर्तमानाः केचिद् ग्रन्थविशेषार्थविदोऽनुब्राह्मिणः । अनयोराचार्यसमयानुब्राह्मिणम् । एतयोः कतरत् प्रतिवक्तव्यमित्याकांक्षिते उच्यते । तस्मात् मन्त्रैकदेशाभ्यासः स्यात् । अस्यस्तोभस्य मन्त्रैकदेशाभ्यासः कस्मात् स्यात्, नैवायं भवितुमर्हतीत्यर्थः । नहि मन्त्रस्यानावृत्तौ तदेकदेशस्यावृत्तिः ऋते वचनाद्युज्यते । एवं सत्युद्वासनसाम्नोऽवभृथसाम्नश्च स्तोभावृत्तिर्वचनत एवोपलब्धा आचार्येणेति मन्तव्यम् । सा च तयोः सर्वत्रापि प्रवृत्तयोः भवति ।

उद्वासनीय एव...दवभृथसाम्नि च । उद्वासनावभृथयोः ये द्व सामनी विहिते ते सत्रं रक्षोघ्नत्वात् पशु चाग्नेयमाग्नेयत्वात् गच्छतः । अत्र संशयः । सर्वे निधनमुपयन्तीत्ययं विधिः सामधर्म इत्यत्रापि प्रवर्तेत, आहोस्विदुद्वासनावभृथधर्म इति[३] । तत्रेदमुच्यते—यदुद्वासने विहितं साम तस्मिन्नुद्वासनीय एव सति यद्वावभृथे तस्मिश्चावभृथे साम्न्येव सति सर्वैः सार्धं निधनमुपेयादन्यत्र त्वन्यसामवत् स्वयमेवोपेयादित्युक्तं भवति । य उद्वासनावभृथधर्म एवायं यदस्य सामद्वयस्य सर्वे निधनमुपयन्तीत्यभिप्रायः । तुल्यमेतदिष्टाहोत्रीयस्यापि उद्वासनीयत्वाविशेषात् ।

न वार्षाहरे । न सार्धमन्यैर्निधनोपायनं तद्वदित्यर्थः । अयं पूर्वस्य विधेर्दृष्टान्तोऽन्यः । एवमस्य प्रयोजनवचनप्रमाणको[४] विधिर्यत्र वचनं तत्रैवावतिष्ठते । यथा एकसंप्रैषयोरेकस्थानयोर्वार्षाहरेष्टाहोत्रीययोः यस्मिन् वचनमस्ति तस्मिन्निष्टाहोत्रीय एव सर्वावियवनिधनत्वधर्मोऽवस्थितः[५] न वार्षाहरे प्राप्नोति । एवमेतयो राक्षोघ्नयोरिष्टाहोत्रीयस्य च यत्तत्र वचनं तत्रैवोद्वासनावभृथयोरेवावतिष्ठते नान्यत्र प्राप्नोतीति । एवं चेत् स्तोभावृत्तिरप्येतयोरन्यत्र प्राप्नोति । अत्र ब्रूमः—साम्नोरनयोर्विधानानन्तरं किञ्चिदप्यन्यदनपेक्ष्यं विहितपदायपदाय स्तोभमाहेति सर्वनिधनोपायनं तु विधीयते[६]...[७] नैव संबंधः कृतः ? । देवान् पाहि तस्मिन् काले रक्षांस्यनु सचन्त इत्यधिकारेण ? तस्मात्तत्कालयोरेवेति । अथ वार्षाहर इति सप्तमीनिर्देशं साधनसं कुर्वन्नपर आह—वार्षाहरेऽवभृथसम्नि सत्यपि सार्धं निधनमुपेयात् । यद्यप्यस्यावभृथसामत्वे सानीयसविधानन्नास्ति अत एव यत्नात् केषांचित् क्वचिदस्तीत्यनुमन्तव्यम् ।

आर्वातवत...कुर्युः । परिनिष्ठतः परिगाणाधिकारः । अथ वैकृतः । कश्चिदग्निष्टोममन्त्रैकदेशाभ्यासः तत्प्रसङ्गादिहैव कथ्यते । यच्च जातव्यवधानेनावर्तते तदिहावर्तीत्यभिप्रेयते[८] । शुक्रियेषु यदावर्ति तत्[९] कर्मापन्नाः[९] स्तोत्रमापन्नाश्चतुष्कुर्युः चतुर्वदेयुः । भ्राजादयः शब्द स्त्रिरुच्यन्ते, पाठे तेषां चतुश्चतुर्वचनमिदं विहितस्तोत्रविषये ।

भ्राजाभ्राजाभ्यां...स्याताम् । चतुर्थी षष्ठ्यर्थे । भ्राजयोस्तूपद्रवनिधने त्रिरुक्ते एव स्याताम् । न चतुरुक्तेन चेदमुपद्रवनिधनयोस्त्रिर्वचनं विधीयते । तु शब्दो विज्ञापयति, पूर्वस्य विधेरयमपवाद इति । तस्मादुपद्रवनिधनावयवभूता भ्राजादय[१०] उपद्रवनिधनशब्देनात्र गृहीता इति चिन्त्यम् । दृष्यते ह्यवयविशब्दोऽवयवे । यथा—यज्ञविदयं बह्वृचः, मधुरोऽयमाम्रः इति । कस्य पुनः अयशुक्रियान्तर्भूतस्यावृत्तिजातस्य चतुर्वचनं, विधया भ्राजभ्राजोपद्रवनिधनविषय[११] एव ।

---

१ को. ०त्वादितीं० २ को. ०नुब्राह्मणि ३ को. इति निवर्तेति ४ को. ०प्रमाणका
५ को. सर्वेवेय० ६ को. विधायते ७ को. षे पाठस्त्रुटितः ८ को. तदिहावर्तीत्य०
९ को. तत्कर्मापन्नास्तोत्रमापन्नंश्चतु० १० कोषे 'भ्राजादयः भ्राजादयः इति द्विरुक्तिः
११ को. भ्राजादयज्ञमुपद्रवनि०

**कस्य[1] हेतोरित्येकविंशे भवतः[1]** । कस्य हेतोः प्रतिषिध्यते इति चेदेवमेते भ्राजाभ्राजे एकविंशे एकविंशसंपद्युक्ते भवतः[2] । इतरथा ह्येकविंशसंपन्न[3] स्यादित्यभिप्रायः । विना तु हेतुवचनादाचार्यवचनप्रामाण्याद्धे तुवचनमनर्थकम् । नानर्थकम् । अन्यस्यापि कस्यचिदिहावर्तिनः त्रिर्वचनमस्ति । एकविंशसंपदनतिरेकार्थमिति ज्ञापनार्थत्वात् । कस्येति चेत्, परस्ताद् वक्ष्यामः । किं पुनः सर्वेषु व्रतशुक्रियेषु एकविंशसंपदस्ति, अस्ति । तदेव हीदमावर्तिचतुष्करणं विहितम् । इमे च वयमेकविंशसंपदं सा (शा ?) लावगतये कल्पयिष्यामः । भ्राजे तावदष्टादश, भ्राजशस्त्रय ऋक्पादा एवमेकविंशः । अथवा भ्राजशब्देषु त्रीणि ऋगक्षराणि योजयेत् । अवशिष्टान्येकविंशतिः । एवमस्मिन् द्वावेकविंशौ । यथा भ्राजे तथा भ्राजे । अथ विकर्णे सप्त स्तोभगाश्चतुर्वचनादष्टाविंशतिः । तत एवमेव पञ्चकृत्व उच्यन्ते, तच्चत्वारिंशच्छतम् । यस्तूत्तमस्तोभं स पुनरेव निधनद्वयार्थमावर्तमानपूर्वं चतुरुच्य पश्चात्तु त्रिरेव तस्य ज्ञापकत्वमुक्तम् । ततः सर्वपूर्वेण चत्वारिंशेन शतेन सम्भूय सप्तैकविंशा भवन्ति । औ हो वा हा उ वा शब्दाः तन्त्रयन्ते त्रीणि निधनानि षट्त्रिंशदक्षराणीति, द्वावेकविंशौ । अथ भासे दश स्तोमाश्चतुर्वचनाच्चत्वारिंशत् । एवं पञ्च कृत्व उच्यन्ते । सा द्विशतिः इहौ गोशब्दा अपदवनिधनाश्चाययोधस्तनस्तोभास्ते द्विशत्यां प्रक्षिप्ता दशैकविंशान् संपादयन्ति । भद्रमित्यादयो नव व्याहृतयो भाश्शब्ददशमा द्वात्रिंशद्दगक्षराणि च संभूय द्वावेकविंशौ । अथ महादिवाकीर्त्ये द्वावाद्यौ स्तोभौ चतुर्वचनादष्टौ, अनन्तरं निधनं तावत्[4] नव । ततः प्रथमं च पुरीषपदमन्यश्च स्तोभाद्यभ्यासेनान्यस्था ? वर्तमानौ पूर्वैर्नवभिः सह सप्तदश । तेषु परस्मिन् पुरीषपदचतुष्टये[6] प्रक्षिप्त एकविंशो निष्पद्यते । पयोममनुप्रभृतयो वयोभूतान्ताः सप्त व्याहृतयः द्विः श्रूयन्ते ताश्चतुर्दश, द्वितीये श्रवणे यः स्तोभः स एकविंशं प्रपूरयति । निधनद्वयं क्षणमवतिष्ठताम् । पञ्चोत्तराः स्तोभाः चतुर्वचनाद् विंशतिः । यदधोनिधनम् ई इति तदैकविंशं पूरयति । अथ हो शब्दो वा वा शब्दश्चतुरभ्यस्यमानो निधनेन सहैकविंशं निष्पादयति । ऋक्पादाश्चत्वारश्चतस्रश्च, तदादिस्थाप्याप्रभृतयः द्यौरित्यादयश्च त्रयश्चतुरुक्ताः स्तोभा विंशतिर्भवन्ति । अनन्तरेण निधनेन एकविंशं संपन्नम् । भूमिरित्यादयश्च त्रयः चतुर्वचनाद्[7] द्वादशनिधनम्, एवं त्रयोदश । अथ द्वौ स्तोभा वायुज्योतिरिति तयोः पूर्वश्चतुरुच्यते । उत्तरस्मात्……[8] त्रिरेव, ते सप्त त्रयोदशभिः संभूय विंशतिः, निधनेनैकविंशं पूर्यते[9] ।

द्वौ भ्राज एको वा भ्राजे तद्वन्नव च सप्त च ।
ब्रह्मणः साम्नि होतुश्च भासे द्वादश ते खलु ।।
एकविंशाः समासोक्तौ[10] त्रिंशद्[11] द्वात्रिंशदेव वा ।
शुक्रियेषु विकारोऽयमेतस्यै सम्पदे श्रुतौ[12] ।।

**सर्वमावर्ति...महाव्रते** । महाव्रतेऽहनि सामसु यदावर्तिशब्दजातं तत्सर्वं पञ्चोक्तं कुर्युः । पञ्चकृत्वो वदेयुः । राजनरौहिणकचतुस्त्रिंशसम्मितान्यस्य विधेर्विषयः ।

---

१ इत्येतत्प्रतीकं मूले नैव दृश्यते  २ को. भवति  ३ को. ०शसंपन्नः
४ को. संवादयन्ति  ५ को. तावनव  ६ को. परिष्वदच०
७ को. चतुर्वचना०  ८ को. त्रुटितः पाठः  ९ को. पूयते
१० को. समासो  ११ को. त्रिश  १२ को. श्रुतम्

नन्वन्येष्वपि सामसु तस्मिन्नहनि सन्त्यावर्तीनि[1], सत्यमेतत्। नहि तेषां महाव्रतेन विशेषणमेषु सत्सु संभवति। एषां हि महाव्रत एव प्रवृत्तिर्दृष्टा नान्यत्र। तेषामेव महाव्रतेन विशेषणं युक्तम्, नतु येषां महाव्रते ऽन्यत्र च, नहि ऋतुरुभयसामा रथन्तरसामेत्युच्यते, इन्द्राग्निगुप्तो वेन्द्रगुप्त इति। यच्चेदमुक्तं सामत्रयं तस्य महाव्रते प्रवृत्तिर्दृष्टा, भद्रादीनां त्वन्यत्र चापि। ततः सिद्धं, राजनरौहिणकचतुस्त्रिंशस्य तान्यस्य विधेर्विषय इति। किं पुनरयं विधिः प्रवर्तकः आहोस्विन्निवर्तकः[2]। यदि प्रवर्तक एव, कीटकीटाकाराः पञ्चदश कृत्व एव यथाम्नायमभ्यस्येरन्। अथ निवर्तकोऽपि पञ्च कृत्व एव तेऽभ्यस्येरन्। तथा च सति तस्याशीतिसंपद् विहन्येत। यद्येवं विघातार्थमस्याः संपदः प्रवर्तक एवात्र विधिर्भवतु, या कीटकीटाकारेषु[3] प्रवृत्तिषु। सर्वमिति किमर्थम्, व्रतशुक्रियेष्वावृत्तिः न सर्वं चतुरुच्यते इत्येवमर्थम्। ननु तत्रैव हेतुवचनात् सिद्धम्, सत्यमेतत्। सिद्धस्यैव त्विदं दृढीकरणम्।

ननु पुनरयं महाव्रतशब्दः षष्ठे मुख्यः संस्तवनसम्बन्धादहनि प्रवर्तते, पृष्ठविषय एवायं नत्र विधिर्भवतु। अत्र ब्रूमः—यद्ययं विधिः पृष्ठविषय एव स्यात् प्रक्षावेषु न प्रसजेत्, तथा च सत्यन्यत्र प्रक्षावेभ्य इत्यनर्थकं स्यात्। इह केचित् प्राज्ञं मन्यमानाः प्रलपन्ति किल, महाव्रते पृष्ठे पञ्चसामात्मके प्रापिते समावृत्तिपञ्चोक्तता[4]। अन्यत्र प्रक्षावेभ्य इति राजनादन्येभ्यो ऽपि निवर्त्यत इति तेऽस्य प्रतिवचनं ददतु। पञ्चोक्तं राजन इति कृत्वा मावादुत्तरं वाक्यमिति। अथवा अस्य विधेः पृष्ठविषयत्वे दोषो ऽयमपरिहारः प्रादुर्भवति, रौहिणके तद्वा अशीतिभिः संपन्नमिति। यदशीतिसम्पन्नत्वमुक्तम् तद्रौहिणकावर्त्तीनां[5] पञ्चोक्तत्वाभावे मृषा भवति। यच्च साम इन्द्रस्य महाव्रतमिति तस्मिन् लिंगादेव ताभ्यां पशुपरिगणनार्थं प्रपन्ने सति तु विषयताप्यस्य विधेरनेनैव प्रत्युक्ता। तस्मादिहाहरेव महावृतशब्देनोपलक्षित इति सम्यग्। यथा महाव्रतमिति रात्रय इति तत्राप्युक्तं सामत्रयमेवास्य विधेर्विषयः।

ननु चतुस्त्रिंशसम्मिते पञ्चकृत्व एवावर्त्तिजातं[6] पठ्यते अत्र पक्षपातेष्वयं विधिर्नेष्यते। तस्माद् राजनरौहिणतयाब्रवीति, ततश्चैवमर्थो भवति। मा चेदुत्तरं[7] वाक्यमिति। अत्र ब्रूमः—भवदुक्तोऽन्यः[8] सोऽप्यत्रार्थः[8] सिद्ध्यति। अर्थान्तरस्य तु ज्ञापनार्थं महाव्रतशब्देनैतं सामत्रयमुपलक्ष्यते। किं तदर्थान्तरमिति चेत्, तस्मिन् महाव्रतमुपयन्तीत्यादिना वचनेन यस्याह्नो महाव्रतं पृष्ठं स्यात् तस्मिन् रौहिणचतुस्त्रिंशसम्मितयोरपि प्रयोगः कार्य[9] इति। एवमिदं व्रतशुक्रीयेषु राजनरौहिणकयोश्चाम्नायविरोधेन शब्दानामभ्यासाधिक्यं विहितम्। तत्र व्रतशुक्रियेषु यो विधिः स ब्राह्मणान्तरादागतो ऽवगन्तव्यः। राजनरौहिणकयोऽस्तु योऽयं विकारः सोऽस्मद्ब्राह्मणादेवागच्छति हि सामनि[10]। प्रकृत्य श्रूयते—तद्वा अशीतिस्संपन्नमेकैकस्यां स्तोत्रीयायां द्वे द्वे अशीत्यौ संपद्येते इति च तद्वान्वशीतिभिः संपन्नमाशयन्त्येवैवमेतेन इति च। तासामशीतीनां संपत्त्यर्थमस्मिन् सामद्वये विकाराः क्रियन्ते। कथमिति चेद्, राजने तावत् सप्त स्तोमाः ऋक्पादेन सहाष्टौ, ते पञ्चकृत्वो ऽभ्यस्यन्ते। साभ्यासास्ते चत्वारिंशत् संपन्नाः। एवमुत्तरेष्वपि पादेषु ते द्वे अशीत्यौ

---

१ को. सन्त्यावर्तिनी २ कोषे अतः परं 'विकारश्चात्र विशेषः' इत्यधिकः पाठः दृश्यते
३ को. किटकिटाकारेषु ४ को. समावत्ति० ५ को. कावत्तीनां
६ को. एवापत्तिजातं ७ को. माचदुत्तरं ८ को. भवदुक्तवन्न्यस्तेऽप्यत्रार्थः
९ को. कार्यम् १० कौ. सामनी

निधनेषु पृथक् पञ्चविंशसंपत्संपादिता त उ वै पञ्चपञ्चविंशाः सामनिधनानां संपद्यन्त इति । वागादिषु पञ्चसु निधनावयवेषु निधनशब्दः श्रूयते । पञ्चविंशस्तोमे सति पञ्चविंशतं भवति । अथ रौहिणके षट् स्तोभाः पञ्चकृत्वोऽभ्यस्यमानाः पञ्चदशभिः किक्किटाकारैः[१] सह पञ्चचत्वारिंशद् भवन्ति । एवं पञ्चकृत्वः कृते सपञ्चविंशति द्विशती । ततः परं निधनान्यनन्तर्हितानि द्वादशशतं, ततः पर उपद्रवः । ततः परं निधनं, तानि चतुर्दश । तेषां योगे हि एकोनमशीतित्रयं संवर्तते । यदि तत्र चत्वारः ऋक्पादाः प्रविशेयुः तत्राधिक्यं स्यात् । तथा च सति अशीतिभिः संपन्नमिति वचनं विहन्येत । तस्माद् अनपेक्ष्यपदानां पृथगवस्थानं ऋगेकयैव प्रक्षेप्तव्यम् । एवमेतदशीतित्रयमशीतिभिः संपन्नमिति श्रुत्युक्तमन्यूनमनधिकं भवति । पञ्चविंशसंपदत्राप्यस्ति । यासौ द्विशती सा पञ्चविंशा, ततो नव पञ्चविंशाः संवर्तन्ते । ऋगक्षराणि षट्त्रिंशत् । तेष्वमीषां चतुर्दशानां प्रक्षेपे द्वौ पञ्चविंशौ भवतः । चतुस्त्रिंशत्सहिता नामरूपैव संपत् । सा द्विविधा, समुदायगता अवयवगता च । पूर्वस्यां तावदनन्तर्हितास्त्रयः स्तोभाः प्रतिपादा प्रतिप्रक्षावनिधनाय चावर्तमानाश्चतुर्विंशति ऋक्पादैरष्टाविंशतिः । नवसु प्रक्षेपेषु त्रय एवानन्तर्हिता गण्यन्ते । तैरेकविंशद्भिर्निधनावयवैश्च चतुस्तृचः पूर्यन्ते । अथावयवगतास्तस्यां त्रयः स्तोभाः पञ्चकृत्वोऽभ्यस्यमानाः पञ्चदशऋक्पादेन षोडश, पुनरपि ते स्तोभाः पूर्ववदेव वृत्ताः पञ्चदशप्रक्षावैरष्टादशपूर्वैः षोडशभिः[४] सह योगादेषां चतुस्त्रिंशः संवर्तते । एवं चतुर्विंशा प्रतिपादं चतुस्त्रिंशसंपद्भवति । अन्यस्य तु प्रक्षावत्रयस्य[५] स्थानेनैव निधनं वचनत्रयं प्रचरति[६]—

अंगानि येषां प्रक्षावाः सांगास्त्वां मा महाव्रतात् ।
संपादयन्तु ते ऽशीति श्रुता रौहिणके धिया ।।

**अन्यत्र प्रक्षावेभ्यः** । प्रक्षावा इति क्षौशब्दानां येषां याज्ञिकप्रसिद्धा संज्ञा तेष्वपि पूर्वस्य विधेः प्रसंगे इदमुच्यते । प्रक्षावेभ्यो ऽन्यत्र पूर्वो विधिर्भवति । प्रक्षावेषु न भवतीत्यर्थः । एवं चेन्न प्रक्षावेष्विति कर्तव्यम्, नैतद्युक्तम्, प्रतिषेधान्तं हि सूत्रमेवं स्यात्, तदमंगलं भवेत् । तत्परिहाराय विधिरेवायं कृतः । अथवा इदं पूर्ववाक्यान्तर्भूतमेव तु वाक्यान्तरम् । तथाप्युक्तोऽर्थः सिद्ध्यति । एवमिदं यत् ततो मंगलान्तत्वं सूत्रस्य कृतम् ।

प्रथेतेदं सूत्रं जगति । ये चेदमधीयीरन्[७] अस्य चार्थमवबुध्येरन् ते विश्वं शिवमश्नुवानाः द्वयोर्लोकयोः समवेरन्निति ।

इदमल्पतरं सूत्रमर्थतस्तु महत्तरम् ।
कवेर्वेदनिधेर्वक्त्रात् प्रसूतं प्रणवायते ।।

इति महोपाध्यायश्रीभवत्रातेन विरचितायां जैमिनीयश्रौतसूत्रवृत्तौ प्रकीर्णकः
षड्विंशः खण्डः

**अग्निष्टोमः समाप्तः ।**

१ कोषे क्वचित् कीटकीटाकारैः इत्यपि पाठः २ को. ०प्रक्षाप० ३ को. ०शप्रक्षायै०
४ को षोडशिभिः ५ को. प्रक्षाय० ६ को. प्रविरति ७ को. ०मधीयेरन

# अथ माधवीया कारिका

पदमनन्तसुखं निगदन्ति यत्
कृतधियां[1] सुलभं कविपुङ्गवाः ।
एकतमन्वहमात्म भवतु ?
हैमवती··························पादयोः ॥ १ ॥

श्रीभावत्रातरचिता माधवेन मनोरमा ।
जैमिनीयस्य सूत्रस्य वृत्तिरेषा विलिख्यते ॥ २ ॥

विलिख्य वृत्तिं सूत्रस्य जैमिनीयस्य सांप्रतम् ।
तस्यैव कारिका तेन माधवेन विलिख्यते ॥ ३ ॥

वृत्तिं जैमिनिसूत्रस्य कृत्वा श्लोकानिमानपि ।
पठतिस्म भवत्रातो भवं नत्वा भवच्छिदम् ॥ ४ ॥

प्रतिमन्त्रणमादौ[2] स्यात् पृच्छेत् कच्चिदिति त्वथ ।
विना प्रश्नादयाज्यत्वे ज्ञातेन प्रतिमन्त्रणम् ॥ ५ ॥

कुर्यादहीनानूद्देश्यशब्दयोः प्लुतिमन्ततः ।
अविक्रयधिया पृच्छेन्नित्यं का दक्षिणा इति ॥ ६ ॥

दैव्या[3] वाचा प्रतिब्रूयाद् यजमानो यथातथम् ।
जपन्नञ्जलिना मन्त्रं प्रतिगृह्योत्सृजेदपः ॥ ७ ॥

भुवि पात्रं निधायाश्यं मधु मुक्त्वा कनिष्ठिकाम् ।
नावृत्तिर्यजुषोऽमीषां साम्नि हिंकरणं [मतम्] ॥ ८ ॥

एकं वसित्वाचम्यान्यद्[4] यजुषैवोपवीतताम् ।
वस्त्रं नयेत् प्राक् प्रणवादुपांशु प्रतिमन्त्रणम् ॥ ९ ॥

इमं वरणमन्त्रं तु यजमानो न वेत्ति चेत् ।
पूर्वमेवाप्रमादाय शिक्षयेत्तं नियोजयेत् ॥१० ॥

दत्ते तु देवयजने गामुपाजेद् यथाविधि ।
नाङ्गानां मधुपर्कस्य गृह्योक्तानामिहागमः ॥११ ॥

वाचनं[5] तदुपांशु स्यादुच्चकैः प्रणवादिकम् ।
उपांश्वेव तु सर्वत्र यजुषा मुक्तिरिष्यते ॥१२ ॥

---

१ को. गतधियाँ २ को. प्रतिमन्त्रं नमादौ ३ को. देव्या
४ को. ०त्वाचम्योन्यद् ५ को. अश्विन्यन्तमुपांशु

ऋचामपि जपित्वा वा यासां करणतापि वा ।
या ऋचोऽस्यां तु शाखायामाम्नायन्ते त्रिभिः स्वरैः ।
तास्तथैव,[1] नृपादित्वे सर्वास्त्वर्चयो वदेत् ? ।।१३ ।।

यान्यमांसाशिताद्यानि विधास्यन्ते व्रतानि तु ।
ऋत्विग्भिस्तानि चर्याणि यथाविध्याविसर्जनात् ।।१४ ।।

अन्तरेण[2] परीत्यैतद्[2] राजवाहनमारुहेत् ।
प्राग्[3] वर्तनात् प्रागेव[3] त्रिः सुब्रह्मण्योमितीरयेत् ।।१५ ।।
प्राग्वर्तनदिशाप्येवं प्रतीच्यनसि संस्पृशेत् ।।१६ ।।

यदास्माकीनमत्रैतदिति प्रभृति चोदना ।
अवबोधयितव्यस्तद् यष्टा यज्ञस्य सम्पदे ।।१७ ।।

अस्ति कर्मसु संप्रैषो येष्वाकाङ्क्षेत तेषु तम् ।
स्वरश्च सुब्रह्मण्यायामवसानं च पाठतः ।।१८ ।।
उच्चैरेव निरुक्तायां सर्वत्रा नामष्यत ।
शृणुयातां[4] मिथो येन स स्वरो वाचने द्वयोः ।।१९ ।।
स्थानं शालोत्करं पूर्वं प्रधानोत्करजन्मनः[5] ।
अग्नौ व्याहृतिसामानि स्वसम्बन्धिसमीपतः ।। २० ।।
गेयानि प्राङ्मुखेनैव स्थित्वोद्गात्रा[6] सकृत्सकृत् ।
गायत्रं वामदेव्यं च बृहच्चाथ रथन्तरम् ।। २१ ।।
उपस्थाने त्रिचस्थानि व्रतवद्देशवेश्मनि ।
हिंकारस्यास्ति नावृत्तिः[7] साम गेयं सकृत्सकृत् ।। २२ ।।
उपेयुर्धिनं सर्वे धर्मधर्मोपयोगिनः ।
वस्त्रमादाय गीयेत श्यैतं प्रति च तं सकृत् ।। २३ ।।
यदाध्वर्युस्तदोद्गाता कुर्यादौदुम्बरीक्रियाम् ।
अभिजुह्वत् स्रुवेणैवमाज्यस्थाल्याभिवर्धयेत् ।। २४ ।।
पर्यूहणेऽस्ति नावृत्तिर्मन्त्रस्यैवंविधेषु च ।
दृंह दृंहेति षट्कृत्वः प्रतिमन्त्रं दृढीकृतिः[9] ।। २५ ।।

---

१ को. कास्तथैव
२ को. अत्रैणेव परित्यै०
३ को. प्रग्वर्तनादिषेप्येव
४ को. शृणुयाता
५ को. प्रधानोकीरजन्मः
६ को. स्थितोग्दात्रा
७ को. नावृत्ति
८ को. नावृत्तिम०
९ को. दृढीकृति

आच्छादयेत् तृणैः सर्वमेवमेव च वाससा।
शुक्लान्यनुपभुक्तानि निर्णिक्तानि शुचीनि च ।। २६ ।।

उपादेयानि वस्त्राणि सर्वस्मिन् वस्त्रचोदने।
स्त्रीनाम्नां यदि निर्देशः पितुर्मातुरिति क्रमः ।। २७ ।।

मात्रादीनामनेकत्वे ज्येष्ठासामग्रगामिनी।
नामानि पौत्रनप्तॄणां पुत्रानन्तरमादिशेत् ।। २८ ।।

नित्यः पुत्रादिनिर्देशो नापत्यं निर्दिशेन्मृतम्।
जनिष्यमाणवाक्यन्तु केचिदिच्छन्ति नो वयम् ।। २९ ।।

स्यादुदास्तिः[1] दत्तकाद्यस्यान्तान्त्येमान्तमध्यमौ।
आद्यन्त्यौ हान्त्ययोरन्त्यः पदशेषस्य च स्वरः ।। ३० ।।

न सन्दधीत वाक्यानि नान्तरा विरमेदपि।
स्वच्छन्दं प्रक्षिपेदस्यां सत्याप्यर्थेन पूर्वयोः ।। ३१ ।।

त्रिराह्वानमिहापि स्यादिदं रूपे परेणपि[हि?] ?
विसुब्रह्मण्यकावेदिं प्रपद्येरन् समन्त्रकम् ।। ३२ ।।

अन्यदा यदि सप्रैषस्तदैवाह्वानमत्र न।
हविर्धानाभिमर्शादि यत्कर्मोद्गातुरेव तत् ।। ३३ ।।

विश्वरूपं वदेन्मन्त्रमेकश्रुत्येति नो मतिः।
अवस्येत्त्वादयोः पादे पादयोः पादयोरिति ।। ३४ ।।

पावयेति त्रिभिर्मन्त्रैः[2] प्रोहसम्मार्जने तथा।
पवित्रं कलशे न्यस्येत् परीत्यासीय चावृता ।। ३५ ।।

पवित्रात्यसनान्तस्तु (यः) पुरोऽभिषवो द्वयृचा[3]।
द्वितीयस्यावहारः स्यात् पवित्रस्यान्तरीषतः ।। ३६ ।।

तृचं जपन् वितनुयात् पवित्रं भागशोऽपि वा।
प्रस्तोतृप्रतिहर्त्रोः स्यादिदानीमुपवेशनम् ।। ३७ ।।

आसनावृदनस्तावे नैनयोरिति निर्णयः।
अर्थसिद्धिश्च वर्धेत पवित्रं विविधं त्रिभिः ।। ३८ ।।

उद्गात्रैवाभिमर्श्योर्वी त्रिभिरात्माभिमर्शनम्।
अध्वर्युः हारयेदत्र तृणाभ्यां प्रस्तरं सह ।। ३९ ।।

---

१ को. स्यादुदास्तिं २ को. स्त्रिभिः मन्त्रैः ३ को. द्वचा

स्वाहा पूर्वाहुतेर्नास्ति सर्व एवोत्तरामपि ।। ४० ।।
दर्भोत्तरेषु वस्त्रेषु स्तोष्यतामुपवेशनम् ।।४१।।
उपविश्यैव कुर्वीत देवसोमस्य भक्षणम् ।। ४२ ।।
उद्गाता प्रसवादूर्ध्वं युक्तिमुक्ते कृते ऽश्नुते ।
प्रत्तायुक्ती तयो रूपमनुवीक्ष्याददीत च ।। ४३ ।।
यद्रूपमुपगानस्य नान्यदित्येष[1] निर्णयः ।। ४४ ।।
सर्वस्तोत्रेषु तत्कार्यं प्रस्तावान्तेषु नान्यदा ।
अहिंकृता स्याद् रेतस्या प्रतिहार्यं यथाश्रुति ।। ४५ ।।
प्रस्तुत्यैव देवमदषा ? मध्यमैषोत्तमेति[2] च ।
उद्गातावनयेत् सर्वैरुत्थातव्यं यथाविधि ।। ४६ ।।
शब्देयुरथ ते प्राञ्चः किञ्चित् सयजमानकाः ।
उद्गृह्णीयुस्ततो बाहून् यष्ट्रुविक्रमणं ततः ।। ४७ ।।
यजूंषि वाचयेदेनं[3] निर्गच्छेयुश्च वर्त्मना ।
असत्रे मार्जनं नस्ति प्रपदाचामपूर्विका ।। ४८ ।।
तस्य तस्य समीपस्थैः प्राङ्मुखैरप्युदङ्मुखैः ।
उत्करान्ता उपस्थेया रौद्रेणेत्यनुषज्यते ।। ४९ ।।
दक्षिणान्तो महावेदेरवेदिर्हीतिराधुना ।
द्वारावित्यपरं द्वारमभितः स्थूणयोर्वचः ।। ५० ।।
भक्षितं चमसं होत्रा गृहीत्वावेक्षणं क्षमम् ।
भक्षयन्तस्तु होतारं न्ययातो वचनादपि ।। ५१ ।।
ये निषेधन्ति ते किन्नु कथयन्त्यत्र कारणम् ।
स्याच्चेद् वचनमस्माकं होतृभक्षनिवर्तकम् ।
तदायुधैर्निषेद्धव्यं केवलं न करायुधैः ।। ५२ ।।
अथवा स्वविधिस्थोऽसौ न नो विधिशतैरपि ।
वार्यस्थो हि विधिर्ज्यायान् परकीयात् स्वकर्मणि ।। ५३ ।।
विधिश्चायमदृष्टार्थः स्याद्धोतुर्भक्षमन्विति ।
अभक्षणे त्वस्य विधेः[4] दृष्टोऽर्थः स्याच्छिवं त्विति[5] ।। ५४ ।।
हुतभक्षणवावचञ्च व्यर्थं स्याद्धोतृभक्षणे ।।५५।।

---

१ को. नान्यत्येष　२ को. मस्यमैषो　३ को. वाचयेद्वेतं
४ कोषे त्रुटितः पाठः　५ को. चिन्ति ? भ्रष्टः पाठः

अवेक्षणादि भक्षान्तं कृत्वा चमसमुत्सृजेत् ।
सलिलार्द्रेण हस्तेन संमर्शनमिहेष्यते ॥५६॥

भक्षितं प्रतिहत्र्यार्थः प्रस्तोताप्याययेदिमम् ।
नराशंसेषु न न्याय्यं होतर्युपह्ववेक्षणम् ॥५७॥

न सुब्रह्मण्यभक्षोऽत्र सत्रे भक्षाय तूच्यते ।
प्रस्तोता वैष्टुतं वास इत्युद्गातापि वा वदेत् ॥५८॥

कनिष्टिकापरीणाहा ग्राह्या विष्टुतयोऽव्रणाः ।
ऋजवः सत्वचः श्लक्ष्णाः सितकल्लाङ्कितागकाः ॥ ५९ ॥

प्रागग्राश्चोदगग्राश्च प्रस्तावान्ते स्तृणीत ताः ॥ ६० ॥

अध्वर्युर्ज्ञापयेदेते स्तोत्राहरणवर्त्मनि ।
कुर्वन्त्येते जपादूर्ध्वमौदुम्बर्याः[1] परिग्रहम् ॥ ६१ ॥

परिगृह्यैव खल्वेनां स्तोत्रमादध्महे[2] वयम् ।
प्रशास्तृ-ब्राह्मणाच्छंसिन्नित्युपह्वानमेतयोः ॥ ६२ ॥

प्रसर्प्य वर्त्म यत्नेन सवनान्तेष्वनिर्गमः ।
सदसः[3] पूर्वया[3] द्वारा होतुर्दक्षिणतस्त्वयान् ॥ ६३ ॥

प्रशास्त्रे[4] केचिदिच्छन्ति नैव[5] षोडशिभक्षणम् ।
नात्र कारणमस्माभिर्ज्ञायते [श्रुत्यचोदनात्] ॥ ६४ ॥

न भक्ष्यो भक्षणायात्तः स सर्वो तैरपि·········॥ ६५ ॥

उक्तो बह्वृचसूत्रेण प्रशास्त्रा धर्मभक्षिभिः ।
उद्गातृभिश्च भक्ष्योऽत्र युक्तं नाभक्षणं ततः ॥ ६६ ॥

अनेक्ष्ये भक्षणात्तैः स सर्वैः षोडशि[नो] ग्रहः ।
होतुरिष्ट्वा ततोऽध्वर्योरिच्छेदुपह्वं त्विह ॥ ६७ ॥

ततोऽन्येभ्योऽपि यावन्तो भक्षयेयुरिमं ग्रहम् ।
निष्क्रम्याचम्य मन्त्रेण प्रपद्याक्रमणादि च ॥ ६८ ॥

वेदैरिदानीमेवैते सदसो निर्गतैरथ ।
कुर्वीरन्नासना············वर्गि·······················॥ ६९ ॥

यदादि पूयते सोमस्तदोत्थाय प्रदक्षिणम् ।
आवृत्य प्राङ्मुखैरेतैः सदसो निर्गतैरथ ॥ ७० ॥

---

१ को. जपादूर्ध्वमौदु० २ को. स्तोत्रमादन्महे ३ को. असदा पूर्णया
४ को. असत्रे ५ को. नैषा

हविर्धानं प्रवेष्टव्यं गतैरध्वर्यु वर्त्मना ।
वचनं विश्वरूपाणां गानं चापीह[1] नेष्यते ॥७१॥
उच्चकैर्गेयमेकर्चे प्रत्यग्गानेऽनुमन्त्रणम् ।
हुत्वा सव्यावृतामेषामव्यावृत्तिकरी गतिः ॥७२॥
प्रदक्षिणावृता तु स्यादध्वर्य्वादिवशाद् गतिः ।
प्राच्यास्तावमथावृत्य सन्तर्लेस्सव्यतस्त्रिभिः ॥ ७३ ॥
उपवेष्टव्यमेवं हि व्यावृत्तिर्विनिवर्तते ।
प्रस्तरो देवसोमस्य भक्षो युक्तिश्च सन्ति नः ॥ ७४ ॥
अस्य प्रत्नामिति[2] भवेद् ऋग्गायत्रस्य मध्यमा ।
गात व्यमोवौषात् ? भूदेदेति ? यथास्वरम् ॥ ७५ ॥
अस्य प्रश्नवषट्कारौ प्रतिपत्तिरितरासु नः ।
उदपात्रावनेज्यानि दिक्क्रमान्तमिहास्ति नः ॥ ७६ ॥
सुब्रह्मण्योमिति ब्रूयात् त्रिस्तूष्णीं दक्षिणाग्रहाः ।
प्रणवेनैव वा कार्यो दृश्यो दानविधिः श्रुतः ॥ ७७ ॥
ऋत्विजोऽन्येमर्हत्विग्भ्यो[3] होत्रका[4] होत्रका[4] इति ।
सहैभ्यो गेयमेकत्वान्मन्त्रस्य बहुयोगिनः ॥ ७८ ॥
प्रदक्षिणावृदाक्रम्य हुत्वा सव्यावृता व्रजेत् ।
बृहत्त्वादस्य न न्यासः प्रोक्तो महिमसंहुतौ ॥ ७९ ॥
प्रोक्तं पृष्ठाहुतौ तस्मात् बृहन्महिमयोगिनः ।
प्रेत्येति वागियं देष्टादूर्ध्वमभ्यननात् ? ॥ ८० ॥
क्रिया संमीलनं हो···आपादौ विदशो भुवि ।
हस्तयोर्न्यासं चप्तोत्रयास्सर्वाः? समश्वेतीति निश्चयः ॥ ८१॥
केचिदादेरयस्साम्नो द्वयोश्शंसन्ति वागिति ।
शाखायामस्मदीयायां तस्य मूलं न दृश्यते ॥ ८२ ॥
शाखान्तरगतस्यापि युज्यते नेदृशो ग्रहः ।
वाश्वादिनो हि नास्मत्तो ह्रो इत्यादि गृह्यते ?
तृतीयसवने कुर्याद्यावदुक्तमिदं त्विति ॥ ८३ ॥
स्थितपूतभृतस्सम्यक् पवयित्वा तदैव तु ।
पवित्रस्य बितानादि कुर्यादविकृतं वरम् ॥ ८४ ॥

---

१ को. चाहिह   २ को. प्रश्नामिति   ३ को. महर्त्यिज्यो   ४ को. होतृका होतृका

प्राचीनावीतिभिः कार्यं शाकलानामुपासनम् ।
चमसं दक्षिणेनैव स्व[1] दक्षिणत आहितैः[1] ? ॥ ८५ ॥

सौम्यकर्म त्रिभिः[2] कार्यं[2] मन्त्रं प्रति ऋगिष्यते[3] ।
स्याद्रथन्तरवर्णायामेव पत्नीसमीक्षणम् ॥ ८६ ॥

ते पूर्वनिधनात् केचिदौर्ध्वमेव तु युज्यते ।
वृष्णस्त इति नालं चेत् पत्नी वक्तुं, पतिर्वदेत् ॥ ८७ ॥

यजमानादिह ग्राह्यो वाचयित्वा स्तुतेर्वरः ।
स्तोत्रस्यान्येषु सोमेषु भक्षितेषु स्त्रुवाहुती ॥ ८८ ॥

सहेतराभ्यां निष्क्रम्य जुहुयादयमेव[4] तु ।
आसीरन्नान्तरेणाग्निं परीत्य सुखमत्र वा ॥ ८९ ॥

आहूय धानाकर्मार्थम् अन्तर्वेदि प्रपादितम् ।
सुब्रह्मण्यञ्च विन्देरन् स्वाहाकारं च शाकलान्[5] ॥ ९० ॥

अप्सुषोमानुदञ्चो वा प्राञ्चो वैते त्रयः सह ।
हुत्वा समुपभूताः स्म इत्यथानुक्रमेण वा ॥ ९१ ॥

अप्स्वित्येवावजिघ्रे युरुद्गातैवावनायकः ।
दधिषोमार्थमाग्नीध्रं गच्छेद् दक्षिणयावृता ॥ ९२ ॥

सर्वेषां निधनोपायं पतिपत्न्यृत्विजामिह ।
आचामेयुस्त्रिरस्यन्तैराचम्याचम्यते जलम् ॥ ९३ ॥

सुब्रह्मण्येव कुर्वीत परं विधिचतुष्टयम् ।
पूर्वाग्नये यदोद्धारो वामदेव्यं तदा तनुम् ॥ ९४ ॥

मनसा वेति पक्षोऽयं ब्रह्मपक्षे विकल्प्यते ।
अग्निहोत्रे तु गातव्ये यजमानेन सामनी ॥ ९५ ॥

पूर्वकालोऽन्यहवने स्वयं होमपरोऽनयोः ।
घर्मसामस्वरो मध्यः कैश्चिदुत्तम इष्यते ॥ ९६ ॥

तदारम्भस्तु संप्रैषब्रह्मप्रसवपूर्वकम् ।
असंप्रेष्यैव [6]चेद्रुक्ममुपदध्युरु(प)स्तवम्[7] ॥ ९७ ॥

गीत्वा तु साम कुर्यादुपधानप्रतीक्षणम् ।
अध्वर्युणात्र संप्रैष[8] शुक्रं शार्ङ्गमिति क्रमः ॥ ९८ ॥

---

१ को. स्वदक्षिणोरमादृतैः ?
२ को. स्त्रिभिः कार्यं
३ को. दृगिष्यते
४ को. •यादयप्वयनेव
५ को. शाकला
६ को. चेद्रपनुयः
७ को. ०स्तनम्
८ को. अर्थान्न संप्रैषेप्यत्र ?

शाङ्गेषु नाद्यनियमः पूर्वं श्यावाश्वमित्यतः ।
त्रिभागेषु प्रवर्ग्येषु त्रीणि तानि क्रमेण वा ।। ९९ ।।

गीत्वा[1] घर्मव्रते घर्मं परिगीते (तु) सामाभिः ।
यत् पूर्वं निह्नवादूर्ध्वं स्मरेभ्यः ? त्रीणि यानि च ।। १०० ।।

एतेषु यावतां कालः स्याद्गानं तावतामिह ।
एकं वा द्वेऽथवा तेषां गीत्वा भ्राजादि गीयताम् ।। १०१ ।।

उद्यत्प्रागन्यदित्यर्वाग्गूढं च रुचितं श्रिते ।
उपग्रहो सदो[2] नात्र स्तोत्रापन्नाश्रयो हि सः ।। १०२ ।।

ब्राह्मणस्पत्यमारभ्य स्यादयं प्रागुदङ्मुखः ।
उपसत्सु मतो नायं ? निष्क्रम्य प्रविशेत् पुनः ।। १०३ ।।

शाङ्गेषु यददः प्रोक्तं[3] तुल्यं[3] सोमव्रतेऽपि तत् ।
प्रथमे एव तु स्यातां काव्ययोरुभयोः क्रमात् ।। १०४ ।।

अग्निप्रणयने होत्रा सहोपक्रमणक्रिया ।
गायन्तोऽनुव्रजन्त्येके होतृशिष्या इवाधियः ।। १०५ ।।

स्थानासने च श्लिष्टे [हि] परिगाणेषु मिनोति[4] ।
तस्मादनेन गीयते शालायामेव तिष्ठता ।। १०६ ।।

अग्निष्टोमप्रणीतौ च तथा सामद्वयं ततः ।
पश्चावथाग्नीषोमीये सोमसोमेत्यमूष्विति ।। १०७ ।।

अया प्रसोमेत्याग्नेये द्वे च गायन्न दुष्यति ।
आद्यं वर्गमाग्नेये समहीने[6] ? समादि[6] वा ? ।। १०८ ।।

समन्तं परमैन्द्राग्नं यच्चेन्द्राग्नी अपादिति ।
तानैन्द्राग्ने परेष्वेव लिङ्गाद्देवतयापि वा ।। १०९ ।।

एकैकस्मिन् पशौ त्रीणि सामानि स्युर्बहूनि वा ।
सोमसामानि गेयानि नित्यानि सवनत्रये ।। ११० ।।

पत्नीसंयाजनिष्ठायां गातव्यं यज्ञसारथि ।
नौशन्त्येके तदेकाहे होमस्तेषां महानने ।। १११ ।।

आप्नोत्युदवसनीया समाहुतिरपीष्टवत् ।
पिपालयिष्यता सालान् प्रमादात् संहृतं मया ।। ११२ ।।

---

१ को. धीत्वा २ को. सादो ३ को. प्रोक्ततुल्यं ४ को. गायन्ते
५ को. नोति ६ को. नमहीने ममादि ७ को. त्यानि

श्रुतिन्यायविसंवादि मतमस्मद्गुरोः गुरु ।
कारिका संशयच्छेदकारिका सूत्रगामिनी ।।११४।।

माधवेन मनस्सङ्गि माधवेन विलिख्यते ।।११५।।
गांगेयाद्दीप्यमानं त्रयमिति बडवावह्निभालोचनानाम् ।
चक्रं वातान्तमौर्वी-भुजगमुखशतोद्वान्तमग्नेः शिखानाम् ।।

बाणो वा तुल्यवर्णः शिखिहरिशशिनां तन्मयो यस्य तिस्रो ।
भस्मीचक्रे समेता दनुतनयपुरीस्तं प्रपन्नोऽस्मि शम्भुम् ।।११६।।

इत्यग्निष्टोमकल्पे माधवीया कारिका ।

जैमिनीयश्रौतसूत्रवृत्तौ

# स्तोमकल्पवृत्तिः

# स्तोमकल्पवृत्तिः

आचार्यमार्यमहितं ख्यातं जगति जैमिनिम् ।
वन्दे यत्क्लृप्तकल्पार्थप्रख्यानायैवमुद्यमः ॥ १ ॥
पदवाक्यार्थयोरत्र सुबेदप्रायता यतः ।
कल्पवृत्तौ कतिपयप्रदेशन्यस्तता ततः ॥ २ ॥

अस्य यज्ञशास्त्रस्य त्रयोऽवयवाः—सूत्रं, कल्पः, परिशेष इति । तत्र गते सूत्रे, कल्पे वयं प्रवृत्ताः । चतुर्विधोऽयं कल्पः—स्तोमकल्पः, प्रकृतिकल्पः, संज्ञाकल्पः, विकृतिकल्प इति । स्तोमकल्पे तावत् सर्वासां प्रकृतिविकृतीनां स्तोमसंस्थाहपरिगणनं चाहर्गणेषु इत्येतत्[1] प्राधान्येनोच्यते । अन्यदपि प्रसङ्गेन । भूयस्त्वात्तु स्तोमवचनस्य स्तोमशब्देनास्य व्यपदेशः । प्रकृतिकल्पे ज्योतिष्टोमं, द्वादशाहं, गवामयनमिति । प्रकृतीः[2] कल्पयतीति प्रकृतिकल्पः । संज्ञाकल्पे संज्ञाश्च, परिभाषाश्च प्रकृतिविकृत्यर्थाः क्रियन्ते । अर्थेन तु व्यपदिश्यते संज्ञेति । विकृतिकल्पे विकृतिभूतान्येकाहाहीनसत्राणि कल्पयन्ते । तत्रेदं स्तोमकल्पस्यादौ ज्योतिष्टोमस्य स्तोमकल्पनं क्रियते ।

त्रिवृत् मानम् । बहिष्पवमानाख्यं स्तोत्रं त्रिवृत्स्तोमकम् । एवमुत्तरत्रापि योज्यम् । बहिष्पवमानशब्दोऽस्मच्छ्रुतौ नपुंसकलिङ्गो दृश्यते । अन्यत्र पुल्लिङ्गोऽपि । तत्राध्वर्य्वादिषु द्रष्टव्यम्[3] । मध्यन्दिन इति मध्यन्दिनपवमानस्य संज्ञा मरुत्वं मध्यन्दिनात् इत्यादि दर्शनाद् विज्ञेयम् । यत् साम[4] अन्याग्निष्टोमसंस्थाया अन्ते वर्तते तदग्निष्टोम साम इति । पृष्ठं ज्योतिष्टोमो[5] रथन्तरपृष्ठश्रुतिविहितं साम[6] इति । इत्थं भवति । स्तोम एते ख्याताः । एतेनैव रथन्तरपृष्ठेन ज्योतिष्टोमेन बृहत्पृष्ठश्च द्वौ[7] उभयसामानौ[7] सम्यक्पृष्ठश्च चत्वारोऽपि ज्योतिष्टोमा व्याख्याता विज्ञेयाः ।

ननु पञ्चविंशति प्रकृतिभेदाः, तेषामृक्सामक्लृप्तिः[8] श्रुतिसिद्धेति नाचार्येण क्रियते । सोमोऽपि हि श्रुतिसिद्ध एवैषां, स किमर्थमुच्यते । अत्र ब्रूमः—तेषाममीषां प्रकृतिभेदानां पञ्चविंशतेः स्तोमक्लृप्तिः क्रियते । किं तर्हि, एतेभ्योऽन्ये पञ्च प्रकृतिभेदा एवैकाहविधा इति प्रकृतिकल्पादौ कल्प्यन्ते तेषामेषां स्तोमक्लृप्तिः क्रियते ।

ननु इयमेषामेवंरूपा स्तोक्लृप्तिः प्रकृतितोऽपि प्राप्नोति, नैषां प्रकृतितः[9] प्राप्नोति । व्यामोह एवायं भवतो यदेषां प्रकृतिरस्तीति गृह्यते । इत्थं च व्यामोहोऽपगम्यताम्—प्रकृतेरेवेमे प्रकारा येऽस्माभिः प्रकृतिप्रयोगा विध्यन्ते क्लृप्ताः पञ्चविंशतिः, ये चेमे पञ्च वक्ष्यमाणाश्च, अग्निचितिका नामक इति । सर्वेषां चैषां प्रकृतित्वाविशेषान्नान्योऽस्मादुपादेयोऽस्ति ।

---

१ को. ए इत्येतद्धा — २ को. प्रकृतिः — ३ को. दृष्टव्यम्
४ को. सामान्याग्नि० — ५ को. यो वजेन्त्यातिष्टो — ६ को. स०
७ को. द्विन्नाभयम्मामानौ — ८ को. ०क्सामक्लप्तिसिश्रुति० — ९ को० प्रकृतिः

ननु सर्वेषामेष ाककर्माग्निचितिकर्मत्वाच्छ्रौत एव स्तोमविधिर्गृह्यते । यथा पञ्चविंशत्यां तथैषु पञ्चस्विति[1] सिध्यति । तेषामिह[2] स्तोमविधिरनर्थकः । [नानर्थकः] । सामविकारस्यैषु[3] ब्राह्मणाविहितस्य दर्शनात् स्तोमविकारस्याशङ्क्यमानस्य निवर्तनार्थत्वात् । अथवा स्वभावोऽयं कल्पानां, यदसिद्धक्लृप्तौ चिकीर्षितायां सिद्धस्यापि कस्यचिदनुक्रमणमनादृत्य ग्रन्थाधिक्यमुचितप्रकारतुल्यतायामभिप्रवृत्तीश्च तत्राग्निचितिकप्रभृतीनां सर्वेषामपि क्लृप्तस्तोमानामेव तदनुक्रमणावसामकल्पनायां क्रियमाणत्वात्, तैरेषां पञ्चानामेव क्लृप्तिरतुल्या माभूदिति एको[4] विविधानां सिद्धोऽपि स्तोमविधिरनुक्रान्तः । प्रायेण स्तोमविधिमेवमावर्तिन्येव प्रयोजयन्ति । पवमानेषु ऋक्सामक्लृप्तेरेव सिध्यतीति । त्रिकमित्थम्—स्तोमा[मो?]यमाग्निचितिको ज्योतिष्टोमः । अग्निचितिसम्बन्धादाग्निचितिकः । प्रकृतिभेद एवायमेकः सहाग्निचयनेन वर्तते । अतिरात्रे चेदग्निर्नानिदं मधुश्चुन्निधनं श्यावाश्वमिति सामतृचं स्यात् । इह केचित् प्रलपन्ति– अस्ति परतन्त्रे विहितः पृष्ठशमनीयो नामाग्निष्टोमः सत्राङ्गभूतः, येन सत्रिभिरन्वितैः सत्रात् पृथक् पृथक् यष्टव्यम्, सोऽयमिति । न त्वेतद् युक्तम् । तत्र ह्य तावदुपलभ्यते—ज्योतिष्टोमाधिकाराज्ज्योतिष्टोमोऽयमग्निचितिक इति समाख्यानाच्चाग्निरस्मिन्नित्य इति । न त्वस्य पृष्ठशमनीयत्वे कारणमिहान्यत्र वास्माकमस्ति । येषां च विहितं पृष्ठशमनीय सोऽग्निचयनेन विना विहितः । अयन्तु समाख्यानाग्निचयनमुक्त्वा[5] वर्तते । ततोऽपि तेषां नादर्तव्यः । कः पुनरस्माकं पृष्ठशमनीयः स्यात्, यः कश्चित् प्रकृतिभेदेषु यो वा परतन्त्रे विहितः—

एकविंशत्प्रकारो[हि]प्रकृतेः कल्पनाविधिः ।
वेदासुवेदं वेदेमं स सामगमुखागतम् ॥

त्रयः क्रतूनां भेदाः—प्रकृतिः, प्रकृतिविकृतिः, विकृतिरिति । प्रकृतिर्नाम स योऽन्यस्मै धर्मान् ददाति, न स्वयं कुतश्चिदादत्ते । यथायमेकविंशद्विधो ज्योतिष्टोमः । प्रकृतिविकृतिः स यो ददात्यन्यस्मै धर्मानन्यतः स्वयमादत्ते । अथ विकृतिर्नाम स य आदत्ते न ददाति । यथा उपसदादयो[6] ज्योतिष्टोमाददते, न कस्मैचिद्ददति ।

तत्र प्रकृतिरनुक्रान्ता । अनन्तरं प्रकृतिविकृतिर्गवामयनमारभ्यते । द्वादशाहस्तु तत्रान्तर्भूतत्वात्तत एव सिध्यतीति न पृथगुच्यते । एकाहनि[7] वा । उक्थशब्दो यज्ञायज्ञीयादुत्तरस्मिन् स्तोत्रत्रये वर्तते । यज्ञायज्ञीयमनुक्रमसिद्धमुक्थादिसंस्थान्तर्गतमुक्थसाहचर्यादुक्थशब्देनापि क्वचित्क्वचिदुच्यते । त्रिणव त्रयस्त्रिंशान्युक्थानि इति त्रीण्येकविंशान्युक्थानि, षोडशमच्छावाकस्य इति चोक्थशब्देनोच्यमानत्वादुक्थमेवेदं भवतु, नानुक्थमिति चेन्न । उक्थानां त्रित्वस्य श्रुतौ दर्शनात् त्रीण्युक्थानि इति च । अथ यास्तिस्रः परिशिष्टा आसुस्तानिहैवोक्थानि चक्रतुः, इति च । ततोऽनुक्थमेवेदम्, उक्थसाहचर्यात् उक्थशब्देनापि व्यपदिश्यते । यथा छत्रिणो गच्छन्तीति । ऋते षोडशिनावर्तन्त इत्युक्ते षोडशिकानि सह षोडशिना वर्तन्त इति सषोडशिकानि गवामयनानि । अतिरात्रे[8] षोडशी प्रतिषिद्धा । प्रतिषेधाभावादन्यत्रास्ति । तदियं[9] व्यवस्थिततताविकल्प ऋते षोडशिकानि वा सषोडशिकानि वोक्थान्येकविंशानि स्युः । एवं व्याख्यायमाने षोडशिनो वैकल्पिकत्वस्य उक्थानामेकविंशतायाश्चार्थद्वयस्य विधानाद् वाक्यभेदो दोषः प्रसजति ।

---

१ को. पञ्चस्वति २ को. ते एषामिह ३ को. सामविकारस्येषु
४ को. एका ५ को. समाख्यानानाग्नि० ६ को. उपशदा०
७ को. एकनि ८ को. केतरात्रे ९ को. तदयं

न प्रसजति। प्रकृतिकल्पे विधानात् सिद्धं षोडशिनो वैकल्पिकत्वमनूद्यते। उक्थानां त्वेकविंशता विधीयते। एवं योज्यम्। यान्यषोडशिकानि[1] वा सषोडशिकानि वोक्थानि तान्येकविंशानि स्युरिति। यद्येवं, षोडशिनः स्तोमविधानदोषः प्रसजति। न प्रसजति। सषोडशिकानि इति हि समासस्यायं लक्षणविधिः। तेन सहेति तुल्ययोगे (पा. २. २. २८) इति। अतः षोडशिनाप्येकविंशस्तोमः सिध्यति। एवं हि भगवानाह— सषोडशिना सिध्यति वित्य नुद्र ? इति। अत्र यथा यस्सपुत्रो ब्राह्मणस्तस्य शतं देयमित्युक्ते न पुत्रेभ्यो दीयते, तद्वदिहापि सषोडशिकानि यानि तान्येकविंशानीति गृह्यमाणे षोडशिनो नैकविंशता विहिता स्यात्। विषम उपन्यासः, तत्र हि सपुत्रग्रहणमन्यत्र निवर्तनात् सार्थकं भवति। अत्र तु सषोडशिकानीति वचनं षोडशिन एकविंशतायामसत्यामनर्थकं भवेत्। अषोडशिकानिवर्तनार्थत्वे ह्यस्य गृह्यमाणे ऋते षोडशिकानीति वचनस्यानर्थकत्वमापतति। तस्मादुक्तवदेव षोडशिन एकविंशता सिध्यति। पञ्चरात्रियानि द्वादश स्तोत्राणि रात्रौ नीयन्ते, तानि रात्रशब्देनोच्यन्ते। श्रूयते हि—तदाहुरुद्गातरहन् रात्रिगमासीः इत्यादि। पञ्चदशी पञ्चदशवती पञ्चदशस्तोमा रात्रिः स्यात्।

ननु पञ्चदशिनीति भवितव्यम्। सत्यमेतत्। आचार्यप्रामाण्यात्[2] नीलोपः[2] कुत्रचिदस्तीति लक्षणं[3] मृग्यम्[3]।

त्रिवृत्संधिः। अन्त्यमतिरात्रस्य स्तोत्रं सन्धिर्नाम। अतिरात्रं[4]। इत्थं स्तोमो ज्योतिरतिरात्रो नाम। तेन[5] गवामयनं प्रारभ्यते इति। त्रिवृत्-पञ्चदश[6]-सप्तदशैकविंशे ज्योतिश्शब्दः त्रिष्वपि वेदेषु अर्थवादैः प्रतिपादितः, ते यस्य स्तोमाः स ज्योतिष्टोमः। ज्योतिरिति चासौ तद्वदभिधीयते। यथा वसन्ते वसन्ते ज्योतिषा यजेत इति। यश्चातिरात्रसत्रान्तर्वर्ती सोऽत्र ज्योतिश्शब्देनापि श्रूयते—ज्योतिष्टोमोऽतिरात्रो वि ह राजं पद्यत इति, गायत्री वा एषा ज्योतिष्पक्षा यद् द्वादशाहापेक्षातिरात्रा इति। अयमेव चातिरात्रो वैश्वानरशब्देनाप्युच्यते। श्रूयते हि—प्राणतपूर्वो वैश्वानरो वा न उत्तरः इति। अथैव वैश्वानरप्रायणीयोऽतिरात्र इत्यादि।

षोडशी यदा गीयेत द्वादशाहातिरात्रयोः।
एकैकस्मिन्नानीयात्तु विराजं स्तोत्रया त्रयम्॥
तत्र द्वे स्तोत्रिये पूर्वस्याह्न इत्यनृतं भवेत्।
द्वादशाहेऽप्यहीने स्यादतिरात्रस्य षोडशी॥
इत्थं ग्रहे यान्यन्यानि सत्राणीत्यस्य बाधम्।
स्यादित्यहीनपक्षस्थं कल्प्यं द्वे स्तोत्रीय इति॥
सत्राधिकारात् तत्त्वस्याः कल्पनायाः क्षयो भवेत्।
श्रुत्याचार्यगिरोरेवं परस्परविरुद्धता॥
तत्र श्रुत्यनुरोधाय यान्यन्यानीति गीरसौ।
द्वादशाहानपेक्षैव गृह्यतामेष निश्चयः॥
द्वादशाहे ह्यहीनेऽपि सति नास्त्येव षोडशी।
स्यादेव तद्विकारेषु यथादित्यायनादिषु॥

---

१ को. यान्यते  २ को. न्दीप्यापि लोपं ?  ३ को. लक्षणान्यं
४ को. इति रात्रं  ५ को. एन  ६ को ०पशदश०
७ को. यं चाति  ८ को. ज्योतिविधः

त्रीणि शतानि त्रीणि स्तोत्राणि चतुर्विंशानि स्युः । **उक्तविधः** । उक्ता विधा प्रकारोऽस्येत्युक्तविधः ज्योतिरिति । नपुंसकत्वादुक्तविधमिति भवितव्यम्, तेजोऽभिधायिनो ऽस्य नपुंसकलिङ्गत्वम् । इह तु पुल्लिङ्गतैवास्याभीष्टेति चेन्न । तदिदमेतयोः पुरस्ताज्ज्योतिरिति चान्तं महि ज्योतिर्युदौहतामिति च ज्योतिषी अग्निष्टोमौ इति च श्रुतावस्य नपुंसकलिङ्गस्यैव दर्शनात् । सत्यम् । उक्तविध इति पुंल्लिगोपादानमग्निष्टोम इत्यध्याहरणार्थं कृतम् । एवं कृते ज्योतिरग्निष्टोमेनैवोक्तविध[1] इत्युपपन्नम् । किं पुनरग्निष्टोम इत्यध्याहरणात् सिध्यति । अस्याह्नो नित्यमग्निष्टोमत्वं सिध्यति । इतरथा हि सर्वा ज्योतिष्टोमसंस्थास्तदतिदिष्टस्य ज्योतिषो विकल्पेरन् । स एष उक्थो यज्ञ इति च अष्टावहानि मध्य उक्थानि इति च श्रवणात् उक्थशब्दस्याभिधेयलिंगत्वं सिद्धम् । आयुरिति च नपुंसकलिंत्वात् तदायुरुक्थम् इति भवितव्यम् । अत्रैकः परिहारः । आचार्यप्रामाण्येनैव यज्ञवचनस्यायुः शब्दस्य अर्धर्चादिषु पाठो द्रष्टव्य इत्यपरः परिहारः । आयुरुक्थो ज्योतिरुक्थ इति समासावेतौ लिंगान्तरग्राहिणौ । यथा रथशब्दः पुंल्लिगः पञ्चरथीति समासात् नपुंसकलिंग.[2] । तद्वदायुरुक्थ्य इति । एवं च सति ज्योतिरुक्थ्यः पूर्वमहरित्येतच्च परिहृतं भवति । एते विधाः अभिप्लवस्यायमह्नां क्रमः, ज्योतिर्गौर्गौरादयः आयुर्ज्योतिरिति तत्परस्ताद् विवरिष्यते । एतेनैव ज्योतिर्गौरायुरिति त्र्यहेणोत्तारो गौरायुर्ज्योतिरिति त्र्यह उक्तविधो[3] भवति । नामतोऽत्र स्तोत्रविधिर्व्यवतिष्ठते न क्रमतः । एकविंशमान्[4] षोडश्यन्तः क्रतुः षोडशिमानित्युच्यते । अथवा उक्थ्य इत्यनुपत्य षोडशिमानन्त इत्युच्यते । अथवा उक्थ्य इत्यनुपत्य षोडशिमानुक्थ्य इति वर्ण्यत इति । **स्तोमाः** । स्तोमशब्दो यज्ञनामसु पठितो दृश्यते । दृश्यते च इन्द्रस्तोमश्चितिस्तोम इति । स्तोममेव तद्रूपेण समर्थयन्तीति च । यज्ञे च सुत्याहं प्रधानमितरत्तदंगम् । **तत. पृष्ठस्तोमः** । पृष्ठ्याहानीत्यर्थः । **त्रिवृत् स्तोममिति** । इत्थं स्तोमानि द्वादश स्तोत्राणि स्युः । कुतः स्तोत्राणीति । नपुंसकलिंगोपादानादध्याहार्यमेतत् । स्तोमपरत्वे हि पञ्चदश सप्तदश इत्यभविष्यत् । कस्यायं स्तोमविधिरपेक्षित आह—त्र्युदय[5] स्तोमाः । इत्येतेऽभिजितस्तोमास्त्र्युदयाश्चतुरावृत्ता[6] इति श्रुत्यर्थस्य कस्यचिद्विवरणमस्ति । श्रुतौ तस्य त्र्युत्तरिणः स्तोमा भवन्तीति चतुरावृत्ता[7] भवन्तीति च । त्रयस्त्रय उद्यन्त्यूर्ध्वं गच्छन्तीति[8] त्र्युदयाः । अयमेवेत्यर्थः[9] त्र्युत्तरिण इत्यनेनोक्ताः[9] । त्रिवृत् पञ्चदशमित्येकावृत् । एवं चतस्र आवृतः ।

**अथ…तेषु** । आवृत्तेषु स्वरसामाभिप्लवेषु सामविकारेष्वियानस्ति स सोमकल्प एव वक्तव्यः । सन्नपि तत्रोक्तौ ग्रन्थगौरवो भवेदितिकृत्वेहैवोच्यते ।

ननु तत्राप्येतावतैव ग्रन्थेन सिध्यति । सत्यमेतत् । प्रकृतिकल्पस्य तु स्वभावः कल्प्यमानानामह्नामल्पेऽपि परस्परस्वरतो विकारे सति तद्विवक्षया सर्वस्तोत्रानुक्रमणं स उपरुध्येत[10] ततोऽत्रैव वचनं साधीयः । सामविधेरधिकारान्तरत्वात् अथशब्दप्रयोगः । आवृत्ताशब्दस्य गुणलक्षणं मृग्यम् । आवृत्तानां स्वरसाम्नामभीवर्तस्य स्थानेषु सामान्तरविधानं करिष्यते । **इन्द्र…रयोः** । प्रथमोत्तमयोः स्वरसाम्नोरभीवर्तस्य स्थाने इन्द्रस्येन्द्रियं भवति । **एवं…तेषु** । एवमेवाभीवर्तेषु अभिप्लवेषु चाभीवर्तस्य स्थानेषु सामद्वयं पृष्ठव्यवस्थया स्यात् ।

---

१ को. ०मेनैवाक्त० ?  
२ को. पुस्लिङ्गः  
३ को. उक्तोविधो  
४ को. एकशिमान्  
५ को. त्र्यदं  
६ श्चतुराशृत  
७ को. श्चतुरावृतो  
८ को. शच्छन्तीति  
९ को. अयमेवार्थ…इत्युक्तं  
१० को. उपरुद्धेत

अथ पृष्ठं । अथ द्वादशरात्रकस्य दशमस्याह्नश्चतुर्विंशस्तोमस्य सतः पञ्चदशं ब्राह्मणाच्छंसिनः पृष्ठं स्यात् । सत इत्यनर्थकम् । नानर्थकम् । अस्याह्नश्चतुर्विंशत्वेन हेतुना ब्रह्मसाम पञ्चदशं भवतीत्यवबोधनार्थत्वात् । अग्निष्टोमसाम्नो हि त्रयस्त्रिंशत्वं विधास्यते, तत्र ब्रह्मसाम्नः पञ्चदशत्वे संस्तावे नैतदहश्चतुर्विंशं भवति । तच्चेदं ब्रह्मसामत्वमस्याह्नो गवामयनान्तर्भावे सत्युत्सीदति । तत् कुत इति चेद् वदामः ।

स्तोत्रीयाणां नवशती षोडशी नातिरात्रयोः ।
द्वाविंशं सप्तशत्यह्नो रूपाद्यो वान्त्ययोः स्मृता ॥
षट् च तेषां समासेन सहस्रं षट्शतोत्तरम् ।
अभिप्लवस्याशीतिश्च त्रयोदश शतानि च ॥
द्विशत्यो नव पृष्ठ्यस्य चतुर्युक्ता च विंशतिः ।
अभिप्लवास्तु तन्त्रेऽस्मिन् चत्वारिंशच्च पञ्च च ॥
पृष्ठ्या द्वादश सर्वेषामेषां शृणु समासतः ।
अष्टाशीतिर्नवशती सहस्रत्रितयं तथा ॥
स्तोत्रया प्लवपृष्ठ्यानामष्टाभिरयुतैर्युता ।
द्वाषष्टिर्नवरात्रस्य द्वे सहस्रे शते अपि ॥
गोआयुषोः[1] सहस्रार्धं छन्दोमानां समासतः ।
चत्वारिंशानि जानीयाच्छतानि दश सप्त च ॥
अह्नस्तु दशमस्यैकनवति द्विशती तथा ।
अयनस्य गवामेवमयुतानि नवैव च ॥
शतानि त्रीण्यशीतिश्च स्तोत्रयाः सप्त चागताः ।
अथास्य स्तोत्रीयाणामित्युक्ता संख्या तु या श्रुतौ ॥
सैवं सति नवोना स्यात् कथं पुनरनूनता ।
स्यादस्यादिति चेद् ब्रूमश्चतुर्विंशतया नव ॥
ब्रह्मसाम्नो हि दशमे निम्नियेरन्नियोगतः ॥

पुनरयं नियोगः । इत्थमेवेयं[2] संख्या पूरयितव्या नान्यथेत्यत्र ब्रूमः—वक्ष्यति पञ्चभिर्धर्मै कल्पमुपेक्षेतेत्यत्र, तत्र यश्चतुर्विंशस्तोमो दशमाह्निकस्य[3] ब्रह्मसाम्नो ब्राह्मणादेकस्मिन् पक्षे लभ्यते । कथमिति चेत्तत्र श्रूयते—तमाहुश्चतुर्विंशमेतदहस्तत् सर्वमेव चतुर्विंशं कार्यमेतेषां प्रजापतेः पुत्राणामेकवीराणामहर् लोभायेति यद्वैताः त्रयस्त्रिंशदक्षरा[4] भवन्ति । तेन त्रयस्त्रिंशस्तोमं नान्तर्यन्ति । इदमिहोक्तं विज्ञेयं, द्वादशापि स्तोत्राणि चतुर्विंशानि स्युरिति । पुनरपि श्रूयते—भूयांसि तु रूपाण्यवराद्धान्त इतराण्येव भूयांसि रूपाणि । त्रयस्त्रिंश एव कार्यः । त्रयस्त्रिंशद्वै सर्वा देवताः । सर्वास्वेते देवतासु यज्ञस्यान्तः प्रतिष्ठन्ति इति । इदमिहोक्तं विज्ञेयमग्निष्टोम-

---

१ को. गोअयुषोः २ को. इत्थमेव यः ३ को दाशमा० ४ को. त्रयस्त्रिंश०

साम त्रयस्त्रिंशमितराणि स्तोत्राणि चतुर्विंशानीति। पुनरपि श्रूयते—संपदं हे तु लोभयन्ति, ब्रह्मसाम्न एव स्तोत्रीयः उपादायात्रोपदस्याह्नः संपदो यन्त्युभयेषु प्रतितिष्ठन्ति। ये चायुजो ये च युगमन्तः इति। इदमिहोक्तं विज्ञेयं, ब्रह्मसाम पञ्चदशमग्निष्टोम साम त्रयस्त्रिंशम्, एवमेकस्य चतुर्विंशमेवाहः संपद्यते। ततश्चतुर्विंश-संपदो नयन्ति।

उभयेषु[1] च स्तोमेषु अयुक्षु युग्मत्सु च प्रतितिष्ठन्तीति। आद्यः पक्षो नोपात्तः, नायुजस्सन्तीति, मध्यमश्च नोपात्तः, नात्र चतुर्विंशसंपदिति। तत्र चतुर्विंशसंपद्द्वादशाहे पृथगवस्थिते परिगृहीता कृतार्था सती गवामयनान्तर्भूता[2] सती श्रुत्युक्तया गवामयनस्तोत्रियासंख्याया विरोधात् त्यज्यते। मध्यमश्च पक्ष आश्रीयते[3]। स हीमां संख्यामवरुणद्धि। यस्यापि च श्रुतत्वात् श्रुतिबाधदोषो नापतति, न च वामू स्तोत्रीयाः श्रुतेरबाधेनान्यस्मात् प्रदेशादुपादातुं शक्याः। बह्वृचसूत्रे तु पृथगवस्थितेऽपि द्वादशाहे मध्यम एव पक्षो निर्दिष्टः। अपि वेदं[4] चतुर्विंशस्तोमं दशममहस्त्रयस्त्रिंशमग्निष्टोमसामेति। तत एवं निश्चीयताम्, गवामयनिके ऽस्मिन् अहनि पञ्चदशं ब्राह्मणाच्छंसिनः पृष्ठमिति नोपादेयमिति।

एतद्दर्शनमस्माकं येनेच्छन्ति श्रुतीरितम्।
गोसत्रस्तोत्रियासंख्यामन्यथा[5] पूरयन्तु ते॥

त्रिकं स्तोमः। त्रयोदशमस्याह्नः स्तोत्रस्तूष्णींस्तोमो नाम स त्रिकम्। आयं गौः[6] (जै. सं. २.६.३) इति तिस्रः सार्पराज्ञो नाम ऋग्विधेः स्तोत्रम्[7]। स्तोमकल्पे नाधिकारः। प्रकृतिकल्प एव सार्पराज्ञीनां विधास्यमानत्वात्। सार्पराज्ञीत्यनर्थकम्। नानर्थकम्। ऋगन्तरप्रसङ्गनिवर्तनार्थत्वात्। अर्थात्तु स्तावनात् त्रिषुवनेऽधिकृत्य श्रूयते—भूयोऽक्षरासु वा स्तुवीरन् इति। ततोऽग्निष्टोमसाम्नः तास्तुते वा तिष्ठते वा मुक्त्वा सार्पराज्ञीस्ताभ्यो ज्यायसीषु वा कनीयसीषु वा तदनुरूपाष्वृक्षु गानं तूष्णींस्तोमस्य प्रसजति। यथेतरत्र तदासां पुनर्विधिर्निवर्तयति। किं पुनरिह स्तोमस्य वृद्धिर्वा ह्रासो वा कर्तव्यः[8], नैतदप्यत्र वाच्यम्। स्तोमोऽप्ययं सामकल्पे पुनर्विधास्यते। तदिह स्तोमान्तरप्रसङ्गमर्वाक् स्तवनातिष्टवनयोर्वोपप्रस्तुयुः[9] तावतीभिर्वा न स्तुवीरन्निति प्रापितं निवर्तयिष्यति। तत इहान्त्यस्यापि सतो ऽग्निष्टोमसाम्नोऽर्वाक्स्तवनातिष्टवनकृतदोषो[10] यथान्तस्य स्तोत्रस्य तथैव निर्हर्तव्यः[11]। नोत्तरस्तोत्रविक्रिया। पर्यायत्रित्वादेव गतार्थत्वादयं विधिरनर्थकः[12]। नानर्थकः[12]। प्रथमामेव त्रिरावर्तयेदित्यस्य विष्टावभेदस्य निवर्तनार्थत्वात्। तस्मिन् हि पर्यायैक्यं सङ्कद्धिकरणम्। ननु ? सार्पराज्ञीष्विति[13] बहुवचनादेव नासौ विष्टावभेदोऽत्र प्रसजति। किमिह भवान् मुह्यति, पक्षान्तरेण खलु बहुवचनप्रयोगः पराचीषु स्यादित्यनेन कृतार्थो ऽभवन्नैवं विष्टावभेदं निवर्तयितुं शक्नोति। पञ्चतत्वात् सप्ताशीति महारहद्दशाजनानि पञ्च सामानि समुदितानि महाव्रत-शब्देनाभिधीयन्ते। श्रूयतेऽपि[14]—सप्ताशीति महाव्रतस्य स्तोत्रीया भवन्ति इति। महाव्रतमस्मिन्नस्तीति महाव्रत-वान्। यथा विष्टुवानित्यहर्विशेषस्य संज्ञा, तथा महाव्रतवानिति महाव्रतमित्यपि च। इदमहः[15] महाव्रतयोगाद-

१ को. सत्रए उभयेषु
२ को. ०यनान्तर्भूते
३ को. आश्रयते ?
४ को. वाक्यं
५ को. संख्यमन्यथा
६ को. दायंगौ
७ को. नास्ति पाठः
८ को. कर्तव्यम्
९ को. ०नयोस्तावतिर्वोप०
१० को. मसाम्नोवाक्स्तवनम्
११ को. निर्हन्तव्यम्।
१२ को. ०र्थकम्
१३ को. सर्प०
१४ को. श्रूयतेति
१५ को. ०दमहं

भिधीयते । यथा षोडशिशब्दो बृहता षोडशिना तुष्टुवानं हरिवतीषु षोडशीत्यादौ स्तोत्रविशेषे दृष्टस्तद्वति क्रतौ बहुशो दृश्यते । तदाहुः—नोक्थ्यष्षोडशी कार्यः इति । षोडश्यय यज्ञक्रतुः उक्थ्यः षोडश्यतिरात्र इत्यादौ षोडशिमानिति तद्वन्महाव्रतवानिति । तस्य शिरः[1] । यद्वानयमनविशेषो महाव्रतवानासीत् तस्य स्तोत्रस्य महाव्रतस्य त्रिवृच्छिरः । पञ्चजन ईजनं सामात्मा स पञ्चविंशो भवति राजनमिति क्रमार्थः ।

अत्रेदं ब्रूमहे—सर्वेषामङ्गानां स्तोत्रविधिरत्र क्रियते । सामविधिरुत्तरत्र । अस्य पुनः स्तोत्रस्योभयमुभयत्र क्रियते । राजनं हि स्तोत्रात्मभूतं सामात्र विहितं, तद्विधानादेवाङ्गान्यपि गायत्रादीन्यर्थतो विहितानि मन्तव्यानीति । पुनरस्योभयत्र विधाने प्रयोजनमिति चेत्, सप्तरात्रेषु श्रूयते—सं सप्तयोरायप्त्येषु पञ्चविंशं महाव्रतम् इति । तत्र यद्येवमर्थो गृह्येत; यन्महाव्रताख्यं स्तोत्रं तत् पञ्चविंशस्तोमकमत्र स्यादिति, गायत्रादीनामपि पञ्चविंशता प्रसजेत् । अर्थाच्च त्रिवृदादीनां निवृत्तिः । अथैवं गृह्येत, यं महाव्रतं महाव्रतैकदेशभूतं पञ्चविंशस्तोमकं तदत्र स्यादिति राजनमेव विहितं स्यात्[2] । अविधानाच्च गायत्रादीनामभावः । तत्रैवमवसीयेतैव पक्षद्वये पूर्वपक्षः ।

सामकल्पे स्तोमविधानान्निवर्त्यते । उत्तरोऽप्यत्र सामविधानामिदमुक्तं भवति । त्रिवृदादीनाञ्च सर्वस्मिन् महाव्रतनिर्देशे मा भूदभावः इत्येतदर्थः पुनर्विधिः इति । अथवा महाव्रतैकदेशे महाव्रतशब्दस्य कल्पनं सत्यांगतान्यायेनेति कृत्वा उक्तयोः प्रसङ्गयोः उत्तरं निवर्त्य पूर्व एवावतिष्ठते । स समासकल्पे त्रिवृदादिविधानान्निवृत्तः । अत्र तु राजनविधानं वामदेव्यनिवृत्त्यर्थम् ।

नन्वविधानात् सामकल्पे यश्च ब्राह्मणे विधिस्तस्य तत्रैव निषिद्धत्वाद्[3] वामदेव्यस्येहाप्रसङ्गः ।[3] अत्र ब्रूमः—अस्मिन्नहनि अग्न्युपस्थाने मन्त्राः नमस्ते गायत्राय इत्यादयो विधास्यन्ते, तत्रास्ति नमस्ते[4] वामदेव्याय साम्ने इति । तत्र गायत्रादिसमवेतवचनशब्दसन्निधानश्रुतस्य वामदेव्यशब्दस्यापि समवेतवचनशब्दत्वमत्र[5] सत्यां गतौ न्याय्यमिति कृत्वा राजनवामदेव्ययो रूढ इह विकल्पो गृह्येत । अतस्तु राजनविधेर्वामदेव्यत्वं निवर्तते ।

इति स्तोमकल्पवृत्तौ गवामयनस्तोमविधिः
प्रथमः खण्डः

१ को. स्तिरः २ को. स्याव ३ को. निषिद्धत्वात्तवश्यावश्यैव वामदेव्य०
४ को. रम्मस्ते ५ को. ०समवेतनव०

# अथ द्वितीयः खण्डः

अथ क्रमागता[1] विकृतयोऽनुक्रम्यन्ते । त्रिविधाश्च ताः । एकाहाः, अहीनाः, सत्राणि । प्रथममेकाहाः कल्पयिष्यन्ते । एकाहसाम्नः[2] बहिष्पवमानादुत्तराणि स्तोत्राण्यच्छावाकसामान्तानि एकोत्तराणि एकोत्तरस्तोमानि । पूर्वस्य स्तोत्रस्याय[3]·········मो मतस्तस्मादेकैकसङ्ख्याधिकस्तोमानि स्युः ।

**अष्टा···कदम्बम्** ।[3] अत्राज्यमित्यध्याहार्यम् । नैवम् । एकोत्तरत्वस्य श्रुतिविहितस्य श्रवणात् तत्सन्निधौ तु सामशब्दस्य श्रवणात् सामेत्येव । एवं चेदेकोत्तर्येणैव साष्टादशप्राप्ते कदम्बवचनमनर्थकम्, नानर्थकम् । अष्टादशसविंशयोरानन्तर्यनियमार्थत्वात् ।

ननु सविंश आर्भव इति तत एवैनयोरानन्तर्यं सिध्यति । सत्यमेतत् । सिद्धस्यैव ह्यर्थस्य नियमः । स परिसंख्यया वा भवति । एवं हि मन्तव्यम् । सविंश आर्भव इत्यत एव वचनात् अस्मिन् क्रतावेतत् प्रातिलोम्यादिष्टे[4] चोत्तरस्मिन् उभयत्राप्यष्टादशविंशयोरानन्तर्यं सिद्धम्, पुनरेव तु तदर्थोऽयमस्मिन् क्रतावष्टादशमच्छावाकस्येति यत्नः क्रियमाण उत्तरस्मिन्नेनयोरानन्तर्यं निवर्तयन्नर्थवान् भवतीति ।

**एते स्तोमाः** । एत एव स्तोमाः सन्तः प्रतिलोमा दशास्य[5] स्युः । तस्य मानं पूर्वस्माद् विधेः एकविंश च बहिष्पवमानं सविंशमाग्नेयमाज्यमिति प्राप्तं, तस्यायमपवादः कृतः । किमाग्नेयमाज्यमेकविंशं, नैवम्, अविधानात् प्रातिलोम्यहानाच्च[6] । अथ किं सविंशमेव एवमेव प्राप्नोति, यावद्धि वचनं तावद्वाचनिकमिति अवशदनस्य ब्राह्मणोक्तस्य हानिरेव स्यात् । अष्टादशसविंशयोश्चास्मिन् क्रतावानन्तर्याभावे कृतो यत्नो व्यर्थः स्यात् । ततोऽनवदशः सविंशं बाधित्वा आद्यन्त्यस्य स्तोमो भवति । कुत इति चेद्, एकैका स्तोत्रीयावशीयते इति श्रुतौ दर्शनात् ।

ननु अष्टादशसविंशयोः द्व्यन्तरत्वमनादृत्यैव श्रुतिराह—यद्वे राह यद्द्वयेवैकैकया स्तोत्रियाऽवशीयते इति चेद्, इहापि सविंशादेः अविंशस्य या सविंशस्य वा अवशनमनादृत्यैव द्वये वैकैकया स्तोत्रीयावसीयते इति श्रुतिराह, इति शक्यमेव गृहीतुमत्र ब्रूमः—यद्यप्यष्टादशसविंशयोः द्व्यन्तरत्वं; तथापि विद्यत एव तत्रोपशदनम् । अत्र त्वाज्यस्य सविंशतया एकविंशतायां न स्यात् । अवशदनमुपशदानवशदननिमित्तं चैतयोः क्रत्वोर्नमिधेयत्व[7] तदाज्यस्य सविंशतायामेकविंशतायां[8] वा शदस्यहीनं ? स्यात् । साधीयत्वमस्य[9] नवदशत्वे भवति ।

नन्वेवमुपशदे नवदशस्याविद्यमानत्वात् तत एवेति वचनमसम्यक् स्यात् । सम्यगेवेदं[10], ब्राह्मणोक्तस्य पक्षान्तरस्याश्रयणं भवति । एवं श्रूयते—ह्युपशदे[11] सविंशमग्निष्टोमसाम भवतीति तच्चैकोत्तरस्तोम-

---

१ को. क्रमागतो
२ को. एको साम्नः
३ को. अत्र लेखकस्खलनं प्रति भाति ।
४ को. प्रतिलोम्या०
५ को. दशस्य
६ को. प्रतिलोम्यहाना च
७ को. कृत्वोर्ना०
८ को. ०कविंशशतायां
९ को. ०साधीयत्वस्य
१० को. सम्यगेवेतं
११ को. ह्युपवेशदे

विधिपूर्वकमुपशदस्य नवदशार्हत्वं संपादयति । यत्तु पक्षान्तरं तदाहुरप्रजनिस्तोमो विराजमभिसपन्न इत्यारभ्य पुनरेव श्रुत्या प्रतिपादितम् । तदाहृत्योपशदस्य सप्तिमाचार्यः कृतवान् । पूर्वोक्तस्तु पक्षो ब्राह्मण एवावस्थितः,[1] स आचार्येण क्लृप्तोऽप्यस्त्येवोपशदस्य । तमाश्रित्याचार्येणोक्तमेक एवेति । तथा च सति नवदशमेषामाद्यमाज्यं भवति । अथवा । एकोत्तराण्युत्तराणि स्तोत्राणि इति वाक्यं छेत्तव्यम् । तथा च सत्याचार्येणापि श्रुत्युक्तं पक्षद्वयमुक्तमुपशदे भवति । तत्राप्येक एव प्रतिलोमा इत्यतिदेशेनास्य पक्षद्वयस्यापि प्रसक्ताविष्टपक्षावधारणार्थमिदमुक्तं[2] मन्तव्यम्, तस्य सप्तविंशं बहिष्पवमानमिति । यस्मिन् पक्ष आश्रिते प्रातिलोम्येन[3] सविंशं बहिष्पवमानं स्यात् स एवाश्रयणीयः ।

शद इति एवं चित्विय । उपशदस्य स्तोमविधिः एकविध एव, यतस्तूपशदस्य द्वितीयपक्षवशेनैव सामक्लृप्तिः करिष्यते, ततः सोऽभिमतः । एकविंशशदस्याज्यमाद्यं चेदवशीयते,[4] एकैकस्तोत्रपदे तत्प्रातिलोम्यं हीयते । स्तोऽस्मिन् अष्टदशोऽप्येतौ दोषौ । माध्यन्दिनस्य हि कल्पान् पञ्चदशत्वे द्विस्तोममाज्यत्रयं भवेत् । दोषेण नवदशत्वे तौ नैत एवेति च मृषा । श्रुतौ नवदशस्य[5] अस्ति पक्षो, नवदशार्भवः पुरोकस्याम् इति तिसृणामित्यध्याहार्यम् । निर्धारणे षष्ठी । आसां तिसृणामृक् स्यान्नानदा । अस्य सामविधेः एतद्रूपस्यैव सामसंकल्पे करिष्यमाणत्वादत्र स्य...सोनर्थकः । नानर्थकः । अनुष्टुभः प्राक्तनस्य सामकल्पे दृष्टस्य सामविधेः कस्यचिदनित्यत्वमस्तीति ज्ञापनार्थत्वात् । अथ शाखान्तरविहितोऽप्यष्टापृष्ठोऽप्तोर्याम एव परिगृहीतोऽस्माभिर्भवति । अस्ति हि श्रुत्यन्तरे—बृहद्वैराजगर्भं होतृपृष्ठं भवति, रथन्तरं वा वामदेव्यं शाक्वरगर्भं मैत्रावरुणस्य[6], श्यैतं वैरूपगर्भं ब्राह्मणाच्छंसिनः, नौधसं वा कालेयं रैवतगर्भमच्छावाकस्य इति ।

ननु ऊर्ध्वमप्यनुष्टुभो गूर्दभद्रो द्वादशपुत्रार्थत्वादिरस्त्येव तत्र विकारः[7] । सत्यमस्ति । तस्य त्वस्माभिः अपरिग्रहार्थे अनुष्टुभादेरयं पुनर्विधिः नित्यत्वाय क्रियते[8] । स एवेतरस्यानित्यतां द्योतयति । देवधामम् । अत्र तु बृहच्छर्च तयोः अनुष्टुभस्यात्मदर्शनात् रथन्तरं वेति पक्षो नादर्तव्यः[9] । एवमप्तोर्यामस्य द्वैविध्ये सिद्धे वदामः । येयमष्टापृष्ठता[10] सास्याहर्गणान्तर्भूतस्याकल्पनीया नैकाहस्येति । कुत इति चेत्, अस्माकं प्रत्यक्षविहितेन सता वचनस्याधिक्यात्[11] । अनुमितस्य परतन्त्रविहिताष्टापृष्ठत्वस्य[12] तुल्यमेकत्र विकल्पयितुमयुक्तत्वात् । किं पुनरप्तोर्यामवानस्त्यहीनसत्रं[13] वास्य । हीनस्तु वक्ष्यति ह्याचार्यः । तासां द्वे सत्रं नावगच्छतः, अप्तोर्यामो वाजपेयश्चेति । यदि ह्यहीने ह्येतौ न स्यातां नाहर्गणमित्यवक्ष्यत् । कः पुनरप्तोर्यामवानहीनः, कौषीतकिनां सर्वमेधो नाम दशरात्रः । तत्र श्रूयते—वाजपेयं षष्ठमहः अप्तोर्याम सप्तममिति । तत्रायमष्टापृष्ठो भवतु । यथा राणी ताराणीति । यद्वाहिष्ठीयादीनि । अस्याष्टापृष्ठत्वकल्पनायां शुभभद्रोद्वंशपुत्राणां तत्र श्रुतानां निवृत्तये साकमश्वादीनि विधास्यन्नाचार्यः कल्पस्वभावमनुवर्तितुमविधेयमहर्मध्यवर्तितामनुक्रामनि[14] । षोडशी स्यादिति वाक्यशेषः । परस्तोमविधिरनुक्रान्तया पञ्च स्तोत्र्यः क्रमेण भवन्ति । पञ्च-

---

१ को. ०वावस्थितं
२ को. ०क्ताविष्टवप०
३ को. प्रतिलोम्येन
४ को. ०दविवशीयते
५ को. ह्युपशतस्य
६ को. शाक्कुरग०
७ को. विकाराः
८ को. क्रीयते
९ को. नादर्तव्यम्
१० को. धेयमष्टापृष्टंत
११ को. वचनशयित्वात्
१२ को. ०ष्टापृष्टत्वस्य
१३ को. वानस्त्यहीनः सत्रं
१४ को. र्मध्यवतितमनु०

त्रिरात्रश्च स्यात्। स्याच्च पञ्चस्तोमत्रिवृत्सन्धिः। सन्धिश्च स्यात् त्रिवृच्च स्यात्। रात्रिसन्ध्योः स्तोमवचनं सर्वत्राप्यविशेषादनर्थकम्। नानर्थकम्। अभिव्यष्टिनिमित्तस्य नेहाप [र] रात्रं समेत्य तुष्टुवुरित्यस्य पक्षस्य नियमार्थत्वात्। त्रिवृदुक्थानि अतिरिक्तोक्थानि नामसन्धेः पराणि चत्वारि स्तोत्राणि आर्षभादीनि[1], स्वासु इदं विष्णुः (जै. सं. १.२३.९) इत्यसुगीयमानाः संक्षारश्च अतिरिक्तानि सामानि स्युः।

**अथ तानि**। अभिरिह प्राशस्त्ये। प्रशस्तानि तान्यभ्युदितानि सस्थाश्रयाणि सामानि न सन्ति। प्रागनुष्टुभः नानदादीनि तानीति वा ज्ञापनायैव तद्विधिः।

इति स्तोमकल्पवृत्तौ एकाहस्तोमविधिः

द्वितीयः खण्डः।

---

१ को. आर्षगादीनि

## अथ तृतीयः खराडः

क्षिप्र इति । सद्यस्क्रियो[1] नाम । अथ मानसं···एत इति । ये क्षिप्रस्य त एव त्रिवृत एव । अथशब्दोऽनर्थकः । नानर्थकः । अप्रकृतस्यापि कस्यचिदिह विधिरस्तीति ज्ञापनार्थत्वात् । तस्मादिदं वाक्यद्वयम् ऋक्सामक्लृप्तिमपि क्षिप्रगतां[2] ज्ञापयतीति ज्ञातव्यम् । तस्य वृत्ति आपत्येव पुनरभ्यावर्ति । आज्यपृष्ठाग्निष्टोमसामानि त्रिकस्तोमानि स्युः । पुनरभ्यावर्तीनीति[3] वक्तव्यम्, नैष दोषः । आवर्तिजातेरेकत्वात् । तद्विवक्षायाम् ऋचा स्तुवन्तीति[4] द्वे द्वे उत्सृजन्तीत्यर्थः । स्तोमविधिरयं लघुनायकेन कृतः । बहिष्पवमाने त्रयस्तृचाः, तेषामेकैकया स्तवने त्रिकस्तोमो भवति । आज्येष्वेकैकस्तवने[5] पञ्च, पञ्चेनैव एकस्यैव तृचस्यायमभ्यासः । स न बहुत्वे कारणम् । नहि गोशब्दस्य पुनः श्रवणादन्यत्वं, घटस्य[6] वा पुनर्दर्शनाद् भवति । तत आज्यान्येकैकस्तोमानि पञ्च त्रिचा । मध्यत्रिचा मध्यन्दिने । ननु तृचा[7] एव नैवासामभेदात् । यदि हि तदेव सामावत्स्यत् आज्यवदभेदोऽभविष्यत् । किं पुनरिह सामान्यत्वात् तृचभेदः प्राप्नोति, न प्राप्नोति । एकस्य तृचस्य सामभेदाद् भेदो भवति । नानेकस्य सामैक्याद् भेदः । एवमेव हि द्वितयीयम् । [illegible] भवति यत्रामहीयवे[8] तृचयोरिति त्रिवृद्बहिष्पवमानमिति च । यदि हि बहिष्पवमानेऽप्येक एव तृच[9] आपत्स्यत, आज्यभेदोऽभविष्यत् । अतोऽत्र बहिष्पवमाने तृचा भेदप्राप्तिरनुपालम्भवं चैव तृचां मध्यन्दिने । अतोऽस्य पञ्चकस्तोमः पृष्ठाग्निष्टोमसामान्याज्यवचनमेकवचनस्याप्युपपन्नत्वात् तृचवन्ति । इह तृचस्थं साम तृचशब्देनोच्यते । प्रकृतितः प्राप्तेषु तृचैकर्चेपु तृचस्यैकैकया-[भेदा-]देकस्तोमानि । आर्भवे पञ्चतृचाम् एकं च द्वयं च । ततोऽस्य सप्तकस्तोमः ।

नन्वविधानादेकर्चयोरिहाप्राप्तिः, तृचगतानामेव ह्यचामेकैकया स्तवनं विहितम् । अत्र ब्रूमः—नेह तृचा वा एकर्चा वा विधीयन्ते, प्रकृतितः प्राप्तत्वादेव प्राकृतेषु तृचैकर्चेषु तृचाननूद्य तत्र भागाः पुनर्विधीयन्ते । ते च विधीयमानास्तृचगतानेव भागद्वयान् निवर्तयितुमुत्सहन्ते, नैकर्चे । ततः स एक एवार्भवश्चतुष्टोमः । चत्वारः स्तोमा अस्येति चतुष्टोमः । अग्निष्टुच्चतुष्टोमः[10], अग्निष्टोमसंस्थाविशेषवचनात् । प्राकृतास् त्रिवृत्पञ्चदशं दशैकविंशा एव । यथाप्रकृत्येव चैषां सन्निवेशः । एवं चेत्, मा भूच्चतुष्टोमग्रहणम्, प्रकृतेरेव ह्ययं स्तोमविधिरागच्छति । सत्यमेतत् । कल्पना-[यास्-] त्वेष स्वभावो यद् विधेयमध्यपतितस्याविधेयस्यापि कस्यचिदनुक्रमणम् । एवमेतत् परिभृतं नाम । यथा त्वन्यत्र स्तोमातिदेशः कृतः । ज्योतिष्टोमेनैव ज्योतिरुक्तविधः । एतेनैवोत्तरस्त्र्यह उक्तविध इत्यादि । अत्रापि तद्वज्ज्योतिष्टोमेनैवाग्निष्टुदुक्तविध इत्यकृत्वा चतुष्टोम इत्युक्तिरर्थान्तरस्य प्रज्ञापनी भवितुमर्हति । तत उच्यते—चत्वारः स्तोमाः समस्ताश्चास्य स्तोमा भवेयुर्व्यस्ताश्च भवेयुरित्येवमर्थश्चतुष्टोमनिर्देशः । तस्मात् त्रिवृदादिषु चतुर्ष्वेकैकोऽप्यग्निष्टोमस्तोमः स्यात् । समुदिताश्चत्वारो ज्योतिष्टोमवत् । एवमय पञ्चविधोऽग्निष्टुत्स्तोमविधिश्चतुष्टोमग्रहणात्[11] सिध्यति । श्रुतिश्चेममर्थं[12] मुक्तसंशय करोति । श्रूयते हि · स यो

---

१ को. सद्यस्क्रयो　२ को. क्षिप्रगतां क्षिप्रान् क्षेपीयसि ज्ञापयसि　३ को. ०रभ्यास०

४ को. स्तुबतीति　५ को. ०कस्तवन०　६ को. घटस्या

७ को. चित्र (उभयत्रापि समः)　८ को. गंयत्रा०　९ को. अचा

१० को. अग्निष्टच्च०　११ को. अग्निष्टुवत्स्तो०　१२ को. श्रुतिश्चैममथं

मुखेन पापं कृत्वा मन्ये [त] तत्र ब्रतािग्निष्टुता यजेत इत्यादि । चातुर्विध्यम् ततोऽस्य । व्यस्तचतुष्टोमता सिद्धा । पुनश्च श्रूयते—अथो आहुर्य एवायं चतुष्टोमोऽग्निष्टोमस्तेनैव यजेत इति तस्य यत्त्रिवृद्बहिष्पवमानं भवति इत्यादि । ततोऽस्य ज्योतिष्टोमवत् समस्तचतुष्टोमता सिध्यति । अथाप्याग्नेया भवन्त्यग्निष्टुत्सु इति पर्याये अग्निष्टुत्पञ्चहुत्वश्रवणमेतद्व्याख्यानमनुरुणद्धि ।

नन्विदमपि श्रुतावस्ति—त्रिणवेनौजस्तास्त्रयस्त्रिंशेन श्रीकामः इति । सत्यमस्ति । प्रतिषिध्यते त्वेतत्तव[1] । उक्तैव चतुष्टोमता पुनरपि श्रुत्या[2]—तदु वा आहुर्व दशमेवैतं ? सर्वं य एवायं चतुष्टोमोऽग्निष्टोमस्तेनैव यजेत इति प्रतिषिद्धत्वादचोद्यमेतत् इति । चितिस्तोमस्य क्लृप्तौ षट्पञ्चाशत्त्रिशती स्तोत्रीयाणां भवति । तथा च सति अथ यत् त्रीणि षष्टिशतानि स्तोत्रीया भवन्ति इति ब्राह्मणोक्तेन विरुध्यते । ततः शाखान्तरविहिता[3] एषा स्तोमक्लृप्तिः आचार्येण परिगृहीतेति चिन्त्यम् । अथवा ईषदूनत्वेऽपि तत्त्वस्याविरुवात इति षट्पञ्चाशैव त्रिशती इष्टार्थपादसिद्धये षष्टचधिका त्रिशती[4] । तथा च ब्राह्मणेनोपादीयते इति ।

अथ...क्लृप्ताः । अथैते ज्योतिर्गौरायुरिति गवामयन एव क्लृप्ताः । विशेषविवक्षयेदमुक्तमग्निरात्रः ? । अत्रैता एव संस्थाः क्रमेण स्युः । तेषामस्य । तेषामुक्तमस्य सामक्लृप्तावयं विशेषः कथ्यते ।

नन्वेष सामकल्प एव वक्तव्यः । वक्ष्यते च तेषामुत्तमस्य नित्या गायत्री इत्यारभ्य उभयत्र चाविशेषः । अत्र ब्रूमः—सामकल्पे तावदेकाहभूतस्यायुषो विशेषः, स तत्कल्पे वक्ष्यते । इह तु ज्योतिष्टोमे नरायुषो वाहस्संघातस्यान्तं प्रपन्नस्य यो विशेषः स उच्यते ।

तस्येति । यथा एत एव पूर्वे अहनी ज्योति [रति] रात्र इत्यारभ्य त्रिष्वश्वमेधेषु ज्योतिर्गौरायुश्चोत्तमानि अथाहानि विधास्यन्ते । तेषां त्रयाणामपि समानमिदं तृतीयसवनं विधीयते । भवत्वेवा गौरायुषश्च ज्योतिषस्त्वेषा क्लृप्तिः सप्तदशत्वादार्भवस्य स्याच्चैव ? सत्यमेतत् । उष्णिक्ककुभोः स्तोमानुकम्प्यायैकर्चेन कल्प्यौ इति निर्दोषो भवति ।

ननु न्याय्यमेवार्थजातं[5] पुनर्विधिबलात् परिकल्प्यम्, अत्र ब्रूमः—अतिरात्रत्वान्मधुश्चुन्निधनमतिरात्रोक्थानि[6] च षोडशिमत्त्वान्नानदः अनुष्टुभि गौरीविता भावाश्चाज्यत्वाच्च सुज्ञानाभावः । सर्वमिदं लिङ्गवचनानुगमान्न्याय्यमेव कल्पितं, विकृतिकल्पे चाभिजिदादिष्वाचार्यप्रवृत्तिरिममर्थं द्रढीकरोति एकविंशायतनो ह खलु वै षोडशी इति, अन्त्येन स्तोत्रेण समस्तोमः इति च श्रुतेः प्रायो[7] दर्शनाच्चैकविंशः । षोडशी त्रिकद्रुकं[8] । इत्थंभूता ज्योतिर्गौरायुश्च त्रिकद्रुका नाम भवति । संज्ञाप्रयोजनात्त्रैकद्रुकानुष्टुबित्यादौ[9] त्रैकत्र्यहत्रैकद्रुकौ त्रिकद्रुकाणां संघश्च स्यात् । त्रिरात्रश्च स्यात् । गर्गत्रिरात्रवदित्यर्थः । एवं चेदहीनप्रकरण एवेदं वाक्यं न्यस्तव्यम्, तत्र च इयतैव यत्नः सिध्यति । सत्यं भवानाह—ततो व्याख्यान्तरमवलम्बामहे । एषां त्रयाणामेकाहानां त्र्यहंभावप्रतिपादनमिदं क्रियते । अयं तु तदुक्तसमुदायस्त्र्यहः स्यात् । यदा यक्ष्यते । एतैर्यजमानस्त्रिभिरनुक्रमेण यजेत । नैकेन द्वाभ्यां वेष्ट्वा कृती स्यात्, यथा चतुर्भिश्चातुर्मास्यपर्वभिरिति ।

इति स्तोमकल्पवृत्तौ एकाहस्तोमविधिः
तृतीयः खण्डः

---

१ को. त्वे तव ? २ को. श्रुत्यावधातो ३ को. शङ्खान्तर० ४ को. त्रिशती
५ को. न्यायमे० ६ को. ०त्वान्मधुश्च्यु० ७ को. प्राय ८ को. तिद्रुका
९ को संज्ञाप्रयोजन० १० को. त्रैकद्रुत्यनुष्टु०

# अथ चतुर्थः खण्डः

**यज्ञमिति वा ।** चतुर्विंशमग्निष्टोम साम विहितम् । अयं त्वत्र विशेषः, यज्ञायज्ञीयस्य षड्भिरेव स्तोत्रीयाभिः स्तुत्वा तत इत्थं सामभिः स्तुते ।

**प्रत्युक्थं षड्भिः स्तोत्रीयाभिरिति वा ।** यज्ञाज्ञीयेनोक्थानां चतुर्णामृक्षु स्तुते प्रत्युक्थं षड्भिः षड्भिः स्तोत्रीयाभिरिति वा ।

यज्ञायज्ञीयस्यर्क्षु सर्वैरुक्थैः स्तुते प्रत्युक्थं षड्भिः षड्भिः स्तोत्रियाभिरिति वा । इदमग्निष्टोमः स्यात् । सर्वत्र वा उक्थग्रहणमेव कार्यम्, सर्वत्रोक्थग्रहणं वा । तथा त्वकृत्वा शब्दभेदकवरणादयमर्थभेदो निष्पन्नः—त्रिभिरुक्थसामभिश्चतुर्णामुक्थानां चतुर्भिरुक्थैरिति । एवं चेत् सर्वैरित्यनर्थकम् । सर्वैः सम्पूर्णैरकनीयच्छन्द आपत्तेरखण्डितावयवैरित्यनया वा गीतिषु सामाख्या इति गीतिप्राधान्याद् ऋगन्तर्गतस्यापि साम्नः सामग्र्यं न विहन्येत इति अनया वा कल्पनया मध्यमात् पक्षादुत्तमस्य ज्यायस्त्वप्रापणार्थत्वात् अग्निष्टोम एवायमन्तरुक्थो नाम । यच्चास्य त्रैविध्यं शाखान्तरे श्रूयते—अन्तरुक्थ्यो ऋक्सामान्तरुक्थ्यः इति तदेतदस्य प्रतिपादितं मध्यमऋगन्तरुक्थ्या ऋच एव ह्युक्थानामस्मिन् स्तोत्रे अन्तर्भूताः, न गीतयः उत्तमसामान्तरुक्थ्यगीतयश्च । अस्ति वान्योऽपि विशेषो, यः पक्षद्वये, यदस्मिन् सच पर्यध्याये वक्ष्यते इति । दोमः वावेति निपातोऽत्र वाक्यालङ्कारार्थः गूढार्थविवरणज्ञापको वा । श्रुतौ हि-- न ह खलु वा एषोऽग्निष्टोमो नोक्थ्य उभयथैव इति गूढमुक्तः ।

**त्रिवृत इति...रात्रं पृष्ठानि ।** बृहद्रथन्तरवैरूपवैराजशाक्वररैवतानि[1] तानि सर्वाण्यस्मिन् सन्तीति सर्वपृष्ठम् । परोक्षपृष्ठो विश्वजित् परब्राह्मणे विहित इहाचार्येणाकृष्टः । अस्मद्ब्राह्मणेनापि तु सर्वपृष्ठ इति विश्वजितं विष्टुता ज्ञापितम् । अस्याहस्सत्ववैरूपादीनि पृष्ठानि । परोक्षमस्मिन् सन्तीति भक्तितः सन्तीति वै षड् भादिभिरिति परोक्षपृष्ठः । इत्थमेषां परोक्षत्वमिति सामकल्पे वक्ष्यामः ।

**सप्त...यस्य ।** सप्तदशस्तोत्राणि शब्दस्तोमानि भवन्ति । वाजपेयस्यान्तर्वतित्वात् वाजपेयसंस्थायाः स्तोत्रेयतावचनमतिनीय,[3] तदयं राजसूयशब्दः पञ्चसु क्रतुष्वेकफलेषु समुदितेषु वर्तते । समुदायवाचिनश्च शब्दा दृश्यन्तेऽवयवेषु । यथा मरुत्वतीयं[4] निष्केवल्यमित्युत्समुदायात्मकयोः शस्त्रयोः वाचकौ शब्दौ एतदवयवेष्वपि दृश्येते । महाँ इन्द्रो नृवदाचर्षणि प्रा इति त्रैष्टुभानां प्रथमं, मरुत्वतीयानाम् त्वं महां इन्द्र तुभ्यं हक्षा इति, त्रैष्टुभाना प्रथमं निष्केवल्यानामिति[5] । तद्वदत्रापि राजसूयावयवेष्वेकाहाहीनेषु राजसूयशब्दोऽय प्रयुक्तः ।

**इत्थं...मोयं[6]** । राजसूयानां प्रथमः क्रतुरभिषेचनीयो नाम । ज्योतिमहा प्रथममाभिप्लविकं, पञ्चाष्टौ पञ्चकस्तोमौ द्वावग्निष्टोमौ भवतः । रथं यासां पूर्णं रथन्तरपृष्ठं तदनन्तरबृहत्पृष्ठ इति, एव विपर्यस्य तौ भवतः ।

---

१ को. शाक्करैवतानि　　२ को. ०यस्यान्तर्वर्त्वात्　　३ को. ०वचनमिति नीय

४ को. मत्वर्थीयं　　५ को. निष्कैवल्पा०　　६ को. अत्र पाठस्त्रुटितः प्रतीकं वेति सन्देह

ननु पृष्ठनियमः सामकल्प्यस्य विषयः, करिष्यते च । अत्र ब्रूमः—नायं पृष्ठनियमः क्रियते । पूर्वस्य रथन्तरं पृष्ठम् उत्तरस्य बृहदिति । किं तर्हि कल्पसिद्धेन पृष्ठनियमेन पूर्वोत्तरौ उपलक्ष्येते, विपर्यासविशेषणार्थं रथन्तरपृष्ठः पूर्वो, बृहत्पृष्ठः पर इत्यर्थः । पूर्व उत्तर इत्येवं विपर्यासौ[1] भवतः इत्युक्तं भवति । अविशेषेण हि विपर्यासस्य स्तोत्रविपर्यासादप्याशङ्क्येते । कतिकृत्वः पुनरयं विपर्यासः, उत्तरस्मिन् वाक्ये विज्ञास्यसि ।

**ते षट्...स्तोमाः**[2] । एवं ते षड् क्रतुस्तोमा भवन्ति ।

**पञ्च...ष्टोमाः**[3] । क्रयः ? पञ्चविंशस्तोमा अग्निष्टोमा भवन्ति ।

रथ...र्यासं । तेषां यौ रथन्तरपृष्ठ ञ्च बृहत्पृष्ठश्च प्रथमश्च तौ विपर्यासं भजतः[4] । कति कृत्व इति चेदुत्तरस्मिन् वाक्ये विज्ञास्यसि । उक्तञ्च—मयः[5] तेषूभयसामा स पञ्चमः स्यात् । ङसि दृष्टेन सुपो लुका ह्रस्वान्तमुभयसामशब्दमाचार्यः समपादयत् ।।[5]

इ ति स्तोमकल्पवृत्तौ एकाहस्तोमविधिः
चतुर्थः खण्डः

---

१ को. विपर्याससौ ? २ को. षोमाः

३ को. पञ्च षोमा ४ को. भवतः

५ को. उ···ञ्चमयस्तेषूभयसामासपञ्चमः स्यात्
ह्ङ्सि दृष्टेन सुपोलुका ह्सान्तमुभयसम्भ शब्दमाचार्यः समपादयत्
इति पाठः यस्यार्थः नो भति साकल्येन

## अथ पञ्चमः खण्डः

**एतमानमेतदेवेति** । यद् द्व्यतिष्टुतस्य प्रातःसवनमित्यकल्पमनु त्वाज्यबहिष्पवमानमिति महतः शब्दस्य ग्रहणमर्थस्यापि महतः परिग्रहार्थम्, तस्मान्न केवलं स्तोमस्यैव ऋक्सामविधानस्यापि द्व्यतिष्टुतस्यायमतिदेशः[1] । उक्तं चैतत् सामकल्पे—शुनां स्तोमस्यानुपादानात् येऽत्यन्तगर्हितकर्माणो व्रात्यास्तत्र श्वसदृशा इति श्वान उच्यन्ते । तेषामेष स्तोमः ।

**अथ···राणि** । तानीति तत्प्रकाराणीत्यर्थः । अयमतिदेशः सहैव ऋक्सामविधिना । **इति···त्वानां** । जित्वा जयशीलो राजेत्यर्थः । सह जित्वा नावर्तन्त इति सजित्वानः । ये ब्राह्मणा राज्ञां प्रेषणं कृत्वा प्रपन्नास्तेषां संज्ञा सजित्वान[2] इति । सजित्वानामयं[3] स्तोमः । तेऽपि हि व्रात्या एव । **सर्वरात्रं···अ** । सर्वस्तोमोऽतिरात्रः स्यात् । श्रुतौ वा इह वा सर्वस्तोमोऽतिरात्र इत्यविशिष्टायां चोदनायामस्यैव ग्रहणं विज्ञेयमित्येवमर्थमिदं व्रात्यान् प्रति विहितायाः क्लृप्तेरन्यत्र प्रवर्तनमयुक्तम्[4] । अत इयमसत्यैव व्याख्येति चेन्न । आचार्येणान्यस्मिन् सर्वस्तोमे सजित्वस्तोमक्लृप्तेरेव[5] विधानादनुष्टुभोऽपि विधास्यमानत्वाच्छुनासीर्ये ह्येवं विधास्यति । किं च यदिह व्रात्यस्तोमीयं विधिजातं व्रात्यसम्बन्धविमिश्रार्थवादमृक्सामात्मकं प्रतिपदाज्यं मारुते अतीवर्तं आग्नेय्य इति तदितरेषु व्रात्यस्तोमेष्विति । न तु सजित्वस्तोमे, तदेकदेशोऽप्यस्ति । ततश्च व्रात्यसंबंधविधानरहितत्वादस्य व्रात्यस्तोमस्यापि सतोऽन्यत्र प्रवर्तनं नायुक्तम् । अत इयं व्याख्या सत्यैव । वसुस्तोमादयो द्वादश व्रात्यस्तोमाः, तेषां सामकल्पेन क्लृप्तिरस्ति । तत्रैष कल्पाभिप्रायः स्यात् । पवमानानां ह्रासवृद्धिमात्रं, यथोपपन्नमृक् साम तु कल्प्यताम् । सर्वमन्यत् प्रकृतितः सिद्धमिति । अथवा षोडशपवमानत्वं व्रात्यत्वमिति द्विविधात् सामान्यात् या आदौ षोडशपवमानस्य क्लृप्तिः सैवैषामनुक्ता अप्यागच्छतीति तयोरुत्तरस्यावधारणार्थमत्रोभयसामान इत्येषां विशेषणम् । पूर्वस्मिन् हि कल्पाभिप्राये सति अनित्यमुभयसामत्वं स्यात् । नित्यमुत्तरस्मिन् भवति । ये उत्तमवयसो व्रात्याः ये च मध्यमवयसः ये च युवानः ते पञ्चमादिभिरानुपूर्व्येण यजेरन् । त्रयोऽपि तु गणाः सम्भूयाष्टमेन संयजेरन् । श्यामाः श्यामाशया वैककल्पातिशयाद् ये गणश एव कृष्णाशयाः सान्वयाः संज्ञायन्ते । अस्ति च—पार्वा वै कृष्णा त्वगिति ये बस्ता इवात्यन्तचपलगुह्याः ते नीचा मेढ्राः श्यामकेशाः इति । अत्र श्यामशब्दो हरितवर्णोपलक्षणो द्रष्टव्यः । श्यामत्वं हि केशानामभीष्टमेव । एषां वलतीनां पर्यन्तभागेषु शिरसः तृणसदृशाः केशा दृश्यन्ते ते परित्राणाः । स सर्वमिदमाचारः दोषादावतीति मन्तव्यम् ।

इति स्तोमकल्पवृत्तौ एकाहस्तोमविधिः
पञ्चमः खण्डः

---

१ को. द्व्यतिष्ठितस्या० २ को. संजि० ३ को. संजि
४ को. प्रवृत्तनम० ५ को. संजित्वा०

## अथ षष्ठः खण्डः

गर्गत्रिरात्रादश्वत्रिरात्राच्च विना स्वर्गकामः[1] कर्ता निर्दिश्यते । द्विरात्रत्रिरात्रेषु स्वर्गकामादेः कर्तुरेकत्वनियमार्थमेक एव स्वर्गकामो यजेत, न द्वौ वा बहवो वा सम्भूयेति । अत एव यत्नादन्येष्वहीनेष्वेकयजमानत्वं नावधार्यम् । गर्गत्रिरात्रे कल्पसिद्धायाः पृष्ठक्लृप्तेरेव निर्देशोऽतोऽन्येषु त्रिरात्रेष्वस्या अपरिग्रहार्थम् । केष्विति चेदस्माकमविद्यमानेषु परतन्त्रविहितेषु । तेऽप्यस्माभिरपि स्तोमवशेन सामान्यानयद्भिरपजयद्भिश्च पञ्चरात्रादिषूपलब्धमाचार्याभिप्रायमनुवर्तमानैर्गर्गत्रिरात्रप्रकृतयः कल्पयितव्याः न त्याज्याः । न सन्ति, न इति । का पुनरत्र पृष्ठक्लृप्तिः—रथन्तरपृष्ठं प्रथममहः, बृहत्पृष्ठं द्वितीयम्, उभयसाम तृतीयम् ।

अथ द्विरात्रादयो···हीनाः एकस्तोमाः[2] । एकस्तोमा[3] इत्यनर्थकम् । नानर्थकम् । अस्मिन् प्रकरणे कानिचिदहानि अहरेकदेशमस्पृशतापि स्तोमेनाख्यायन्ते इति ज्ञापनार्थत्वात् । ततो वक्ष्यमाणानामृषभप्राजापत्याश्वमेधानां तृतीयेष्वहस्सु षोडशिन एकविंशत्वं, पर्यायाणां पञ्चदशत्वं, त्रिवृत्त्वं च सन्धेः सर्वमेतत् सिद्धं भवति । महानाम्नीनां पार्थरश्मस्यावकल्पे[4] सिद्धेरत्र विधिरनर्थकः[5] । नानर्थकः[5] । अश्वत्रिरात्रादिषु साम्नोरनयोःपरिग्रहार्थत्वात् । युक्तश्च तत्रैतयोरभावः । अश्व एव हि तत्रैकः सवनीयपशुः, नान्ये पशव आश्वमेधिकाः । बहुपशुसंयोगप्रवृत्तयश्च महानाम्न्यः । श्रुतजने ? ह्येतानन्यान्महानम्नीभ्यां[6] पृष्ठं पशूनुद्यन्तुमर्हतीत्यादि पार्थरश्म च महानाम्नि प्रयुक्तमिति ।

एते...रात्रः । एव शब्दोऽपि इहावधार्यस्याभावात् समुच्चयार्थो द्रष्टव्यः । ये अस्याश्वमेधस्य पूव अहनी एते च ज्योतिरतिरात्रश्च,एष द्वितीयोऽवधारणायाः प्रसिद्धोऽश्वमेधः । अथवा । पुनर्विधौ एवशब्दः । वाक्यद्वयञ्च तद् व्याख्येयम् । परस्यान्यस्याश्वमेधस्य एते एव पूर्वे अहनी भवतः ये पूर्वस्य । ज्योतिरतिरात्रतृतीयमित्यध्याहार्यम्[7] । कोऽसौ, योऽसौ गवामयनस्यादौ क्लृप्तौ ज्योतिरतिरात्रे[8] । किं स इहाकृष्यते, आहोस्विदभिप्लविकज्योतिर्नामकमहराकृष्य संस्थाविशेषेण योज्यते । अत्र ब्रूमः—शक्यमस्मिन्[9] द्वये संशयितुम्, गोआयुर्भ्यां त्वसंशयितं अभिप्लविकाभ्यां सहदर्शनात् अस्याभिप्लविकत्वं सिध्यति । जनमेजयादयः सर्वैरीजिरे, संख्यावैषम्यात् । इतरे इतरैर्यथासंख्यम् समसंख्यत्वात् । [महाराज] श्रोत्रिया नाम वेदवेदांशविदो विध्यनुवर्तिनो द्विजादयो राजवंश्याः श्रोत्रियास्त एव महिमयुक्ता महाराजश्रोत्रियाः ।

अग्निरिति । इति शब्दः समुच्चये । एते च त्रयो देवा एतैस्त्रिभिरश्वमेधैरीजिरे ।

[ इति स्तोमकल्पवृत्तौ द्वित्रिरात्रविधिः ]

षष्ठः खण्डः

---

१ को. स्वर्गकमिः　२ को. एकस्तोमः　३ को. एकस्तोमम्
४ को. ०रश्मस्यव०　५ को. विधिरनर्थकं नानर्थकम्　६ को. ह्येतानन्यन्म०
७ को. ज्यतिरात्रत्०　८ को. ज्योतिरात्रे　९ को. शक्य अस्मिन्

बृहत्पृष्ठता जामिनिवृत्त्यर्था[1]। अवचने वैरूप्यमयुक्तम्, अन्यत्र दर्शनात्। अस्ति हि त्रयस्त्रिंशद्रात्रेषु तेषामेते सामनी अन्यदन्यदहरूपमापद्यमाने इति भूयोऽप्यस्ति, यत्र गवि रथन्तरं सम्पद्येत, यत्रायुषि बृहत्सम्पद्येतेति। अत्र च त्रिरात्रे प्रत्यवरोहो रात्रिसन्धिविषय इवेति। तत इह प्रातस्सवनमुभयस्तोमाभ्यां सवनाभ्यामभिन्नस्तोमत्वात् सन्ततमिव। **तत इयमाख्या इति**। ततः यादृशं पूर्वस्मिन् प्रातः सवने[2] तादृशमस्मिन् तृतीयसवन इति। तत इह बहिष्पवमानमात्रस्याधस्तनाहस्तोमत्वादियमाख्या। पञ्चदशं यद्यग्निष्टोमसामेत्यनुवर्तयेम। पञ्चदशेनाहस्सन्तिष्ठते पृष्ठ्यनन्तत्वात् द्वादशमर्घ्यं भवति।

**तथा ''भवति**। यथा ह वै[3] दारुणि[3] वध्रेण सन्ततानि रथस्य वानसो वा एवं स्तोमैः पञ्चरात्रः सन्ततः। इति श्रुत्युक्तमह्नामिह स्तोमसन्ततत्वं न व्याहन्येत। अग्निष्टोमसामसन्तत इति च नामधेयमयथार्थं स्यात्। अथ पूर्वस्मिन् वाक्ये अग्निष्टोमसामग्रहणमन्यस्तोत्रोपलक्षणार्थं कल्पयित्वा सप्तदशमच्छावाकोक्थं सम्पादयेम। सिद्धमह्नामिह स्तोमसन्ततार्थं नवतिशतमग्निष्टोमसन्ततत्वं यथार्थमेवावतिष्ठते। किं पुनरिह श्रेयः, अग्निष्टोमसामग्रहणमनुवर्तमानं तदुत्तमस्याह्नामवधारयति। यथा तृतीयस्याह्नो यथोपसदस्येति गृहीत्वोत्थानां निवर्तनं पञ्चरात्रेषु प्रत्यवरोहः सिद्ध एव। प्रतिबन्धाभावादूर्ध्वं सन्ततेभ्योऽहीनब्राह्मणे दृष्टा पञ्चरात्राः, षड्रात्रं, सप्तरात्राः अष्टरात्राः, नवरात्राः, दशारात्राः। तेषु एषां ततः क्लृप्तिः प्रत्याख्याता तेषां तथैव सिद्धत्वान्नात्र क्लृप्तिः क्रियते।

तत एषु। ततः क्लृप्तिः सम्भवति तेऽत्रापि प्रयन्ते। अथैसंग्ये हि तौ सप्तरात्राणामुत्तमौ तयोः पूर्वस्य पूर्वमहस्येन स्तोमेन, परस्याहो बहिष्पवमानमास्कन्दति। परस्य च परं परं पूर्वस्य पूर्वस्याग्निष्टोम साम। तत एतौ स्तोमसंगेन संसक्तौ[4]। त्रिवत्स्तोमः[5] प्रथममहरित्यध्याहार्यम्। सर्वमहः प्रथमं बहुक्रत्वं च क्लप्तवात् त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि इत्येव भवति। नैकत्र दृष्टं[6] च चतुर्विंशं बहिष्पवमानं यः श्रुतो अथैष त्रिककवत्रजनकामो हैतेन यजेत इति सोमक्लृप्ता[7] योऽथैष पञ्चयज्ञक्रतुरिति स परम्। पञ्च ह्येते यज्ञक्रतवो—ज्योतिर्गौरायुरभिजिद् विश्वजिदति त्रिष्टोमाः[8]। यो राजसूया नामुत्तमः ? सोऽयं य इहान्योऽस्ति ? । **अथैष यज्ञः सप्तक्रतुरिति**। सोऽयं सप्तयज्ञक्रतुः त्रिष्टोमोऽग्निष्टोमो[9] ज्योतिर्गौरायुरभिजिद्विश्वजित्। सर्वस्तोमोऽतिरात्र इति। सप्तत्रिवृत्वन्तीति त्रिवृताह्नः पञ्चदशमहः परिष्टुवन्ति। दशाहाहे वैतानि स्तोमविकृतानि तत एव सिध्यन्ति। संस्थैषां नोच्यते। योऽसौ महात्रिककुबिति[11] प्रत्यहं भिन्नाग्निष्टोमसामको दशरात्रः सोऽयं वरः पञ्च क्लृप्तः। पौण्डरीक एकादशरात्रः अथातिरात्रः अयं वैश्वानर एव योऽसौ द्वादशाहस्योदयनीयः। एतेन वै क्षेमयज्ञा इत्यादिरर्थवादः आचार्येण परब्राह्मणादाकृष्य न्यस्तः[12]। विहितेषु सर्वाहीवेष्वर्थवादः सुमहानयमेकोऽर्थवादः। सं ह्यग्निमन्येभ्योऽगमदिति''अयुरिति ब्राह्मणमिति वाक्यशेषः। अथवा इतिरेव विभजनीय इति ग्राह्यम्। कथमिति चेत्, एकादशत्वादह्नाम्। एकादशधेति लभ्यते। एको गौरतिरिक्तः स्यात्। यवसादीनि सामुच्चयेन वा अन्यतो वैनामप्येकादशधैव विभजेत्। अश्ववन्ति एव पक्षेन भक्षिणमन्त्यमहः। अस्ति च परेषामन्वहासहस्रं, सहस्रं ददात्युत्तमे ह्यश्वसहस्रं ददातीति।

इति स्तोमकल्पवृत्तौ
सप्तमः खण्डः

---

| | | |
|---|---|---|
| १ को. निवृत्यर्थः | २ को. प्रातः सवनं | ३ को. वैद्धारुणि |
| ४ को. संसग्यौ | ५ को. ०ष्टोमः | ६ को. दुष्टं |
| ७ को. सोयक्लृप्ता | ८ को. तृिष्टोष्टोमा | ९ को. तिष्टोमो |
| १० को. परं च | ११ को. त्रिककुसिति | १२ को न्यस्त |

## अथाष्टमः खण्डः

**त्रयोदश द्वादशाहाः** । तेषां तृतीयादिषु चतुष्ट्वमध्ये यानि दशाहानि तान्यपि प्रसिद्धस्यैव द्वादशाहस्याहानि । पृष्ठसंस्थाकृतविशेषाणीह निर्दिश्यन्ते उभयसामानः । विपर्यासमिति रथन्तरप्रधानं बृहत्प्रधानञ्च । व्यतिषङ्गमित्यर्थः । सप्तमाष्टमयो र्द्वादशाहयोरुपान्त्ये अहनी एकाहविधे । निर्देयस्य ते उपाद्ये च । अयं विप्रवादः चतुर्विंशतिरात्रेष्वपि वर्तिष्यते । अस्यैकाहविधाविषयत्वम् सांसदिको ज्योतिरग्निष्टोमो बृहत्साम्नस्तत्रेत्यत्र सेत्स्यति । ततोऽपि तत्तुल्यं प्रवादस्तद्विषय एव[1] भवितुमर्हतीति[1] । **अष्टाग्र्यासं बृहद्रथन्तराभ्यामिति** । तृतीया इत्थंभूतलक्षणा । विपर्यासं पृष्ठभूताभ्यामित्यर्थः । प्रसिद्धज्योतिष्टोमविषय एवायं निर्देशः । अष्टानामेषां प्रथमाष्टमौ बृहत्पृष्ठौ । रथन्तरपृष्ठाभ्यामेकाहविधाभ्याममभितः स्थिताभ्यां पृष्ठसन्निपाताय । ततः सप्तमस्य क्रमागते बृहत्युभयसामत्वं पृष्ठाजामित्वाय विहितम् । उभयसामानो विपर्यासमिति रथन्तप्रधानं बृहत्प्रधानं च क्रमश इत्यर्थः ।

**यत्षष्ठमहः** । यादृशं षष्ठं तादृशं सप्तमं तदहश्च बृहत्प्रधानमेव । भरतद्वादशाहादिषु पञ्चसु प्रसिद्धस्यैव ज्यतिष्टोमस्यावृत्तिर्निर्दिश्यते ।

**नैकाहविधा** । नह्यु्क्थ्यादयः संस्थाः एकाहविधासु सन्ति । विश्वेषां देवानामयनादिषु त्रिषु रथन्तरं बृहदिति । विपर्यासं पृष्ठे भवतः । संघातेष्वेव दृष्टत्वात् । प्रकृतौ चानयोस्तुल्यविधावन्यतरस्य[2] न्याय्यत्वात्[2] । **नवरात्र इति** । अभिजिदादीनां नवानां गवामयनिकानामह्नां संज्ञा प्रसिद्धा । श्रूयते च बह्वृचसूत्रे अभिजित्स्वरसामानो विषुवानावृता स्वरसामानो विश्वजिच्च अभिजित्प्रभृति नवरात्र इत्याचक्षत इति । अस्माकमप्यस्य नवरात्रत्वे ज्ञापकमस्ति । पञ्चाहविधो ह्येकविंशतिरात्रो नवरात्रगर्भा क्लृप्तिराचार्येण तस्य ब्राह्मणे अभिजिद्विश्वजिद्विषुवन्तपञ्चविंशतिरात्रश्च नवरात्रगर्भः । कल्पे तस्य च ब्राह्मणे सर्वेष्वहस्सु कीर्त्यमानेषु श्रूयते श्रुतौ—विश्वजिदभिजितावेते स्वरसामानः एष विषुवानिति । ततस्सिद्धमभिजिदादि विश्वजिदन्तो नवरात्र इति ।

**पञ्च···साराः** । पञ्चपञ्चाशतं द्वे शते पञ्चाशच्च संवत्सरास्त्रिवृताः स्युः । त्रिवृत इत्ययं व्यवयवशब्दोऽवयविनि[3] वर्तते । त्रिवृत्स्तोमस्याहानि संवत्सरस्यावयवभूतानि । ततस्त्रिवृत्स्तोमैरहोभिः संपादिताः सांवत्सरास्त्रिवृतो भवन्ति । संवयनं दीक्षाप्रयोजन एकः । संवत्सरमुपसंप्रयोजनश्चैकः । सेवनप्रयोजनश्चैकः । इत्येत आपश्चितामयनं नाम सवनम् । इह सोमाभिषवोऽभिप्रेतः स्यात् । सवनत्रयं वा तेषां स्यात् । यावता कालेन पञ्चदश चन्द्रस्य ज्योतिष्कला निष्पाद्य क्रमशोपवृज्यन्ते स चान्द्रमसो मासः । ते मासाः द्वादश चान्द्रमसः संवत्सरः । तेषां त्रयाणां द्वावेव संवत्सरौ चान्द्रमसौ स्यातां दैक्षोपसदौ । एकत्रिंशदहान्यन्यूनानि ऊनातिरिक्तानि[4] यस्या सत्रिंशिनो मासा यस्य संवत्सरस्य स सत्रिंशी । [ मासः ] संवत्सरः । सत्रिंशीमास इत्युत्तरपदलोपस्य लक्षणमाचार्यप्रामाण्यादनुमेयं भवति । एकस्तु सत्रिंशी स्यात् सावनः । तपश्चितामयनादीनां गवामयनमेव प्रकृतिः प्राथम्याच्छ्रुतिविहितरूपतश्च अस्ति च मीमांसायां, गव्यस्य चोत्तरेष्विति संपश्चितं ? तपश्चितामिदं तापश्चितं तदेव महातापश्चितम् । पूर्वस्माद्यस्य भेद

---

१ को. एवौवितुम०　　२ को. ल्यविधायामन्यतप्यन्याय्यत्वात्　　३ को. व्यावयव०
४ को. अनतिरिक्तानि

उपसत्कावकृतः नान्यः। चत्वाषिकं चत्वारः संपन्ना इति। गवाममनस्याभ्यासः कार्यः। अस्ति च बह्वृच-स्तोत्रे– अभ्यासो बहुसंवत्सरे गवामयनस्येति। चक्षुः तत्र तपश्चितविधेः परो ग्रन्थः। तेषामहः चान्द्रमसाः स्युः चत्वारः ऊनत्रिंशिन[1] इति। सोऽनेन सत्रेण[2] द्वादशानां संवत्साराणां स्वरूपमाकांक्षमाणेनानुषज्यते। एवं चास्य योगः—तेषां संवत्सराणामष्टौ चान्द्रमसाः चत्वारः सत्रिंशिनः चत्वारश्चितः। क्षुल्लकशब्दोल्पवाची। श्रूयते च—याश्च महत्यः सम्पदो याश्च क्षुल्लिका इति। कल्पं हीदमितरेभ्यस्तापश्चितेभ्यः। **तेषां सा...स्युः।** तेषां मासानामित्थं योगः। चत्वाषिनः चत्वार एते मासाः कुतस्त्वैरहोभिः सितध्युरित्यपेक्षितौ त्र्यहप्रथमौ स्याताम्। द्वावेतौ शब्दौ एकमर्थं ब्रूतः। पुल्लिङ्गः पक्षशब्दो नपुंसकलिङ्गश्च पक्षशब्दः। श्रूयते च—आत्मा वै संवत्सरस्य विषुवान् पक्षावभिमत इति यथा शालायै पक्षसी एवा संवत्सरस्य पक्षसी इति। अथो पक्षावेतौ यत् पवमानाविति च। यौ गवामयने पूर्वस्य पक्षसः प्रथमोत्तमौ मासौ ताविहोक्तानामाद्यौ, तौ सविंशिनौ स्यातां। यावुत्तरस्य पक्षसः प्रथमोत्तमौ ताविह तृतीयचतुर्थौ स्याताम्। यद्येतद्वाक्यद्वयं नाभविष्यत्, अस्य सत्रस्य सविंशतिशतरात्रत्वात् विना गवामयनः कल्पयितुमन्याय्यत्वात्। अतश्चेज्ज्यायः सत्रश्चिकीर्षेदिति। वक्ष्यमाणेन वर्त्मना दशरात्र एवाहोभिः अवर्धयिष्यत षटिंत्रशदिति। कुतः पुनः सत्रिंशिमास एव सवत्सरः सर्वत्र सावनत्वेन हि नियम्यते। बहवो ननु संवत्सराः सन्ति। षट्त्रिंशदहीनः नवाहीनः, अथ यः सावनत्वेन पूर्वसत्राभिहितः स च। अथ योऽसौ दशभिन्नत्वात् अहोभिः कतिपयैः सावनादुत्तरोऽपि यः स्यात् स च। लक्षणमेषां संवत्सराणां वक्ष्यामः। अथ यस्य मासस्य सप्तविंशतिरहानि तैर्द्वादशभिर्मासैर्यः सवत्सरः स सावनात् षट्त्रिंशदहोनो भवति। तैरेव त्रयोदशभिर्नवोनः संवत्सरो भवति। द्वादशसु हि चैत्रादिषु त्रयोदशाक्षा मासाः निष्पद्यन्ते। षडहोनश्चान्द्रमसः संवत्सरः। तस्य मासास्त्रिंशिनश्चैकोनत्रिंशिनश्च। अथ यस्य त्रिंशिनो मासः[3] स सावनः। स[4] पञ्चभिरहोभिरह्नश्चतुर्भागेन च साधिकेन सावनमतिवर्तते। स सौर्यः प्रसिद्धतमः संवत्सरः। अथ यस्मिन् संवत्सरे मासस्याधिकस्य निष्पत्तिर्भवति, तस्य त्रयोदशचान्द्रमा-सात्मकस्याह्नां सङ्ख्या त्रीणि शतानि। त्रयाशीतिश्च संवसंवत्सरः सौरादष्टादशाभिर्ज्यायान् भवति। एवमेतेषां प्रकाशः संवत्सरा भवन्ति। एतदेव परिहरन्नाह—तासां शतषष्ठीनिर्धारणे तासामुक्तप्रकाराणामे-तासां संवत्सरमात्राणां त्रिषष्टिशतां षष्टचधिकशतत्रयगणानां मात्रां यज्ञविदो निरचेष्टत। **प्रतिजज्ञिरे... कस्यरिति।** इयमत्र हेतुपरम्परा कथ्यते। समराभ्यां बृहद्रथन्तराभ्यामिति चतुर्थी षष्ठ्यर्थे। अयं संवत्सरः समप्रयोगो भवति। बृहद्रथन्तरयोः युग्मसंख्यत्वाद्धि द्वौ भागौ पक्षस्य रथन्तरस्य बृहतश्च भवतः। ऋते विषुवतः संवत्सरमात्राणामहानि संख्येयानि। त्रयः संवत्सराः अनेन हेतुना प्रत्याख्याताः।

**योनयो...नयश्च।** सौर्यादष्टादशाधिकः षट्त्रिंशोनषडहोऽनेन तु यथाप्रयुक्तमेव स्थितौ वियुग्म-संख्यत्वात्। ततोऽन्यमपि हेतुमाह—**अव्या...कल्पते।** अव्याहतैरप्यविच्छिन्नैरखण्डितैः षडहैः संपद्यते। अनेन हेतुना षडहोनोऽपि प्रत्याख्यातः। तस्य हि सप्तसप्तत्यधिकं[5] शतमेकैकस्य पक्षस्याहानि। तथा च त्रीणि त्रीण्यहानि षडहः संपत्तेरतिरिच्येरन्। षट्त्रिंशदहोनस्तु यथाप्रसक्तमेवावस्थितः। तस्यैकैकस्य पक्षसो द्वाषष्टचधिकशतमहानि षडहसंपत् गच्छति। ततोऽन्यमपि हेतुमाह। **षष्टिवन्ति।** अयमप्रतिघातो हेतुः सर्वानुक्तः संवत्सरात् प्रत्याख्याय सत्रिंशिनमेव संवत्सरमवधारयति। षष्टिरिमे[6] षहहाः श्रुतौ निर्दिष्टा भवन्ति। अस्ति च बह्वृच ब्राह्मणे—तदाहुः कति षडहाः संवत्सर इति षष्टिषडहाः[7] संवत्सर इति।

---

१ को. उर्सत्तिसिन — २ को, द्वादन्तानां — ३ को. मासाः — ४ को. सा
५ को. ०त्यधिकः — ६ को. षष्ठीरिमे ? — ७ को. षष्ठिषडहाः

षष्टिषडहः । षडहस् इति त्रिंशत्पक्षः । षडहावित्यध्याहार्यम् । त्रिंशत्षडहः पूर्वपक्षः । त्रिंशदुत्तरं वाक्यद्वयम् विषुवत्षडहक्लृप्तावनन्तर्भावप्रतिपादनार्थं त्रिंशदिति । किं वा युक्तिभिः श्रुत्या वा, लोकत एव तत्प्रसिद्धाः द्वादशत्रिंशिनो मासाः संवत्सरस्येति । ग्रामोऽपि हि त्रिंशन्मासस्य रात्रय इति एवं वदति । ग्राम इति लौकिको जनोऽप्यादिश्यते । ग्रामवासित्वादागोवति । ग्रा[1] इत्यभिविधौ[1] । तौ च यत एते प्रायेणान्यपरत्वादवधियः गोपाला अविपालाश्च । आभ्यामेषु संवत्सरेष्वेष एव त्रिषष्टिशतमात्रसंवत्सरो विदिततमो भवति ।

ऋग्भ्यां...रिति । दीर्घतमसा दृष्टाभ्यामाभ्यामप्यृग्भ्यामेष एवाभिहितो भवति । अभिहित इव भवति । संवृतमुक्तमित्यर्थः । पूर्वस्यान्तवदवि ? षष्ट्यधिकशतत्रयमात्रत्वमस्य दिवसानां सिद्धम् । उत्तरस्यामहसंख्यारात्रसंख्ययोश्च संहतयोः विंशत्यधिकसप्तविंशतिमात्रत्वमिति । उभयोरप्यृचोः द्वादशमात्रत्वमस्यास्ति ।

एका···पृष्ठः । उभयसामा चायं सम्यक्पृष्ठः । उभयसाम्नः सम्यक्पृष्ठसंज्ञेयमेषा यज्ञवर्त्मनि प्रसिद्धा । एकाहप्रकृतोऽग्निष्टोमः, तस्य विधा एकाहप्रकारा, एकाहभेदा इत्यर्थः । अतिवाह इयं परिभाषा पुनरवस्थिता[2] भवति । अतिरात्रो वाऽभिजिद्वा, विषुवान्वा, विश्वजिद्वा, आमहं प्रतीयमहर्वा एताभिर्नियोक्ष्यमाणाभिर्विकल्पेरन् । एकाहत्रिविधानामेको[3] वा अतिरात्रादीनामेको वा स्यादित्युक्तं भवति ।

एकान्येकः । यस्मात् कस्माच्चित् रात्रसत्रादेकेनाह्ना ज्यायः । सत्रं चिकीर्षेच्चेदेतासामेकाहविधानामेका, तस्यामेव क्लृप्तौ स्यात् यस्याः सङ्गतिस्तया कल्प्या, तत्र लब्धेन वावकाशेन वा मन्येत ।

सा स्विति जानीयात् । सा वातिरात्रादीनां वा अन्यतमा यथा क्लृप्तश्चतुस्त्रिंशरात्रः, स त्रयस्त्रिंशद्रात्रः क्लृप्तावेव पूर्वमुदयनीयात् । बृहत्पृष्ठायां वा महाव्रते वा न्यस्ते सिध्यति । प्रायणीयादानन्तर्यमप्येकाहविधानान्नायुक्तं, संसत्सु दृष्टत्वात् । क्लृप्तानुरोधेन क्लृप्तक्लृप्तानां क्लृप्तं न्याय्यमि द्व्यहे स्याताम् । दशरात्रादूर्ध्वं तद्वत्सु स्यातां प्रागुदयनीयात् त्र्यहे हस्यात् । प्रायणीयादनन्तरं स्यात् । चतुरन्येन[3] पञ्चाहः स्यात् । शतरात्रे पञ्चशतरात्रार्थं प्राप्तो आयुभ्यां षड्वा स्यात् । संसदामयने त्रिंशद्रात्रार्थं सप्तान्ये तत्त्रयस्त्रिंशद्रात्रे च चत्वारिंशद्रात्रार्थं षडहः प्रायणीयादनन्तरं बृहद्विधा महाव्रतं वा प्रागुदयनीयात् अष्ट स्यात् । तां किं चकार आद्रात्रार्थं एवं सति विषुवतो मध्यवर्तित्वघाताद्विषुवत्त्वं हीयेत । नैष दोषः । आचार्योऽपि हि विषुवन्तमध्यांशो आयुषि द्वितीय एकोनपञ्चाशद्रात्रे सप्तपञ्चाशद्रात्रार्थं प्रायणीयादूर्ध्वं पृष्ठ्यं प्राक् दशरात्रात् गोआयुषी नवाहः स्यात् । ऊर्ध्वपृष्ठ्योऽयं त्र्यहश्च दशरात्रः स्यात् । प्रथममेकैकोनपञ्चाशद्रात्रे[4] एकोनष्टिरात्रार्थं प्रागुदयनीयात् अतयिष्येत् । अतो दशरात्राधिकसङ्ख्यैरहोभिः प्र ह भाविष्येद् विभावयितुमिच्छेत् । स यद्विद्यां एकाहोनायाः अवित्र षष्ठीशतमात्रायाः संवत्सरधर्माणामभावार्थमेतदुक्तमेवमिति । एवमिमं सत्रज्यायस्त्वविधिं विद्वानित्थं मन्येत । न मे कश्चिदपि सत्रमप्रदिष्टमविहितं श्रुतावस्ति । न वाक्लृप्तमनुक्तमाचार्येण सर्वं सत्रमिति ।

इति स्तोमकल्पवृत्तिः समाप्ता

१ को. ह अभि० ? २ को. पुनरवस्थितं ३ को. चतुन्येत ४ को. ०कान्न

# अथ प्राकृतवृत्तिः

भ········································।
कैलास···प्रा···लघुपवनपरिक्षेपलभ्यामवस्थाम् ॥
पायादायासनीष्टक्षितिधरतनयाश्लिष्टकण्ठस्य शम्भोः।
पादाङ्गुष्ठाग्रमीषच्चलनशमिततद्घोरकोलाहलं वः ॥१॥

ओं। सर्वेषामेकाहाहीनसत्राभिधानानां क्रतूनां स्तोमा विहिताः। इदानीं पुनस्तेषामेव क्रतूनां ऋक्सामक्लृप्तिं व्यक्ततरं वक्तुमयमारम्भः क्रियते। तत्रादावेकाहविधानमेवारभ्यते[1]। नन्वादावशेषप्रकृतिभूतस्य ज्योतिष्टोमस्य तस्य क्लृप्तिराम्नायेन ब्राह्मणेन च व्यक्तमशेषमभिहितेति कृत्वा आचार्येण न कृता क्वचित्क्वचिदत्यन्तदुर्बोधाय क्लृप्तिः परस्तात् संज्ञाकल्पे कल्पिष्यते। ते च पर्यविंशतिरूपेण भिद्यमानायां प्रकृतेराम्नायब्राह्मणाचार्यवचनालोचनमात्रेण[2] शिष्टैरुपदिष्टा गुरुपरम्परया स्मर्यमाणाः पञ्चविंशति कल्पा विद्यन्ते। तथापि तेषामाम्नायक्लृप्तिक्रममल्पमेधसामनुग्रहार्थमुपदेक्ष्यामः। तदाहुः प्रथमं यजमानोऽतिरात्रेण यजेत इत्यधिकृत्य अग्निष्टोममात्रं वावाग्निष्टोमेनाभिजयत्युक्थ्यमात्रमुक्थ्येन षोडशिमात्रं षोडशिना रात्रावनुर्वमवरुन्धे इति। एवमादिभिर्वचनैर्ज्ञायतेऽग्निष्टोमोक्थ्यः षोडश्यतिरात्र इति। पञ्चसंस्थिताः कल्पिताः। एतदेव त्रयोदशं स्तोत्रमत्यग्निष्टोमस्येति। स्तोत्रं च विहितम्। तस्मादत्यग्निष्टोमसंस्थापि प्रकृतिरस्तीति ज्ञायते।

विकृतावस्यात्यग्निष्टोमस्यादृश्यमानत्वात् तस्मात् प्रकृतौ पञ्च संस्था विद्यन्ते। तत्र रथन्तरसाम्ना यष्टव्यं बृहत्साम्ना यष्टव्यम् उभयसाम्ना यष्टव्यमिति। तस्मादुभयसाम्ना यजमान आसायमेव यजेत इति च। एवमादिभिर्वाक्यैः पृष्ठतो भेदाः श्रूयन्ते, तत्रोभयसाम्नस्त्रिप्रकारत्वं संज्ञाकल्पे वक्ष्यति। राथन्तराणि पृष्ठानि रथन्तरप्रधानस्य बृहच्चर्चेते आर्भवे—तानि पृष्ठानि बृहत्प्रधानस्य। रथन्तरनौधसे मध्यन्दिने रथन्तरं पृष्ठं बृहत् ब्रह्मसाम सम्यक् प्रष्ठस्येति। एवमेतेषां पञ्चानां भेदानां संस्थाविशेषसंबन्धान्ता वाक् एकैका संस्था पञ्चधा भिद्यते। तस्मादयं ज्योतिष्टोमः पञ्चविंशतिभेदः सम्पद्यते। तत्र नमः पितृभ्यः (जै. सं. ३.१.१) इत्यादिभिः पंचाभिः ऋगध्यायैः अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य रथन्तरस्य चाम्नाताः ऊहादावामहीयवादीनि यज्ञायज्ञीयसामपर्यन्तानि तदर्थमाम्नातानि।

नन्वाचार्येण एकाहविधानामेव स्तोमक्लृप्तिं ऋक्सामक्लृप्तिं च प्रथममभिधीयमानां च प्रकृतिभेदक्लृप्तिं दृष्ट्वा आसामृचामेषां च साम्नां प्रथमसमाम्नातानामेकाहविधार्थ एव समाम्नायो भवितुमर्हति। नैवं युज्यते। अग्निष्टोमो हि सर्वेषां क्रतूनां प्रकृतिः। प्रकृतित्वं नाम प्रथमसमाम्नायः। आचार्येण प्रयुक्तम्—एकाहतन्त्रमित्यायुर्ज्योतिष्टोममेवेति। द्राह्यायणेऽपि श्रूयते—'अथ राजा···ग्निष्टोमसामानि। इति च तस्मादग्निष्टोमसामान्येव गानीकृत्य गायेत् इति च। नमः पितृभ्यः (जै. सं. ३.१.१) इत्यादीनामृचामामहीयवादीनां साम्नां च ज्योतिष्टोमार्थत्वमेव घटते। एवं चेद्, बार्हतीनां पृष्ठाज्यबहिष्पवमानगता-

---

१ को. तत्राभावेकाभ०          २ को. ०र्यवचनं लो०

नामृचां राथन्तरीभिः सहवर्तितत्वं, श्यैतस्य नौधसानुवर्तितत्वम्, उद्वंशीयस्य सौभरानुवर्तितत्वं च युज्यते। प्राकृतत्वात् प्रकृतौ हि पठितानां विकृत्यभिगमनं युज्यते। विकृतितः प्रकृत्यभिगमनं न युज्यते। सत्यमेतत् सुष्ठूक्तम्। एवं युज्यते किन्तु मन्त्राणां पाठक्रमं पर्यनुयोक्तुमशक्ता वयम्। तेन हि श्रुतेः स्वायम्भुवो ऽभिप्रायो विज्ञायते। तस्माद्राथन्तरो ज्योतिष्टोमोऽग्निष्टोमऋक्सामसमाम्नायवशेन। क्लृप्ताः[1] इतरभेदाः यथाब्राह्मणाः यथार्थवचनं च कल्प्याः। क्लृप्तं ह वै कल्पमित्यस्मिन्नध्याये नवैता बहिष्पवमान्यो भवन्ति। ता एता नव बहिष्पवमान्य इत्येवमादिभिः वाक्यैः बहिष्पवमानस्य त्रिवृत्स्तोमकत्वं विज्ञायते।

पञ्चदशान्याज्यानि भवन्ति इत्यादिना ग्रन्थेन आज्यानां माध्यन्दिनस्य च पञ्चदशत्वं, पृष्ठानामार्भवस्य च सप्तदशत्वम्, अग्निष्टोमसाम्नः एकविंशत्वं च विज्ञायते। नमः पितृभ्यः इत्येतास्तिस्र ऋचो ऽभिषवकाले विश्वरूपावचनार्थमाम्नाताः।

उपास्मै गायता नरः (जै. सं. ३.१.३) इत्यादयस्त्रयस्तृचः बहिष्पवमानार्थाः। अग्न आ याहि (जै. सं. १.१.१) इत्यादिषु चतुर्षु तृचेषु चत्वार्याज्यानि भवन्ति।

होतुराज्ये जनको हि होता, सैषा भवति इत्यादिभिर्वाक्यैः एषामेवंभावो ज्ञायते—उच्चा ते (जै. सं. १.४६.१) पुनानः सोम (जै. सं. १.५३.१) प्र तु द्रव (जै. सं. १.५४.१) इति, एषु तृचेषु गायत्रामहीयवे रौरवयौधाजयेष्वौशनमिति तृचस्थानि माध्यन्दिनपवमानमस्यैवंभावो मरुत्वतीप्रतिपदो भवन्ति इत्यादिभिः तिसृभिरध्यायैरथ माध्यन्दिनस्य 'गायत्री' इत्यादिना ग्रन्थेन च ज्ञायते।

अभि त्वा शूर नोनुम (जै. सं. १.२५.१) इत्यादिषु तृचेषु रथन्तरं वामदेव्यं नौधसं कालेयम् इति पृष्ठानि, एतेषामेव चार्भवो रथन्तर रेतस्सिक्तं रेवसाथ वामदेव्यं स्वारमित्यादिभिर्वाक्यैर्ज्ञायते।

स्वदिष्ठया (जै. सं. १.४६.२) इत्यादिषु अभि प्रियाणि (जै. सं. १.५७.१) इत्यन्तेषु गायत्रसंहिते, सहपौष्कले, श्यावाश्वान्धीगवे, कावमित्यार्भवम्। अस्यैवं भावः। स्वादिष्ठयेति स्वदयन्त्येवैनदिति तासु गायत्रमुक्तब्राह्मणम्। अथ संहितमिति च तासु पौष्कलमिति। अथैता भवन्ति पुरोजिती वो अन्धसः (जै. सं. १.५६.१) इति तासु श्यावाश्वमथान्धीगवमिति[2] च। अथैता भवन्ति अभिप्रियाणि पवते (जै. सं. १.५७.१) तासु कावमिति एतैर्वाक्यैर्ज्ञायते सह पौष्कलयोस्तृचोः समाम्नायेन ज्ञायते पञ्चैतानि छन्दांसि[3] आर्भवे पवमाने भवन्ति। सप्त सामानीति श्रुतत्वादेव सप्तच्छन्दस्सप्तसामार्भवः सिद्धो भवति।

यज्ञायज्ञा वो अग्नयः (जै. सं. १.४.१) इति यज्ञायज्ञीयमग्निष्टोम भवति। तच्चतुर्थपञ्चमाभ्यामनुवाकाभ्यां व्यक्तमभिहितम्। अस्य राथन्तरस्याग्निष्टोमस्य क्लृप्तिरेषा समाम्नायाद् विज्ञायते। इयं राथन्तरी क्लृप्तिरग्निष्टोमस्य कथिता।

अथ बार्हती वक्ष्यते—बृहता स्तुवन्त्यदो वै बृहद्रथन्तरवामदेव्येनेदं इदं वा अन्तरिक्षं वामदेव्यमथ श्यैतेनेदं वै श्यैतमिति बृहत्पृष्ठस्य ब्रह्म साम श्यैतमिति ज्ञायते। चतुर्थं कालेयमेव विशेषवचनाभावात्। पवस्व वाचो अग्रियः[4] (जै. सं. १.१३.१) पवस्वेन्दो वृषा सुतः (जै. सं. १.५०.३) वृषा सोम[5] द्युमं[5] असि (जै. सं. १.५२.८) वृषा ह्यसि भानुना (जै. स. १.५०.४) इति बार्हस्पत्य इत्युक्ताः। तासां प्रथमे प्रतिपदो

१ को. ०क्लृप्त   २ को. सविमथ० ?   ३ को. छन्दानि   ४ को. चग्नयः   ५ को. सोकद्यु मा

पर्यास इति त्रिवृद्बहिष्पवमानम् । इतीदं बहिष्पवमानं चोक्तप्रकृत्यर्थं क्लृप्तमेतेषां बहिष्पवमानानामाज्यानीत्याज्यानि ।

अग्निं दूतम् (जै. स. १.१.३) इत्यादीनि चत्वारि विहितानि । एतान्येकरूपाण्यहूः कल्पनार्थमुपादानमयुक्तमिव प्रतिभाति । नैतदयुक्तम् । राथन्तरी क्लृप्तिरखिलाम्नायेनाभिहिता । सर्वे[1] प्रकृतिभेदा यथाशास्त्रं कल्पनीयाः । श्रुतेः स्वयम्भुवः पाठक्रमोऽभिरपर्यनुयोज्यः । किन्तु पञ्चभिर्धर्मैः कल्पमुपेक्षताम्नायेन ब्राह्मणेनेति वचनात् आसां बार्हतीनामृचां प्रकृतिप्रकरणे पठितव्यानां विकृतौ पाठस्य प्रयोजनं वक्तव्यम् । इद प्रयोजनं राथन्तरमेवाग्निष्टोमं प्रथमं प्रयुञ्जीतेति । एवमिह ब्राह्मणं भवति तस्माद् राथन्तरं पूर्वं योगमानशे इति ।

अथ राथन्तरप्रधानस्य वक्ष्यते—तासामुपवति प्रथमाग्न्युवती द्वितीयं राथन्तरप्रधानसम्यक्पृष्ठयोः इति वचनात् उपास्मै गायता नरः ( जै. स. ३.१.३ ) इति प्रथमा प्रतिपत् । पवस्य (जै. सं. ३.३.१) इति द्वितीया । न च सर्वत्र पर्यायो व्यभिचरति । आग्नेयमैत्रावरुणे राथन्तरे ऐन्द्रे ऐन्द्राग्ने बार्हते, रथन्तरप्रधानस्येति वचनात् एतान्याज्यानि भवन्ति । अविकृतो मध्यन्दिनः । रथन्तराणि पृष्ठानि रथन्तरप्रधानस्य इति वचनात् राथन्तराणि पृष्ठानि स्युः । द्वृकच्छच्यते आर्भवे इति वचनात् एते आर्भवमापद्येते । त्रीणि वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुबिति वचनात्, अनुष्टुभीतिवचनात् अनुष्टुभि दृष्टत्वाच्च तत्र भवतः । चत्वारि[2] वै सामान्येकर्चेभ्यो तत्स्थानानि । बृहद्रथन्तरे वामदेव्यं यज्ञायज्ञीयम् इति । तानि यत्र त्रिकचानुपरिप्लवेरास्तानि तृचेष्वेव कल्पयेदिति शेषो विकृतः ।

अथ बृहत्प्रधानस्य श्रियवति प्रथमोपवति द्वितीया बृहत्प्रधानस्य इति वचनात् पवस्व वाचो अग्रियः (जै. सं. ३.१३.१) उपास्मै गायता नरः (जै. सं. ३.१.३) पर्यू षु (जै. सं. १.४२.२) इति बहिष्पवमानाग्नेयैन्द्रबार्हते मैत्रावरुणैरैन्द्राग्ने राथन्तरे इनि व्यतिषिक्तानि बृहत्प्रधानस्य इति वचनात् व्यतिषिक्तान्याज्यानि स्युः ।

बार्हतानि पृष्ठानि बृहत्प्रधानस्य इति वचनात् बार्हतानि पृष्ठानि स्युः । रथन्तरनौधसे मध्यन्दिने इति । रथन्तरमेव पञ्चदश इति वचनात् । बृहत्यां तृचे रथन्तरमैडो बृहतीमारभेत इति वचनात्[3] रौरवं मध्यमायां यौधाजयमुत्तमायाम् । नौधसे कल्प्यमाने निधनवतां सन्निपातः, तद्दोषभयाद् रथन्तरमेव पञ्चदश इत्याचार्यणोक्तमिति मन्ये । यदि रौरवरथन्तरे तृचयोः इति कल्प्येत तदा[4] प्राकृतस्य यौधाजयस्य परित्यागदोषो जायते । तस्मात् प्रथमायां रौरवं द्वितीयायां च यौधाजयं कल्पयित्वा तृतीयायां कल्पनीयमन्वेष्टव्यम् । कथमत्र समन्तं न गृह्यते । समन्तमच्युतमुभयसाम्नि इति ह्याचार्येणोक्तं श्रुत्या यदज्ञापितं तन्न गृह्यते । ज्योतिष्टोमब्राह्मणे समन्तं न श्रूयते । किमत्र कर्तव्यम्, यदुत्तरमाष्टादंष्ट्रं तदश्रुतविनियोगम् । सकृतार्थमप्यश्रुतोऽर्थसामत्वं ब्राह्मणे कृतव्याख्यानत्वाद् यत्र क्वचित् प्रकृतो विनियोगाकांक्षी तदत्र कल्पयितुं योग्यम् ।

नन्विदमप्यृद्धिकामेन[5] ग्राह्यम् । सत्यमेतत् । को नाम नर्धिकामः,[6] मुमुक्षोरप्यृद्धिरभिलषणीयैव । तस्मादिदमेवात्र कल्पनीयमिति मन्यामहे । बार्हतानि पृष्ठानि वचनादेव स्युः । अपि तु तच्छेषः ।

---

१ को. तुतरे हि सर्वे २ को. चत्वार्य ? ३ को. वचनात् एथमाए ?
४ को. तदं ? ५ को. नविदम० ६ को. ०मर्धिकामं

अथ सम्यक्पृठस्य रथन्तरप्रधानस्यैवाज्यबहिष्पवमानानि वचनादेव। रथन्तरपृष्ठबृहत्साम-वचनादेव शेषो विकृतः। अथात्यग्निष्टोमानामेतदेव त्रयोदशं स्तोत्रमत्यग्निष्टोमस्य इति वचनात् इन्द्र जुषस्व (जै. सं. ३.६.६) इति गौरीवितं, तत्त्रयोदशं स्तोत्रं भवति। षोडशिसंस्तुतं षोडशिमतां, तत्रानुष्टुभमुखे,[1] नानदमक्रुदिति[2] त्विदमाचार्योपदेशपरंपरया स्मर्यमाणानां प्रयुञ्जते इति यज्ञविदः आचार्यक्लृप्तिमार्गो नु तदानुकूल्येन वर्तते। अनुष्टुभि नानदमक्रुदिति ब्राह्मणेऽपि श्रूयते। तस्मात् प्रथमायां नानदं कार्यम्। जामिदो-षभयादुत्तमायां[3] श्यावाश्वमान्धीगवं तृचे कार्यम्। द्वितीयायां कल्प्यमन्विच्छामः। मधुश्चुन्निधनं ब्राह्मणे कृतव्याख्यानम्। अनिर्दिष्टविनियोगः प्रकृतौ विनियोगाकाङ्क्षी नष्टाश्व दग्धरथन्यायेनात्र प्रयोज्यकाङ्क्षी स्यात्। मध्यमायामृचि प्रयुञ्जते विद्वांसः रथन्तरप्रधानस्य नानदान्धीगवश्यावाश्वानि सामतृचः। तृचे बृहदित्यनुष्टुप् कार्या। सति ह्यावश्यकीये मधुश्चुन्निधनचिन्ता।

ननु सम्यक्पृठस्य मध्यमायां प्रयोज्यमस्ति श्यैतं, स्थानच्युतत्वात्। नेदं स्थानच्युतम्। बृहद्-होत्रपृष्ठे सति श्यैतस्य ब्रह्मसामत्वप्राप्तिः। श्यैतमधुश्चुन्निधनयोस्तुल्यैवात्र[4] प्राप्तिः। स्तोमपूरणार्थतयैव द्वयोरनयोरन्यतरदत्र कल्प्यम्। अथवा बृहत्साहचर्याच्छ्यैतमेवात्र कल्प्यम्। अथोक्थ्यानामग्निष्टोम-तुल्या क्लृप्तिराग्निष्टोमसाम्नस्ततस्सारमश्वं भुविभरमुद्वंशीयमिति त्रीणि भवन्त्युक्थानि।

नन्वनेकानि सामान्युक्थत्वेन श्रूयन्ते। सामन्तुसत्रासाहीयप्रमंहिष्ठीयदैवोदासानि प्रथमानि। हापन्नत्रैककुभसौभराणि द्वितीयानि। नार्मेधोद्वंशीयाष्टादंष्ट्राणि तृतीयानि। कथं तत्रैतानि गृह्यन्ते। अत्र ब्रूमः—साकमश्वस्य कामसम्बन्धेन श्रुतेः, तत्प्रतिसमाप्तये च पद्यते उद्वंशीयस्यापि न कामश्रुतिः। नार्मे-धस्यातिरात्रार्थतया श्रूयमाणत्वात् अन्यत्र न प्रसङ्गः। इतराणि सर्वाणि कामसम्बन्धानि। सौभरस्य[5] ? चावश्यंभावित्वात् कामसम्बन्धमपि सौभरं प्रकृतिसमाम्नाये दृष्टत्वान्मध्यममुक्थं कल्पयेत्। अकामसम्बन्धा अपि हि बहिष्पवमानस्य प्रतिपदः प्रकृतिप्रकरणे समाम्नातत्वाद् गृह्यन्ते। सौभरं स्वर्गकामः कुर्वीत इति श्रूयते। स्वर्गकामो हि मोक्षकामः सुकृतदुष्कृताभ्यां व्यावृत्तस्य मुमुक्षोर्निरतिशयपरमस्थानावाप्तिवेलायामेव श्रूयते। अथ हैवंविदेव स्वर्गः स हि स्वर्गच्छति अनन्ते स्वर्गे लोके इति च श्रूयते। अनन्तस्वर्गः[6] क्षेमः, मोक्षकामो हि निष्कामः, अतः सौभरं ग्राह्यमेव। बार्हतबृहत्प्रधानयोः क्रत्वोः प्रथममुक्तं सत्रासाहीयं, द्वितीयं च त्रैककुभं केचिदिच्छन्ति। संज्ञायामपि बार्हतेऽध्याये सत्रासाहीयवतां क्लृप्तेः प्रयोजनं बार्हतार्थमिति वदन्तं एवमिह शाट्यायनकल्पे श्रूयते—सत्रासाहीयसौभरोद्वंशीयानि बार्हतान्युक्थानि इति। संज्ञां कृत्वा बार्हते बृहत्प्रधाने च बार्हतान्युक्थानि इति च श्रूयते। स्पष्टतरमस्मद्गुरुः सर्वत्र साकमश्ववन्त्येवोक्थानि इच्छति।

**अथ षोडशिमान्**। इन्द्र जुषस्व (जै. स. ३.६.६) इति गौरीवितं षोडशं स्तोत्रं भवति। तदाम्नायेन ब्राह्मणे च ज्ञायते। कथं ब्राह्मणे न ज्ञायत इति चेदत्र ब्रूमः। तद् यद्धरिवतीषु स्तुवन्ति ताश्चतुस्त्रिंशदक्षरा भवन्ति। यत् षोडशिना षोडशस्तोमेन चतुस्त्रिंशदक्षरासु स्तुवन्ति। यद् गौरीवितेन षोडशिना स्तुवन्ति एतैर्वाक्यैर्ज्ञायते, प्रसिद्धानि पञ्च गृहस्तोत्राणि। अत्यग्निष्टोमस्यैवानुष्टुभि विकारः कार्यः। कथमत्रोद्वंशीयगौरीवितयो स्वारयोर्जामि परिह्रियते। अयमेव सलीयांसमजामिकल्पां मन्येतेति वैयाघ्रवर्यस्य मतेन परिह्रियते। नार्मेधे गृह्यमाणे को दोषः, अनतिरात्रे नार्मेधस्य कः प्रसङ्गः, एवं चेदजामितायै कामसम्बन्धमप्याष्टादंष्ट्रं गृह्ये तन्निष्कामस्य[7] नार्मेधपदस्यापि कः प्रसङ्गः।

---

१ को. तत्र नाम नुष्टपमु०  २ को. नानन्दमंनुदिति  ३ को. ०भयामुत्तमा ?  ४ को. श्यैतमधुश्चिन्नि०
५ को. संदिग्धः पाठः  ६ को. अनन्तस्वर्गो  ७ को. तन्निष्काकस्य

नन्वत्र भवता निष्कामस्यापि ऋद्धिकामत्वमविरुद्धम् उत्तरमाष्टादंष्ट्रं बृहत्प्रधानस्य मध्यन्दिने क्लृप्तम् । सत्यमेतत् । उत्तरस्याष्टादंष्ट्रस्य अदृष्टोत्थसामार्थसमाम्नायस्य ज्योतिष्टोमप्रकरणे कृतव्याख्यानस्य तत्राश्रयमाणविनियोगविषयस्य प्रकृतौ विनियोगाकांक्षिणोऽनुग्रहाय केनाप्युपायेनास्माभिरवकाशो दर्शितः[1] । पूर्वं पुनः ऋद्धिकामप्रयोज्यत्वादनुग्राह्यं चोत्तरस्योहःसमाम्नायोऽस्ति, किमत्र[2] कर्तव्यम् । प्रकरणमेव कर्तव्यम् । श्रुतिरप्येवं संप्रधार्य निपेतुमशक्यमिति मत्वा तदाहुः नोक्थ्यषोडशी कार्यः इति वचनमवददिति[3] मन्ये । आचार्योऽपि तदानुकूल्येनावदत् 'नोक्थ्यः षोडशिमान् कार्यः' इति । तस्मात् ज्ञानमात्रमेव षोडशिनः कार्यम्, न प्रयोग इति प्रसिद्धम् । अतिरात्राणामपि षोडशीपर्यन्तं षोडशीभिर्व्याख्यातम् । किन्तु नार्मेधमन्त्यमुक्थ्यसाम भवति । षोडशिनः पराणि वैतहव्यादीनि द्वादश स्तोत्राणि ब्राह्मणाम्नायाभ्यां विहितानि स्युः । कथं ब्राह्मणेनेति चेत्, द्वादश वा अग्निष्टोमस्य स्तोत्राणि, द्वादश रात्रेः इत्यनेन वचनेन रात्रेः द्वादशस्तोमा यो[4] अन्धस इत्यादिभिरध्यायैर्द्वादश स्तोत्राणि । यथा हि यथाक्रममाम्नातानि ततः सन्धीनामाज्यं स्तोत्रं तमपि ताभ्यामेव जानीयात् । तदाहुः—रथन्तरमेव प्रथमे तृचे स्यात् । वामदेव्यं द्वितीये । बृहत्तृतीये । इत्यनेन सन्धेस्त्रयस्तृचा[5] इति जानीयात् । तस्माद् बृहतीष्वेव स्तोतव्यम् इत्यनेन बृहत्य इति । तदाहुर्यत्त्रिवृदेव स्तोमानां लघिष्ठोरथन्तरं साम्नाम् इत्यनेन रथन्तरसाम सन्धेर्ज्ञायते । एवमेते पञ्चविंशतिरित्यभिहिताः प्रकृतिभेदाः । कथं साकमश्वादीनां स्तोमा ज्ञायन्ते । अथो आहुः एकविंशायतनो ह खलु वै षोडशी इति श्रूयते । तेन ज्ञायते षोडशिन एकविंशत्वम् । अन्येन स्तोत्रेण समस्तोमो भवति । इत्यनेन नार्मेधस्यैकविंशत्वं ज्ञायते । एकविंशस्तोमाभिलक्षितयोः यज्ञायज्ञीयनार्मेधयोः मध्यवर्तित्वादन्त्येन स्तोत्रेण समस्तोमो भवतीत्येकविंशस्य सिद्धवदनुपादानाच्च एकविंशानीत्युक्थानीत्याचार्यप्रवृत्तिदर्शनाच्च पूर्वयोरुक्थयोरेकविंशत्वं[6] प्रतीयते । अथवा श्रुतिरेव सिद्धानुवचनद्वारेण प्रत्यक्षमवबोधयति । तदाहुः यदेकविंशमनु सर्वे यज्ञक्रतवः सन्तिष्ठन्तेत्यु वा एकविंशान्युक्थानि रात्रेरिति[7] अनेनैकविंशत्वमुक्थानां प्रतीयते । तस्मात् पञ्चदशस्तोमो रात्रेरिति रात्रेः पञ्चदशत्वं ज्ञायते । तदाहुर्यत्त्रिवृदेव स्तोमानां लघिष्ठो रथन्तरः साम्नाम् इत्यनेन सन्धेस्त्रिवृत्त्वं ज्ञायते ।

मार्गेणानेन सुज्ञातं प्राकृती कल्पना यतः ।
क्लृप्तिः प्रकृतिभेदानामाचार्येण[8] कृता[8] ततः ।।
क्लृप्तिः प्रकृतिभेदाना मस्मदानां हि सूत्रतः ।
स्पन्दीकृता वृत्तिकृता ते पुनः पञ्चविंशतिः ।।

हरिः । उपमानं स्तोमकल्पे क्लृप्तस्तोमानां क्रतूनामृक्सामक्लृप्तिं वक्तुमयमारम्भः । ज्योतिष्टोमस्य रथन्तरपृष्ठस्य उपास्मै गायता नरः (जै. सं. ३.१.३) इत्याद्यस्त्रयस्तृचः बहिष्पवमानाख्यं स्तोत्रं भवति । किमस्य स्तोत्रस्य न सामास्ति, अस्ति, तत्कथं नोच्यते, उक्तं सूत्र एव । अहिंकृता प्रथमा रेतस्या हिंकृतानीतराणि गायत्राणि इति वचनात् गायत्रं बहिष्पवमानस्य सामेति ज्ञायते । तस्मात् स्तोत्रगतानां गायत्राणामाम्नायाभावात् उपनिषदि प्रपञ्चेन विहितस्याशरीरस्य गायत्रस्य ग्रहणं युक्ततरं भवति । एतास्तिस्रः इति[9] गृह्यमाणे बहिष्पवमानस्य त्रित्वं न सिध्यति । तस्मादादिग्रहणे तृचत्वं विद्यात् ।

---

१ को. दर्शितम्                २ को. कमत्र                ३ को. ०मवदिति
४ को. द्वादश स्तोत्रतानिद्वायान्तं०                ५ को. स्त्रिचा                ६ को. पूर्वयोरित्थयो ?
७ को. रात्रिरेति                ८ को. ०नामाचार्येणाकृ०                ९ को. ऋति

अन्नं...ज्यानि । आज्यानामपि गायत्रसामत्वं प्रजापतिः प्रजा असृजत ता अप्राणा असृजत इत्यादिना अध्यायेन ज्ञायते । गायत्रेणैव प्रातस्सवनं प्रायच्छत् इत्यनेन च ज्ञायते । एतेषु चतुर्षु तृचेषु गायत्रेण साम्ना चत्वार्याज्यानि विद्यात् । उच्चा[व]चयोः ? आदिग्रहणं । देवतृचत्वे सिद्धे तृचयोरिति[1] वचनं प्रत्येकसम्बन्धार्थम् । इतरथा द्वयोरेकस्यामिति एकस्यां ? द्वयोरिति वा स्यात् ।

ननु तृचस्यैकत्वात् तृचयोरिति द्विवचनं न घटते । नैष दोषः । सामद्वयं प्रति द्विरभ्यस्यमानत्वाद् द्विवचनम् युज्यते । पुरोचयो[2] अभिमन्त्यं[2] ऋक्तृचत्वादेव[3] साम्नोऽपि तृचत्वसिद्धिः[3] । आज्यशब्दो माध्यन्दिनपवमानसमाप्तिज्ञापनार्थः । पञ्चदशो मध्यन्दिनः इति योऽभिहितः सोऽयं तृचस्थ गायत्रामहीयवरौरवयौधाजयौशनाख्यपञ्चसामात्मकः प्रत्येतव्य इत्यर्थः ।

अभिष्ठानि क्रमे । क्रमेणैकैकस्मिन् तृचे एकैकं साम एकैकं पृष्ठं भवति । रथन्तराणीति संज्ञाकरणमुत्तरत्र व्यवहारार्थम् । स्मादिवयोः अयाच्चयोः पुरोचयोः अभिमन्त्यं एतंवान् सप्तसामात्मकः सप्तदशस्तोमक आर्भवः प्रत्येतव्यः । यज्ञसाम इत्थं ज्योतिष्टोमो रथन्तरपृष्ठः क्रतुरभिहितः । पवमानं पुनः कस्मिन्[4] तृचेविहितत्वात्तिसृषु ऋक्षु प्रथमायां रौरवं, द्वितीयायां दैर्घ्यश्रवसं, तृतीयायां सोमसाम । यौधस्तिसृषु पुनानः (जै. स. १.५३.१) इत्येतास्वेव तिसृषु । यौधाजयं सौपौष्कलकं[5] यज्ञायज्ञीयानां ऋग्विहितानां प्रयोगासभवादासन्नवर्तिनीषु पूर्वोक्तास्वृक्षु सतीषु दूरवर्तिनीनामुत्तरत्र विधास्यमानानां ग्रहणस्यान्याय्यत्वात् अनन्तरे पूर्वोक्तकल्पे श्रुता एव ऋचः आदेयाः । एतत्क्रत्वर्थसाम्नां यः क्रतुपारमुत्तमायां श्वित् कल्पयिषुः स्तोमानतिरेकाय श्यावाश्वं प्रथमं यां कल्पयित्वा वाजिनं क्रौञ्चस्तोमपूर्वेरणार्थं मध्यमायां सोमसामापि बृहत्युत्तमायां कल्पयिषुः प्रथमायां रौरवं कल्पयित्वा मध्यमायां दैर्घ्यश्रवसं स्तोमपूरणार्थमपीकृप ? । अथवा भगवताचार्येण सकलवेदार्थतत्वदर्शिना अनेकशाखागतान् अर्थानुपसंगृह्याल्पमेधसामनुग्रहाय कल्पसूत्रप्रणयनपरेणाद्भुतशक्तिना विधीयमानायां क्लृप्तावेकस्याविधानं प्रयोगकारणं मीमांसितुमशक्ता वयं, किं पुनः सकलानाम् । सास्म ? अयं ज्योतिष्टोमो बृहत्पृष्ठो विहितः ।

तृतीयः कल्पः उभयसामा । रथन्तरपृष्ठं सन्ध्यं द्वितीतीसंज्ञाकरणं व्यवहारार्थम् । पञ्चमं सम्यक्पृष्ठम् । अग्निचितिकं षष्ठम् । अग्निचयननिमित्तः प्रकृतिभेद एव । एते च षट् क्रतवः प्रकृतिविकल्पा इति पूर्वमेव प्रतिपादितम् ।

सप्तमो ज्योतिरतिरात्रः स एव प्रायणीयः । स एवोदयनीयः । यज्ञाय च एतान्युक्थानीति विद्यात् । कथमेषामृचो न कलिताः, प्रकृतितः प्राप्नुवन्तीति कृत्वा न कलिताः । प्रकृत्यर्थो हि समाम्नायः आमहीयवादीनां कौत्सपर्यन्तानाम् । तस्मात्एह्यषु (जै. स. १.१.७) वयमु त्वा[6] (जै.स. १.१७.३) एन्द्र याहि[7] (जै. स. १.३६.७) इत्येतेषु तृचेषु साकमश्वसौभरनार्मेधानि समाम्नायवशात् प्रकृतौ प्रयुज्यमानानि प्रकृतित एवात्र तथैवागच्छन्ति । एवं चेदामहीयवादीनामप्यृचः प्रकृत एव प्राप्तुमर्हन्ति । अत्र ब्रूमः— कल्पकारादीनामपुनरुक्तिग्रन्थगौरवनिभया अर्थसुव्यक्तबोधनमात्र प्रयोजनादवतीति तत्र पवमानगतानामृचां व्यभिचारबाहुल्यात् प्रतिकल्पं वचनं युक्तमेवाव्यामोहाय इतरा व्यभिचाररहितत्वात्, प्रकृतित एव प्राप्नुवन्ति । एवं चेत् पृष्ठयज्ञायज्ञीयौशनकावानामृग्वचनमनर्थकमिव प्रतिभाति । नानर्थकम् । एकाहवि-

---

१ को. त्रिचयो० २ को. पुनाचयोः प्रतिमन्त्यं ३ को. ०त्रिच० ४ को. कस्या तृचे
५ को. सौपौष्कलकं व कालेय ६ को. वयमुक्ता ७ को. पाहीन्द

धानाप्रकृतत्वज्ञापनार्थत्वात् । न प्रकृतिविकृत्यन्तरमपेक्षते । विकृतिः प्रकृतिमपेक्षते । एकाहविधा हि प्रकृति-भेदत्वात् प्रकृत्यन्तरं नापेक्षते । तस्मादेकाहविधानुविधेयाः ऋग्विधानसामर्थ्यादेवासां प्रकृतित्वं ज्ञाप्यते ।

पञ्चसन्धिः । त्रिवृत्सन्धिश्चात्र रात्रिशब्देन रात्रिगतानि स्तोत्राणि निर्दिश्यन्ते । यथा लोके राजानं प्रविशन्तं सर्वो ग्रामः प्रत्युज्जयाम इत्युक्ते ग्रामगतो जनो गम्यते । तद्वदत्रापि ग्राह्यम् । इति शब्दं संगृह्य व्याख्यायते । पञ्चदशी रात्रिस्त्रिवृत्सन्धिरेषा अषोडशिका क्लृप्तिः स्यात् ।

अथ सन्धिः । अथ यद्यतिरात्रः षोडशिमान् स्यात् । एवं क्लृप्तिः स्यादित्यर्थः । किमुभौ पक्षौ सर्वत्र विकल्पेन विधातव्यौ, नेति ब्रूमः—व्यवस्थाया विकल्पः द्वादशाहगवामयनत्रिरात्रगतानामेव षोडशिकत्वम्, इतरेषां सषोडशिकत्वमिति ।

अथ कक्षुरात्रेः ? त्रयः पर्यायाः, तषां प्रथम एतानि चत्वारि सामानि चत्वारि स्तोत्राणि भवन्तीत्यर्थः । अथ द्विगारं । अथ त्रिकवित्वमेनासन्धिः । एतासु न वर्णरथन्तरसामात्मकः सन्धिर्नामाज्य-स्तोत्रं[1] स्यात् । स्तोमकल्पे क्लृप्तस्तोमयोः रात्रिसन्ध्योरत्र स्मोमवचनेन किं प्रयोजनम् । यद्येकस्मिन् पर्याये स्तुते गिव्युच्छेत् ? पञ्चदशभिर्होत्रैः स्तुयुः । पञ्चभिः पञ्चभिः इतरेभ्यः इत्यादयो ये पक्षाः प्रायश्चित्तया[2] श्रूयन्ते तेषां निरासार्थं रात्रेः पञ्चदशवचनम् । अथ हैकेऽभ्युदितामेव[3] रात्रिं समेत्य तुष्टुवुः इत्ययमेव पक्षः सर्वपञ्चदशस्तोमात्मक आश्रयणीयः । स्यात् । एतदर्थं पञ्चदशवचनं सन्धेः । पुनरत्र त्रिवृद्ग्रहणं कवित्वार्वाक्स्तुतातिष्ठतनिमित्तोत्तरस्तोमवृद्धिह्लासनिरासार्थम् । यदेकया तिष्ठतं विराट् सा लोमशा, इत्यादिदर्शनं तत्र कर्तव्यम् । पञ्चदशत्रिवृच्छन्दसोः पुनः पुनवर्चनम् उभयोः पक्षयोः समानधर्मत्वदर्श-नार्थम् । शब्दवैरूप्ये हि सति अर्थवैरूप्याशङ्का न जायते । अथवा स्वभाव एवायमाचार्यस्य यद् रात्रिसन्ध्योः सर्वत्र स्तोमेन सह वचनम् ।

तृचा···सन्ति । तृचाय तृचाय हि कुर्वन्ति, तेन सकृद्धिंकृतेन पराचा स्तुवत इत्येतं पक्षं निराकर्तु-मिदमुच्यते । अयमतिरात्रं क्लृप्तं आष्टममारंभणीयमहः प्रस्थानास इति नवर्चं संज्ञाकल्पेन हि सूक्तो निर्देक्ष्यते[4] । वचनेऽपि रथन्तरादीनि तृचस्थानि वेदितव्यानि । एतेष्वेकर्चेषु सत्सु स्तोमेन पूर्यते । अत ऊर्ध्वमभिप्लवषडहस्तस्य प्रथमो ज्योतिष्टोमो, द्वितीयो गौः, उक्थ्यस्तृतीयः, आयुरुक्थ्यश्चतुर्थो, गौरुक्थ्यः पञ्चमः, चारूक्षः षष्ठो, ज्योतिरग्निष्टोमः । अभिप्लवस्यैवंरूपत्वं ब्राह्मणेनोक्तम् । तान्येतेनैव ज्योतिषौ भवतः । पयोहस्त एते चत्वारो मध्यम उक्थ्या भवन्ति ।

गौरायुर्गौरायुरिति अयमभिप्लवः षडहः संपद्यते । अग्न आ याहि वीतये (जै. सं. १.१.१) इत्या-ज्यानीत्यत्र एकस्मिन्नाग्नेये तृचे चतुर्णां नानादेवत्यानां गातुमयमुक्तत्वात् एतेषु चतुर्षु पूर्वोक्तेषु चत्वार्याज्यानीति व्याख्येयम् ।

ननु अग्न आ याहि वीतय इत्यादीनि द्वयानि वाज्यानि[5] सन्तु, कान्यत्र[6] ग्राह्याणि, प्रथममभिहि-तानि ग्राह्याणि । यद्युत्तराण्यभिप्रेष्यन्त सम्यंचाद्यानि जानीयादित्यत्रापि[7] सहैव व्याख्येयम् ।

ननु सत्रासाहीयम् उच्चा ते जातमन्धसः (जै. सं. १.४९.१) पुनानो अक्रमीद् (जै. सं. १.५१.२) प्र वो वाजा अभिद्यवः (जै. सं. ४.१.७) इत्येतेषां तृचेषु गीतम् अस्मिन्नत्र गेयम् । पृथगुत्तमः त्रिवचनादाग्नेये

---

१ को. ०न्धिर्नामाज्यं २ को. प्रायश्चिन्त्यां ३ को. ०यामेव निलिल्यरेतेभावरां
४ को. निर्देक्ष्यन्ते ५ को. वाज्यारु ? ६ को. कावत्र ? ७ ज्यानीत्यत्रा० ?

प्र वो वाजा इत्यस्मिन् गेयम् । इतरौ हि पवमानदेवत्यौ । स्वास्वेव त्रैककुदं, तस्मिन्नाम्नातत्वात् । स्वास्वेवाम्नातं पूर्वमाष्टादंष्ट्रं त्रिर्गेयम् । नोत्तरं वोहमिति पावमानीषु गीतम् । स्वास्वेवोद्वंशीयम्, तत्रैवाम्नातत्वात् । उपमानमिदं पृष्ठ्यस्य षडहस्य प्रथममहरुच्यत इति । अस्य पृष्ठो व्यूढः समूढः इति द्विविकल्पो भवति ।

उपशिक्षापतस्थुषः[1] (जै. सं. १.११.७) उपो षु जातमप्तुरम् (जै. सं, १.५१.१) इति द्वावेव कल्पौ । उपास्मा (जै. सं. ३.१.१) इति तृचः सत्रत्रैककल्प[2] एव ग्राह्यः[3] । सोमसम्पत्तये एतदर्थो ह्ययमत्रैकर्चाम्नायः[4] । पवमानमिदं द्वितीयमहरारभ्यते । पवर्यासं पर्यास इति बहिष्पवमानाग्र्यस्य तृचस्याख्या वासिष्ठस्यर्चोप्यूढपक्षे[5] वक्ष्यते ।

ननु पूर्वमभिधीयमानस्यौशनशस्यार्चं उक्त्वा[6] ? पश्चाद्वक्ष्यमाणस्य वासिष्ठस्यातिदेशो युक्तः । सत्यम् । किं त्वौशनस्यानेकतृचसंबंधित्वादेकतृचनिश्चायनं न शक्यत इति कृत्वा वासिष्ठेनैकतृचसंबन्धिनातिदेशः क्रियते । व्यामोहाय । एवञ्च[7] एवा ह्यसि वीरयुः (जै. सं. २. २.५) इत्थं स्वामहीयवमत्र गेयम्, न उच्चा ते (जै. सं. १.४६.१) इति । पावमानत्वादाष्टादंष्ट्रं च स्वासु गीतं, पूर्वमाष्टादंष्ट्रमत्र ग्राह्यम् । दाशरात्रिकेष्वहस्सु येषां साम्नामृचो न कथिताः । तेषामाम्नायवशादृचो ग्राह्याः । तदर्थो ह्यहाम्नायः । तं त्वा नृम्णानि[8] (जै.सं. ३. १७. ७) इति पञ्चर्चं प्र[9] यद् गावो[9] न भूर्णयस्[9] (जै. सं. १.१५.५), आशुरर्ष[10] बहन्मते (जै.सं. ३.२१.१३) इति द्वे षड्चे, प्र सोमासो अधन्विषुः[11] (जै. सं. ३.२५.७) प्रकविर्देववीतये (जै. सं. ३.२६.४) इति द्वे सप्तर्चे, पवस्व देववीर् (जै. सं. ३.३१.१७) सना च सोम जेषि च (जै. सं. ३.३१.१७) इति द्वे दशर्चे । एषु पृष्ठ्यः षडहो व्यूढस्समूढक्लृप्तिरभिहितः । पृष्ठ्यात्परोऽभिजिन्नाम क्रतुः, पूयेवाज्यानि । अत्राज्यानां संज्ञया व्यवहाराभावादभियन्तेत्यनर्थकम् । नानर्थकम् । अस्य क्रतोरभिजयनिमित्तत्वात् अभिशब्दवन्त्याज्यानि अत्र प्रयुज्यन्त इति ज्ञापनार्थत्वात् । किमेतस्य ज्ञापने प्रयोजनम्, अन्यत्र अभिजयनिमित्तेषु क्रतुष्वेतानि भवन्ति । प्रतोक्तव्यानीति । कोऽन्योऽभिजयनिमित्तः क्रतुः, संसवो नाम । सोमयोः संसवे सति अभिजयकांक्षिणोराज्यान्येतानि [12] प्रयोजयेदित्यर्थः । ततः परे त्रयः स्वरसामानः । तं त्वा नृम्णानि बिभ्रतं (जै. सं. ३.१७.७), उत्ते[13] शुष्मास[13] ईरते (जै. सं. ३.४४.१) इति पञ्चर्चे···त्यष्टर्चं हि···पाठक्रमोऽवेक्ष्यः[14] । अन्त्यद्वितीयादिवचनम् ? ततोऽपरो विषुवान् । एष वाजी हितो नृभिर (जै. सं. ४.५१.४) इति षड्चः । ततः परो विश्वजित् । उप त्वा जामयः (जै. सं.१.२.३) इत्यादयः षडेकर्चः । तथा हि बहिष्पवमानस्य त्रिवृत्त्वं संपाद्य ततः सुषमिद्धो न (जै. सं. ३.५७.१) इति चतुऋचत्वादन्त्वादन्त्योद्धरणं प्राप्तम् । निवर्त्यार्थैतान्याप्रीराज्यानि भवन्ति इत्याप्रिसंस्कृतत्वात् अत्रापि धर्मः कार्यः । को धर्मः, इति चेद्, वसिष्ठानां मन्त्रिणां वाध्र्यश्वीनां[15] काण्वानां संकृतीनां प्रजाकामानां राजन्यानां च द्वितीयायां तन्मनपाती मुद्धरेदितरेषां तृतीयान् नाराशंसीमुद्धरेत् । इति ततः परे गोआयुषी । अथ त्रयश्छन्दोमाः प्र स्वानासः[16] (जै. सं. ३.३५.४) असृग्रम्[17] (जै. सं. ३.३६.३) इति द्वे नवर्चे परि स्वानासः[18] (जै. सं. १५.०.९) इति षड्ऋचम् । एते सोमाः (जै. सं. ३.४१.४) सोमः पुनानः ३.४२.३) सोमा असृग्रम्

१ को. ०क्षाभवतस्सुष २ को. सन्नत्रैकल्प ३ को. ग्राह्यम्
४ को. ०मत्रैककर्चा० ५ को. ०स्यासिष्ठस्य० ६ को. ०स्योनस्योर्चे उक्था
७ को. आमञ्च ८ को. नृमणानीति ९ को. प्रद्गावो न भूर्णय
१० को. आहुरर्ष ११ को. अयन्विष्ठ १२ को. राजान्येतानि
१३ को. सुक्ते शुष्मा । १४ को. पाठक्रकावेक्षमन्त्य० १५ को. वग्यश्वीनां
१६ को. प्रस्थानासो १७ को. स्रग्रम् १८ को. परिज्ञानासः

(जै. सं. ३.३४.२) इति नवर्चानि। एष देवः (जै. सं. ३.४६.४) इति दशर्चम्। एष कविर् (जै. सं. ३.५१.२) इत्यादीनि चत्वारि षडर्चानि। ततः परं दशममहः इति तिस्रः, त्रय एकर्चा इत्यर्थः। संभार्या इत्युक्ताः। तासूज्जति ब्राह्मणे यदुक्तम् य एवं विद्वान् त्रिरनवानं गायत्रं गायति इति ता ऊर्ज्जतीर्नाम,[1] तासु तिसृषु गीयमानानां गायत्राणां मध्ये नवान्या इत्यर्थः। त्रीणि गायत्राण्येकोच्छ्वासेन गायेदित्यर्थः।

यं स्तोमं तूष्णींस्तोमो नाम त्रयोदशं स्तोत्रमत्र स्तोमवचनम्। अस्मिन् स्तोत्रे धनस्तोत्रार्वागतिष्टवननिमित्तौ वृद्धिह्रासौ न कर्तव्यौ, इत्येतदर्थम् ऋचेवन्ति सकृद्धिकृतमेव स्यात्, इत्येतं पक्षं निवर्तयितुमिदमुक्तम्।

उत्तमं महाव्रतीयमहः स्तोमकल्पे क्लृप्तम्। स्तोमानां शिरःप्रभृतीनां नात्र स्तोमविधिर्ब्राह्मणे श्रूयमाणानां पञ्चभिरेव शिरः स्तुयुः। पञ्चभिरन्यं पक्षं पञ्चभिरन्यम्। इत्येवमादीनां विकल्पानामन्योन्यातिष्टवनार्वाक् स्तवननिमित्तजानां च विकाराणां निराकरणार्थम्, तस्माच्छिरःप्रभृतीनामुक्ताः स्तोमाः सर्वदा व्यभिचारं गच्छन्ति।

प्रकृतिः सर्वयज्ञानां ज्योतिष्टोमः प्रकीर्तितः।
द्वादशाहस्त्वहीनानां सत्राणामयनं गवाम्॥
प्रकृतित्रितयं यस्मादेतदत्र प्रकल्पितम्।
तस्मादेष गणोऽधीतः प्राकृतः स्यात् समाख्यया॥
गणस्यास्य[2] प्राकृतस्य व्याख्यानमिदमीरितम्।
नवतित्रितयानुष्टुबक्षर-प्रमिताक्षरम्॥

इति प्राकृतस्य वृत्तिः समाप्तः

---

१ को. सा उज्जितीर्नाम। २ को. गणस्य।

# अथ संज्ञावृत्तिः

भूतिं भूतिप्रकाशं दिशतु भगवतः शीतपातार्धमौलेः[1] ।
पादाम्भोजद्वयं वः स्फटिकविमलद्युत्यग्रचेतोनिकेतम्[2] ॥
बिभ्राणः[3] सप्तलोकानकृत हृदि लसद्वृत्तिनम्रोत्तमाङ्ग-
स्वर्गौकःपूगचूडामणिकिरणवदाक्लृप्तसन्ध्याप्रदीपम्[4] ॥

अथातः[5] । द्वाभ्यां प्रकाराभ्यां शास्त्राण्याचार्यो निबध्नाति । विस्तरेण संहारेण च । द्वावपि चैतौ प्रकारौ प्रकारद्वयेनैवास्माकमनुग्राहकौ दृष्टौ । प्रतिपत्तिलाघवेन पूर्वं ग्रन्थलाघवेनोत्तरम् । तत्र प्रकृतिवर्त्मन्याश्रितो विस्तरो ज्योतिष्टोमविशेषेष्वेकाहविधासु । द्वादशाहे गवामयनमिति । अथेदानीं विकृतिषु संहारपक्षमाशिश्रयिषुराचार्यस्तदभ्युपायभूतज्योतिष्टोमक्लृप्तौ च श्रुत्युपलभ्यायां, पृष्ठसंस्थाद्यवस्थानिमित्तं कतिपयविशेषोपस्करप्रतिपादकं ग्रन्थमामनति स्म । तत्रादौ सूक्तपरिमाणमाचिख्यासुरित्थं प्रतिजानीते । अथ शब्दोऽधिकरणान्तरस्य द्योतकः । मङ्गलार्थो वा प्रयुक्तः[8] । अतः शब्दो हेतौ । यतः सूक्तानां सूक्तनिर्देशः । अतः सूक्तनिर्देशः करिष्यते । अनेन हेतुनेत्यर्थः । केन, ऋणादिग्रहणेष्वियत्तानवगमात् तदसद्विकल्पयिषया । अत एव सूक्तादिग्रहणेषु सर्वग्रहणं सिध्यति । करिष्यमाणचतुरृचादिनिर्देशादेवार्थसिद्धेः व्यर्थः सूक्तनिर्देश इति एवं चेत्, चतुरृचादीनां सूक्तसंज्ञायोगार्थमिदं सूक्तनिर्देशग्रहणम् । वक्ष्यति हि त्रिणव सूक्तानीति चतुरृचानि । चतस्र ऋचः समाहृताश्चतुरृचम्[10], बहुव्रीहिरेव वा सूक्तशब्दानुवर्तनेन कल्प्यः[11] । चतस्र ऋचो अस्य सूक्तस्य चतुरृचं[12] सूक्तमिति । एतानि चत्वारि चतुरृचानि ज्ञेयानि । संख्यावादस्फुटप्रतिपादनार्थं चतुरृचानि[13] । प्र स्वोप्त[14] प्रस्वोच्चापवस्वानि[15] । पर्याय[16] साममयं रूपं पर्याससंज्ञं[17] विज्ञातव्यम्[17] । कुतस्तृचमिति विज्ञातम्[18] नैकेति न द्वे इति. अत इदं विज्ञातं तस्माद् तृचे साम इति । एवं चेदेकर्चेऽपि—तस्मादेकर्चे साम इति । यद्येवं वक्ष्यति, संख्यानुपूर्वेणैकर्चे तृच इति साम गायेत् । इति वक्तव्ये तृचस्य पूर्वग्रहणं तृचस्यासम्भववृत्ति साम एकर्चस्यावगन्तव्यम् । सर्वसामसु गायत्रस्य विशेषतोऽप्येकर्चः प्रतिषिद्धः । अथ ह वै नैकर्चे गायत्रं कुर्यात् इति । यद्यस्य तृचस्य पर्यास इति संज्ञा कृता एकर्चेषु तृच इति पर्यासः, इत्यादिष्टं न सिध्येत् । एवं चेत् परिभाषावाक्यमिदं भवतु । पर्याससंज्ञा तावद् बहिष्पवमानान्त्यानां तृचानां ब्राह्मणसिद्धा, सेह गृह्यते । अयं वाक्यार्थः पर्यास इति विशेषः । चोदनायामयमेव ग्राह्यो नान्यः । यथा पशुचोदनायामज इति ।

---

१ को. शीतवातार्थं०  २ को. विमलमस्तिद्यग्र०  ३ को. बिभ्राणं
४ को. ०रणवताक्लृप्त०  ५ को. अथ  ६ को. ०क्षमाफिश्रयिषु०
७ को. अस्यतेमामनन्ति स्म  ८ को. प्रयुक्तम्  ९ को. पर्संचानि
१० को. समाहृता०  ११ को. कल्प्यम्  १२ को. चतुरृचः ।
१३ को. त···ञ्चच्चे पृथक् चानि  १४ को. प्रसोप्त चे एष ठठवं ?  १५ को. प्रस्वाच्चानि पवच्चानि
१६ को. पवर्यासाममयं  १७ को. पंर्यासंज्ञो विज्ञातव्यः  १८ को. इत

उपान्त्यं: । एताश्चतस्रः प्रतिपदो राथन्तर्य इति प्रत्येतव्याः, अतः प्रतिपदः इति । इदानीमेव तासां प्रथमे प्रतिपदौ इत्यादि सिद्धवदनुवादस्य दर्शनात् । अथवा, इयं वचनव्यक्तिः, एते चत्वारस्तृचा राथन्तर्याः प्रतिपदः इति ज्ञेयाः इति । तृचसिद्धिश्च पर्यासे प्रतिपादिता । ननु गायत्रेऽप्येकर्चे सति विधावनित्यम् । सत्यमेतत् । एवं चेत्, एवं योजयिष्यामः—एताश्चतस्र ऋचो राथन्तर्यो नामेति । प्रतिपच्छब्दश्चासामेव विशेषको भवतु । यद्येवं गृह्णीयाः, सप्तमुत्तरं विरोध्यति । तासां प्रथमे प्रतिपदौ पर्यास इति । त्रिवृद्बहिष्पवमानमिति त्रिवृच्छन्दःपञ्चके प्रसृजेत् । ततस्तृचगतिरेव ज्यायसी । अन्यथा चेयं संज्ञा । रथन्तरनिमित्तैव हि प्रवृत्तिरासां प्रायेण । तासां...मानम् । तासामिति निर्धारणे षष्ठी । तासां प्रतिपदां ये प्रथमे ते च पर्यास इति । पर्यासश्च त्रिवृत्स्तोमः बहिष्पवमानम् । भवति त्वस्योपयोगः जामदग्न्यस्य प्रथमे ऽहनि । त्रिवृदित्यनर्थकम् । नानर्थकम् । प्रकृत्यर्थत्वात् । त्रिवृत्स्तोमकं बहिष्पवमानमस्माभिः प्रथमं कल्प्यम् । अक्लृप्तं तदपीत्थं रूपमेव स्यात् इत्याचार्यो ऽभिप्रैति । विनापि हि त्रिवृद्ग्रहणमुत्तरत्र सिध्यति । ततः प्राकृतस्य रथन्तरसाम्न एतदेव बहिष्पवमानम्, तदतिदेशादेव[1] चेदं विरामादिषु प्रवर्तते[2] । ततश्च जामदग्न्यो[3] ऽत्र प्रथमं रथन्तरसाम्न इति श्रवणमस्ति । ततस्तैस्तत्रैवाकल्पयिष्यत, यदि तदर्थमेवाभविष्यत् । यथा बलभिद्गोसववैश्वदेवादीनां[4] बहिष्पवमानानि ।

नन्वेकार्थान्यपि बहिष्पवमानानि बहून्यत्रैव कल्पयिष्यति, सत्यमेतत् । तत्रैव तु तत्प्रयोजनं वक्ष्यामः । प्रथमं[5] दाशरात्रिकस्य पञ्चमस्याह्नस्त्रिणवस्तोमकत्वात् तत्त्रिणवमित्याख्यातम् । तस्मिन् यानि सूक्तानि—द्वे सप्तर्चे, एकं चतुरृचं च तानि त्रिणवसूक्तानि । बहिष्पवमानमित्यनुवर्तते । इत्येत्रिणवस्तोमो बहिष्पवमानं भवति । अत्र स्तोम इदं निर्देक्ष्यति । त्रिणवमित्यनर्थकम् अक्लृप्तयज्ञार्थत्वादेवमाचार्यो ऽभिप्रैति । येऽस्माभिरपरिकल्पिताः परतन्त्रविहिताः क्रतवः साह्नाहीनसत्राध्वनि विद्यन्ते ते ऽप्यस्माभिर्न्यायेन प्रकृतिकल्पमार्गानुवृत्त्या चावगाहितस्थानानपेक्ष्या इति । तत्र वचनाभावे स्तोमपृष्ठसंख्याननामकामगुणदेवतर्षिप्रकृतीनां दत्तानाम् ? अन्वयानां यथायोगमनुवृत्त्या सर्वस्याप्यृक्सामविस्तरस्यागमनेन क्लृप्तौ कर्तव्यायामेतत्स्तोमकानां बहिष्पवमानानामेतद्रूपतया नियमार्थानि तृणवादिग्रहणानि ज्ञेयानि । इतरथा तान्येकनिर्देशान्येकस्तोमादिष्वेवाकल्पयिष्यत इहैवैतानि बलभिदादिबहिष्पवमानान्यकल्पयिष्यन्त । पृथग्विंशत्कस्य प्रस्ताशब्दवती प्रतिपदस्य प्रस्थातृलक्षणमन्वाख्येयं नवर्चत्रयं पञ्चर्चत्वचत्वारिंशत्सूक्तानि राश्यादाहृदं निर्देक्ष्यति । पृथदंशपूर्वमुत्तरमिति सर्वत्रैकस्तोमस्य द्विरनुक्रमेण प्रयुज्यते । ततो ऽर्थविशेषस्तुत्यर्थमथवा अयासिद्धानुवादो ग्रन्थमलंकर्तुमिति चिन्त्यम् । न क्वचिदिदं निर्देक्ष्यति । अक्लृप्तयज्ञार्थतयैव त्वर्थवान् भवति । अथवा ये शानिनो गतमपि कल्पं संकोचयन्ति तेषामस्माकं च साधारणमेतत् संज्ञापरिभाषाविधानमाचार्यो ग्रन्थमामनत् । अत इदं प्रथमे स्वरसाम्नि तेषामर्थवत्तिस्रः अनन्तरं पञ्चशारदीयजमदग्निस्तोमयोरस्य निर्देशः विंशः, इदं पृतनाजिति निर्देक्ष्यति ।

**तिस्रः विंश इदं** । दिशास्तोमे प्रथमे पृथग्विंशम्, इदमुत्तरस्मिन् मनुस्तोमे । **आ.. ज्यानि** हि । तेषां सर्वेषां बहिष्पवमानानामेतान्याज्यानि इति तानि रथन्तरसाम्नात्प्रातःसवनानि । रथन्तरसाम्नः प्रातःसवनम् इति यत्र यत्र निर्देक्ष्यति तत्र तत्रैतानि स्युः । यद्येतेषां बहिष्पवमानानामिति शक्यं वक्तुम् ।

---

१ को. ०देशादेव वि०    २ को. प्रवर्त्यते    ३ को. जामदग्न्यात्र
४ को. श्वैदेवादीनां    ५ को. प्रथन्नवं    ६ को. प्रथदसं

कथमिति चेत्, इति रथन्तरसाम्नां बहिष्पवमानानीत्युक्त्वा तदनन्तरमाज्यानि विधेयानि, तेषामपीष्टतमो योगः सिध्यति । उत्तरतृचामप्येवं निर्देष्टव्यम् ।

षष्ठं रथन्तरसाम्नो बहिष्पवमानं, तृतीयं रथन्तरसाम्नो बहिष्पवमानमित्याज्यानां सिद्धिरिति चेत्, यथा भवतः पृष्ठानि तथा ममाज्यानि । पृष्ठानि च विहित प्रातःसवनानुकूल्यायैव हि । पूतनाजिति[1] रथन्तराणि पृष्ठानि प्रकृत्यविशेषणेऽपि सिद्धानि । ममापि विहितबहिष्पवमानानुकूल्यायैवात्र सिद्धान्याज्यानि पृष्ठानि च । अत्र ब्रूमः—यदि भवदुक्तः स्यात्, केषुचिद् दोषः स्यात् । यथा पञ्चरात्रस्य पञ्चमेऽह्नि पञ्चमस्य द्वितीयः, रथन्तरप्रधानस्य बहिष्पवमानमिति हि भगवान् वक्ष्यति, तथा च सति पञ्चमाह्निकान्येवाज्यानि तत्रानिर्दिष्टानि भवेयुः । अतः कृतवदेव ज्यायः । यच्च लाघवमेतेषां बहिष्पवमानानामित्यवचने लभ्यं तद्दशभिर्बहिष्पवमानानि ग्रहणैस्तिरो भवति ।

एकादशभिस्तु भवत्पक्षे एवापतति अक्षरगौरवम् । किं पुनर्येषामविकृतानीत्यस्य प्रयोजनम् । नास्ति भूयः प्रयोजनं, किं त्वाज्यानां चातुर्विध्यं पृष्ठव्यवस्थया कल्पितम् । अग्न आ याहि वीतये (जै. सं. १.१.१) इत्यादीनि रथन्तररूपाकारादि बहुरूपसमन्वितानि तद्रूपादभिन्नत्वादविकृतानि इत्येषां निर्देशः । एवम् अग्निं दूतम् ( जै. सं. १.१.३ ) इत्यादीन्यपि । बृहद्रूपानुगतत्वाच्छ्रूयते च महद्वति, द्वे भवतो बृहद्वति एतद्वै प्रत्यक्षं बृहतो रूपं यन्महद्वद्यद् बृहद्वत् इति रथन्तरप्रधानसम्यक्पृष्ठयोस्तु रथन्तरे पूर्वे बार्हते परे विधास्यति । तत्रैव चाभिधास्यति—सम्यञ्चिति बृहत्प्रधानस्य च बार्हतं राथन्तरं बार्हतं राथन्तरम् इति व्यतिषिक्तानि च अभिधास्यति, तत्र राथन्तराणां बार्हतानां चाविकृतत्वानुवादादितरेषां[2] सम्यग्व्यक्तिव्यतिरिक्तत्वानुवादेन च न कश्चिदिह प्रवृत्तिविशेषतः क्रियते । केवलं त्वर्थवादस्वरूपमेतद् वचनमाज्यानां प्रशंसार्थं मन्तव्यम् । अथवा एतानि शाखान्तरश्रुतानि येषामाज्यानामभिधानान्यविकृतानि सम्यञ्चि व्यतिषिक्तानीति, तानि प्रतीतार्थानि कर्तुमाचार्योऽभिव्याहरतीति वर्ण्यम् ।

**अभि...ष्ठानि** । एतानि राथन्तराणि पृष्ठानि स्युः । रथन्तरसाम्न इमानि राथन्तराणि । तद्धितवेलायामुत्तरपदलोपलक्षणमनुमेयम् । प्रकृत्यर्थोऽयं पृष्ठविधिः । किमयमादरः[3] पृष्ठेष्वेव, प्रकृतेः नेतरेषु स्तोत्रेषु । अत्र ब्रूमः—प्रकृतिक्लृप्तिराचार्यश्रुतिसिद्धेति[4] नानुक्रामति । बृहद्रथन्तरकृतां तु व्यवस्थां श्रुतावपरिसमाप्ताविह वदत्येव । यथा बहिष्पवमानाज्येषु पृष्ठेषु च पवमानद्वयेऽपि तु रथन्तरसाम्नो बृहत्साम्नश्च श्रुतिसिद्धैकरूपेण न किंचिद् वदति । उभयसाम्नस्तु तत्रापि यो विशेषस्तं वक्ष्यति । बृहत्यैते[5] आर्भव इत्यादिना त्वग्निष्टोमसाम्नि वाच्यमस्ति, सर्वत्राविशेषात् । ततश्चोद्यः पृष्ठविधिः रथन्तरसाम्नामित्यनुवर्तनेन सिद्धो[6] राथन्तराणीत्यनर्थकम् । नानर्थकम् । अनुवृत्तिनिषेधार्थत्वात् । तत उक्तविधेः पृष्ठनिरपेक्षता सिध्यति । 'एह्युत्थानि वक्ष्यति मुहुः । साकमश्ववन्तीन्युत्थानीति तत्रैषां ग्रहणम् ।

**अथ···त्थानि** । आसु नार्मेधं च ततः पूर्वे साकमश्वसौभरे च एतान्यतिरात्रस्योत्थानि स्युः । तस्याविशेषात्[7] सर्वस्यापि त्रिष्वभिजिदादिषु केशवपनीये, व्युष्टिना वीतये, सजित्वस्तोमे, गर्गत्रिरात्रे[8] चास्यावसरमप्तोर्यामस्य संस्थान्तरत्वादप्राप्तौ विधास्यति । त्रिकद्रुकेष्वेतेषां विधानस्य तत्रैव प्रयोजनम् ।

---

१ को. ग्रवत···पूत०    २ को. ०दावितरेषां    ३ को. मादरं
४ को. ०प्तिमाचार्य०    ५ को. बृहत्यै    ६ को. सिद्धे
७ को. तस्य विशे०    ८ को. गर्भत्रि०

इन्द्रसोमषोडशीति स्तोत्रविशेषः । तदर्थं साम उक्थ्यषोडशिसाम्नां प्रकृतित एव विकृतिषु सिद्धेरिह विधिरनर्थकः[१] । नानर्थकः । प्रकृतेराचार्येण प्रत्यक्षमक्लृप्तत्वात् । अयमपरिहारः । गायत्रामहीयवादियोगस्याव्यपदेशादीनां यत्नसाध्यत्वप्रसङ्गात् । एवं चेत् प्रकृत्यर्थं एवैषामेष विधिरस्तु, नहीमानि श्रुतितो गायत्रामहीयवादिपदसन्दिग्धोपलब्धानि । प्रकृत्यर्थश्चेत् पुनः सोमाष्वपि पृष्ठवत्प्राप्तेस्तत्र साकमश्ववन्त्युक्थानीत्यनर्थकम् । नानर्थकम् । सत्रासाहीयवतां निवर्तनार्थत्वात् । तेषां हि विकृत्यर्थता वक्ष्यते । पवत्यः तासां [ सो ] मानां ? मध्यमयोः द्विरात्रयोरश्वमेधे चेदं निर्देक्ष्यति ।

प्रथ···दशं । इदमक्लृप्तयज्ञार्थं संभृतं प्रकृतिकल्पानां च द्वितीयस्वरार्थं प्रथत्रिंशत्त्रयस्त्रिंशसूक्तानि दशर्चद्वयं चतुरृचं च विश्वामित्रस्तोमेऽस्य निर्देशः । प्रथविंशं दशर्चं चत्वारि षड्ऋचं अरायेऽस्य निर्देशः । प्रथविंशं द्वे षड्ऋचे गोतमस्तोमे इदमादेक्ष्यते । प्रतिस्र॑तरम् इदं पराकस्य परस्मिन्नहनि विनियोक्ष्यते । तिस्रःवंशमिदं सत्राजिति संयोक्ष्यति । सर्वविंशं व्युष्टीनामत्रेश्च द्वितीययोरह्नोरस्य विनियोगः । सर्वादशं या हविर्भारद्वाजयोः स्तोमौ, तावनेन साध्येते । अग्निज्यानि येषां साधित्वामि माम अनयोः प्रगाथयोः बृहच्च पृष्ठं ह्योतं च ब्रह्म साम भवतः । नित्ये···इतरायोः । राथन्तरे सूक्ते वामदेव्यकाले । ये इतिष्ठानि इति वाक्यद्वयेन क्लृप्तानि बार्हतानि पृष्ठानि प्रयोज्यानि । आसु सत्रासाहीयं च । तस्मादुत्तरे । त्रैककुभोद्वंशीये च एतानि सत्रासाहीयवन्त्युक्थानि ज्ञेयानि ।

किमर्थं पुनः द्वितयान्येवोक्थानि पूर्वं विधाय पृथगिहैतानि विधीयन्ते । तत्तेषामेषां च भिन्नविषयताप्रज्ञापनार्थं प्रकृत्यर्थानि तानि विकृत्यर्थान्येतानीति प्रकृतिकल्पनायामेव चास्माभिः सत्रासाहीयत्रैककुभयोः श्रुतकामाभावे प्रकृत्यर्थता प्रत्याख्याता । अतो नैतानि [प्रा] कृतानि । यदि पुनर्विकृत्यर्थान्येतानि मन्यते भवान्, अनार्थिका एषा क्लृप्तिरासीत् । हाविष्मतीयस्यैव पूर्वस्मिन्नहन्येतानि पश्यामो नान्यत्र । तदर्थैव चेत् क्लृप्तिः, तत्रैव भवतु ।

अत्र ब्रूमः—विश्वजित् सर्वपृष्ठ्य, उक्थ्यः षोडशिमानिति, छन्दोमपवमानः, सर्वस्तोम उक्थ्य इति च विश्वेषां देवानामयनमिन्द्रसाधनमिति च एतानि क्लृप्तिमेतामर्थवतीं कुर्वन्ति । हविष्कृतीयेऽप्यत एव सिद्धानि । एवं सति अत्रैषां ग्रहणस्य, इह च संज्ञाकरणस्यानर्थत्वे प्रसक्ते संज्ञाकरणं साकमश्ववद्भिरेषां विकृतिविषये संज्ञार्थं मन्यामहे । शब्दसारूप्यात् अर्थसारूप्यं न युक्तं गृहीतुमिति । साकमश्ववतां व्यवहारार्था संज्ञा । एषा तु स्वविषये तत्साम्यप्रज्ञापनार्था । अनभिप्रायोऽयमाचार्यस्येति चेन् न, स्वराभिप्लवेषूभषेषां क्लृप्तत्वात् । ततः सिद्धं—विकृतिषु द्वियानमुत्थानकं, विकल्पोऽनादेशे, दृष्टवच्चा[ग्र]हणे विपर्यासयोग इति ।

ईषद्विवरमाचार्याः किञ्चित् संवृण्वते[३] पदम् ।
मेधादृप्तान् गुरून् नेतुं प्रमाद्येयुर्हि तेऽन्यथा ।।

उक्त इत्यनर्थकम् । नानर्थकम् । पूर्वे मा भूतामित्येतदर्थत्वात् । पूर्वे साकमश्वसौभर इति । निदर्शने चोदनासामान्येन पूर्वे इति गृह्यते । किं पुनस्त्रैककुभस्य नोच्यन्ते, अवचनेऽपि स्वसिद्धमिति । यद्येव, साकमश्वाद्वंशीययोरपि मा भूद् ऋग्वचनम् । वक्तव्यो वा विशेषः । अयमत्र विशेषः । अस्वास्वपि

१ का. अनर्थक नानर्थकम् २ को. प्रकृतिराचा० ३ को. संपृण्वते

साकमश्वोद्वंशीययोरस्त्येकः प्रयोगः । ननु त्रैककुभमेकत्राप्ययोनौ दृष्टमिति, उक्थ्यसाम्न्यः[1] उभे सामनी इति बृहद्रथन्तरयोर्याज्ञिकप्रसिद्धिः[2] । श्रूयते च—उक्थ्यो यज्ञ उभे सामनी इति । तासां हि प्रथमोत्तमे बार्हत्यौ, मध्यमे राथन्तर्यौ । ताः सम्भूय औभयसाम्न्यो भवन्ति ।

**तासां···ष्ठयोः** । तासामुभयसाम्नीना त्रिविधेषु क्रतुषु विनियोगः प्रवत्स्यति । अत्रेदमुच्यते । रथन्तरप्रधाने वा सम्यक्पृष्ठे वा विनियोगः स्यात् । तासां या उपसद्वती[3] सा प्रथमा स्यात् । या अग्न्यग्रशब्दवती सा द्वितीया । **अग्न्यग्रनस्य···ताह्याना** । अत्रापि तुल्यम् त्रिवद्ग्रहणात् प्राकृतेष्वपि । रथन्तरप्रधानेष्विति वरुणप्रघासयोः परस्मिन्नहन्यस्य निर्देशः प्रथमः[4] । इदं पञ्चरात्रस्य पञ्चमे । तिस्रः द्वुशः । इदमगस्त्यस्तोमे तिस्रः । दशमव्योमज्येष्ठयज्ञवाजपेयदशपेयेषु सर्वाः, विंशमिदमपचितौ, सर्वोत्तरमिदं मनुस्तोमे, सर्वान्नवः इदं नाकसदां पञ्चमे, सर्वांस्त्रिशमिदं विनुतौ, सर्वोत्तरमिदमुत्तमे नाकसदि, सर्वं विंशम् इदं वीवययोः, आग्नेज्यानि रथन्तरे चाग्नेयमैत्रावरुणे, बार्हते···न्द्राग्ने इत्येतानि । एवं सम्यञ्चि तेषां बहिष्पवमानानामाज्यानि स्युः । सम्यञ्चि संगतानीत्यर्थः । राथन्तरे ह्याज्ये मिथोऽत्र संगते । तथा च बार्हते । यथा लोके बहुषु भिन्नजातीष्वेकत्र समुपलभ्यमानेषु यदेषां जात्यसंकरणं व्यवस्थानं तत्र सम्यक्शब्दः[5] प्रयुज्यते । सम्यञ्चोपनिविष्टापन्ना सम्यञ्चोऽर्था निरूपिता इति तद्वदिति । षयो ? इति । रथन्तरप्रधानस्य सम्यक्पृष्ठस्य च प्रातःसवनानि क्लृप्तानि आग्नेयान्याज्यानि[6] । भिन्नजातीयानामेवान्योन्यव्यवाये[7] वा नावस्थानं व्यतिषङ्गम् । दृश्यते हि—व्यतिषिक्तं[8] नगरे नगरे स्त्रीपुंसं व्यतिषिक्ता ओषधय[9] इति । बार्हते ह्यत्र राथन्तरेण व्यवेते । राथन्तरे बार्हतेन व्यवेते । इहाप्येतेषां बहिष्पवमानानामाज्यानि स्युः ।

**बृहन्नस्य** इति । बृहत्प्रधानस्य प्रातस्सवनानि क्लृप्तानि, राथनस्य राथन्तरस्य इदं प्रकृत्यर्थमुच्यते । अत एव विकृतिमप्यास्कन्दति । यान्युक्थानि राथन्तराणि पृष्ठानि तानि रथन्तरप्रधानस्य प्राकृतस्य पृष्ठानि । किमस्योभयसामं[10] प्राकृतमस्ति । उभयसाम्ना यष्टव्यमिति ह स्माह शाट्यायनिः इति । तस्मादुभयसाम्ना यजमान आसायमेव यजेत इति च श्रवणात् । यथा रथन्तरप्रधानस्य, यथा बृहत्प्रधानस्य, यथा सम्यक्पृष्ठस्य । इति च प्रकृतिविशेषस्यातिदेक्ष्यमाणत्वात् असुगतमेतदस्त्युभयसामा प्राकृत इति । एकाहविधाभिरेव तृतीयादिभिः सुपर्याप्तो भवतु । अत्र ब्रूमः—यद्यसावतिदेश एकाहविधावेवोक्तः स्यात् बहुनोऽतिसिद्धस्य पुनर्विधिः कृतः स्यात् । यथोत्तरस्मिन् पुनानः सोमे समन्तवतां, यथा च गायत्रे श्यैतवताम् । ततः सिद्धम् एकाहविधाभ्योऽन्ये प्राकृता उभयसामानः सन्तीति । तेषु रथन्तरप्रधानस्यैकपृष्ठनियमाः । यदि रथन्तरमेव पृष्ठं, कथमुभयसामे अपेक्षित उच्यते ।

**बृहभंवे** । बृहच्च श्यैतं चार्भवे पवमाने प्रयोक्तव्ये चैते । अस्माभिर्न्यायवचनानुरोधिन प्रकृतिकल्पानां क्लृप्ते प्रकृतिवद्विकृतिकर्तव्ये तत्र तदहस्तोमासु विकृतिषु काश्यविाश्वादिलोपेनापि सामद्वयमिदं प्रवर्त्यमित्यपेक्षायामाह—सत्याराध्ये अपरोऽर्धः अधस्तनो भाग इति । यावदपरार्धे भवमपरार्धम् । सप्तदशस्तोमो

---

१ को. उपवसा० ? २ को. ०र्याज्ञिकः प्र० ३ को. उपशद्वती
४ को. प्रथएवः ? ५ को. सम्यक्छब्दः ६ को. आग्नेत्तानि
७ को. ०वान्यो न व्य० ८ को. व्यतिरि० ९ को. ओषधयो
१० को. किमस्मभयसामं प्राकृतः अस्ति ।

ऽस्यापरार्धम् इति सप्तदशापरार्धः । आर्भव इत्यनुवर्त्यः । पूर्वो विधिः प्रकृतिविधिमनुसर्पन् सप्तदशापरार्ध एव आर्भवे साकल्येन स्यात् । न ततः कनीयसीत्यर्थः । श्यैतार्भवार्थमिदमुक्तम्[1] । बृहदार्भवेऽप्युभयसामत्वं विहन्येत । अथ विधिः सजित्वस्तोमात् परः । षोडशपवमानेषु यत् रथन्तरप्रवस्य सप्तदशेनाविशेष्यत्वात् स्वयमेव वैकृतत्वं गृह्यते । नेदम् इच्छया गृह्यते । प्राकृतस्यार्भवस्य सप्तदशेनाविशेष्यत्वात् स्वयमेव वैकृतत्वं भजते । असं...नाद्वा[2] । असम्भवा इति हि स्तोमस्यापर्याप्तिरुच्यते । असंभवाद्वा अवचनाद्वा विधिद्वयमन्यथापि स्यात् । बृहच्छर्च्यते[3] आर्भवे इत्युक्तमसम्भवात् अग्निष्टोमेवं षोडशीमति चातिरात्रे विधिरन्यथा भवति । बृहदेव भवति ।

**न्यैतामुत्सीदति** । असंभवञ्च षोडशीमतिक्रतौ नानदस्यावश्यकत्वम् । बृहतश्च अनेकर्चयोगात्तथा सप्तदशावराध्यं इत्युक्तम् । सप्तदशेऽप्यन्यथा भवति । यथा वैश्वानरे ऽतिरात्रे श्यैताभावः । वचनोदाहरणं पूर्वस्य विधेर्न पश्यामः । अतः परस्यैव प्रदर्श्यते । यथा नाकसदां तृतीये वरुणप्रघासयोः परस्मिन्निति श्यैताभावः । कुतोऽस्य वचनमस्ति, वचनमित्यनुमातव्यम् । नहि विधानावचनात् प्राकृतं श्यैतमपहाय आसितौदलाभ्यां स्तोमाभिपूरणं युक्तम् । यद्येवमासितौदलयोरेव विधायकवचनमनुमातव्यम्[4] । तयोश्च ग्रहणेन्त्यैतमसंभवादेवोत्सीदति । यथातिरात्रे नानदस्येति । असम्भवोदाहरणं चैतदपि भवति । एवं चेदन्यथा वर्णयामः । वचनाच्चेति पृथगिदं वाक्यम् । वाशब्दः पक्षव्यावृत्तौ । यदुक्तम्—**असम्भवादन्यथाभावः** इति, तन्न । वचनादेवायमन्यथाभावो भवतीति । यज्ञेयं, यद्धि वचनं नानदस्य प्रवर्तकं तदेव श्यैतस्य निवर्तकमेवं विकृतावप्यासितौदलादि योज्यम् । **रथ...ष्ठस्य** । रथन्तरं च बृहच्च पृष्ठं च ब्रह्मसाम च सम्यक्पृष्ठस्य भवतः । **नित्येतरे...न्यञ्चि** इति । इत्थं क्लृप्तानि पृष्ठानि सम्यञ्चि वेदितव्यानि । उत्तमाज्येषु भिन्नजातीयानामसंकरेण व्यवस्थानं सम्यक्त्वमिति ।

नच श्यैतनौधसवत् बृहद्रथन्तराभ्यां व्यवस्थया सम्बन्धे कालेयवामदेव्यराथन्तरे अपि ह्येते भवतः । अर्थवशाद् बार्हतेऽपि । एवमनयोः सतो राथन्तरमिति वामदेव्यमिह गृहीतम् । बार्हतमिति कालेयम्, तत्र पूर्वयोः राथन्तरत्वादुत्तरयोः बार्हतत्वात् पृष्ठान्यप्यान्ध्यवत् सम्यञ्चि इत्यभिप्रेत्योक्तम् । इतराणि सम्यञ्चीति । **बार्हतस्य...रथदिने** । इह रथन्तरनौधसयौधाजयानामन्योन्याव्यवायात् अस्ति निधनजातिदोषः । तस्यैष एव परिहारः । अर्थमेव बलीयांसमजामिकल्पां मन्येतेति । **सप्त...राध्ये** । सप्तदशापरार्द्ध एव तु मध्यन्दिने विकृतिमेव विधिर्गच्छति, न ततः कनीयसि । नौधसस्यायमपवादः । यदि हि रथन्तरस्यापि स्यात्, उभयसामत्वं विहन्येत । अस्योदाहरणमिन्द्राग्न्योः कुलायादौ प्रदर्शनीयम् । अस्यापि विकृत्यर्थता प्राकृतावनुपपत्तेरेवासीदतो न वैकृतस्यैव शेषं प्राकृतस्य वक्ष्यते । **रथमयं** । उक्तमेवास्माभिः रथन्तरनौधसे माध्यन्दिन इति । तथापि रथन्तरमेव पञ्चदशे प्राकृते मध्यन्दिनं स्यात्, न नौधसम् । को हेतुरिति चेत्, **आचार्यसमयः** । आचार्याणां समयः संग्राह्यः[5] । एवमेव चैका विविधायां क्लृप्तमाचार्येणास्माभिश्च प्रकृतिकल्पनायाम् ।

ननु प्राकृतोऽयं विधिरधिकारादित्युक्तम्[6] पञ्चदशधेव प्राकृतो माध्यन्दिनं, ततः पञ्चदश इत्यनर्थकम् । नानर्थकम् । अच्छावाकाज्यार्वाक्स्तुतिनिमित्तोपलब्धस्तोमोपचये प्राकृतेऽपि माध्यन्दिने

---

१ को. श्यैताभावा० २ को. असन्ना० ३ को. बृहच्छयते ?
४ को. विधायकःव० ५ को. संग्रारः ६ को. विधिकारादि०

नौधसाभ्युपगमज्ञापनार्थत्वादाग्निचितिकायाश्च क्लृप्तेरन्यविधानार्थत्वात् समसाम्नि उभयसाम्नि क्रतौ समन्तमच्युतं हि एकान्तप्रवृत्ति[1] स्यात्। प्राकृतयोर्ब्राह्मणाम्नाययोः समन्तादर्शनात् विकृतौ चास्य विधिदर्शनात् विकृत्यर्थत्वं परिभाषा। एवं चेत् कल्पसिद्धत्वादयं विधिरनर्थकः[2]। ये[3] क्रतवोऽस्मत्तन्त्रे ऽपि न्यायोपलब्धक्लृप्तयः इत्याचार्येणाक्लृप्ताः, तदर्थत्वाद्ये च परतन्त्रस्थाः अस्माभिरप्यग्राह्यकल्प्याः, तदर्थत्वाच्च।

नन्वाचार्येणैकाहविधासु समन्तस्य विधानात् प्रकृतिक्लृप्तावपि सन्त प्रयोक्तव्यम्, अत्र ब्रूमः—यदि भवान् प्राकृतयोर्ब्राह्मणाम्नाययोरदृष्टमपि समस्तमेकाहविधासु दृष्टमिति प्रकृतिपथं निनीषति तत्सहचारीणि[4] दैर्घ्यश्रवससोमसामक्रौञ्चाकूपारौदलान्यवश्यमनुसरिष्यन्ति, सर्वाणि वानानये[5]। **महिमा वो।** इदमपि आनानयेन हि वा। तदा खलु समन्तोत्सर्गसर्वग्रहणमुच्छ्र्यानिति निश्चित्य भवानपि तमेव[6] पन्थानं नायास्यति[6]।

**रथन्तरश्चित्।** एतानि सामानि स्थानादात्मीयात् प्रकृत्युपलब्धाधिकृतौ महादिवाकीर्त्यविकर्ण्यरैवतादिभिरवभृतानि स्वस्थानाच्च्यवमानानि[7] माध्यन्दिनपवमाने या बृहती तामाविशन्ति[8]। यथा विषुवति विश्वजितीति। **श्यैषांत?।** एते च विकर्णवैरूपबृहद्वारवन्तीयादिभिरवहृते स्वस्थानाच्च्यवमाने आर्भवे ऽनुष्टुभमाविशतः[9]। यथा विषुवति विश्वजिति दशपेय इति। **बृहच्छन्दमा।** एते च स्थानाच्च्यवमाने अन्त्यच्छन्द एकस्मिन् क्रतावाविशत। अन्यदेकस्मिन्। वीप्सायां वेद द्विर्वचनं, बहूनि च्छन्दांसीत्यर्थः। यथा ब्राह्मणं ब्राह्मणं भोजयेदिति। किं विश्वजिति बृहद्दशमेऽह्नि वामदेव्यं चास्योदाहरणमनुदाहरण तद् द्वितयमपि। न बृहद्वामदेव्ये इह स्थानाच्च्युते क्वचिदादेष्टुं यज्ञायज्ञीयमास्थानमाविशतः। किं तर्हि वचनादेवैतयोर्ह्यग्निष्टोमसामत्रसिद्धिः। अत एव वाजपेयिकमपि बृहदस्यानुदाहरणम्। वैष्टवतन्तु बृहद्वैश्वस्थितं च वामदेव्यस्योदाहरणम्। किन्तु तृतीयसवनेऽन्यदन्यच्छन्द इति गृहस्थोऽनर्थकः स्यात्। श्यैतयज्ञायज्ञीयबृहद्वामदेव्यानीति वा, बृहद्वामदेव्ये चेति वा कृते सिध्येत्। ततोऽन्यथा योज्यः। बृहद्वामदेव्ये इति पृथग् वाक्यम्। चकाराध्याहारेणार्भवेऽनुष्टुभमित्यनुवर्तमाने योज्यम्, पूर्ववाक्यवत्। ततस्तृतीयसवनेऽन्यदन्यच्छन्द इति बृहदेव वाक्यं बृहद्वामदेव्ये, इत्येवानुवृत्यर्थं स्थानच्युताधिकारश्च पूर्वेणैव विधिना सह निवृत्तो मन्तव्यः। सिद्ध एव चायमर्थः सामविनिवेशभेदानां विविक्तप्रतिपादनार्थं कीर्त्यते। वचनादपि बृहद्वामदेव्ये तृतीयसवने अन्यच्चान्यच्छन्द आविशतः। यथा विश्वजिति बृहदग्निष्टोमसाम। **गायत्रीषु** महात्रिककुभि महाबृहतीषु वाजपेये त्रिषु वामदेव्यम् दशमेऽहनि विराट्स्विति। रथन्तरादीनां विकृतावपि नियतस्थानत्वादनयोश्चोक्तवदनियतस्थानत्वादयमुक्तो विशेषवचनात्स्यात्[10]। यदिदमुक्तं—रथन्तरनौधसे कालेयम् इति तत्र यत्किञ्चिद्वचनात् कारणभूतान्यथोक्तादन्यथापि स्यात्। यथा यज्ञायज्ञीयमार्भवमपहाय मध्यन्दिने मपबृहती दशमेऽहनि प्रविशति। **नोक्थः कार्यः।** प्रकृत्यर्थैषा परिभाषा। उक्थः प्रसिद्धः। षोडश्याख्यं स्तोत्रमस्मिन्नस्तीति षोडशिमान्। योऽयमुक्थः स षोडशिमान् न कार्यः। प्रक्रनेग्दिं षोडशिमत्वं **प्रतिषिद्धम्।**

१ को. ०प्रवृत्तिः २ को. विधिरनर्थकम् ३ को. यः
४ को. तत्सहचारिणी ५ को. वानये ६ को. न एव पन्थानन्यायास्यन्ति
७ को. ताच्यावमाना० ८ को. तानावि० ९ को. माविशतं
१० को. विशेषः। वचथा स्यात्

अथ किमिद न्यायलब्धमाहोष्विद् वाचनिकमित्यपेक्षित आह—**इति यते** । इति शब्देन परो विधिः परामृश्यते । अयमर्थो विज्ञायते, विवेकेन ज्ञायते, श्रुतितो ज्ञायत इत्यर्थः । श्रुतिगतमेव हि सम्यग् ज्ञानं, नेतरत् । का श्रुतिरिहेति चेदियमाकस्मिकी नैव । तदाहुः स्मोक्थ्यष्षोडशी कार्यं इति । पशवो वा उक्थानि, वज्रः षोडशी अवज्रं निवर्तयेत् इति । **अति···कार्यः** । तु शब्दोऽवधारणायाम् । अतिरात्रे प्रकृते कार्यः । **अग्नि...न्वस्य** । राज्ञो योऽग्निष्टोमस्तस्मिंश्च कार्यः । षोडशीकार्यप्रयोग इति चेत्, तदेय च षोडशी यज्ञायज्ञीयं च तत्सम्भूयैव **कमहस्तोत्रस्यां** ? कथमिति चेत्— यज्ञायज्ञीययोगाद् द्वादशमेव भवति ।

ननु द्वयोस्तदिति शब्दो न युक्तः । ततस्तेऽह्नि एकस्तोत्रमिति वाच्यम् । अत्र ब्रूमः - तदित्यपि इहानयोर्युक्तमेवाभिधानम् । अस्ति हि नपुंसकमनपुंसके नैकवच्चान्या (पा. १. २. ६९ ) इति । अथवा वाक्यद्वयमेतत् कल्प्यम् । तदेकस्तोत्रं स्यात् । किमित्याकांक्षायामुत्तरो विधिः । षोडशी यज्ञायज्ञीयं चेति । तत्रेति वार्थे तदिति कल्प्यम् । कियान् पुनरंशो यज्ञायज्ञीयस्य कियान् षोडशिनः, नैतदस्माभिरेकस्तोत्रमिति इयता ज्ञातुं शक्यम् । शाखान्तरगतस्तु ज्ञेयः । मध्यम एव पर्यायः षोडशिनोंशः कल्प्यः । **एतमस्य** । एतदेव षोडश्याख्यं स्तोत्रमत्यग्निष्टोमस्यापि त्रयोदशं स्तोत्रं स्यात् । **अतिक्रान्तोऽग्निष्टोममत्यग्निष्टोमः** । द्वितीयैषा प्रकृतिसंस्था शाखान्तरे दृष्टा विहितोपपथा स्यात् । उक्तार्थं 'तृचेवन्ति' इदमादिविकृतीनामुत्तरपवमानद्वयक्लृप्तिसौकर्यसंपादिभ्यः सर्वकल्पार्थश्च काश्चित्संज्ञाः परिभाषाश्च प्रणेष्यन्ते । तृचे गायत्रमामहीयवमेकस्यामृचि एकस्यामेवैवं सैन्धुक्षितमेकस्यामेवाग्नेरर्क[१] इति । एवंभूतान्येतानि सामान्यग्नेरर्कवन्तीनि प्रत्येतव्यानि । सैन्धुक्षिताग्नेरर्कयोः पुनः कथमिहैकर्चत्वं, समाननिर्देशानाम् इत्यत्रेदं विज्ञास्यति । अग्नेरर्कस्य स्थाने हविष्मते कल्प्यमाने, अग्नेरर्कस्य स्थाने शुक्रे कल्प (मा) ने । **इति योगः** । इति शब्दस्समुच्चये । ऋषभे पवमाने च कल्पमाने वर्तमाने उक्तलिङ्गायत्तादीनि[२] सामान्येतेषां **हाविष्मतादीनामेकैकेन** साम्ना तद्वन्ति स्युः । हाविष्मतवन्ति शुक्रवन्तीति तृचे गायत्रमामहीयवमेकस्यामैडं सैन्धुक्षितं हाविष्मतमिति । हाविष्मतवन्तीत्येवं प्रत्येकमेतेषामुक्तमासीत् । सुवर्णयमं कल्प एव विशेष्यति । उत्तरेण सुवर्णिधनवन्ति । **गृणो देवीः** । इति हविष्मतादोनि क्लृप्तिक्रमेणैव निर्दिष्टानि । **अग्नेरर्कस्य तु** यौक्ताश्वादर्वाङ् निर्देष्टव्यस्य सतोऽप्यादौ न्यासः । प्रकृसंहारापेक्षः आग्निचितीकार्थोऽपि भवति ।

ननु हरिश्रीनिधनमप्यक्रमे न्यस्तं हाविष्मतादपि हि पूर्वमृषभार्थकतया प्राप्नोति । सत्यमेतत् । यत्त्वविकृतानां हरिश्रीनिधनवतां पृथग् दशपेये निर्देशः, ऋषभादौ पुनर्विधेयशेषाणां तदपेक्षया हरिश्रीनिधनं दशपेयक्रमे न्यस्तमिति परिहृतं नाम भवति ।

**तृचे···द्वन्ति** । सुवर्णिधनम् इन्द्रो दधीचः (जै. सं. १.१९.५) इति । विशेष्यति गायत्रं तृचं[४] त्रिषु सामस्वेकस्यामृच्येकमिति । तृचमेकं व्याप्नुवत्सु सामतृचशब्दश्छन्दोगतन्त्रे प्रसिद्धः । तस्य लक्षणमनुविधातव्यम् । सत्रासाहीयवानित्युक्ते इदं[५] प्रत्येतव्यं, सत्रं तद्वान् । तानीति, यानि यान्येतान्यनुक्रान्तानि सामानि । गायत्रमामहीयवमैडं सैन्धुक्षितमित्यादीनि कल्प्यमानविधावनवधारितस्थानान्यपि मध्यन्दिन

---

१ को. ग्नेरत् ? २ को. उक्तायिङ्गयत्रादीनि ३ को. ०दर्वाग्निद०
४ को. त्रिचः ५ को. अयं

एव पवमाने गायत्र्यां क्लृप्तानीयात्[1]। यथा प्रथममेव उपसदस्य[2] सत्रासाहीयवान् सामतृच इति। अभिभुवा गायत्रामहीयवे इति। इन्द्राग्न्योः कला यस्यैन्द्राग्नवन्तीति। रौरवन्ति, नौधद्वन्ति। अत्रापि नौधसस्य जनित्रात् पूर्वनिर्देशः प्राकृतसंहारापेक्ष एतवाग्निचितिकार्यत्वेन। यद्येवम्, ऊर्ध्वेडवतां[3] समन्तवतां च नौधसवद्भ्यः पूर्वनिबन्धनं प्राप्नोति। द्वितीयचतुर्थयोरेकाहविषयोः प्रयोग एषां भवति। नैतदिह चोद्यमयुक्तम्। प्रकृतिसंहारो नाम ह्ययं परिहाराश्रयः, न चोद्यस्य। न ह्यभ्रेषश्चोद्यपदं भवति। अस्ति भ्रेषप्रायश्चित्तमिति। नहि भिक्षुपाश्वंस्थेषु अपत्यक्रिययाप्याधिर्निर्मीयते। दैर्घतृचः क्वचित् सामतृच इति। यदेव वक्ष्यति न सामानि तदर्थोऽयम्, यत एतानि सामानि तत्र प्रत्येतव्यानीति। किं तृचस्थानि, नैवं प्रसजति। उक्तो हि सामतृचशब्दस्यार्थः। स च तृचवृत्तिमेषां निवारयति—रौरसवान्, रौरन्तवान्, रौरमवान्, रौरवन्ति, समवन्ति। यश्च समन्तवान् सामतृचः स तृचे। रथन्तरञ्च गौत [म] वन्ति। गोषुजयं गोषुवताम् यथा जयन्ततृचे भवति। गौतमवदादिभिः पञ्चभिरपि नास्माकमर्थः। अस्ति तु सहारिणामभिप्लवेषु स्वरेषु च तानीति यावत्।

तृचेवन्ति स्वासीद्वस्ति तान्यतीयात्। श्यावांवन्ति घृतवन्तीत्युत्तरम्। दिवस्साम दिवंद्वन्ति। घृतपर्वणि दशमस्याध्यायस्य प्रथमं विराट्स्वाराजम्। श्रेयोस्थाने श्यावानवान् सत्रासाहीयवान् इत्यनेन माहश्यात् सामतृच इति सिध्यति। वक्ष्यति च वाङ्निधनवान् सामतृच इति। श्यावा चक्षुष्मान्[4]। चक्षुस्त-द्वान्। गौरीवन्ति त्वाष्ट्रिवन्ति। एतेषु क्रौञ्चवन्ति यद्वाहिष्ठीयवन्ति चास्माकं लहणवन्ति? इतराणि सप्तप्रकृति संहारिणामभिप्लवे प्रथमे छन्दोमे दशमे चाह्नि सार्थकानि। तान्यातीयां···परियोग्यः। इति शब्दो अर्थनिर्देशार्थः। अनयोस्तृचयोर्वाजदावयैश्च नित्यवत्। साश्च इत्ययमर्थः संयोगसंज्ञः स्यात्। गाय···र्भवः। गायत्रं, संहितं, सहं, पौष्कल्यं, श्यावाश्वमाश्वीगवमित्येतान्येकैकस्यामृचि स्युः। तृचे कावं स्यात्। इत्ययमर्थः[5] त्रिवृदाभेव इति विज्ञातव्यम्।

पौष्क-तद्वान्। वो निर्धारणे षष्ठी। पवमानविषये चतुर्णामेकर्चानां तृचेव क्लृप्तानां विहितानां सतां प्रथमायां वा मध्यमायां वर्चो[6] द्वौ गायेत्। पवमाना इति पवमानसामान्यं प्रतीत्यर्थः। आर्भवाधिका-रात्तत्रैव कृतार्थोऽयं विधिरसति[7] यत्ने नान्यत्र प्रावेक्ष्यत्। प्रथमायां गायत् प्रथमद्वितीयौ गायेत्। मध्यमायां द्वितीयतृतीयौ। तथा ह्यगा[ना]नुपूर्वमित्युक्तं भवति। परिभाषायामस्यामसत्यां[8] कथमिह प्रसङ्गः, अन्त्यायामन्ययोर्वा अन्तलोपो विवृद्धिर्वा इति न्यायतः प्रसङ्गः स्यात्। न त्रयाणां वाच्यमस्ति। एकस्य प्रथमयैव योगः, प्रथमं वा नियम्यत इति न्यायादेव सिद्धः, द्वयोस्तु सतोः परस्य मध्यमायाम्, आष्टमाह्निक-क्रौञ्चान् व्यूहाम्नायविरुद्धा प्राप्तिर्भवेत्। तन्निवृत्तये न द्वयोरित्यत्र प्रयतिष्यते। किं पुनरिहोदाहरणमु-पसदे[9] दैर्घ्यश्रवसजनित्रसमन्तयौधाजयानि, विश्वजिति गौरीवितमधुश्चुन्निधनश्यावाश्वान्धीगवानि इति। तृच इति नाभविष्यत्[10] चतुरृचेऽप्यभविष्यत्। ततो गव्यदव्ध इति दैर्घश्रवसमागास्यत्। तत इह युक्ति-स्तर्क्या। ब्रह्म वै प्रथमा स्तोत्रिया क्षत्रं द्वितीया विराट् तृतीयेति दर्शनात् तत्र च ब्रह्मक्षत्रयोः द्वौ लोके घृतप्रेतौ, ब्राह्मणश्च राजेति। ब्राह्मणो धर्मान् ब्रूयात् राजा चानुशिष्यात्[11] इति च। यदि ब्राह्मणकुले तस्मिन्नाजायत इति

---

१ को. प्तानियात् २ को. उपशदस्य ३ ०मूर्ध्वेढवतां ४ को. क्षुष्मान्?
५ को. ०यमर्थ ६ को. वर्चद्वौ ७ को. विधिरस्ति ८ को. ०मसत्थं
९ को. सुपशदे १० को. नाभविष्यं ११ को. ०नुशिष्यात्।

तत्र तत्र दर्शनादुपलब्धप्राधान्ययोर्वृद्धिगोपपत्तेस्तदुपकरणभूताया विशो ह्रासयोगेऽपि दोषाभाव इति ब्रह्मवृद्धये प्रथमायाँ सामोपचयः, क्षत्रवृद्धये मध्यमायामिति, अधमायां शदागस्त्यस्तोमादिष्ववेक्ष्य उदाहर्तव्यम् ।

**चतु···ख्यातः** । एकैकर्चा एकैकस्मिन् साम्नि द्वयोर्द्वयोः त्रिषु त्रिषु वा योगं व्रजत्सु यदेकस्यातिरेकः स्यात् स[1] एकातिरेकः । यथा चतुर्षु सप्तसु दशस्विति । एकर्चेषु चतुर्षु तावदुक्तं तदत्रातिदिश्यते । चतुर्भिरेव सर्वोऽप्येकातिरेको व्याख्यातः । किं प्रथमायां प्रथमद्वितीयौ मध्यमायां वा द्वितीयतृतीयाविति । नैवं भवति । कथं पुनर्भवति, प्रागन्त्येभ्यश्चतुर्भ्यः सामतृचतयैव गमयितव्याः । चतुर्षु शिष्टेषूक्तवत् । यथा षट्सु नवसु द्वादशस्विति । सामतृच एकान्ता भाव्यन्ते, तानि त एव द्वौ द्वौ त्रयस्त्रयश्चत्वारश्चत्वारो वा एकैकस्यां भाव्यन्ते तद्वत् । एवमेव चोहाम्नायस्यानुकूल्यं भवति । यदि पुनश्चतुरवशेषाणामेकर्चानां सामतृचतयैव धावनन्यायतः सिद्धं चतुर्णामपि तेषां, चतुर्णामित्येव[3] साधीयः, नार्थोऽतिदेशेन[4] । एवं चेदन्यथायमतिदेशोऽर्थवान् भवतु । चतुरृचार्थमिदमुच्यते । परीताभिसोमे प्रयोजकः तृचागतेश्चतुर्भिरेकर्चौ[5] । चतुरृचेप्येकातिरेको व्याख्यातो वेदितव्यः[6] । इह पञ्चसु विहितेष्वेकातिरेको भवति । यथा हाविष्मती । तृतीयस्योत्तरस्मिन्नहनि चैतद्विहिंकारसोमसामसामदैर्घश्रवसस्वज्योतींषि यथा तृचे चतुर्णां तथेहैषां भवति । प्रथमायां मध्यमायां द्वौ द्वाविति । इह द्वे अपि मध्यमे, द्वितीया तृतीया च । प्राथम्यात्तु द्वितीयैव ग्राह्या । **पञ्चमे···कम्** । अस्यापि पूर्ववाक्यवत् व्याख्याद्वयं प्रवर्त्यम् । **चतुरस्ति** । आवर्तिषु स्तोत्रेषु प्रयुक्तानाञ्च चतुरृचानामन्त्यामृचमुद्धरेयुः त्यजेयु । यथा इदं विष्णुः ( जै. सं. १.२३.६ ) । प्र वाम् ( जै. सं. ४.२२.८ ) । अर्चन्ति ( जै. सं. १. ४६. ६ ) । स स्तोमयः ( जै. सं. ४.५.१ ) इत्यस्य चतुरृचस्य प्रथमाया एवोद्धारः कल्पे कृतः । **सुषमिद्धौ** ( जै. सं. ३. ५७. १ ) इत्यस्य तु न चतुरृचत्वमवधार्यम् । आप्रीराज्यानीति दर्शनाद् । आप्रीवदेव अत्रापि प्रयोगोपपत्तौ सत्यां तनूनपातीनाराशंसोर्मध्यमयो ऋचोर्गोत्रव्यवस्थया प्रयोगे विकल्पमानत्वात् । यद्येवं तृतीयस्यादर्शनाच्च चतुरृचयोरिति वक्तव्यम् । सत्यमेत् । अयं तु परिहारः, चतुरृचजातिरिह विवक्षिता, न तद्व्यक्तय इति । अथवा इदं विष्णुः ( जै. सं. १. २३. ६ ) इत्यस्येडानां संक्षारे वारवन्तीय इति द्विप्रयोगात्[8] तदपेक्षया बहुवचनम् । एकस्मिन् तृचे गायत्रामहीयवे तृचयोरिति ।

ननु तृच एकर्चे इति करिष्यमाणादेव यत्नात् चतुरृचतापन्नं प्रसजति[9] । किमतः, इदमतो भवति, व्यर्थेयं परिभाषेति । अत्र ब्रूमः—नेयं चतुरृचगानप्रत्याख्यानार्था परिभाषा, किं तर्हि, चतसृणामृचां यस्याः कस्याश्च प्राप्त उद्धारे अन्त्याया नियमार्थत्वात्, तस्माददोषः । किं पुनश्चतुर्थ्या ऋचो व्यर्थमेवाम्नानम्, व्यर्थम्, ब्रह्मयज्ञादिसंयोगात् व्यर्थमेव भवति ।

**साम कल्पयेत्** । जामिशब्दस्तुल्यसंयोगे दृष्टः । सामिकृतं जामि सामजामि । तदहः क्लृप्तौ[10] प्रसक्तमपि न कल्पयेत् । किमिदमेकदेवत्यानामेकार्षेयाणामेकच्छन्दस्यानामिति असमावेशार्थं वचनं, न त्वेषाम् ।

---

१ को स सं  २ को. चोहाम्नाय०  ३ को. चतुर्णामिष्यत एव साधीयस्सद्धसीमृयुवस्थानं ?
४ को. नार्थोतदेशेन  ५ को. ०रेकर्चोश्चतु०  ६ को. वेदितव्यम्  ७ को. सुषुमि०
८ को. द्विपयो०  ९ को. प्रसजती  १० को. क्लृप्तौ

केषां तर्हि. इदमिहैवोच्यते । न स्माकुर्यात् । स्वार इति । मन्द्रस्वरसंस्पर्शी इहायीति शब्द[1] उच्यते । तदन्तं यत् साम तत् स्वारम् । स्वारे सामनी सह न प्रयुञ्जीत । न निवती । इह निधनमिति स्वारैडर्कसामवाश्यो निधनविशेषेभ्यो यदन्यन्निधनं तदुच्यते । तैः सह वचनात् तदन्तं यत् तत् निधनवत् । नैडे । इडाशब्दो यस्यान्ते तदैडम् । नर्कसमे । ऋगक्षरमेव यत् स्वरत उक्तं तत् स्वरसमं, तदन्तं यत् साम तद् ऋक्समम् । किं पुनरिदं, स्वरे नान्तर्भवति । स्वरेण त्रिष्टुभम् अभ्यारोहति स्वरेण जागतीमभ्यारोहति । अथ यद् ऋक्समं स्वारं वावतं मन्यन्ते इत्यादि दर्शनात् ।

अथ किमृक्समस्य इतरस्य च स्वारस्य मिथः समावेश इष्यते, नेष्यते । समाना हि ऋक्समस्य च स्वारस्य च जाम्यजामिता इति श्रुतेः, कल्पाध्वनि चाचार्येण परिहृतत्वात् । कस्मात् पुन[2] ऋक्समेति[2] पृथगुच्यते, इति...यते । इति हि विज्ञायते, पृथगेव श्रुतावृक्समसमावेशः प्रतिषिद्धः । श्रुत्यनुकरणार्थमिहापि पृथगेव प्रतिषिध्यते । स्वरप्रतिषेधादेव नु सिद्धोऽर्थः ।

ननु श्रुतिवाक्यस्याप्ययं दोष एव वा विधेयं विदधातीति । सत्यम् । यदि विदधीत, अनुवादश्चायं न स्वरे इति यावत् सिद्धं तावतोऽर्थस्य दोषान्तरसम्बन्धनार्थः श्रुतौ कृतो न तत्सम इति । अस्यार्थस्य प्रकाशनं कुर्वन् वदति—तेषां नोक्ता । तेषां हि त्रयाणामपि सतां स्वारमृक्समाश्रयविशेषाश्रयेण द्वेधा कृत्वा सहक्रियायां निन्दा ब्राह्मणेनार्थवादेन चतुर्विधा प्रतिपादिता । अपर आह—तेषां सहकर्मणि प्रमादादागते सन्ति । या निन्दा श्रुतावुक्ता सा ब्राह्मणे ब्राह्मणगुणयोगिनि वेदार्थज्ञे नापतति । तृचं गायेदिति शब्दोऽवधारणायाम् । त्रिच एव च एकर्चे एव च सर्वं साम गायेत् । द्वचृचेन गायेत् इत्यत उक्तमासीत् । अयं विधिः सामजामिनिषेधश्च कल्प्ययज्ञार्थतयैवार्थतयैवार्थवन्तौ । क्लृप्ते हि वर्त्मनि नाभ्यां बोध्यमस्ति । न द्वयोः तृचे चतुरृचे वा विहितानामेकर्चानां साम्नामित्थं प्रसक्तमेकं चेत् प्रथमस्यामृचि, द्वे चेत् प्रथमयोः, त्रीणि चेत् तिसृष्विति । तत्रेदं द्वयोरपि प्रथमस्यैव भावार्थमुच्यते—द्वयो ऋचो द्वे अपि सामनी न गायेत् । उभे अपि प्रथमस्यामेव गायेदित्यर्थः । ततः पुरोपरिक्रियादिषु संहितासु गवामहीयवादीनि प्रथमास्वेव भवेयुः । न द्वितीयादिषु च तरणात् तृच एकर्चं इति साम गायेदित्यवधारितम् । एतच्चोक्तं चतुरृचानामावृत्तिष्वन्त्यामुद्धरन्ति इति, तथाप्यृगाम्नायस्य क्रत्वर्थतयैवार्थवत्त्वोपपत्तेश्चतुरृचे विगानं च चतुरृचोढस्य साम्नो ऽयं विनिर्विकल्पयति । चतसृषु गायेद्वा कारणात् । यत्रास्ति कारणं तत्र विकल्पेन गायेदित्यर्थः । ततश्चतुर्थमिति रिक्तोत्थमाम्नायतश्चतसृषु गायेदपि । अस्य विषयश्चतसृष्वव्यावार्ति । ब्रूहीति चेद् ब्रूयादित्युत्तरत्र वक्ष्यति । अनिव्यानि । तृच इति वा एकस्यामिति वा निर्दिश्यमाने ऋगियत्त्वे[3] द्विवचनेनं कल्पमानानि वर्तमानानि सामानि तृचस्थान्येव प्रत्येतव्यानि । यथोपशब्दे श्यावाश्वान्धीगवे इति तथैतेन एकवचनेन कल्पमानानि एवमेव प्रत्येतव्यानि । यथा बलभिदि उत्सेधादिति, यथापश्चितौ निषेधादिति । तथेति निपातं समुच्चयार्थं गृहीत्वैकवाक्यतया वाक्यद्वयमपि नेयम् । द्विवचनेनैकवचनेनेत्युक्तेऽपि विनुक्तेर्गायत्रीसामानि त्रिवृतोऽह्नः सामानीति, तत्रापि सर्वेषां तृचस्थतया प्रसजेत् । समाननिर्देशानामेव विभक्तियुक्तां साम्नां प्रथमस्य साम्न ऋङ्नियमत्वे[4] निर्दिष्टे तदनिर्देशात्[5] यावन्ति सामानि परं कल्पयति

---

१ को. शब्दा २ को. पुनर्कसमे इति ?
३ को. ऋगीयत्वे ४ को. ऋग्नियः ५ को. तदनिर्दिशत्

आहुतिकरणाद्वा तेषां सर्वेषां स एव निर्देशः प्रत्येतव्यो, योऽसौ प्रथमस्य कृतः। अस्यास्मिन्नेव ग्रन्थभूयिष्ठान्युदाहरणानि। यथामहीयवमेकस्यामैन्धं सैन्धुक्षितमग्नेरर्क इति। प्रथमानिर्दिष्टानि सर्वाणि सामानि आमहीयवमेकस्यां विहितं, सैन्धुक्षिताग्नेरर्के तु तथैकवचनेनेति तृचस्थे प्राप्नुतः[1]। यस्त्वामहीयवस्य कृत ऋङ्नियमः सोऽनयैव परिभाषयानयोरपि भवति। एवमेवोर्ध्वेढवता दैर्घ्यश्रवसस्यैकर्चता साध्या। अर्ध्वेडस्य तु यौधाजयस्य तु तृचवचनसामर्थ्यादपि सिध्यति। एवमन्यत्रापि योज्यम्। अस्याः परिभाषायाः उदाहरणं सामकल्पे क्वचिदपि न दृश्यते। तथा च सति व्याख्यातॄणामेवमपि मतिः स्यात्। सर्वोऽयं ग्रन्थः कल्पसंक्षेपार्थः। न चेयं परिभाषा यथाश्रुतगृहीतार्था सती कल्पेऽस्मिन्नुपयुज्यमाना लभ्यते। ततोऽध्याहारविपरिणामयोगेनाप्यस्यार्थान्तरं कल्पोपयोगि कल्प्यमिति न। व्यामोहनिवृत्त्यर्थमाचार्यः स्वयमेवास्याः परिभाषायाः कल्पानुपयोगं प्रतिपादयन्नाह --संख्यानिर्देशः। यान्यपि संज्ञाग्रन्थकल्पेऽपि एतत्परिभाषानुगति विज्ञाय एकर्चनियमानि सामानि कल्पयितुं शक्यानि। नानदमेकस्यामतिषङ्गस्यावाश्वमान्धीगवमिति, ऐडसैन्धुक्षितमेकस्यां, वैष्टं ऋषभपवमान आजिगभाथर्वणमाभिकमिति च तथापि न। तथापि करिष्यते। सङ्ख्याया एवान्ते निर्देशः करिष्यते। अकृत्वैव संख्यानियमं सामान्यमनुक्रम्य सर्वेषां परस्ताच्च त्वा एकर्चा षडेकर्चा इति वक्ष्यत इत्यर्थः। ततः संज्ञाग्रन्थार्थैव पूर्वपरिभाषा, तस्या एवातिशङ्कितम्। सामकल्पार्थत्वनिषेधार्थमिदं दाशत्ययम्। द्विविधो दशरात्रः समूढो व्यूढ इति। अस्ति च तदहारामभीक्ष्णमादेशः। कल्पयिनि श्रुतौ वा अन्वेष्टव्यः। अहस्सु तदीयं तन्त्रन्यायतो विधेर्वावतरति। तत्रोभयत्रापि विशेषकारणाभावे व्यूढसमूढयोरनियमेनान्यतरप्रत्यये प्राप्ते समूढप्रत्ययार्थेयं परिभाषा। तन्त्रश्चादेशश्च तन्त्रादेशदशरात्रस्य[2], नाह्नां तन्त्रे चान्यत्र प्रविष्टेऽन्यदेशे वैषां कृते समूढप्रत्ययः। समूढ इति विज्ञातं स्यात्। तस्योदाहरणानि छन्दोमयोः पवमानयोः सामतन्त्रं, पवमानस्याह्नस्तन्त्रे, पञ्चदशस्यात ऊर्ध्वं तन्त्रे, षष्टिक[3] आर्भवे पृष्ठतन्त्रः, पञ्चरात्रं, पञ्चदशस्याह्नः सामानि, अष्टमस्याह्नस्तन्त्रे एकविंशस्यात ऊर्ध्वं तन्त्रे इत्येवं प्रकाराणि। अथादेशोदाहरणानि पृष्ठ्यः षडहः, अभ्यासाग्रः षडहः, पृष्ठ्यषडहस्तोमाः। अष्टौ त्रिवृतो अग्निष्टोमाः[4], छन्दोमा, दशममहः इत्येवं प्रकाराणि। व्यूढं दशाहमखण्डयितुं न युक्तम्। छन्दोमग्रहणादिविधयो[5] हि विशिष्टयोगाव्यूढस्य नाविपरीत्यनवग्रहस्सु व्यूढा भवेयु. इति। खण्डविधौ समूढो निर्देशश्चास्ति। दशरात्रिकाणामह्नां निर्देश एषां क्रमभेदं प्रतिपादयति। यथा त्रिवृता पञ्चदशं परिष्टुवन्ति, सप्तदशेनैकविंशं, त्रिणवेन त्रयस्त्रिंशमिति। तत्रेदमुच्यते--त्रिवृदादिशाब्दनिर्देशादस्य दशरात्रस्यानाक्रमादेः स्तोमेनाहराख्यानदर्शनात् प्रसक्तेऽपि यथाक्रमावस्थितानामेवाह्नां स्तोत्रसमविकारमेतत् प्रतिपादितं विज्ञाय आहारं चावच्छेदश्च व्यूहश्च यथाप्राप्ति कर्तव्यम्।

त्रिवृता पञ्चदशं परिष्टुवन्तीत्यत्र तृतीयादीनि सप्ताहानि स्तोमान्तरापन्नानि, तत्र साम्नां क्लृप्तानामाहरणं, क्लृप्तानाञ्च केषांचिदवच्छेदः[6]। अपहरणमेकर्चिकरणं वा स्तोमसम्पत्तये। व्यूढश्च तयोराहारापहारयोः क्रियमाणयोर्नानासामसमवाये निधनजात्यादिदोषपरिहाराय केषांचित् स्थानविपर्यासः। काममेतत्सर्वमपि कार्यं, न त्वह्नां क्रमभेद इत्यर्थः। कृते विकल्पेऽस्योदाहरणमस्ति। यथा—त्रिवृदग्निष्टोमपञ्चदशः, उक्थ्यस्त्रिवृदग्निष्टोम इत्यस्य दशरात्रस्य तृतीयादीन्यहानि स्तोमान्तरापन्नानि तृतीयादिभिरेवा-

१ को. प्राप्नुवतः २ को. दशरात्रस्यां ३ को. पाष्टिक
४ को. अग्निष्टोमान् ५ को. छन्दोग्रहः० ६ को. तेषां०

होभिर्दाशरात्रिकैः समाहारापहारव्यूहयुक्तैराचार्यः कल्पयिष्यति। तथा संसदामयने निरुक्तस्त्रयस्त्रिंशादिषडहः। एवं प्रथमादिभिरेवाहोभिरुक्तवदनुक्रमेण कल्पयिष्यति। सङ्ख्यासङ्ख्यं समतयाख्यातम्। प्रथितमुपलक्षितं, संख्यातं समगणनमित्यर्थः। वस्त्वन्तरसम्बन्धसापेक्षस्य सतो वस्त्वन्तरस्य वचनमनुदेशः। इह तु कर्मणि यदनुदिश्यते स एवानुदेशः। संख्यातस्यानुदेशः संख्यातानुदेशः यथासंख्यं ग्राह्यः। समगणनानां येऽनुदिश्यन्ते, संख्याक्रमेणैव ते तैः प्रत्येकं संबन्धीरन्नित्यर्थः। केन समगणनानामिति चेत्, अन्यस्यावचनादनुदेशेनैवेति गम्यते। कान्युदाहरणानि, सभ्यावसथ्यौ सह पौष्कलाभ्यामित्यनुदेशः। तत्समगणनयोः सभ्यावसथ्योः संख्या क्रमेण भवति। ततः सिद्धं त्रिवृदाग्नेयमिति। बहुरस्याः परिभाषाया विषयः, सोऽस्मिन्ननुवर्त्यः।

ऋक्तन्त्रं[1]। तन्त्रान्तरोक्तः[2] ऋचां विस्तरः ऋक्तन्त्रम्[3], तस्योपसदादिष्वनिर्देश्यमानत्वादिदमुच्यते। ऋक्तन्त्रस्य(ा)निर्देशे प्राकृतं कृतं प्रकृतौ भवं ज्योतिष्टोमिकं तन्त्रं प्रत्येतव्यम्[4]। किं सामतन्त्रमनिर्दिष्टमप्राकृतम्, नैवम्, तदप्यनिर्देशे प्राकृतम्[5]। एवमेवर्कतन्त्रमपि[5] तद्वदेव सिध्यति। वक्तव्यो वा विशेषः। अयमुच्यते विशेषः। ऋतोरङ्गसामानि ससामाङ्गमृचः, न च ऋत्वङ्गमृचः। यदि च ऋत्वङ्गमभविष्यदृचोऽपि,[6] सामवदेवर्कतन्त्रेणाप्यस्तोष्यन्[7]। एवमपि नार्थोऽनया परिभाषया। तादर्थ्यादेव ह्यृचः सह सामभिः गच्छन्ति। सत्यमेतत्। यथा तु प्राकृतमृचो गायत्रामहीयवादिभिः तथैव सत्रासाहीयजनित्रादिभिः स्वास्वापेवच्य ? आकृष्येरन्। ततः क्षिप्रे गायत्रामहीयववशेन प्राकृत्येव माध्यन्दिनगायत्रस्यर्क आशुभार्गववशेन स्वास्वेव वैषा[8] तु इति संशये इयं परिभाषा प्राकृतीमेव नियच्छति। किं च सप्ताहं ब्रह्म साम ऋतुनिधनं ब्रह्मसामेति स्वास्वेषा क्लृप्तिः उत प्रकृतिष्विति संशये इत्थमेव परिभाषा प्राकृतिष्ववबोधयति। अत इयं सार्थैव परिभाषा। तस्मात् पुनर्यज्ञायज्ञीयस्य कर्षुं दैर्घश्रवसमिति च कावस्य, कर्षुं वै(खा)नसमिति च प्राकृतिरसिद्धवद्विधास्यति। अत्र ब्रूमः—परिभाषासिद्धानां प्राकृतीनामाचार्येण पुनर्विधानात् तदानर्थक्यपरिहारार्थं तत्र प्राकृतीनामसिद्धिकरः कश्चिन्न्यायोऽस्माभिरवश्यमन्वेष्टव्यः। स चायमन्विष्योपलब्धः प्रदर्श्यते। सर्वमपि साम सहैवर्चा स्वीयानि[9] गच्छति आगच्छति च। अतो वैकृतं साम प्राकृतस्य स्थाने निहितमपि स्वास्वेव विहितं भवति। प्राकृतमपि तदपहृतस्थानं सहैवर्भिः[10] प्रतिष्ठते[11]। यदि त्विदं तस्मिन्नेव क्रतौ स्थानान्तरमापित्समानमलब्धावसरमवतिष्ठत तदर्थमपीदमनुगृहीतं भवत्विति। तस्यर्क्षु वैकृतप्रयोज्यमिति। सति चास्मिन् न्याये स्वाराणि सर्वाणि सामान्यवकल्पयतीति वचनाद् यज्ञायज्ञीयं सर्वमपि सर्वस्वारं स्वानपेक्षं प्रस्थितं न कश्चिदनुग्रहमाकांक्षते। ततो[12] न[12] स्वास्वृक्षु दैर्घश्रवसं स्यात्। परिभाषा चेयमुक्तवत् कृतार्था नैतं न्यायमुपहन्तुं शक्नोति। ततः स्वास्वेव न्यायतः प्राप्तं दैर्घश्रवसं प्राकृतेषु वचनेन प्रवर्तते। एवं वैखानसमपि द्वितीये ऽह्नि सतः कावस्य न सामसमेति तद्वचनादन्यतो निष्कालिकस्य अनुग्राह्यत्वात् किमहर्चो न प्राकृत्यः। मानवं ब्रह्मसाम सत्रासाहीयपृश्निनां मैत्रावरुणाच्छावाकयोरिति कुतोऽत्र सन्देहः। स्वास्वेव मानवं, श्यैतस्यार्भवप्रयोगेणैव

---

१ को. ऋत्कः त० २ को. ०न्तरोतेः ३ को. ऋक्तत्रतस्योपशदादिष्वनिर्देक्ष्यमा०
४ को. ज्ञात्येतव्यम् ५ को. प्राकृतमेव घेवश्त्येद्रर्क तन्त्रतवि ६ को. ०भविचो०
७ को. सामवदेवार्कस्तेष्येन ८ को. ०वशेनावृषुववास्फेत्येषैव ? ९ को. स्चयानि
१० को. सहैव ऋभिः ११ को. प्रतिष्ठिते १२ को. ततोत

कृतार्थस्य ऋक्परिग्रहेणानुग्राह्यत्वात् । स्वास्वेव सत्रासाहीयपृश्निनी, वामदेव्यकालेययोः द्वितीयप्रथमयोरह्नोः प्रयुक्तयोः कावबदेव अन्यतो निष्कालिकयोरननुग्राह्यत्वात् । स्वा ऋचा एवानयोस्तत्र विनियुक्तानामत्र विनियोक्तुं 'न स्तोत्रिय' इति प्रतिषेधे सति अननुपपद्यमानत्वात् । पृश्निनस्तु तत्र द्वादशाहिकऋचा स्वा भवन्ति ।

तस्य हेतु[1] तत्र वक्ष्यामः । एवं न्यायपरिष्वक्तैषा परिभाषा व्याख्येया । एतामेव च व्याख्या-मूहसमाम्नायोऽनुवृत्तो दृश्यते । अथवा नेहास्माभिः आयास्यमस्ति । ऋक्तन्त्रवचनादेवैतत् सर्वं सिद्धम् । ऋक्तन्त्रानिर्देशे प्राकृताप्राकृतमपनीय नापि ऋक्तन्त्रमित्यवगमो भवति । आज्यमिति वा पृष्ठमिति वा गृह्यते । न सूक्तं न हविः । तद्वत् 'तस्माद्दक्तन्त्रमित्यर्थान्तरम्' इत्येतत्प्रतिपाद्यते । परिभाषाशेषभूता ऋक्तन्त्रमता 'ऋचो[2] ऽस्मिन्नवयवा' इति तन्त्रं ऋगस्य तन्त्रमिति ऋक्तन्त्रम् । किं तदिति चेत्, अर्थतः सामैव । तस्यैव ह्यवयवा ऋचि तायन्ते । यद्यप्यनया परिभाषया सर्वमपि सामजातमदिष्टर्गविशेषं प्रकृतिष्वेवावस्थापितमासीत्, इदमपि त्विहावधार्यमेव[3] ऋक्तन्त्रमृगधिष्ठानं साम । नेदमृचो निष्कृष्य केवलमुपादातुं शक्यमित्यर्थः । सहैव स्वयैवर्चा विधीयत इत्युक्तं भवति । द्वयं त्विदं परस्परविरोधि दृश्यते । अनिर्देशे प्राकृतीष्विति पूर्ववाक्यं वदति—'स्वास्विति' । इदं बोधयति, उभयमनुग्राह्यमिति । युक्तिवशादित्थं गृह्यते—यत्र प्राकृतं सामानुग्राह्यं भवेत् स पूर्वस्य विषयः, यत्र न भवेत् सोऽस्येति[4] ।

त्यक्ते च विनियुक्ते च स्थानिन्यस्यर्क्षु नेतरत् ।
प्राप्नोति पृष्ठे सौपर्णश्रायन्तीये निदर्शनम् ।।
यद्येवं वारवन्तीये सिद्धे स्वास्वाशपेयिके[5] ।
स्थानिनो विनियुक्तत्वाद् व्यर्थं स्वास्विति वक्ष्यति[6] ।।
व्यर्थं स्याद् दशपेयार्थमन्यार्थं तत्तु वक्ष्यति[6] ।
किमर्थमिति चेत् सम्यगवधाय धिया[7] शृणु ।।
दरणे कलशस्योक्ता श्रुता ऋक्सामविक्रिया ।
यज्ञायज्ञीयलोकेऽत्र वारवन्तीयमाहितम् ।।
यज्ञायज्ञीयमप्युक्तं प्रोहणीयमनुष्टुभि[8] ।
स्वास्वेव वारवन्तीयसिद्धमत्राप्ययत्नतः ।।
आर्भवस्य परस्तात्तु दीर्येत कलशो यदि ।
ऋक्ष्वेव[9] यज्ञायज्ञीयस्योक्तवत् प्रसजेदिदम् ।।
तत्रापि स्वासु भावार्थमत्र स्वास्विति वक्ष्यति ।
दृढीभवति चिन्त्येयमूहाम्नायानुवीक्षया ।।
न्योतानं ब्रह्मसामोक्तं ग्राव्णो विशरणे किल ।
स्वास्वेव चोढं श्यैतस्य नर्क्षु तं नौधसस्य वा ।।

---

[1] को. एतुं ?　[2] को. यजे　[3] को. त्विदहारधार्यमेव ?
[4] को. योस्येति　[5] को. स्वास्वादाश०　[6] को. वस्यती
[7] को. धियः　[8] को. ०मतुष्टुभिः　[9] को. ऋस्येव

प्रयोगासम्भवो नात्र श्यैतनौधसयोरिति ।
न तूर्ध्वं[1] पवमानाभ्यां प्रयोगासम्भवोऽनयोः ।।

सत्यमेतन्न तु ग्रावा तत्र शीर्णोऽपि दोषकृत्[2] ।
प्रसिद्धो[2] माध्यन्दिनीये हि ग्रावाभिषवे कृते ।।

अस्मत् स्तवनदोषेऽस्ति क्रीडाग्निष्टोमसामता ।
यज्ञायज्ञीयमप्यत्र सिद्धयोगमनुष्टुभि ।।

वैश्वामित्रमूहत्स्वासु गीयतेऽस्यानुकूल्यतः ।
यज्ञायज्ञीमुत्सीदत्याभवेऽर्वाक् स्तुते तदा ।।

प्राप्तं महावैश्वामित्रमस्यक्ष्वस्वपि नीयते ।

विज्ञातव्यं सदपि वदनच्छायया वस्तुतत्वं,
न ज्ञायेत स्वमुखविलसच्छास्त्र-दृप्तेन पुंसा ।
यस्त्वेकाकी[3] विषयमसकृद् वीक्षते शास्त्रदृष्टया,
वाचस्तमवाक् छलयति तदन्न ध्रुवं वा कृता वा ? ।।

**अथो…कुभौ**[4] । उष्णिक् [ककुभ] पव ? साम्नामपि स्वाप्रकृतिनियमनेनैव प्रवृत्तिमुक्तवत् प्रसक्तामन्यथा संपादयितुमिदमाह । अथ शब्दः पक्षव्यावृत्तौ । उष्णिक्ककुभौ तु उक्तादन्यथा वर्तेते । **पवः यत्र** यत्र सुज्ञानं तत्र पवस्वेन्दो (जै. सं. १.५०.३) इन्द्रमच्छ (जै. सं. १.५८.१) इत्येते एवोष्णिक्ककुभौ स्याताम् । तृचविषये उत्तरयैव परिभाषया सिद्धिरित्येकर्चोऽस्या विषयः । तत्र च विनाप्यनया परिभाषया सिद्धिः अनयोरुष्णिक्ककुभोः दृश्यते । यथोत्तरस्मिन् व्युष्टीनामहनि पवस्व[3] इन्द्रमच्छे ति शंकुसुज्ञाने एकर्चयोरिति विधास्यति । चतूरात्रादिषु च यत्रैकर्चे सुज्ञानमस्ति ततः । यतः सुज्ञानं नत एवैते अप्युष्णिक्ककुभावागच्छतः । द्वितीये तु दशरात्रस्याहनि इन्द्रस्तोमान्ततो वत्स्यति कल्पे नास्या उदाहरणम् । वृत्तस्तु कल्पः—अनैनां नोत्तरामपेक्षते इति । पवस्वेन्द्रमच्छेति संकुसुज्ञाने । 'एकर्चयोः पवस्वेन्द्रमच्छेति सहपौष्कलेति चयोरिति तत्र दर्शनादेव सुज्ञानं बालैरपि । कथं पुनरभिप्लवनवरात्रयोरेते उष्णिक्ककुभौ सिध्यतः, प्रथमयोग आरंभणीये विधानात् सिध्यतः । यथा अया पवस्व (जै. सं. १.५१.७) पवते (जै. सं. १.५८.११) इत्येते । बृहत्सामादिषु किं पुनरियं परिभाषा व्यर्थैव, न युक्तं व्यर्थेति वक्तुम्, सुज्ञानापवादेऽप्येतयोरुष्णिक्ककुभोर्निवृत्तिमियं परिभाषा प्रतिपादयति । यत्र सुज्ञानं तत्र पवस्वेन्द्रमच्छेत्येते उष्णिक्ककुभौ स्याताम् । नावेदिते तस्मिन्, इत्येष परिभाषार्थः । यथाभिजिद्विश्वजितोरेकाहयोः सात्रिकातिदेशात् पवस्वेन्द्रमच्छेत्येते एवोष्णिक्ककुभौ पौष्कलेनापोदिते सुज्ञाने निर्बाधमवस्थिते इयं परिभाषा निवर्तयति । ततस्तत्र नित्ये एवोष्णिक्ककुभौ स्याताम् । **तृचशेषतृचे**[6] **यान्तूपदेशः** । उष्णिक्ककुभि[7] साम्नां तृचे[8] पवस्वेन्द्रमच्छेत्येते एवोष्णिक्ककुभौ स्याताम् । सहपौष्कले सहसौवर्णनिधने सहसुज्ञाने इत्यादि प्रथितान्युदाहरणानि ।

---

१ को. ननु ऊर्ध्वं — २ को. दोषकृत्यसिद्धो — ३ को. यस्त्वेकाकिय०
४ को. कुदौ — ५ को. यवस्वे यबस्वे० — ६ को. तचशे चतये
७ को. ०ककुपि — ८ को. तृच ?

तत्र व्यानि। कल्प्ययज्ञार्थोऽयमारम्भः। तत्र तयोरुष्णिक्ककुभोर्यथाछन्दसं छन्दोव्यवस्थया सामानि विज्ञातव्यानि। गायत्रादि सर्वच्छन्दोवचनेऽपि छन्दश्शब्द इहाधिकारादुष्णिक्ककुभोरेव[1] द्रष्टव्यः। ततो यथाछन्दसमिति यानि योनौ काकुभानि तानि ककुभि, यान्यौष्णिहानि तान्युष्णिहि इत्युक्तं भवति।

ननु क्लृप्तानुगत्यैवाक्लृप्तानां कल्पना युक्ता। सत्यमेतत्। एवं चेद् वाङ्‌निधनवामदेव्यौ रूढ-वदाङ्गिरसादीनामन्यच्छन्दस्यानामपि ककुभि चोष्णिहि च दर्शनादयुक्त उक्तो नियमः, काकुभान्येव ककुभि औष्णिहान्येवोष्णिहीति। अत्र ब्रूमः--नायमुष्णिहि ककुभि च सर्वेतरच्छन्दस्यसामनिवृत्त्यर्थो नियमः, किं तर्हि, परस्परनिवृत्त्यर्थ एव। काकुभान्येव ककुभि नोष्णिहानि। औष्णिहान्येवोष्णिहि न काकुभानीति। एवं च सति क्लृप्तानुगत्यैवाक्लृप्तानां क्लृप्तिरुक्ता भवति। नहि क्लृप्तेऽध्वनि औष्णिहानि ककुभि दृश्यन्ते। काकुभानि चोष्णिहि। कथं पुनरियं विशिष्टविषयितास्य[3] नियमस्य[3] लभ्या, उच्यते—पूर्वविधिद्वयस्योप-स्थापितस्य उष्णिक्ककुभोरेकविधस्य, बहुविधस्य यदुष्णिह[4] स्तत्ककुभः, यत्ककुभस्तदुष्णिहोऽपीत्येतत्-स्वरूपस्य सन्निधाने श्रुतस्यास्य सामनियमस्यापि काकुभं ककुभि नेतरत्र[5], औष्णिहान्युष्णिहि[5] नेतरत्रेति। एतत्स्वरूपस्य सतः सन्निधानानुकूल्येनैव विषयकल्पनासत्या गतां युक्ततति कृत्वा नोष्णिहि ककुभीत्येव विशेषणमर्थतः सिध्यति। यथा लोके देवदत्तयज्ञदत्तौ सह चरतः सह वसत इत्युक्त्वा भोजनं त्वेनयोः[6] यथागृहम्[7] इत्युक्ते परस्परस्य गृहे[7] भोजनमेनयोर्निषिद्धं गम्यते। न सम्बन्धिगृहेषु। तद्वदत्रापि द्रष्टव्यम्। तस्मान्नौ-ष्णिहानि सामानि ककुभि प्रयोज्यानि, न काकुभान्युष्णिहि[8]।

अथापरा व्याख्या—कल्प्ययज्ञार्थमेवैतत्। न तूष्णिक्ककुभावेवास्य[9] विषयः। किं तर्हि सर्वोऽपि सामवेदः। तत्र यथाछन्दसमेव सामान्यसत्यस्मिन्नियमहेतौ प्रत्येतव्यानि। यत्साम यस्मिञ्छन्दसि योनौ दृष्टं तत्तस्मिन्नेवच्छन्दसि कल्प्यमित्यर्थः। अत्रैतान्युदाहरणानि। अस्ति च बह्वृचसूत्रे, दृष्टः क्षुरपविरित्ये-काहः। तस्मिन्नान्वयाद् विराट्स्वाराजे। विराट्स्वाराजस्यैव क्षुरपव्याख्यस्य साम्नः प्रयोगे गायत्र्यनन्तरस्य[10] अर्षां फेनेन (जै. सं. १. २२. ८.) इत्येतस्यां, नान्येषु छन्दस्सु। अनवदप्सीययोश्च क्षुरपविनोरुत्तरं माध्य-न्दिनान्त्यं पूर्वं हि निधनवत् बृहतो रथन्तरस्य वानन्तर्यं नार्हति। अस्ति चैकाहः शुक्रस्तोमो नाम, तत्रापि शुक्रं ककुभ्येव। अस्ति चैकाहो धनजिन्नाम, तत्र कामान्वयात्[11] कामान्वयाच्चेन्द्रस्य सञ्जयं प्रविशदार्भवा-न्त्यमेव स्यात्। वज्रे चैकाहे इन्द्रवज्रयोरुत्तरं माध्यन्दिनान्त्यं स्यात्। अस्या व्याख्याया अयुक्ततताशंका-माचार्यस्य क्लृप्तिर्दृश्यमाना निरस्यति। वसिष्ठस्तोमस्य हि बृहतीसामत्वेन प्रसिद्धं द्वादशाहीयमुक्त्वा छन्दस्यमिन्द्रक्रतुमित्युत्तममाचार्येण क्लृप्तं, जमदग्निस्तोमस्य च जमदग्नेर्वं तयोरुत्तरं जमदग्निलिङ्गमपि मुक्त्वा पूर्वं बार्हतमेव बृहत्यां क्लृप्तम्। इयमेव व्याख्या पूर्वस्याः ज्यायसी।

परवचस्सु विमत्सरमच्छलं सकलमप्यवगम्य गुणागुणम्[12]।
अगणितागुणमात्तगुणं सदा नमत वीतरजो विदुषां कुलम्॥

इति संज्ञावृत्तिः समाप्ता

---

१ को. ०क्ककुरेव २ को. ०दाङ्गीर० ३ को. ०स्थन्दिय०
४ को. यदुष्णिष० ५ को. नेतरत्रांदेगेष्णि० ६ को. तेनयो० ७ को. ०ग्रह०
८ को. अतः परम् आद्रम्यविद्रथमधः ककुब् ऋग्भवं त सदासक्तमुष्णिहि विधावविशक्यं अस्मिन्नन्यत्र न्दोष क्रदपि ह्यभिचारसोमे प्राथ्यं यथा शरविभीतकसाधकादि इत्यधिकः पाठः मूलेन नैव समन्वेति,
९ को. नरू'उष्णि० १० को. गायत्र्यन्तरस्य तरस्य ? ११ को. .नामान्वयात् १२ को. गुणागणम्

ततोऽभिप्लवावस्थायामेवोक्तानि सामानि प्रकृत्यन्वयादेतेष्वागच्छन्ति । अत्र ब्रूमः—नाभिप्लवः पृष्ठ-प्रकृतिः, नाप्यभिप्लवोत्पत्तीनि ज्योतिर्गवायूंषि । ज्योतिष्टोमप्रकृतीनि सत्रं प्रविश्याभिप्लवत्वमुपगच्छन्ति । वक्ष्यति हि ज्योतिषसूत्रं गोस्तन्त्रमायुषस्तन्त्रमिति । एकाहतन्त्र एव नोऽभिप्लवस्याह्नः षडहतन्त्र इति च । ततः संख्यानान्वयादेवोक्तानां साम्नामेकाहेष्वागमः । चतुर्थादिष्वहःस्वाभिप्लवे[1] प्रवेश्यानाम् ।

ननु प्रयोगपौर्वापर्यापेक्ष्यमिदं संख्यानं नाम तत्सांघातिकानामेवाह्नामस्ति । इदं प्रथममिद द्वितीयमिति नैकाहेष्वस्य संभवः । अत्र ब्रूमः—येष्वेकाहेषु प्रयोगिपौर्वापर्यमस्ति न तेष्वस्य[2] सम्भवोऽस्ति[2] यथा राजसूयक्रतुषु । किमेतेष्वस्ति, उक्तं हि—तत्रैकद्रुकेस्त्र्यह इत्यत्र सर्वेषामेषामनुक्रमेण प्रयोग इति ।

नामान्वयेन यथा—ऋषभमेकाहः, ऋषभः पवमानः, ऋषभो वैन्वतः, बलभिद्, उद्भिदि चोद्भिद्-गोसवः, ऋषभः पवमानो, गोष्ठश्च । विघनेतावेययोरिदमित्याज्यम् ऋतपेये सर्वाज्यानि, तृतीयश्च तृचः । बहिष्पवमाने बृहतीत्रिष्टुभौ । आर्भवे गायत्र्युष्णिगित्यभिजित्यानि । मध्यन्दिने च गायत्रीबृहत्यौ ।

कामान्वयेन[3] यथा पुनः—सोमे गारं, संदेशे सप्ताहः । वाजपेये आज्यान्यमैत्रावरुणाः ।

गुणान्वयेन यथा—अग्निचित्यपि अग्नेर्व्रतमग्निचपलस्य तद्गुणत्वात् । चितिस्तोमे च मनुस्तोमाप्तोर्यामयोरग्नेर्व्रताग्नेरर्कौ च । क्षिप्रे आशुभार्गवः, आशुसमाप्तेस्तद्गुणत्वात् । तीव्रस्तोमे ब्रह्मण आज्यम्, तत्स्तोमानामशृतेन[4] पयसा शृतेन च दध्ना च मिश्रितानां तीव्रत्वात् । बृहस्पतिसवे आभिकाभिषेकस्य तद्गुणत्वादाभिषेचनीये च नामधेयहृतेनाभिशब्दमात्रेण आभीकमभिषिक्त्यै रूपम् इति च वाजपेये श्रवणात् । अश्वमेधे आश्वम्, अश्वस्य तद्गुणत्वात् ।

ऋष्यन्वयेन यथा—मनुस्तोमे मानवद्वयस्य । गौतमचतुष्टोमे गौतमभद्रश्रेयसी । अङ्गिरोदृष्टे नाकसदि आरूढवदाङ्गिरसम्[5] । अङ्गिरःसद्योनिमरुद्दृष्टे श्यावाश्वम् । मरुत्वद्योनौ मरुतामर्को मरुतां संस्तोभश्च । देवतान्वयस्यैतान्युदाहरणानि, देवतात्वान्मरुताम् । न ह्यन्वयस्येति चेत्, ऋष्यन्वयस्यैवात्रैतान्युदाहरणानि । मरुद्भिरस्मत्कृतोदृष्टत्वात् । न ह्यग्निष्टुताग्निरिव मरुतोऽनेन स्तूयन्ते । एतच्च मन्त्राणामृषिलक्षणं देवतालक्षणञ्च, य एषां द्रष्टा स ऋषिः । ऋषिभिर्याभिष्टूयते[6] सा देवतेति । ऋषिष्टोमेषु प्रथितान्यस्यान्वयस्योदाहरणानि ।

देवतान्वयेन यथा—अग्निष्टुति प्रागग्निष्टोमसाम्नः स्तोत्राणामृचः । इन्द्रस्तोमवैश्वदेवयोश्च तद्दैवत्यास्तल्लिङ्गाश्च सर्वस्तोत्रेषु । वैश्वदेवे वैश्वदेवसाम च । प्रकृत्यन्वयोदाहरणानां प्रथितानां किं प्रदर्शनेन । एवमेते दशान्वयाः । यानि पुनः ऋक्सामानि दशानामेषामन्वयानामन्यतमेनागन्तुमशक्तान्यागतानि दृश्यन्ते, यथोपसदे सत्रासाहीयमौदलं च, सशदृषभः पवमानः, कौल्मलबर्हिषं,[7] श्रुध्यं,[8] वाङ्निध-

१ को. ०दिष्वपाहस्दा०
२ को. तेष्वंसंवोस्त ?
३ को. कामान्वयो
४ को. ०नामश्रुतेन
५ को. ०वदाङ्गीरस०
६ को. ऋषिभिर्येरभिस्तूयते
७ को. कौश्मलव०
७ को. श्रुधीयं

नमिति च । बलभिदि बहिष्पवमानस्य, प्रतिपत्क्षिप्ते ब्रह्मसाम्न ऋचः । इन्द्रस्तोमे मध्यन्दिनबृहतीति च ।। तेषां विधानं क्वचिदस्ति तदनुमातव्यं नाम । कामगुणना मसंख्यासंस्थास्तोमपृष्ठमृषिः[1] दैवतमेते ऽन्वया नव मखाध्वनि सदा वैकृते प्रकृतिनाभिनन्द्याः[1], वचनात् ज्योतिष्टोमे वचनाच्च । ततश्च वित्तदशरात्रे ऋक्सामागममन्येष्वन्वयदशकादितश्च वचनाच्च अत्यन्तसंवृतार्थोऽपि विकृतिकल्पः तदङ्गभूतमध्यायषट्कं व्याचक्षाणैरस्माभिः प्रकृतिकल्प्यसाम्यः आ[रभ्य व्याख्या]तः । कतिपयेषु प्रदेशव्याख्यानसापेक्षा एवावस्थिता इति त एव व्याख्यायन्ते । सर्वेभ्यः कल्पव्यानादीयते । प्रदीपोऽपि हि नक्तमर्थवान् न दिवम् ।

इति विकृतिकल्पोपोद्घातः ।

## एकाहविकृतिकल्पः

**उपदशस्य** । क्लृप्तिः करिष्यत इति शेषः । **सत्रा...तृचः** । अयमिहानुक्तस्थानोऽपि सामतृचो ऽमुत्र कृतया परिभाषया मध्यन्दिनं गायत्र्यां भवति । **जनित्रवन्ति एतानि** । एतानि बृहत्याम् श्यावाश्यावातृचः श्यावाश्वान्धीगवयोर्मध्यतोऽयं भवति । तयोश्च सिद्धमुत्तरवाक्यान्नियतायाः प्रकृतेरागमनम् । यद्येवं श्यावाश्वादुत्तर इति वक्तव्यम् । नैवमिष्टं सिध्यति । आन्धीगवस्य स्थाने विहितोऽयमेव सम्भवस्तदपवादः प्रसजेत् तस्मादुक्तवदेव साधु[2] । यथा बृहत्प्रधानस्य ज्योतिष्टोमस्य । कथा ? क्लृप्तं भवेत् । किमेकाहविधानां चतुर्थस्यायं निर्देशः, नैवम्, यदि ह्ययमेकाहविधो[3] निर्देशः स्यात्, सर्वे इमे निर्देशा रथन्तरसाम्नः इतरद् बृहत्साम्न इतरदित्यादयो ऽप्येकाहविधा निर्देशाः स्युः । तथा च सति पुनस्सोम ऊर्ध्वे भवन्तीति पुनर्विधिः कृतः स्यात् । स्वारा ऋचे तथा चतुर्थे नाकसदि समन्तवन्ति तथा[4] गायत्रे श्यैतवन्तीति ततोऽयमेकाहविधाभ्योऽन्येषां ज्योतिष्टोमविशेषाणां निर्देश इत्यवधार्यः ।

ननु तेषां क्लृप्तिः कृता न दृश्यते, सत्यमेतत् । कार्या क्लृप्तिः कृतवदेषां निर्दिश्यते । एवं योजना, यथा बृहत्प्रधानस्य ज्योतिष्टोमस्य साम कल्प्यं तथा क्लृप्तं भवेदिति बहिष्पवमानस्य तावत् प्रथमस्य तद्विधावेव प्रकृतावपि गमनं त्रिवृद्ग्रहणसामर्थ्यात् प्रतिपादितम् । तत एव व्यतिषिक्तान्याज्यानि सिद्धानि । सिद्धानि । पृष्ठानामाचार्यवचनात् सिद्धिः । बार्हतानि पृष्ठानि बृहत्प्रधानस्येति अन्त्यसाम्नोगयित्रसंहितयोः पौष्कलयोरग्निष्टोमसाम्नश्च ब्राह्मणाम्नायाभ्यामेव सर्वस्मिन् प्रकृतिवर्त्मनि एतद्रूप्येनावस्थानं कृतम् । तत्सर्वमनपवादं तद्वदत्र कल्प्यम् । एवमुत्तरेऽपि कल्पा गमयितव्याः । किं गारं सामेति प्रभृति ब्राह्मणेन तु नित्यवत् कृतमाचार्योऽपि विना तमचीक्लृपत् । अकल्पकमपेक्ष्यास्य विधानं ब्राह्मणान्तरे व्यचीक्लृपदिदम् वेद स एव हि विधेर्देशाम् । सप्तायुराभवो न पूर्वक्लृप्तः । त्रिवृदार्भवस्तु पञ्चविधः क्लृप्तो ऽअविशेषेण श्रुधियादिविशेषणेन च तेषु श्रुधीयवान्, तस्येह सप्तित्वमुच्यते । यः श्रुधीयवानार्भ-

---

१ को. ०गणनागुणसंस्था०··· प्रकृतिनाभिदन्यः? २ को. साधुक्लृप्तनस्य इतरमिहितादन्यत्' इत्यधिकः पाठः
३ को. हविधा ४ को. तिथा

वस्स[1] इह सप्तिर्भवति । कथं सप्तिर्भवति,[2] कावाकस्यां स एव सप्तिर्भवति[3] । भृङ्गोनयोः ? अञ्ज उद्धारे-दविसूनिधनस्थानादिवादादेव प्रथमस्य छन्दोमस्याग्रहणं सिध्यति ।

वैष्टं भवन्ति । वैष्टं भवतां प्रथमं गायत्रम् । प्रवृत्तं च गायत्रं पूर्वमेव छन्दोमतन्त्रात् । नचेह गायत्रद्वित्वं क्वचिदप्यदृष्टमभ्युपगन्तुं शक्यम् । अतिष्टुतं च स्यादभ्युपगमे । ततोऽर्थबला वैष्टंभवन्तीति सामत्रयमेवामहीयवस्यादि चोद्यते, न गायत्रमिति व्याख्येयम् । एष तु संशयः, सामगायत्रस्यास्य प्राक्सुरां-साम्नः प्रवृत्तिः, उतोर्ध्वमाशुभार्गवादिति । यत्र प्रवृत्तेऽस्मिन्निधनजामिदोषो नापतेत् तत्रास्य प्रवृत्ति-र्भवतु । ततः सिद्धं प्रागेव सुरांसाम्न इति । इतरथा हि नैष[4] आग्नेव्रं तयोर्निधनवतोर्निपातः प्रसजेत् । तृचे मानवमुत्तरस्मिन् पक्षे पूर्वस्य प्राप्तवद् विधास्यमानत्वात् इयमुत्तरस्य चोदना । इह द्विहिंकारगायत्र-पार्श्वे द्वे गता उन्निद्रबार्हदुक्थानि तन्त्रत आगच्छन्ति स्थानम् । तेषां प्राग् रौरवादूर्ध्वं वा यौधाजयात् प्राक् च स्यात् । मध्ये बृहति क्व वेति नावधार्यते । यदि कथंचिदेषां निर्धार्ये नियते स्थाने प्रवृत्तिः स्यात्, अतिष्टवस्तोमस्य प्रसजेत् । कात्र प्रतिपत्तिः, अनुष्टुभि इमां विज्ञास्यति । श्यावाश्वौ निह्नवात् पूर्वं श्यावाश्वमित्येतदर्थमिदमनपोढत्वादाचार्येण प्रागाभ्यां गौरीवितमितिचेन्न । ब्राह्मणेन सर्वेकाहेभ्योऽपोढ-त्वात् । तद्वा तृचः नवैकर्चतैवैषां विधेया, नाकूपारात् पूर्वम् । अत्र ब्रूमः—नेदमत्र सामत्रयस्य स्थानमवधार्यते । किं तर्हि आकूपारस्यैवेदमान्धीगवाद् विचलतः स्थानात् अवधारणमलोपाय क्रियते । एतदेव ज्ञापयति तन्त्रिकानि सामानि सामान्तरव्यतिकरे सति अनवधारितस्थानानि लुप्यन्त इति । तत इह द्विहिंकारादीनां लोपः सिध्यति । नवमे चाह्नि दशरात्रवैसिक्षितबाभ्रवऋषभयशसामुत्तरस्मिन्नतिरिक्ते[5] समन्तदैर्घश्रव-सयोरिति ।

मान...ह्मणं । स्वास्यप्रवृत्तिः ऋक्तन्त्रवाक्ये प्रतिपादिता । चतुरग्निष्टुत्[6] अस्तीति शेषः । योऽसौ व्यस्तत्रिवृदादिचतुष्टोमोऽग्निष्टुत्ब्राह्मणेन विहितः स्तोमकल्पे च प्रज्ञापितः सोऽप्यत एव यथास्तोत्रं ह्रासवृद्धिं कुर्वद्भिः कल्प्यः । अग्निष्टोमः अग्निष्टोमसंस्थ एवाग्निष्टुत् स्यात् । स्तोमकल्प-सिद्धत्वादयं विधिरनर्थकः । सोमातिरेकनिमित्तानामप्युक्थ्यादिसंस्थानामप्यस्मिन् क्रतौ[7] प्रवेशो मा भूदित्येवमर्थत्वात् । ततोऽस्मिन् क्रतौ सोमातिरेके सत्यतिरिक्तमनुबध्यते[8] । अथ ब्रूयात् इत्यारभ्य विहितमेव पक्षमाश्रयेत् । नोक्थ्यादिप्रादुर्भावो न बृहदपि पृष्ठं प्रापितम् । अत्राग्निष्टोमसामवादेनाचार्येण ब्राह्मण-माम्नायं चानुवर्तयता सर्वस्या ऋक्सामक्लृप्तेरत्रैव[9] कृतत्वात् क्लृप्तमितरदिति नोक्तम् ।

प्रश्नं...रोति । एते द्विशतो बृहत्यौ त्रिधा संविभज्य तिस्रो गायत्रीः करोति । द्वयोर्हि बृहत्योः गायत्रीत्रितयस्य च समसङ्ख्यान्यक्षराणि । ततश्चास्वामहीयवादीनि विधीयन्ते । ततो माध्यन्दिनगायत्रीत्व-मासामवधार्यम् । ब्राह्मणतश्च प्रश्नं मौगतः । प्रश्नम्—अपि, आ, अथ, यदि, इति । इत्थं कुर्वन् एकैकस्या ऋचश्चतुरक्षरेणावयवेन व्यतिषजेत् [इति] मौग आचार्यो वाञ्छति[10] । अथ...लौहित्यः । योऽयं प्रथमाया ऋचः उत्तमः पादः, यश्च द्वितीयस्याः प्रथमः, तौ द्वौ सम्भूय एषा मध्यमा गायत्री स्यादिति लौहित्यो वाञ्छति । तासु व्यतिषिक्तासु स्तुवन्तीति श्रुतिविहितस्य व्यतिषङ्गस्यास्मिन् पक्षः, इदं सः स्यात् । न ह्ययं व्यतिषङ्गो

---

१ को. ०वस्थ २ को. सप्ती० ३ को. सप्ती ४ को. वैषा
५ को. तस्मिन्ननिरुक्ते ६ को. चतुर्निष्टुक ७ को. क्रतौ
८ को. सत्यमितिक्तमनुबध्यन्ते ९ को. सामक्लृप्तौ० १० को. वाञ्जन्ति

भवति । अक्षराणामानुपूर्व्येणैवात्र प्रवृत्तत्वादित्यपेक्षित उच्यते । एवार्थाच्च यद्यपि पूर्वपक्षवदक्षरव्यतिषङ्गो न कृतः । अक्षरानुपूर्व्यवात्र विहिता । एवमपि व्यतिषिक्तमेव भवति । मिथ ऋचो मिश्रितत्वात् । किं मिश्रणमत्र व्यतिषङ्गो भवति, बृहद्रथन्तरयोः कृतान्तात् कृतान्तः सिद्धान्तः । बृहद्रथन्तरयोरिति विषय-सप्तमी । बृहद्रथन्तरविषयान्निश्चयादित्यर्थः । कयानीयस्य रथन्तरस्याविकारे श्रूयते—एते ह खलु वा अ... दामनीये एते रथन्तरस्याक्षरे व्यतिषिक्ते इति । तत्रापिहितः को वा स श्रोवा इति । मिथ ऋग्लक्षाणात् मिश्रणमेवास्ति, नानुपूर्व्यविभागः । तथापि तस्य व्यतिषङ्गं सिद्धवच्छ्रुतिरनुवदति । बृहद्विषयेऽप्येवमेव शाखान्त[र]म् इत्याचार्य-प्रामाण्यादनुमातव्यम् । अन्यार्थं इत्यर्थवादस्याख्या । अन्यार्थः परार्थः । विलस्तवनार्थो ह्यर्थवादो न स्वार्थप्रदिपादनार्थः । ततोऽयमन्यार्थं इति प्रसिद्धः । अस्यैव व्यतिषङ्गविधेरनन्तरं श्रूयमाणादर्थात् इयतापि व्यतिषङ्गं भवतीत्यवगम्यते । व्यतिषिक्ताद् वै मिथुनं प्रजायते[1], पशवः प्रजायन्ते इति हि श्रूयते । एकैकावयव-व्यतिषक्तादेव हि स्त्रीपुंसात् प्रजननं निवर्तते न बह्ववयवव्यतिषङ्गमाकाङ्क्षते । ततः सिद्धम् एवमपि व्यतिषङ्ग भवतीति । अनयोः पुनर्व्यतिषङ्गयोः कतरोऽत्र परिगृह्यते, अन्यस्यानवधारणादुभावपि विकल्पेते । तथैवोहाम्नायः संप्रतिपन्नः—तृतीयस्यामयमुत्सेधो[2] गायत्रीबृहत्योर्मध्यवर्ती स किं गायत्र्यामन्तर्भवति उत बृहत्याम्, किमस्या मीमांसायाः प्रयोजनमस्ति, अस्ति, यद्यनुव्याहर्तारः स्युः, प्रत्यनुव्याहारस्य भिन्नरूपत्वादेवं चेद्, भवतु, बृहत्यामेवायमन्तर्भवति । अविपन्नबृहतिगीतत्वादन्यत्र च गायत्र्यामदृष्टत्वात् । व्यतिषङ्गस्य च गायत्रीषु विहितस्य हि भिन्नदर्शनेन न तु तस्य प्रत्नं पीयूषं पूर्व्यं यदुक्थम् इत्येष । ताः सतो-बृहत्यां[3] भवन्ति गायत्रीभाजनम् इति तिस्रोऽप्येताः सतोबृहत्यो गायत्रीस्थाने विहिताः । तृतीयस्याश्च बृहत्यामन्तर्भावे एते सतोबृहत्यो गायत्रीभाजनम् इत्यश्रौतम् । अत्र ब्रूमः—गायत्र्या एवैतास्तिस्रः सतो-बृहतीविकारभूताः सत्यः सतोबृहतीशब्देन लक्ष्यन्ते । एवं हि योजयामः—एताः सतोबृहत्यः सतोबृहतीभ्यां साधितास्तिस्रो गायत्र्यः गायत्रीभाजनं प्राकृत्या मध्यन्दिनीयागायत्र्याः स्थाने भवन्तीति । दृष्टश्च विकृतौ प्रकृतिशब्दः बृहदरण्ये गिरौ ग्रामः इति । कथं च प्रत्यक्षमियं बृहती सती गायत्र्यामन्तर्भवेत्, कथं च मध्यन्दिनगायत्र्यां चतुऋचत्वं कुर्याम् । न च क्वचिदपि गायत्रीवृद्धिर्दृष्टा[4], दृष्टा तु बृहतीवृद्धिः । दशमेऽह्नि, गर्भस्य च तृतीये इति । तत इदं बृहतीसामैव । गोनामस्विति[5] । सुमन्मा इति, वस्विति, रन्तीति, सूनरीति च गोर्नामानि । ततो गोनामस्विति वचनं गोनामोपक्रमास्वतृचस्योपलक्षणम् । श्रूयते च—अथैतानि गोनामानि भवन्तीति । अस्योपरि एकपदं प्रथमा भवतीति, पदे उत्तरे द्वे इति अनुष्टुभोऽनन्तरं विहितत्वात्तत्रैव भवति ।

आतेयानि । आसु साकमश्ववत्युक्थानि । अस्यां कल्पनायाम् ऋगपेक्षातः साकमश्वशब्दे[6] मतुबुत्पत्तिर्न सिध्येत् । किं च उत्थानमेकमेकम् । तृचगीतं[7] साकमश्वमात्रमपि गीतं स्यात् । तत्र केषामनेन योग इति विशेषानवगमात् सौभरमुद्वंशीयं गीयमानोपलभ्येत[8] । ततोऽन्यया कल्प्या, अतः साकमश्ववन्त्युक्थानि आभि ऋग्भिः सह स्युः । उत्तरेण वाक्येन सौभरोद्वंशीययोः ऋगन्तरविधानात् साकमश्वेनैवासामर्थ्यादर्थतो योगः सिध्यति । कास्य क्रतोर्मध्यन्दिनगायत्री, प्राकृत्येव विहिता ।

---

१ को. अप्रजाए  २ को. तृतीहत्या०  ३ को. बृहतयो
४ को. ०द्धिदुष्टा  ५ को. गोनास्विति  ६ को. ०श्वशब्दं
७ को त्रिचगीतं  ८ को. दोयमानो०

ननु सर्वमेव वैश्वदेवीषु भवति इति श्रुतिवाक्येन मध्यन्दिनगायत्र्याप्यन्त्यैव विहिता भवति या वैश्वदेवी। अतोऽन्विष्यैषा अस्याथिभिराहर्तव्या। अत्र ब्रूमः-- सर्वामस्य क्रतो ऋग्विर्तति[1] विदधदाचार्यो मध्यन्दिनगायत्रीमेवास्माभिर्मृगयितव्यां वाञ्छति इति दुर्मानं, किं च नात्र प्रत्यक्षं वैश्वदेवीरेवाचार्यः ऋचो व्यधात्। या हि प्राकृत्यः पशुदेवतास्तद्देवत्याभावात्तत्र विश्वशब्दवत्यो देवशब्दवत्यः बहुदेवताभिधानवत्यश्चर्चो विहिता दृश्यन्ते। प्राकृत्यपि च माध्यन्दिनगायत्री विश्वशब्दवती। अतः सा आचार्येणानुकृतेति मन्तव्या। एवं चेत् क्लृप्तमितरदित्यनपोदितप्राकृतपरामर्शः कर्तव्यः, यथेतरत्र। सत्यमेतत्। प्राकृत्यास्तु मध्यन्दिनगायत्र्याः प्रा[कृ]तीत्वं प्रच्छाद्य विहितवद्भावार्थक्लृप्तमितरदिति नोक्तम्। कथमस्या अत्र विहितवद्भाव इति चेद्, यद्देवत्या अत्र विहिता संकल्प्यन्ते तद्देवत्यमपि संकल्प्यम्। वैश्वदेवीत्यर्थः। अयत्ने हि प्रकृतौ सौमीयन्तत आगच्छन्ती सौम्येवात्रापि सङ्कल्प्येत। उपहव्यस्यापि क्लृप्तमितरत्यक्तिरित्थमेव विनिहर्तव्या। सर्वं हि विहितमस्यापि मध्यन्दिनगायत्रीप्राकृत्यापि स सप्तदशो निरुक्तासु[2] भवतीति विधानात् सोपहव्येन चोदिता। सापि हि स्वाधारभूतस्तोत्रदेवताभिधानेन विरहिता सोमशब्देनेत्यनिरुक्तैव भवति। उभे पदौ यथा गायत्रे कृतौ, उभे सामनी इति निर्देशो बृहद्रथन्तरे एवावगमयति। तद्वदयमपि निदशः प्रथमे एव बार्हतीराथन्तर्यौ प्रतिपदाववगमयति श्यावासाम। किमेते सामनी अनुष्टुप्साम्नामाद्ये भवतः। इतः पूर्वापरे प्रास्थानात्। अत्र ब्रूमः—उभयथापि विधिक्रमस्याविरोधस्तथापि निधनजामिभयादाद्ये एवानुष्टुप्साम्नां भवतः। किमिह गौरीवितं नास्ति, कः सन्देहः, सत्यस्मिन् वचने तद्यदेकाहे गौरीवितं न कुर्वन्तीति। एवं चेद् गौरीवितस्य श्यावाश्वं, गौरीवितस्य नानदम् इत्यादि व्यर्थतां[3] व्रजति। अत्र ब्रूमः-- नात्र श्यावाश्वेन वा नानदेन वा प्रसक्तं गौरीवितमपोद्यते। स्थानोपलक्षणार्थमेव ह्यत्र गौरीवितग्रहणं, नापवादार्थम्। इह यदि गौरीवितग्रहणं न स्यात्, आगन्तूनामन्ते निवेशः इत्यूर्ध्वमाकूपाराद्र्ध्वं च स्यैताः श्यावाश्च नानदे स्याताम्। तन्निषेधार्थं स्थानमेनयोः गौरीवितग्रहणेन तत्रावधार्यते। अथोपदा। इह द्विपदापवादात् किं यासु कासुचिद् ऋक्षु धर्मं भवति, नैवं भवति। न ह्यनियतर्च किंचिदपि साम कल्पवत्यनिर्दिश्यते। किं च साम्नामेवाष्टमाहिकानां प्रसङ्गो नर्चाम्। एवं च सत्यप्रसवता द्विपदा ऋचः कथमिदं वाक्यमपवदेयुः[4]। एवं तु कल्पयितव्यम्। द्विपदा योनिर्न[5] साम्नो, द्विपदा शब्देन ग्रहणं त्वेतत कृतमिति। नचार्भवसाम्नामन्यतमस्याकृतिलोपे धर्मलोपावकाशोऽस्ति[6]। न चात्राहितौ[7] लोपः शक्योऽन्यस्य क्रतुमिति धर्मलोपार्थमेवेदं वाक्यं भवति। यद्येवम्, अपोढधर्मत्येवं वक्तव्यम्। सत्यमेतत्। अर्थान्तरस्य तु ज्ञापनार्थं द्विपदास्पदं साम[8] वक्ष्यते। अत्र किम् अर्थान्तरमिति चेत्, अन्यस्यापि साम्नो लोपेन स्तोमपरिणामानुवर्तने शक्ये, द्विपदा गीतत्वादिदमेव साम लुप्यत इति। किमेतस्य ज्ञापने प्रयोजनम्, अन्यत्रापि दृश्यायां[9] दशायां द्विपदा गीतस्यैव साम्नो लोपः। अतो मनुस्तोमेऽपि[10] विधर्मणो लोपः सिध्यति। अत्र हि कृता क्लृप्तिस्तिसृभिरितिवृत्तैरेवंविधा[11] भवद् द्विपदासु[11] प्राप्नोतीति चेत्, अनुष्टुभि[12], प्रत्येतव्यात सामतन्त्रवचन[13] ऋचामप्रसंगात्, कापाकूपारमध्यवर्तिमात्रस्य विधर्मणः स्थाने इति प्रतिपादितत्वात्, द्विपदास्वान्धीगवमित्यवचनाच्च। अथै—क्लृप्ता। एकाहत्वात् गौरीवितस्यापगमः। तस्य स्थाने श्यावाश्व भवति। प्रकृतिसामर्थ्यात् श्यावाश्वस्य तु वा नामान्तरं स्तोमपूरणार्थम्, अतोऽन्विष्य कल्प्यम्।

---

१ को. ऋग्विनर्ति    २ को. दशोन्निरु०    ३ को. व्यर्थं
४ को. वाक्यमपवृदेत्    ५ को. योनि न    ६ को. धर्म नावकाशोस्ति
७ को. नचात्र हितो०    ८ को. सामो    ९ को. दृश्या द०
१० को. मनस्तोमेति    ११ को. वृत्तैव विधः भवं०    १२ को. अष्टुभि    १३ को. ०वचनमृचा०

याज्ञिकास्तु प्रदिशन्ति, ज्योतिष्यौदलं गौप्याकूपारमिति। युक्तवच्चैतत्, ज्योतिष्टोमसामसमापन्नी ह्येते। अथवा। एकाहेऽपि प्रयुक्तं युक्तं गौरीयुतम्। एकाहेऽपि प्रयोगाभावस्य श्रवणात्। अभिजिद्विश्वजितोरस्य यत्नेनापरीतस्य इहासति यत्ने अपनयनस्यायुक्तत्वाच्च। कः पुनरनयोर्युक्ततरः पक्षः, अनपनयोऽस्य युक्ततरः। प्राप्तत्वादनिषिद्धत्वाच्च, प्रयोगे च विरोधादर्शनात्।

**अग्नि...रात्रः।** सिद्धायाः संस्थायाः पुनरिह वचनस्य प्रयोजनं यदुक्तमग्निष्टुति तदेवात्रापि। नित्या गायत्री एवंविकल्पस्वभावा[1]। यदसिद्धविधिः संज्ञायां सिद्धमप्यसिद्धवदुपचर्यते। नानाप्यृचत्वाष्ट्री-साम्न उद्धारे यत्नः कर्तव्यः, नापरं कर्तव्यं, कृत एवालम्। एवं हि वाक्यार्थस्य योगः, य आन्धीगवात् पूर्वस्यामतृचः ईदृशोऽत्रेति। एवं सात्रिकस्य सामतृचस्य स्थानेऽयं विहितो भवति।

**एषो...रात्री।** अतिरात्रत्वादेव सिद्धाया रात्रेः षोडशीनियमार्थमिदं वाक्यमिति त्र्यहत्रिकद्रुका इत्येषां स्तोमकल्पे संज्ञा कृता। तयैता अनूद्य विध्यन्तरमिदमनूद्य क्रियत इति। इत्थरूपा सरन्तत्रिकद्रुका यस्याहानि तत्रैकद्रुको नाम त्र्यहः स्यात्। यः परतन्त्रे ज्योतिर्गौरायुरिति कुसुविन्दत्रिरात्र इति विहितो हीनविशेषः सोऽयमत्र विधीयते। यदि हि त्रिरात्रे यः विधीयते श्रुतिविहितानां[2] पश्चाद्विधीयते तथा चास्याश्वमेधत्वमाशङ्क्येत इति पृथगत्र विधानं कृतम्।

**यज्ञा...साम।** यज्ञायज्ञीयस्यर्क्षिवत्यवचने स्वाराणि सर्वाणि सामान्यवत् कल्पयन्तीति वचनेन दैर्घश्रवसत्रिधानाद्विनापि निरस्तस्य यज्ञायज्ञीयस्य ऋक्प्रयोगेणाप्यननुग्राह्यत्वात् स्वास्विदं प्रसजति। सर्वक्लृप्तेः क्लृप्तमितरदिति नोक्तम्। अभिजिदश्वजितोः सपौष्कले प्राकृतयोरेव भवतः। पवस्व (जै. सं. १.५८.६) इन्द्रमच्छ (जै. सं. १.५८.१) इति सुज्ञानं यत्रेति वाक्ये तदुपलक्षणीयम्।

**नान...तृचः।** अत्राभीषङ्गस्यायुषि त्वाष्ट्रीसामपदभावः सिध्यति। क्रान्तारात्रिः पूर्वमनुक्रान्ता रात्रिरायुषि नियतविशेषा सषोडशिका रात्रिरिति।

**बृह...ज्ञीयं।** त्वामिद्धि हवामहे (जै. सं. १.२५.२) इत्येता बृहत ऋचः तासु यज्ञायज्ञीयमूढं नास्ति। अस्ति च त्वमग्ने यज्ञानाम् (जै. सं. १.१.२) इति। आसु वक्ष्यति चाम्नायेन कल्पानामर्थनिर्णयः। तस्मात् त्वमग्ने यज्ञानामित्यासु बृहत् स्यात् तथा व्याख्येम्। कथमिति चेत्, विश्वजित इत्यनुवर्त्य सिद्धं भवति विश्वजितो बृहतः ऋक्षिवति, वायो मिते त्रिच इति प्राप्तम्। तृचाम्नायादन्त्यैकवचनाच्च एकैव तूत्तरवाक्यव्याख्याने भविष्यति। एते भार्याः। यो विश्वजिति अग्न आयूंषि पवस (जै. सं. २.६.२) इत्येताः पञ्च। एवं तु व्याख्यायमाने सप्तत्रिंशद्बहिष्पवमान्यः स्युः। उदतस्त्रिवृतं स्तोमं हरन्ति। उदाग्नेयीं संभार्याभ्यः इति च श्रुतौ अग्न आयूंषि पवस (जै. सं. २.६.२०) इत्यस्या उद्धारो न कृतः स्यात् तथैव व्याख्येयम्। यथैताश्चतुस्त्रिंशदेव स्युः, यथा चाग्नेय्याः अप्रयोगः स्यादित्यन्यथा व्याख्यायते। **वायो भार्याः**— वायो शुक्रो अयामि ते (जै. सं. ४. २३.९) इति च, ये ते सरस्वन्नूर्मयः (जै. सं. ४. ३. ५) इति पञ्च भार्या भवन्ति। एवं कृते संभास्वन्तर्भावात् वायो शुक्रो अयमि ते इति सिद्धमेकर्चत्वं भवति। आग्नेय्यां च पञ्चम्यो अधिकत्वात् सिद्ध उद्धारो भवति। स्वासुसाम यज्ञायज्ञीयस्येह लब्धप्रयोगस्य ऋक्प्रयोगेणाप्य-ननुग्राह्यत्वाद् ऋचां चास्य बहिष्पवमाने प्रयुक्तानामिह प्रयोक्तुं विशेषतोऽप्यशक्यत्वात् स्वास्वेव सिद्धेः स्वास्वित्यनर्थकम्। नानर्थकम्। कलशविदरणेऽपीदं स्वास्वेव कार्यम्, न यज्ञायज्ञीयास्वर्क्षिवत्येतदर्थत्वात्।

---

१ को. ०स्वभाव   २ को. श्रुतिहितानां

नन्वत्रापि यज्ञायज्ञीयस्यानुष्टुप्सु प्रौढत्वात् अयत्नेऽपि स्वासु सिध्यति, सत्यं सिध्यति, ऊर्ध्वं त्वार्भवात् कलशे दीर्णे यज्ञायज्ञीयस्यैवर्क्षु वारवन्तीयं प्रसजति, तन्निवृत्तये स्वास्विति। उक्तम् व्युष्टितन्त्रे व्युष्टयो नामैतत् द्विरात्रमपश्यत्। राजसूयावयवभूतस्य व्युष्टीनां द्विरात्रस्य पूर्वमहरभिप्लवानामभिप्लवस्याह्नां यत् प्रथमं तस्य तन्त्रे भवति।

एषा...त्वाश्चे। किमियं[1] गायत्री माध्यन्दिनीयापोह्यते उतार्भवीया,[2] माध्यन्दिनीयैव, मरुत्वल्लिङ्गात्। आर्भवगायत्रीयत्वेनास्याः क्वचिदप्यदृष्टत्वात् प्राथम्याच्च। वासिमन्त्यम्। अस्य प्रेषा (जै. सं. १.५४.४) इत्यस्याः उत्तरयोरभावाद् द्वादशाहीयासु पवयोः सुज्ञानादेव पवस्व इन्द्रमच्छे (जै. सं. १.५५.६) (जै. सं. १.५८.१) त्यनयोः सिद्धिरिति चेन्न। अमुष्याः सुज्ञानाभावे वर्तनाभावार्थत्वस्य प्रतिपादितत्वात्। यथाभिजिति विश्वजिति नाम अन्त्यं किमिहोत्तरयोर्भावात् प्रो अयासीत् (जै.सं. १.२७.४) इति, आसु नैतद् युक्तम्। वसिष्ठस्यर्क्षु औशनमन्त्यम्, इत्यनेन सहवर्तिनास्य सत्यां गतौ विसंवदितुमयुक्तत्वात्[4]। प्रथमः[5] केन सुवर्णनिधनेन तद्वति[6] अपेक्षित इदमुच्यते—यत्प्रधन्वेत्यस्यां प्रथमं तेन मध्यन्दिन इति मध्यन्दिनस्य पवमानस्य[7] वादः। श्रूयते हि—अयं मध्यन्दिनः पृष्ठान्येवं पृष्ठानि इत्यादि।

द्विति...शवात्। यो द्वितीयः माध्यन्दिनः पवमानः स एवास्यापि आभीशवात् आभीशवान्तः स्यात्। अन्वितिवत् याधस्तनस्य व्रात्यस्तोमस्य प्रतिपत् सैवैतमप्यन्विता[8] स्यात्। आज्यमिति। इति शब्दः समुच्चये। एतानि चैतमान्वितानि स्युः।

ननु 'पूर्वं मारुतम्' अत्रैव पूर्वं विहितम्, नैतदेवम्। अनेनान्वयविधानेन सिद्धे मारुतद्वये पूर्वमस्यैकर्चत्वं पूर्वं विहितम्।

ननु तत एवाप्युभयं सिध्यति मारुतञ्च तच्चैकर्चत्वं सिध्यति। गायत्र्यां तु प्रसजति बृहत्यां वा तदभावाय मारुतेत्युक्तम्। अक्षरसाम्याच्च[9] मारुते मारुतमिति।

अथ शस्तः। यत् प्रथमस्य व्रात्यस्तोमस्य तन्त्रं तदविकृतम्। अनेन वाक्येनास्य प्रापितो विकारस्तु वक्ष्यते।

बृहत्...धार्या। यत् बृहत्प्रधानस्य ज्योतिष्टोमस्य बहिष्पवमानं तस्मिन्नस्य बहिष्पवमाने सति न हि ते अग्ने तन्वे (जै.सं, ४.१०.३) इत्यृगियं धार्या स्यात्। आश्रियवत्याः स्थान इत्यर्थः। एवं हि छन्दोगाः प्रतिपन्नाः। या अन्यामपोह्य तस्याः स्थाने भवति सा धार्येति। श्रूयते च—उच्चा ते जातमन्धसा (जै. सं. १.४६.१) अस्य प्रत्नामनु द्युतम् (जै. सं. ३.११.१) एना विश्वान्यर्य आ (जै.सं. २.५.५) इत्येतासु गायत्रं कुर्यात्। स्वास्वामहीयवं स यद्धार्यां चतुर्थीं दधाति इति। कुतः पुनरयं नियमः, प्रथमा[10] अस्या एव स्थाने एषा भवति न पुनरन्यस्या इति प्राथम्यादेव। अस्ति हि न्यायः प्रथमं वा नियम्येत इति। किं च याश्चातुर्मास्येषु विधास्यन्ते इन्द्राय, उपत्वा, अचिक्रदद् इति तासामह्नः प्रतिपत्त्वमाह श्रुतिः मरुत्वती पूर्वस्याह्नः प्रतिपद् भवति। अनीकवती प्रथमस्याह्नः प्रतिपद् भवति। तस्य सौरी प्रतिपद् भवतीति। ततोऽस्यापि प्रति-

---

१ को. किमिदं — २ को. अतोऽर्भ० — ३ को. मरुत्वाल्लि०
४ को. ०तुमयुक्तमयुक्तत्वात् — ५ को. प्रयथमः — ६ को. तद्वानि
७ को. पवानस्य — ८ को. ०मप्यविता — ९ को. ०रसामच्च — १० को. प्रथमास्या ?

पत्त्वं सिध्यति। तत्रैकाऽनुष्टुप्[1]। यत्त्रैकद्रुकस्य सा स्यादनुष्टुप्। किमनियमेन ज्योतिषो गोरायुषो वा, नैतद्युक्तम्, यदि ह्यनियमोऽभिप्रैष्यत, त्रैकद्रुकीष्विष्टा[2] इति वा त्रैकद्रुकीष्वन्यतमेनि वावक्ष्यत।

न चात्राचार्यस्य क्लृप्तिरीदृश्यनियता दृश्यते। ननु नियमकारणस्याभावे नियमो शक्यः, सत्यमेतत्। अस्ति त्विह नियमकारणम् संस्थाकृतसामान्यम् आयुषश्चास्य च। तस्मादायुष एवानुष्टुब् भवति। एकाहत्वसामान्याच्चैकाहस्यैव। चातुस्तन्त्रे[3] एकफले क्रतुचतुष्टये नियतपूर्वापर्ये चतुर्षु चातुर्मास्येषु[4] खण्डशः प्रयोक्तव्ये चातुर्मास्यशब्दस्य प्रवृत्तिः। चातुर्मास्यानां यः प्रथमः क्रतुः वैश्वदेवो सः त्रिवृतो द्वै वैश्वदेवस्य तन्त्रे भवति। योऽसौ क्लृप्तो वैश्वदेवक्रतुः तस्यैव त्रिवृत्स्तोमकस्य सतः तन्त्रे इत्यर्थः। अस्ति हि तस्य ब्राह्मणे स त्रिवृद्भवतीति प्रथमा न। असति वैश्वदेवग्रहणे प्राकृत्यौ स्याताम्। त्रिवृत्त्वकारितस्य स्तोत्रियाह्रासस्य सर्वस्याप्यत्रैव प्रकल्पनाद् वैश्वदेवस्य त्रिवृताविशेषणमनर्थकम्। नानर्थकम्। त्रिवृत्त्वममुष्य वैश्वदेवस्य सिद्धतयैव गृह्यताम्। न त्रिणवत्रयस्त्रिंशादिवत् पूर्वपक्षोद्भावनमकृत्वा निरसितव्यमित्येतदर्थत्वात्। ततोऽसौ वैश्वदेवस्त्रिवृदपि कल्प्यस्तोत्रीयाह्रासेन अग्निःसंस्थः। किमर्थम् इदमुच्यते, पञ्चदशस्तोत्रात्मकस्य वैश्वदेवतन्त्रस्येहागतत्वात्। सोऽपि संपादसंस्थया सामक्लृप्तेः। तन्निरासार्थमयत्ने हि तान्त्रिकाया अपि संस्थाया विकल्पेन भावः प्रसजेत्। वरुणधार्यै[5] द्वितीयश्चातुर्मास्यानां, वरुणप्रघासाख्यो द्वितीयः एकोऽपि सन् द्विवदुच्यते। वरुणप्रघासाविति यथैकं साम बहुवत् महानाम्न्य इति। श्रूयते हि द्विवद्रूपौ[6] वरुणप्रघासौ इति वरुणप्रघासयोः द्विरात्रस्य यत्पूर्वमहस्तस्येयं[7] धार्या अग्नियवतीमृचमपोह्य तस्याः स्थाने भवति। उक्तमानं किमाचार्यो मरुत्वतीं पूर्वस्य यथाश्रुति कल्पयित्वा त्रिकवती न कल्पयति। कल्पितैव त्रिकवती। यतो रथन्तरप्रधानस्याह्नः प्रथमं त्वगीयवतीं करोति। तत एवाचार्यः कवयतीमस्याह्नः प्रतिपदं कल्पितवान्। अस्ति ह्यस्यां क शब्दः।

इत्येकाहविकृतिकल्पः
समाप्तः

---

१ को. तत्रैक
२ को. त्रैकद्रुक
३ को. चातुतन्त्र
४ को. चातुर्मासिषु
५ को. वरुधार्यां
६ को. द्विद्रूपौ
७ को. यत्पूर्वमहतं०

# अथ हाविष्मतीयम्

व्युष्ट...तीयः[2]। योऽस्माभिः कल्पितो व्युष्टिद्विरात्रो नाम राजसूयक्रतुषु चतुर्थः, तस्य तन्त्रे ऽयं हाविष्मतीयो भवति। इह तु वयमिन्द्रहवामहे हाविष्मतीयस्थेदं तन्त्रमनयदाचार्यः व्युष्टिद्विरात्रम्। यतो हि तन्त्रेऽस्मिन् सामविशेषाः—वैखानसं, द्वैगतं, द्विहिंकारं, वामदेव्यं, स्वज्योतिरिति। तानि हाविष्मतीयस्यैव ब्राह्मणे विहितानि। निधनवत् सामसाम दैर्घश्रवसमौक्षमधुश्चुन्निधनानि च, ये द्वे द्वे सामनी तयोरन्यतरद् भवति इति वचनेनात्रैव विहितानि। न च व्युष्टिद्विरात्रस्य ब्राह्मणे विधिरेषां साम्नाम्, इतरेषां चास्ति। तस्माद् हाविष्मतीय एव व्युष्टिद्विरात्रस्य परमार्थतः प्रकृतिभूतः। यथाभिप्रतारणीयादीनां ग्रन्थलाघवं चाचार्यो व्युष्टिद्विरात्रस्य तन्त्रे हाविष्मतीय इति वदति, न तत्प्रकृतिकमेतं ख्यापयितुं, न च नवस्वन्वयेष्वेकमाश्रयितुम्। यथा गोसवे पञ्च वैश्वजितिक्य इति। यथा च शुनामीरीये सत्राजितोऽनुष्टुबिति।

त्रैक...भरं। यदि त्रैककुभग्रहणमृग्विशेषणार्थं गृह्यते, त्रैककुभस्य स्थाने सौभरमिति ऋग्ग्रहणमविशेषणमनर्थकं स्यात्। न च सकृद्धुतेन त्रैककुभशब्देन शक्यमुभयस्य विशेषणमृचस्थानस्य च। अयमत्र परिहारः। ऋग्विशेषणे त्रैककुभग्रहणे स्थानमनर्थसिद्धम्। सौभरस्य यथावस्थितास्वेव हि त्रैककुभस्यर्क्षु सौभरमासज्यते। नानियमेन स्तः, नान्तरे। ब्रह्मोत्थपदमेवैताः पूर्ववाक्येन प्रापिता इति सिद्धा सौभरस्य ब्रह्मोत्थता।

वैस्टं ..भवति। आमहीयवस्य तृचगानापवादमात्रे चिकीर्षिते सति वैष्टंभवद्वादी ग्रन्थलाघवाय कृतः। एवं चेदेवं कर्तव्यम्। आमहीयवमेकस्यां दैर्घश्रवसस्वज्योतिषि चेति। अयुक्तोऽयं पर्यनुयोगः। यावानयं ग्रन्थस्तावानेवाचार्यस्य नोऽर्थवचनाद् यो द्विविध उक्थ्यगतो विकारो भवति, हाविष्मतीये विहितः स नेह भवति। अवचनात्। अस्मिन् द्विरात्रे तस्योत्थविकारस्याविहितत्वात्।

ननु वैखानसादीनामस्मिन् द्विरात्रे विधानमस्मद्ब्राह्मणे नास्ति, तथापि तानि हाविष्मतीयादेव प्रकृतिभूतादेव[3] द्विरात्रमागच्छन्ति। यदेव हाविष्मतीये वैखानसं भवति 'जागतमि, त्यादिवचनं तदेवैषामत्राप्यागमनं कर्तुमलमिति ततोऽत्रापवादमात्रमेव अविकारस्य कर्तव्यम्। हेतुप्रदर्शनत्वे तत् वैखानसादिष्विह वचनाभावेऽपि तत एव वचनात्प्रवर्तमानेषु सत्सु वितताथं व्यामोहं जनयति। अत्र ब्रूमः—उभयस्याप्यस्य हाविष्मतीय एव वचनं वैखानसादेः सामजातस्य उक्थविकारस्य च तत्र यदुक्थविकारकरं वचनं तदस्योक्थविकारस्य हाविष्मतीयादन्यत्र प्रवृत्तिं निषेद्धुं शक्तम्। यतोऽस्य हाविष्मतीयावयवभूतस्य हाविष्मतस्य स्वर्गस्यावाप्ति फलं दर्शयति श्रुतिः। तदुपलक्ष्यं हाविष्मतहाविष्कृते भवत इत्यादि[4] स्वर्गलोकमित्यन्ते, ग्रन्थे। ततो हाविष्मतब्रह्मसामत्वमुत्तरस्याह्नोऽत्र हाविष्मतीयादन्यत्र न युक्तं कल्पयितुम्। यश्च पूर्वस्यान्ह उक्थविकारः त्रैककुभस्यर्क्षु सौभरमिति, स परस्मादह्नो हाविष्मतेन निष्कलितस्य संग्रहार्थं निर्मितो नाविपदि सोभरे युक्तोऽत्र गृहीतुम्। वैखानसादेस्तु सामजातस्य यानि विधायकानि वचनानि तानि कृतस्यास्मिन्नपि द्विरात्रे योगमनुरुन्धन्त्येव। ततोऽर्थवादेन हेतुप्रदर्शनमवचनादिति सर्वत्र सर्वत्रापि हाविष्मतीयतन्त्रातिदेशेनाय-

---

१ को. गं० ओं व्युष्टः    २ को. तृतीयः    ३ को. ०भूतादेवं
४ को. इत्यादागच्छति

मुक्थविकारः प्रवर्तेत, न परम्परार्थं आरम्भः । अथवा । न परयोरित्यनुक्तत्वात् सर्वत्रेति वचनाच्चशब्द-स्याप्रयोगादेकत्वार्थमेवं नोक्थविकारो वचनात् सर्वत्रेति नित्या गायत्री ज्योतिष्टोमिक्येव मध्यन्दिनगायत्री स्यात् । परिधने तृचार्थं निधनग्रहणम् । गायत्रग्रहणमितरसामद्वयनिवृत्त्यर्थम् ।

नन्वेषा गायत्री हाविष्मतीयादेवागच्छति, सत्यमागच्छति । किन्तु नित्या गायत्री गायत्रदक्षो-निधने । इति सति नित्येत्युक्तत्वात् स्वदिष्ठया (जै. सं. १.४६.२) इत्यपि च गृह्येत । तन्निवृत्त्यर्थमिदं चोद्यते । अग्निमहस्तोमकल्पविहितायाः सन्ध्यायाः पुनर्वचनमनर्थकम् । नानर्थकम् । हविष्मतीयतन्त्रचोदनासामर्थ्या-दुक्थसंस्थाया अपि प्राप्तवत्या निवर्तनार्थत्वात् । गोरश्वयाः श्यावाश्वान्धीगवयोरयमपवादः । समुच्चये हि त्रिवृत्त्वं विहन्येत । नानदात्तु पारविपर्यासकारणात् ज्ञायते, नानुष्टुब्मुखे नानदमषोडशिके क्रतौ कार्यमिति । गर्गत्रिरात्रस्य सप्तिः करिष्यत इति शेषः ।

उवा···मानं । अहर्विशेषाग्रहणेऽपि प्रथमातिक्रमणे कारणाभावात् क्रमेणैव कल्पयितुं युक्तत्वाद् उत्तरयोरह्नोः प्रकल्पयिष्यमाणत्वाच्च प्रथमस्याह्नो भवति । पूर्वेणैकवाक्यतया व्याख्यानं दुष्यति । किमर्थं पुनराचार्येणायं वचनविन्यासः क्रियते—यद् व्युष्टीनां पूर्वमहरिति वत् । सा पुनश्च वदति । उत्तरस्याह्न इति । वरुणप्रघासयोस्तूत्तरस्यैव वदन्ति नाह इति । साकमेधेषु सकृदपि न वदति । अह्न इति द्विरात्रे । तत्र सर्वत्राहर्ग्रहणानि कृत्वा पूर्वत्वेनोत्तरत्वेन च विशिनष्टि । इह किंचिन्न वदति । प्रथमस्येति[1] च वदन्ति । न तृतीयस्येति । अत्रिचतूरात्रे प्रथमस्याह्न इति न वदति । वदति च पञ्चरात्रे । दशरात्रेऽनन्त्यानामह्नां निर्देशमकुर्वन् तत्क्लृप्तिमेवारचयति । संसदामयनस्य च मध्यवर्तिनः षडहस्य । अत्र ब्रूमः--नायं[2] वचनविन्यासः किंचिद् गूढमर्थमवगमयितुं क्रियते, स्वभाव एव तु केवलमयं कल्परचनायाः यदभिप्रेतस्यावबोधनमनेकेन प्रकारेण क्रियते । न सर्वत्रैकविध्यमेव वचनक्रमस्याश्रियते । कविप्रियन्यासासमर्था सा तत्र तत्र प्रदर्श्यते । शिष्टे च कविवर्त्मनि वचनविन्यासादुक्तरूपादादत्ते । नैव पुण्येनार्थसम्पादनम् ।

प्रथ···तन्त्रे । तन्त्रे च प्रथममहर्द्वितीयमहरिति दाशरात्रिकाणामेवाह्नां च प्रसिद्धेर्ग्रहणं ज्योति-मानि ज्योतिरुक्थ इति हाविष्मतीयाद्यमहः । स्वा...तृच । सोमसाम्नः पृतनाजिति अध्यर्धेडमिति विशेष-णादिह तदभावात् प्रसृतेडमिति चेन्न, अन्यत्रार्भवगायत्र्यां प्रसृतेडस्यादर्शनात्, रक्षोहेत्यस्यामनूढत्वाच्च । कावमन्त्यम् । कावस्य क्षिवत्यनुक्तेन सामसमेनेति[3] वचनेन द्वितीयेऽह्नि भावादस्माग्नो वैखानसविधाना-दृतेऽपि निष्कालिकस्य कावस्य प्रयोगेणाप्यनुग्राह्यत्वात् स्वास्वेव वैखानसमनुस्तोमे मानववत् प्रसजति । द्वितीयस्याह्नः क्लृप्तमितरदिति किमिहाविष्कृतं गृह्यते । विशोविशीयोद्वंशीययोस्तृचो गृह्यन्ते ।

सत्रा···कयोः । वामदेव्यकालेययोः प्राकृतीष्वेवर्क्षु पूर्वयोरह्नोः कृते विनियोगे यदिमे प्राकृतीषु स्यातां न स्तोत्रिय इति वचनमुपहन्येत । तत इमे स्वास्वेव । नच पृश्निनः स्वासु शक्या वृत्तिरत्र कल्पयितु-मिति व्यवस्थितमेतद् वाक्यान्तरव्याख्यायाः प्रतिसमासात्स्यामः । विशां नोऽन्यः किमचोदस इति न, अनूढ-त्वात् । ऊहिष्यामो वयमिति चेन्न, उत्तरयोरभावात् काः पुनर्विशालस्यर्चो, यासु निशालं विहितम् । कासु विशालं विहितं, धर्ता दिव (जै. सं. १. ५७. ५ ) इत्येतासु । एवं चेत् स्वास्विति वक्तव्यम्, एताः स्वा-वेवर्चो दीर्घतमसोऽर्कस्य । अथवा स्वास्विति न वक्तव्यम् । सिध्यति हि स्वासु प्रथमेऽह्नि सौपर्णवत्[4] ।

---

१ को. प्रथास्येति २ को. नाया ३ को. सामसमेतीति०
४ को. सौवर्णवत्

सत्यमेतत् । सिद्धानां तु स्वास्वानां विशालेन विशेषणम् । विशालस्यैता ऋच इति ज्ञापनार्थम् व्यापनेन चायमर्थो ज्ञाप्यते । यास्वृक्षु द्वादशाहे प्रवृत्तिस्ता अपि स्वास्वेव[1] विज्ञेया इति । ततः सिद्धं यो राजा (जै. सं. १. २६. १) इत्येताः प्रश्निनः स्वा इति । ततोऽस्मिन्नहनि दशरात्रस्य पञ्चमे च पृश्निकाले ययोरेता ऋचस्समवधारिता भवन्ति । एतत्तन्त्रं मेध इति हविर्द्रुतस्य पशोरभिधानम् । ततोऽश्वोऽस्य मेध इति अश्वमेधः । मेध इति यज्ञाभिधानम्, ततोऽश्वसम्बन्धो मेध इति । अश्वमेधो वा तस्य विशेषः । तस्येत्यश्वमेधस्य निर्देशः । विशेषा इत्यत्र पृथगकल्पयिष्यमाणानामश्वत्रिरात्रादीनामश्वमेधविशेषाणां[2] ग्रहणम् । अयमर्थः—योऽयमश्वमेधः कल्पयिष्यते तस्यैव तन्त्रे भवन्त्यश्वातिरात्रादयोऽश्वमेधविशेषा इति । केचिदेतद्वाक्यं पूर्ववाक्यापवादविधिकलापस्य चतुऋचबहिष्पवमानत्वात् करिष्यमाणस्यैव प्रतिज्ञावाक्यं वदन्ति । तदयुक्तम् । अनुवाक्यादिषु[3] हाविष्मतीयादि च तस्य विशेषा इत्यनुक्त्वैव अपवादविधेः कृतत्वात् । उत्तरत्र च जामदग्न्यप्रातःसवनसन्ततयोश्चतूरात्रपञ्चरात्रतन्त्रत्वं पृष्ठचतन्त्रत्वं[4] च प्रतिपाद्य अश्वत्रिरात्रादिवत् कल्पयिष्यमाणेष्वनन्तरमवस्थितेषु सत्स्वेव सर्जनीयादिषु तृतीयसवनसन्ततादिषु च त्रिरात्रपञ्चरात्रविशेषेषु तस्य विशेषा इति वक्ष्यमाणत्वात् । किं पुनः पूर्वस्मादेव विधेः पूर्वस्याश्वमेधतन्त्रस्य सिद्धा क्लृप्तिः । न सिद्धा । सिद्धैकदेशा त्याजिता वक्ष्यमाणैर्विशेषैः संहृत्य सिद्धा भविष्यति । एवं चेत्, संगमय्यैव वादेरतिदेशः कर्त्तव्यो नात्र । सत्यमेतत् । अपवादैस्त्वेतैश्च त्रिरात्रादीनामविशेषसंबंधार्थमत्राधिकारस्तन्त्रातिदेशेन क्रियते । किमतः सिद्ध्यति, ऋषभाश्वमेधे दत्वाश्वमेधे इति सर्वस्यामस्यामश्वमेधक्लृप्तावतिदेशादुपस्थितायां स्तोमसंकोचादवश्यमेवास्यैकदेशोत्सर्गप्राप्तावत्र ये विधास्यन्ते ऋक्सामविशेषास्तेषां संभवेऽनुत्सर्गेण त्रैरात्रिकाणामेवोत्सर्गं कल्पयितव्येति[5] अयके ? हि सर्वस्य ऋक्सामकल्पस्य अश्वमेधादुपस्थितस्य परिग्रहेणैवोत्सर्गे वा नियमहेत्वदर्शनात् येषां केषांचिदुत्सर्गः प्रसजेत् ।

औदसामसिद्धयोर्ग्रहणं पौर्वापर्यनियमार्थं तृचभावार्थञ्च । ऋतदोहं नात्रावो ? ऽस्य प्रसक्तः । नैकर्चेतानर्थानान्तरं, ततोऽस्य ग्रहणमनर्थकम् । नानर्थकम् । शैशवपृष्ठादिवध्यः पाणीति ? । किमुत्तरयोरप्याज्यदोहयोरेवं भावे यत्नो वक्ष्यते, नान्यो यत्नो वक्ष्यते । अयमेवालम् । अत्र श्रुतवापि—यत् त्रयाणामप्याज्यदोहानां समानमेव विधानमर्थवादश्च, अन्वहमाज्यदोहानि भवन्ति[6] । प्राणा वा आज्यदोहानि इत्यादयः । तस्माद् रतनिधनेनैतर्यमकुर्वन् इत्यादयश्च संहतानामेवैषां श्रूयन्ते । नैकमवलम्ब्यैकोऽपि श्रूयते । ततोऽवधारितमेषां सहप्रवृत्तित्वात् त्रिरात्रेषु अवोवाश्वं, प्रथमप्राप्तेःश्यावाश्वस्याधस्तनात् वाक्यद्वयात् पूर्वमिदं न्यस्तव्यम् । सत्यमेतत् । अक्रमे त्वस्यापोहवचनमश्वत्रिरात्रेषु अपोहार्थम् । तत्र हि स्तोमविस्तारात् सामान्तरप्राप्तौ श्यावाश्वस्यान्यस्यान्यस्याम् । एभ्योऽनुभवं प्रति अभ्यर्हिततरत्वात् ऐकान्तिकं ग्रहणमाज्यदोहादूर्ध्वं प्रसंक्ष्यति । तदस्यास्मिन् प्रदेशेऽपोहविधानान्निवर्त्स्यति[7] । युक्तवदेव चेदम्, उत्तरस्मिन्नहनि श्यावाश्वस्य त्रिरात्रो दिष्टचा संकृतिश्यावाश्वमिति विधिः प्रवर्तयिष्यमाणत्वात् यत्र त्रिरात्रे श्रुतं न सामसमेति तदाचार्येणाश्वमेधक्लृप्तावसंगृहीतमिति अश्वत्रिरात्रादिष्वप्यनुसरति । यद्येवं, सामसमवायाभावादेवास्या श्यावाश्वाभावो ऽश्वत्रिरात्रादिगते ऽप्यस्मिन्नहनि सिध्यति । यदि सिद्धः, सामसमवायाभावोऽश्वमेधेषु स्यात् । अनवधारितस्त्वयमश्वमेधेष्वस्तीति श्यावाश्वापोहादेवास्मादस्थानवतीदमस्तीत्यवधार्यते । यथा बहुषु स्वोचितेषु प्रतिग्रहमनुक्तमप्रवृत्तेषु प्रथमसमाशेऽर्थार्थिनो जनस्यार्धे भुक्तवत्यवस्थिते समाशोद्वाहकः शास्ति, भुक्त-

---

१ को. सास्मास्वेव २ को. ०माणामश्व० ३ को. अनुक्रयादिषु ४ को. पृष्ठातन्त्रत्वं
५ को. क्लृप्तिज्येयितव्येति ? चिन्त्योऽयं पाठः ६ को. भवति ७ को. ०न्निवत्स्यति

वान् पुनरिह मा भुक्त, शेष एव भोज्यतां जन इति। तच्छ्रुतवान् जनः समाशमुत्तरेद्यु: प्रवृत्तमुपगतस्तत्रापि भुक्तवान् पुनरपि वेलान्तरे भोक्तुमुपलीयमानः सन् यददः समाशोद्वाहकस्य शासनं तदिहास्ति। नास्तीति नावधारयति। एवमनवधारितः पुनर्भोजनभावोऽनेनास्ति। नास्तीति सहात्मना भुक्तवन्तं जनैकदेशं प्रसह्य बहिरपोह्यमानं दृष्ट्वास्मीत्यवधार्यते तद्वत्। **अत्रि-मानं**। द्वितीयादीनां कल्पयिष्यमाणत्वादियं क्लृप्तिः प्रथमस्यैवाह्नो भवति। **प्रथ...न्तन्त्रे**। आज्यादिरहश्शेषं प्रथमस्य दाशरात्रिकस्याह्नः तन्त्रे भवति। **पव...क्षारे**। प्रथमतन्त्रे चोदनयैव सामद्वयमिदं सिद्धम्। तृचभावश्च सर्वाणि तृचेष्वित्यत एव भविष्यति। सिद्धे च तृचभावे प्रसिद्धेयं[1] परिभाषा पवते (जै.सं. १.५८.११) इन्द्रमच्छसुता (जै. सं. १.५८.१) इत्येतौ तृचौ नियच्छति। तत इदं वाक्यार्थमनर्थकम्। नानर्थकम्। तन्त्रतः प्राप्तिमुष्णिक्ककुभोर्नासौ परिभाषा इयादिति ज्ञापनार्थत्वात्। ततः सांसदस्य नवमस्याह्नः ये एवोपहव्यस्य ते हि वोष्णिक्ककुभानि सिध्यतः। इतरथा हि तत्रार्भवसामानि तृचेष्विति तृचादेशात् पवस्व (जै. सं. १.५८.६) इन्द्रमच्छा (जै.सं. १.५८.१) इत्येते एवाभविष्यताम्।

**काव-भोज्यः**। त्रयाणामपि पदस्तोमानामतिदिष्टादेव तन्त्रादेता ऋचः सिद्धाः, या इह विधीयन्ते। तस्मादृग्विधिरनर्थकः[2]। स्वास्वेषां निवर्तनार्थत्वात्। तदुक्तमृक्तन्त्रवाक्ये—'विधीयमानं सालसहैर्निवती-भिरागच्छति, इति।

नन्विदमपि तन्त्रोत्थमृक्प्रयोगेणापि प्राकृतं सामानुग्राह्यम्, यद्यनुग्रहमाकांक्षतीति, ततस्तान्त्रिकीष्वृक्षु इह पदस्तोमाः सिध्यन्ति अयत्नतोऽपि। एवं तर्हि क्वचिदन्त्यसामान्यनुग्राह्यमपि प्राकृतं नानुगृह्णन्ति। स्वास्वेव भवतीति ज्ञापनार्थमयमेषामृङ्निर्देशः क्रियते। तत इदं सिध्यति, चतुरन्त्येऽभिप्लवे वासिष्ठचामे-वोशनकावयोः ऋक्षु भवतः स्वास्वेव भवतो द्वादशाहीयासु। एवं नान्त्येऽपि वासिष्ठचामसंक्रोशारिष्टानि, वात्सप्रदंशस्पत्यग्नौष्ठानि चार्भवान्त्यानि चत्वारि द्वितीयादीनि। किं यामं प्रो अयासीद्[3] (जै. सं. १५.७.४) इत्येतासु नैव[4] भवति। सत्यां गतौ अन्त्यसाम्नोरयुक्तापि प्रतिपत्तिः, इति द्वैतीयानि स्वास्वेव[5] सामस्वक्षु भवति। उक्तं च—पुरस्ताद् द्वादशाहीया अपि स्व एव साम्नः स्युः, इति। **पौरुस्तृचः**। पौरुमद्गस्य आद्यमानत्वात् तृचत्वं सिध्यति। यथा शदे यौधाजयस्याविद्यमानत्वात्[6] सिध्यत्येकर्चत्वं[7] न तथात्र। अनर्थकं हि ग्रहणम्, अन्यार्थतयास्य स्यात्। शदे तु यौधाजयस्य कौल्मलबर्हिषस्थानप्रज्ञापनेनार्थवद्ग्रहणमशक्तमस्य तृचतां-कर्तुम्। अत्रापि पौरुमद्गस्य सामतृचस्थानप्रज्ञापनार्थं ग्रहणमिति चेन्न। अयत्नेनाप्यस्य सामतृचस्य स्थाना-न्तराप्रसङ्गत्वाद्। रथन्तरनिवर्तनार्थमिति चेन्न। रथन्तरस्य वचनान्तरादेव स्थानान्तरप्रविष्टत्वात्। ततः सिद्धम्, तृचभावायैव पौरुमद्गस्येदं ग्रहणमिति। **रोरवनं**। सिद्धस्यास्कारनिधनस्य[8] रौरवानन्तर्यार्थमत्र ग्राह्यमाणत्वात् तृचभावः[9] सिद्धयतिग्रहणसामर्थ्यादेव सिध्यति। यदि ह्यस्य तृचभावो नाभिप्रेष्यत पूर्व-स्मिन्नेव वाक्ये प्राग् रौरवादित्युक्त्वा नेदं वाक्यं न्यासिष्यत।

**अभि-तासु**। अभ्युदितासु पूर्वितासु श्रुतिश्रुतास्वित्यर्थः। षोडशिसंस्थमसत्यस्मिन् विधौ सप्तदशतन्त्रत्वादस्योक्थ्यसंस्थता प्रवृत्ता, पूर्वविहितया षोडशिसंस्थया विकल्प्येतेति विधिरयमर्थवान्। घर्ता—भोज्यः। ऋगवचने प्राकृतीषु प्रसजेत् ऋनुष्टोमयो ऋतुनिधनर्तनिधने यथा। स्वास्विति वक्तव्ये

---

१ को. पसि०　　२ को. ०रनर्थकम्　　३ को. प्रेत्ययसीद्इ
४ को. नैवं　　५ को. कास्वेव　　६ को. ०स्याद्यमान०
७ को. सिद्धत्येक०　　८ को. सिद्धक्ष्यास्कार०　　९ को. तृभावः

ऋगादिग्रहणं, न ह्येता स्वोवादित्सयोपादीयन्त इत्येतमर्थमवबोधयितुम् । कुतः पुनरेतास्तन्त्रादुपादीयन्ते, यतः परीता परिस्वानप्रभृतयः ऋचः यशःकाशितोत्सेधादीनि च सामानि दशरात्रतन्त्रादेव प्रवृत्तशेषात्तानि सर्वाण्युपादीयन्ते । एवं च सति द्वादशरात्रिकेभ्यः[1] एवैता उपादीयन्त इत्यवगमितं भवति । कोऽयमृगन्वयविशेषः सामान्यविशेषो वा दुर्बोधः स्यात्, तं विवृण्वन्नाचार्यो मन्दमनसोऽनुगृह्णाति ।

एत...न्नस्य । किमिति वृषिचतूरात्रमतिक्रम्य जामदग्न्यः कल्प्यते । अत्र चतूरात्रक्लृप्त्या[2] तत्क्लृप्तेरिति तस्य विशेषः स्मर्तव्यो ऽसावर्थः योऽश्वमेधेऽवादि । वज्रचयः कौलमलबर्हिषस्यापोहार्थमेतयोर्ग्रहणम् । यद्येवं, तस्यैवापोहो वाच्यः । तथाप्यक्षरसाम्यात् इदमचोद्यं तृचयोरित्यस्तु, नार्थः ततो वाक्यान्तरं क्रियते—तृचयोर्योऽर्थः पूर्ववाक्येन प्रतिपादितः स तृचयोरेव सतोरेनयोर्भवति नैकर्चयोरिति । किमतः सिध्यति, सर्जनीये सोमसामपार्श्वं वापोह्य वज्रात्परं कौलमलबर्हिषं[3] सिध्यति । नित्याक्षरे वक्ष्यति त्रिवृदार्भव इति । ततश्चातूरात्रिकयोरेकर्चयोः[4] सभाक्षारे इति प्राप्ताविदमुच्यते—नित्यासु ज्योतिष्टोमिकीष्वृक्षु सत्योरुष्णिक्ककुभोः सभाक्षारे भवतः । पृष्ठ्यरात्रः पृष्ठ्यस्य षडहस्य । तन्त्राणि पञ्चानामह्नां केन वर्त्मना स्युरित्यपेक्षित उच्यते—अह्नोऽह्नमेकस्याह्नो भवति । नैकस्य तन्त्रं सर्वेषां, न च सर्वेषां तन्त्रमेकस्य । एवमपि संख्यावैषम्याद् यथासंख्यमिह न सिध्यति । ततः[5] षण्णामनियमेनान्यतमतन्त्र पञ्चानामनियमेन अन्यतमस्येति प्राप्ते उच्यते—यथानुपूर्व्यं प्रथमं प्रथमस्येत्येव तन्त्रनियमः स्यादित्यर्थः । एवं प्राक् पञ्चमादह्नः सिद्धमविरोधेन पञ्चमेऽत्राह्नि पञ्चमोत्तमयोस्तन्त्रयोर्गत्यन्तराभावात् समुच्चयः । अस्ति च न्यायः—अन्त्याल्लोपो वृद्धिर्वा इति । गौरिसामद्वयोरपि तृचभावार्थमुक्तम् श्यावाकः स्यात् । सिद्धवचनमान्धीगवस्य स्थाननियमार्थम् । तृचं गवं । तृच इत्यवचने समाननिर्देशानामित्यमुत्र परिभाषयैकर्चत्वमस्य[6] प्रसजेत् । अस्यां व्याख्यायामरिष्टाभावायैकः कार्यः स्यात् । सति हि तस्मिंश्चतुर्विंशताभावोऽस्य[7] प्रसजेत् । ततोऽन्यथा व्याख्यायते—श्यावाश्वमेकस्यां तृच आन्धीगवमिति तन्त्रतः प्राप्तौ श्यावाश्वस्य पुनर्विधिरिष्टास्वावर्तयति । एवं चेदकृत्वा श्यावाश्वस्य विधिमरिष्टस्य स्थाने आन्धीगवमिति वक्तव्यम् । सर्वमिष्टं सिध्यति । सत्यमेतदनुक्त्वा तु भवति । यदुक्तवदपरिहरन्नक्षरगौरवमिदं वाक्यद्वयमाचार्योऽन्यदप्यर्थं निष्पादयितुं न्यस्तवान् । अनयोः साम्नोरन्यतरस्यैकर्चतायामन्यतरस्य तृचतायां क्लृप्तिविषये क्वचिदसति नियमहेतौ अनियमेन प्राप्तायां श्यावाश्वमेकस्यामस्तु, तृच आन्धीगवमिति । सन्ति हि लोके व्यर्थान्यपि वाक्यानि । यथा विजय एव शस्त्रभृतामुत्तमो गुणः कीर्त्यते । अप्रमत्तं भीमसेनमरयो नासुरलम्[8] इति । चतुर्थेऽह्नि निधनकामस्य वा बृहतीसाम्नां वान्यतमस्याभावे यत्नः कार्यः । इतरथा पवमानस्य चतुर्विंशत्वं प्रसजेत् । सिद्धस्त्विह[9] निधनकामस्याभावः वैराजाभावात् । श्रूयते ह्यस्य वैराजता अथ निधनकामं वैराजम् इति । नचेदं सामच्छन्दस्यत्र वा विराजि गीतं, यतोऽस्य वैराजत्वं स्यात् । एवं तु विज्ञातव्यम्—विराड्भिरपि विना अभावादिदं वैराजमुक्तमिति । विराजश्चादह्नोपेताः । वैराजाभावात्तत इदमवधार्यम् । वैराजनिधनकामयोः अस्मिन्नहनि भावाभावौ युगपदिति । लिङ्गं च श्रुतावस्मिन्नर्थे दृश्यते तस्यैतदेव निधनं यमेतं वैराजस्य स्तोत्रे निर्मन्थ्यति इति । अष्टेडः पञ्चमेऽह्नि अनवकाशत्वान्न कल्पिष्यते । स्तोत्रलब्धावकाशस्तोत्रान्वयमेवाभ्यागतः पार्थमदात्[10] । अतः परमृषभः शाक्वरः प्राप्नोति, निधनजामिदोषप्रसङ्गात् । ततोऽसत्यपि वचने वोढमतिष्टवनं

---

१ को. ०त्रिक एवेभ्यः २ को. चतुरात्र० ३ को. कौल्ललब
४ को. ०चतुरात्रि० ५ को. तः ६ को. ०त्वमथ
७ को. ०ताभवस्य ८ को. नान तुमलम् ९ को. ०द्धस्स्त्विह १० को. पार्थदात्

च स्याद् यद्ययं प्रयुज्येत । नचास्य प्रत्यक्षविहितस्य सतः शक्योऽपोहः साम्नः कर्तुम् । न्याय्य एव[1] चास्यापोहः तस्मादह्नोऽयमर्थः[1] । वासो वयति । पशवो वै[2] सिमाः पशवः[2] रेवतयः पशवः ऋषभः ऋषभमेवैतच्च शुष्यति सृजन्ति इति । नार्मेधस्य[3] अतिरात्रत्वादिह प्राप्तान्यतिरात्रोत्थानि तान्त्रिकैरुक्थैरवगमितानि । तत इदं विधानमर्थवत् । पञ्च...तरत् । उक्तमहर्द्वयप्रकृतित्वमह्नोऽस्य, ततोऽसत्यस्मिन् वाक्ये विहितशेषस्योभयतो ग्रहणं प्रसजेत् । एवमिह भगवानाचार्यो द्वौ[4] त्रिरात्रौ द्वावेव चतूरात्रौ, एवं च पञ्चरात्रमचीक्लृपत् । तत्राश्वत्रिरात्राः कल्प्यादयः कल्पाः । तेषामश्वमेधकल्पानुगमेनैव क्लृप्तिः सिध्यति । तदुक्तम्—तस्यैव विशेषाः इति । एवं सर्जनीयादयश्चतूरात्रास्तेषां जामदग्न्यकल्पानुगमनेन । एवं तृतीयसवनमन्तनादयः पञ्चरात्राः तेषां प्रातस्सवनसन्ततानुगमनेन । तान् सर्वानपि उपासितगुरवश्छन्दोगपण्डिताः परास्यन्तोऽत्र दोषानीषत्कल्पानपि सतः कृतावसरत्वमप्रमाद्यन्तः कल्पयन्तु । क्लृप्तिवर्त्म तु वयमेकैकमेषा कल्पयतोऽपि परीक्षिष्यामहे । अश्वत्रिरात्रस्य तु तरत्समंदीधावति इति प्रथमराथन्तर्यः । हरिवतीचतुऋचे पवमानस्य ते काव इति । बहिष्पवमानं प्र सोमासो विपश्चितः (जै. सं. १. ५०. २) इति । गायत्रसंहितसोमसामसु आशिरामर्काः सहाक्षारे प्र सुन्वानायान्धसे (जै. सं १. ५६. ६) इति । औदलैडत्वाष्ट्रीसामाज्यदोहानि सोमसामसहाक्षाराण्येकर्चेषु । इतराणि तृचेषु । रथन्तरसाम्न इतरत् । द्वितीयस्य उपो षु जातमप्तुरम् (जै. सं. १. ५१. १) राथन्तर्यः प्रतिपदः । इषे पवस्व धारया (जै. सं. १. ५२.६) चतुश्चत्वारिंशत् सूक्तानि अप्रयमानि । एतमु त्यं दशाक्षिप (जै. सं. ३. ५१. १) इति बहिष्पवमानम् । कया नः (जै. सं. १. १८. ५) इति होतुराज्यम् । अस्य प्रत्नामनु द्युतम् (जै. सं. ३. ११. १५) इति गायत्रम् । आमहीयवैडसौपर्णाशुभार्गवैष्टंभानि[6] अभि सोमास आ यव (जै. सं. १.५३.८) इति । द्विहिंकारवामदेव्यगायत्रपार्श्वपौरुहन्मनहारायणपृष्ठसंतनिशुक्रमेधातिथान्तरिक्षदैर्घश्रवसानि शिशुमतीष्विति । निधनमान्धिदोहमन्त्यं राधोवाजोयमच्छावाकस्य त्रैरात्रिकं तृतीयसवनम् । प्रागग्नेरर्कान्मौदलकाक्षीवकप्रमंहिष्ठीयानि । प्रागरिष्टात् संकृतिश्यावाश्वपां च वाजौदलानि । पौरुहन्मनहारायणपाञ्चवाजौदलान्येकर्चेषु । तृचेष्वितराणि । बृहत्साम इतरत् । तृतीयस्य तृतीयच्छान्दोमिकं[7] बहिष्पवमानं । प्रतिपद्राथन्तरी होता देवः (जै. सं. ४. २६ ८) इति होतुराज्यम् । तृतीयस्याह्न इतराणि । त्रैरात्रिकमत ऊर्ध्वम् प्रागृषभाद् । बाभ्रवं प्रागाजीदोहात् । गर्गदेवस्थाने रथन्तरं प्रयोक्तव्यमितिचेन्न । अस्य त्रिरात्रसामतया ब्राह्मणे विहितत्वात्, तत्र त्वस्याग्रहणमनुमेयाद् विध्यन्तरात् । प्रथितं चेदं ब्रह्मसाम जराबोधीयात् । आश्वसूक्तमेकत्रीह्येकर्चं न स्यात् । क्लृप्तिरेषा एव गोविनतस्य सर्जनीयस्य । जामदग्न्यवत्[8] त्रिवृत्त्वादेकच गायत्रमपोढम् । सोमसाम वज्रं कौल्मलबर्हिषं यौधाजयमिति सामतृचः । क्लृप्तम् इतरत् । द्वितीयस्यापोढम् । नवर्चम् ऊर्ध्वेडसोमसाम । एकस्यां क्रौञ्चषण्डौ च । क्लृप्तमितरत् । तृतीयस्य पार्ष्टिकं बहिष्पवमानं । पौरुमद्राष्कारनिधनबृहत्कपौष्कलान्येकर्चेषु । क्लृप्तमितरत् । अपोढं दैर्घश्रवसम् । संयोगोत्सेधनिषेधच्यावनश्रुधीयत्वाष्ट्रीसामान्येकर्चेषु । द्वितीयस्य सोमसामनी । अन्तरेण दैर्घश्रवसपृष्ठे । एकर्चयोः तृतीयस्य पौरुमद्राष्कारनिधनतृचयोः । चतुर्थस्य सत्रासाहीयस्य आथर्वणशैशवानि[9] । तृचेषु पञ्चमस्य सौपर्णादानि त्रीणि ।

सन्ततेभ्यः परे हीनाः बहवो ब्राह्मणेरिताः ।
सिद्धैरहोभिः प्रोक्तत्वात् स्तोमकल्पेऽपि नोदिताः ।।

---

१ को. न्याय्यमेव चास्यायोहमस्मा० २ को. वैशिमा ३ को. नार्मेकस्य
४ को. द्वा ५ को. दोषमीषत्क० ६ को. महीयव०
७ को. छान्दोमिक ८ को. जामदग्न० ९ को. शैशवाणि

संसंग्ययोस्त्वहोरूपं विपृतं सप्तरात्रयोः ।
तामुक्त्वा दशरात्रात् प्राक् कल्पाकांक्ष्यहरस्ति नः ॥
तयोरपि सुकल्पत्वादाचार्यो यावदर्थवान् ।
पञ्चरात्रात् परावस्थो दशरात्रमुखः क्रतुः ॥

**अग्नि...स्तन्त्रे** । अग्निष्टुतस्तन्त्र भवति अहर्भवति । कतमस्याहर्गणस्य कतमदिति चेत्, कतिपये त्विदमवगमयिष्यति । सर्वस्याग्निष्टुद्दग्विधानस्य प्राप्तावपदिष्यते । **त्रिवृत्...मानि** । सामानि त्वस्य यानि त्रिवृतो नः प्रथमस्य दाशरात्रिकस्य तानि स्युः । ऋक्तन्त्रमेवाग्निष्टुतमर्थादासीत् । **त्रिवृत्...स्तोमः** । यदहरदस्संसग्ययोरुपनिर्दिष्टं तदिदमग्निष्टुद्भूतं दशरात्रस्याद्यमिदमहरित्यर्थः । अग्निष्टुदिति वचनं परतन्त्रे श्रुतस्य त्रिवृदग्निष्टुन्मुखस्य दशरात्रस्यास्मादन्यत्वमाविज्ञायीति । अयत्ने हि प्रसिद्धे नैव त्रिवृताग्निष्टुता सिद्धक्लृप्तिनैकाहेन यदमुष्य पञ्चदशरात्रस्य पञ्चममहरासीत् तेनैव प्रथमेनाह्ना दशरात्रान्तरं तदस्माभिर्ज्ञायते । सर्वविधानात् क्लृप्तमितरदिति नोक्तम् । इन्द्रस्तोमस्य तन्त्रे परमहर्भवति । शेषः बार्हतानि पृष्ठानीति कालेयार्थम् । **वैश्व...कयोः** । सिद्धत्वादाष्टादंष्ट्रस्य वैश्वमनसस्यैव[1] ब्रह्मोत्थता विधेया । सत्यमेतत् । सिद्धे न त्वाष्टादंष्ट्रेणासिद्धस्य वैश्वमनसस्य संयोज्यविधानमुत्तरत्राप्याष्टादंष्ट्रेच्छावाकसाम्नि सति वैश्वमनसमेव ब्रह्मसाम स्यादित्येवमर्थं ततः संसदामप्येकादशेऽह्नि पञ्चदशरात्रवैश्वमनसमेव ब्रह्मसाम । त्रिवृत्तन्त्रे त्रिवृत्स्तोमो वैश्वदेवस्त्रिवृद्वैश्वदेवस्तस्य तन्त्रे परमहर्भवति । सप्तसाम्नां पवमानयोस्तूत्तरयोः साम्नां क्लृप्तिः सप्तदशस्य तन्त्रात् करिष्यते । करिष्यमाणायाः पवमानक्लृप्तेः प्रतिज्ञानमिदमनर्थकम् । नानर्थकम् । तान्त्रिकसामप्रसंगनिवर्तनार्थत्वात् । यद्येवं मा भूदिदं[2] वाक्यं त्रिवृद्वैश्वदेवस्य तन्त्रमिति वक्तव्यम् । सामतन्त्रं तदयुक्तं न प्रसजति । सत्यमेतत् । प्राकृतं तु सामतन्त्रं प्रसजेत् । ततश्च तन्निवर्तनार्थमिदं वक्तव्यमेव स्यात् । **सप्तदशावच्छेदः**[4] । अस्मिंस्त्रिवृदार्भवे स[3] सप्तदशावच्छेदः[3] स्यात् । सप्तदशस्याह्नो य आर्भवस्तस्यावच्छेदः कार्यः । गायत्रपाष्ठौहे वाचस्सामशौक्ते इत्येवमस्तु, न गायत्रसंहिते सहपौष्कले इति ।

ननु सप्तदशस्य पवमानयोः साम्नामिति प्रतिज्ञानादेवायमर्थः सिध्यति । न सिध्यति । तस्य बहुविषयत्वात्तदपवादभूतोऽयं त्रिवृदार्भवस्तेनैव रूपेण प्रसजेत् । बहुषु पुनरनुष्टुप्सामसु के द्वे इत्यपेक्षिते उत्तरं वाक्यं न्यस्तम् । चतुस्सामानि ऋते निर्ऋते निधनकामात् । तदुक्तं पञ्चरात्रे—बार्हतीसु अनिरुक्तास्विति, प्राकृतीषु मा भूवन्नित्येतदर्थम् ।

ननूपहव्यतन्त्रादेव निवृत्ताः प्राकृत्यः, एतर्हि यदयं तन्त्रतः प्राप्ता ऋचः पृष्ठेषु पुनर्विदधाति तज्ज्ञापयति—राथन्तराणि पृष्ठानि, बार्हतानि पृष्ठानीति वा । अतस्तन्त्रगता ऋचो नापेक्षत इति । ततः पञ्चरात्रादिष्वेव पृष्ठानि, न पार्ष्ठिकीष्विति सिद्धं भवति ।

**यद्वा...वन्ति** । बृहत्पृष्ठवत् बृहदानुष्टुभोऽपीति । श्यावाश्वान्धीगवे च यद्वाहिष्ठीयवत्स्वेवान्तर्भूते[5] नानदस्यार्थे[6] त्वपोहो[6] वक्तव्यः[7] । इतरथा अष्टादशत्वमार्भवस्य प्रसजेत् । यदि च पूर्वं यद्वाहिष्ठीयवद्भ्चो नानदं स्यात् अथोर्ध्वं प्रथमयानुष्टुभा समाप्येत । कावानन्तर्यात् स्वारसन्निपातश्च । ततः

१ को. श्वैमन०    २ को. द्वितं    ३ को. सप्तक्छेनः
४ को. स इति मूले नास्ति ।    ५ को. ०हिष्ठीयवस्येवा०    ६ को. नानदस्यर्थित्वपोहो
७ को. वक्तव्यम्

एतान् दोषानपगमयन्नाह—अग्निसंस्थस्तोमकल्पतः सिद्धापि संस्था नानदार्भवार्थमिह कीर्त्यते[1]। यत इयमग्निष्टोमसंस्था[2], तत एते दोषा नापतन्तीत्यर्थः। षोडश्याश्रयं हि नानदम्। तदिह षोडशिनोऽपायाद पैतीति सिद्धं भवतीति। एवं चेदियतैव ग्रन्थेन प्रस्फुटमयमर्थो वाच्योऽपोढं[3] नानदमिति। सत्यमेतत्, किन्तु सुज्ञानार्थासु सर्वास्वेवर्क्षु[4] मेधाभिमानिनो न गुरूनुपसेवेत। इतरतस्ततो दुष्टविद्यः कः।

**तस्मिन् साम्नां**। तस्मिन् सर्वस्मिन्नहनि साम्नां क्लृप्तिः पञ्चमस्याह्नस्तन्त्रात् करिष्यते। अस्य वाक्यस्याक्षेपपरिहारौ तावेव; यावुक्तौ सप्तदशस्य। पवमानयोः साम्नामिति वाक्ये पृश्निर्नेयम्[5]। पृश्निन ऋचो विशालवाक्ये अवोचामः। **सूर्यमन्त्यम्**। कृतादेव यत्नात् शिशुनीष्वौशनवत् सूर्यमतीषु कावस्सिध्यति। वैषुवतीषु सूर्यवतीषु चान्यासु न। सूर्यवतीष्वस्य भावार्थमिदमुक्तम्। का स्विति चेत्, प्रकृतीषु। ता अपि सूर्यवत्यः। युक्तिं चात्र ब्रूमः—सूर्यवतीष्वृक्षु स्तावमस्मिन्नहनि[6] विहितम्। ईदृशा हि विधयो द्वादशरात्रस्याह्नः श्रुत्यन्तरे। त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति। पञ्चदश उक्थ्य ऐन्द्रीषु, त्रिवृदग्निष्टोमो वैश्वदेवीषु, पञ्चदशो ऽग्निष्टोमः प्राजापत्यासु, एकविंश उक्थ्यः सौरीष्विति। न श्रुतम् वैषुवतीष्विति। तत एवं मन्तव्यम्—सौरीणामृचां सभ्यावस्थितानां परिजिघृक्षया विषुवतस्तन्त्र इत्युक्तम्, न विषुवदपेक्षयेति। तथा च सति प्रकृतौ सतीः सूर्यवतीरुत्सृज्य वैषुवतीनां ग्रहणमयुक्तं भवति। किं च वैषुवत्यः सूर्यवत्यो द्वितीयेऽह्नि विनियुक्ताः यातयाम्न्यः[7]। प्राकृत्यस्तु प्रथमादह्न आग्नेयीभिरवर्तितत्वाद-यातयाम्न्यः। क्वचिद्विनियोगमुपलिप्य च। ततः साधूक्तम्—प्राकृतीष्वेवात्र कावमिति। त्रीण्युक्थानि पञ्च-माहस्सामविधेरेव सञ्जयादीन्युक्थानि सिध्यन्ति। साम्नामिति निर्देशाद् ऋचः पाञ्चमाह्निक्यो नेहाग-च्छेयुः। ततः प्राकृतीषु सञ्जयादीनां प्रसङ्गविधिरयम्—यास्वेव पञ्चमेऽह्नि तास्वेव भावयति पुनरयं शब्दभेदः कृतः पूर्वं पञ्चमस्येति। अको ग्रहणमिह त्रिणवस्येति। किमिहैवैवं चोदयति भवान्, सर्वत्रापि ह्याचार्योऽहानि निर्दिशन् पञ्चानामहराख्यभूतानां स्तोमनामपृष्ठसंस्थासंख्याननामधेयानां येन केनचि-न्निर्दिष्टे तत्राय क्रमो नास्तीति निर्दिशति। नैषामेकेनैवैकमहः सर्वस्य। प्रथमस्यात ऊर्ध्वं तत्र इति चाहस्त्रिवृतोऽह्न इति च, एकविंशस्यात ऊर्ध्वमिति च, त्रयस्त्रिंशस्य गायत्रीति च, षष्ठस्यात ऊर्ध्वमिति च, चतुश्चत्वारिंशत् सूक्तानीति च, अष्टमस्याह्न इति च।

नन्वतो निर्देशवैचित्र्यादर्थविशेषाः प्रादुर्भवन्ति। ग्रन्थालङ्कारार्थमेव पुनः केवल शब्दनानार्थं कृतमिति मन्तव्यम्। अथवा, अर्थविशेषं शक्ताः कल्पयन्तु। **गाय षवेषु**। गायत्रात् परत्वमेषां तन्त्रत एव प्रसिद्धम्। सत्यमेतत्। न तु क्रमेणैतानि गायत्रात्पराणि भवितुमर्हन्ति। तेन क्रमेण स्युरित्येवमर्थं तृतीयं प्रथमं चतुर्थमिति। एवमभित एष क्रमोऽपि तन्त्रत एवैषामिह सिध्यति। एवं तर्हि, नियमोऽस्य क्रमस्य क्रियते—यत्रैषां न गायत्रात् परत्वमस्ति तत्रायं क्रमो नास्तीत्येव तदर्थः। ततः षष्ठे नाकसदि विश्वामित्रस्तोमे माकमेधेषु चैषामानुपूर्व्येणैव प्रवृत्तिः स्यात्। प्रथमं चतुर्थमित्ययत्ने हि क्वचिददृष्टो क्रमः सर्वत्र प्रसजति।

**अग्नि-संस्थं**। विधावस्मिन्नसति तान्त्रिकी संस्थासिद्धया विकल्प्येत। यद्येवं, तृतीयमहर्वैश्व-देवत्वादुक्थमपि स्यात्। एवमेवाभविष्यद् यदि स निर्देशः प्रथमविहितस्यैव वैश्वदेवस्य सतोऽभविष्यत्।

---

१ की. नानदाभावार्थमिह २ को. इदम० ३ को. अवोढं
४ को. सर्वासु वाक्षु ५ को. पृश्निलेयम् ६ को. स्तावा० ७ को. यातयाम्नः

चातुर्मास्यावयवभूतस्य तु विनापि यत्नाद् भवति। गणावयवत्वमग्निष्टोमसंस्थत्वं च तस्यानेनाह्ना[1] तुल्यमिति।

नन—रति। प्र स्वानासः (जै. सं. ३.३५.४) इति तिस्रो नेहोद्धरति। सर्वमहः अविकृता सजित्वस्तोमक्लृप्तिः। सवस्तोमो ऽतिरात्रेषु। मजित्वस्तोमविध्यन्तरे स्तोमकल्प एव साधीयः प्रतिपादितः। क्लृप्तोऽयं दशरात्रस्त्रिककुप् नाम, यस्य विधिः अथैष त्रिककुप्। प्रजननकामो हैतेन यजेत इति। यौ[2] त्वितरौ पञ्चयज्ञक्रतुः सप्तयज्ञक्रतुरिति दशरात्रौ, ययोः क्लृप्तैरेवाहोभिः सह[3] दशयोः[3] न कल्प्यमिति। क्लृप्तस्त्रिष्टोमोऽग्निष्टोम इति चेत् क्लृप्त एवायमुत्तमो राजसूयक्रतूनां ततः सिद्धो भवति। गौरीवितं श्यावाश्वस्य स्थाने महात्रिककुभोऽनुत्तमान्यहानि द्वादशाहिकान्येव। तस्याचार्येण क्लृप्तमिति अकल्पितस्य श्रुतिविहिता विशेषास्तेषां वृत्तावर्थापत्तिः। तांश्च कांश्चित्, स्तोमह्लासकृतं च स्तोत्रीयाह्लासं वयमिह कल्पयिष्यामः। प्रथमस्याह्नः शन्नो देवीरभिष्टये (जै. सं. १.३.१३) इति यज्ञायज्ञीयं, द्वितीयस्य तं गूर्धया (जै. सं. १.१२ ३) इति साकमश्वं यज्ञायज्ञीयस्य स्थाने। तस्य स्थाने सत्रासाहीयम्। अयुक्तमस्य साकमश्वानन्तर्यम्। स्वारत्वात्। अन्यत्कल्प्यमिति चेन्न, स्वारं मैत्रावरुणमाम इति श्रुतेः। सर्वत्र चाचार्येण तदनुवर्तनात्। यस्त्विह परिहारः कावसाकमश्वयोरजामिकृत्, यदन्तरा सोमायति, अन्तरोत्थानि शस्यन्ते अन्तरा ग्रहा गृह्यन्ते, तेन अजामीति स एवैनयोरपि भवति। तृतीयस्याह्नो तृतीया प्रतिपत्। पञ्चर्चं बहिष्पवमानम्। अथ राथन्तराणि बृहतीसामानि न श्यावाश्वारिष्टे इति गायत्रं वैष्टंभं, सत्रासाहीयमिति सामतृचः गायत्रपाष्ठौहे एकर्चयोः यज्ञायज्ञीयस्य स्थाने। अग्ने वाजस्य गोमतः (जै. सं. १.११.३) इति श्रुधीयमन्त्यं चतुर्थस्य। चतस्रोऽन्त्या उक्तस्य षड्ऋचस्योद्धरेत्। आथर्वणाभीषववृहत्कातीषातीयान्येकर्चेषु यज्ञायज्ञीयस्य स्थाने। स्वासु विशोविशीयं, पञ्चमस्य चतुऋचं, सहासस्तिनित्याभृग्भ्यामुद्धरेत्। शाकलानूपान्नेयानि अगायत्रतन्तस्मिगौरीवितकावान्यार्भवसामानि चैकर्चेषु। ऊर्ध्वं गौरीवितादान्धीगवमेकस्याम्। यज्ञायज्ञीयं तिसृषु। यस्य स्थाने स्वासु सञ्जयं, तस्य साकमश्वम्, षष्ठस्योत्तरं दशर्चम्। उत्तमे च पूर्वस्य द्वौ, चतुऋचं चोद्धरेत्। वाजदाभरीप्रभृतीनि प्रागौशनादेकर्चेषु। अग्नोदेशांमदश्यावाश्वे आर्भवसामान्येकर्चेषु। अगायत्रबृहत्कावानि यज्ञायज्ञीयस्य स्थाने। मूर्धानम् (जै. सं. १.७ ५) इति दैर्घश्रवसं सप्तमस्याह्नो न नवर्चादुद्धरेत्। गायत्रीसाम्ना पञ्चममामहीयवमनुष्टुप्साम्नां यज्ञायज्ञीयस्य स्थाने। नरा[4] (जै.सं.३.५७.३) इति बृहदाग्नेयमष्टमस्य पञ्चर्चं रौचत्रिचादुद्धरेत्। चत्वारि सौमित्रादीन्येकर्चेषु। द्वैगतं हारायणं रौरवमिति सामतृचः गायत्रीसामान्येकर्चेषु। प्रथमद्वितीयानि प्रागौदलादान्धीगवमनुष्टुप्सामान्येकर्चेषु अप्रथमोत्तमानि। यज्ञायज्ञीये नरा इति बृहदाग्नेयमष्टमस्थासुसमन्तं नवमस्य तिस्रः। प्रो (जै. सं. १. ५७. ४) इत्याद्यष्टर्चस्य षड्ऋचानि चोद्धरेत्। पृष्ठात् परं मैधातिथं मध्यन्दिनसामान्येकर्चेषु। गायत्रयशऔशनानि प्राग्विधर्मेण आन्धीगवमगायत्राणि गायत्रीसामानि अनुष्टुप्सामानि चैकर्चेषु। यज्ञायज्ञीयस्य स्थाने समिद्धम् (जै. सं. ४.१५.१०) इति रायोवाजीयम्। न साध्योऽहं सामैकं महात्रिककुबर्हति। सिद्धमाम्नायमात्मार्थमर्हत्युपसदादिवत्। अतो न यज्ञायज्ञीयमुत्तमेऽह्नोरुपान्त्ययोः पञ्चमे सप्तमे चोक्तम्। अन्येष्ववसरेष्वय दशममहरैकाहिका[6] विश्वजित्। बृहतस्त्रिचम्[7] आ नो यज्ञम् (जै. सं. ४.१६.३) इति। ये पुनः षडुत्तरे दशरात्राच्छ्रुतौ श्रूयन्ते ते सिद्धैरेवाहोभिस्तायन्त इति अनुदाहृता[8] आचार्येण। अथायमेकादशरात्रः

१ को. तस्यानेन्हा ? २ को. या ३ को. सदृश्योः ४ को. निर
५ को. रेश्वनं ६ को. ०काकिको ७ को. स्त्विच ८ को. ०दाहृता

परशाखाविहितः पौण्डरीको नाम तस्यादावभ्यासाम्यः षडहः, स पृष्ठच एव। तत्र विकारं वक्ष्यामः— प्रथमस्याह्नो गायत्रसंहितत्वाष्ट्रीसामानि। तृचेषु द्वितीयस्य तिसृषु गौरीवितं, तृतीयस्य तृचयोर्गौरीवितत्वाष्ट्रीसामानि। चतुर्थस्यानुष्टुप्सामानि। तृचेषु पञ्चमस्यानुष्टुप्साम्नां पञ्चमं श्यावाश्वं, षष्ठमान्धीगवम्। षष्ठस्योर्ध्वं बृहत आन्धीगवं, तत्त्वनूढं सामसु दुरूहं चेत्युत्सृज्यम्। श्यावाश्वमविहितमस्मच्छ्रुतौ उद्वच्छान्यदे तृचे कुर्यात्। उद्वच्छान्मध्यमायामनूढमयमिति चेदयमदोषः। व्यूहत्वान्नह्यस्ति नाम्नास्यमाने। इत्थं...नु। इत्थमिति स्वरवर्णयोस्तद्गुणेषु वा सन्देहः प्रादुर्भवति। छन्दोमेष्वविकारः। दशमे चाह्नि तत्र यदूर्ध्वं मानसीनाद् वाग्विसर्जनान्तबहुयजमानयोगात् सत्रार्थं नाहीनार्थम्। उभयविषयो हि द्वादशाहः, अहीनश्च सत्रं च। अहीनो ऽहीनानां प्रकृतिः, सत्रं सत्राणाम्। अहीनश्चायं[1] पौण्डरीकः। ततोऽस्मिन् मानसीनादुपरितनस्याप्रसङ्गः। वाग्विसर्गान्तस्य एकादशमहरुदयनीयोऽतिरात्रः। तद्वत्[2] षोडशी द्वे स्तोत्रीये पूर्वस्याह्नो विराजमतीत इति वादादशोडशिकातिरात्रत्वं द्वादशाहस्य सन्ननत्[3] प्रकृतीषु सत्रेषु वा हीनेषु वा प्रवर्तते। यथा गवामयनस्याषोडशिकातिरात्रत्वं, नादित्यानामयनादिषु कृताहीनानाम् क्लृप्तिरनन्तरं यानि स्तोमकल्पस्यैव चतुर्थेऽध्याये प्रदिष्टानि तेषां द्वादशरात्रादीनामवसरः। सिद्धरूपाणि त्वेषामहानि न कल्पनाकांक्षाणि। संसदामयने तु कतिचिदहानि प्रतिपाद्यस्वरूपाणि सन्तीति तेषामाचार्यः कल्पमारभते।

ननु संसद्भ्यः प्राक्तनयोरपि चतुर्विंशातिरात्रयोः सन्त्येव कल्पनाकांक्षाण्यहानि। सत्यमेतत्। यानि तु कल्पयिष्यन्ते संसत्सु, तैरेवैषामपि क्लृप्तिरवधार्यस्वरूपा भविष्यति। संसदस्तन्त्रे[4] योऽसौ संसदर्थभूता[5] ज्योतिरग्निष्टोमः स बृहत्साम्नस्तन्त्रे इति मा भूत्। कौञ्चवति बृहत्साम्न इतरात् इत्यस्तु, यथान्यत्र। अत्र ब्रूमः—बृहत्साम्न इति नेदं पुनः सोमादीनां प्रकृतिभूतस्य सिद्धस्य बृहत्साम्नो ग्रहणम्। कस्य तर्हि, यो द्वितीय एकाहविधासु तस्य। कुत इदमुपलभ्यते, अत एवान्यत्र दृष्टात् प्रकृतिनिर्देशप्रकारात्। अथ बृहद्रथन्तरपृष्ठः सर्वाग्निष्टोमः षष्ठ्यः षडहः तत्र तृतीयादिष्वहस्सु बृहद्रथन्तरप्रयोगोऽर्थसिद्धः। तत्र केचित् तृतीयपञ्चमयोर्नौधसम् इतरयोर्नैक्यमिच्छन्ति[6] तेषामयमभिप्रायः—यथेह एवं दार्ह्च्युतं, यथा च प्रकृता गोतमस्य मनस्यादितन्त्रप्राप्तस्यश्च तथैवेनयोरूहः कर्तव्य इति। गुरवस्त्वागमपरंपरागत कृतान्तमुपदिशन्ति[7]। अन्त्येव चतुर्ष्वहस्सु एकैकमब्राह्मणप्रणीतं साम तद्दचो ह्यद्वयोरेकर्चयोस्तृचता संपाद्येति, ततो हारायण श्यावाश्वं, गौगवं श्यावाश्वमित्यपोह्य पौरुमद्गाष्कारनिधने, नानदान्धीगवे, मानवन्नामे, उद्वच्छान्मदे च तृचेषु प्रत्यपादयत्[8]।

अपरस्तु सन्देहो बलवानस्ति। ब्रह्माच्छावाकसामानि किं प्राकृतानि किं वा द्वादशाहीयानि इति। किं तत्र युक्तम्। आचार्यस्य हि प्रवृत्तिरेवमनुरुद्धा भवति। यत्र ह्याचार्यो द्वादशाहतन्त्राण्यहानि वैरूपाद्युत्सर्गेण कल्पयति, प्राकृतान्येव तत्र ब्रह्माच्छावाकसामानि परिगृह्णाति। तथा चतूरात्रे पञ्चरात्रे इति क्लृप्तानि। क्लृप्तिः[9] क्लृप्तानुसारिण्येव[9] युक्ततरा भवति। वार्हद्गिरराजोवाजोयगतस्यार्थवाद एवमेवानुविहितता भवति। संगतार्थो भवति, ततः सिद्धं, प्राकृतान्येवेति। ऋषभमपि शाक्वरम्। अनयैव युक्त्यापोह्य तस्य स्थान आन्धीगवः कल्पयितव्यः[10]। निधनस्य तु प्रागेव वैराजाभावे ऽभावो वर्णितः। तस्यापि स्थाने सत्रासा-

१ को. ०श्चानोयं　२ को. तयवस्　३ को. सत् न　४ को. सांसस्तन्त्रे
५ को. संसदर्भूतो　६ को. योश्यैकमि०　७ को. न्तमुपदिशति
८ को. प्रतिपादयत्　९ को. क्लृप्तिक्लृप्तानु०　१० को. ०यितव्यम्

हीयं भवति । परमनियुक्तं त्रयस्त्रिंशमहः । तिस्र इत्याद्यानां तिसृणामृचां ग्रहणम् । अन्त्ये द्वे उद्धरेदित्यर्थः । अग्निष्टोमसंस्थमिति सप्तमाहस्साम्नामेकदेशस्यापवादः । परमनिरुक्तयोरह्नोर्मध्यवर्तिनः षडहस्य प्रथमः । अत्रिवने अत्रिचतूरात्रस्य ये ते अास्याह्नो द्वे सवने भवतः । सत्स्वपि चतुर्षु प्रातस्सवनेषु तावत्स्वेव च माध्यन्दिनेषु प्रथमातिक्रमणमसति विशेषहेतौ अन्याय्यमिति । ये प्रथमस्याह्नस्ते एवेति सिध्यति । षोडशसंस्थायाः पञ्चदशादिरात्राणामुक्थ्यसंस्थावत् तन्त्रत एव प्राप्तेरयं विधिरनर्थकः[1] । नानर्थकः[1] । चतुर्थेऽह्नि षोडशिसंस्थे क्वचिदभावष्षोडशिसंस्थे क्वचिदार्भवः षोडशिनः इति ज्ञापनार्थत्वात् । ऊर्ध्वं[2] किं काक्षीवतमुषसस्सामदक्षोनिधनं[3] च नैव भवति । ततः काक्षीवतं[4] प्रमंहिष्ठीयस्वाशिरामर्का एवं क्रौञ्चेषोवृधीययोर्विपर्यासेन रैवतमदावनीषोवृधीयानामैडस्वारनिधनवतां ताम्यु ह वै योजामि यथापूर्वं कल्पयेदैडमेव प्रथमं कुर्यादथ स्वारमथ निधनवदित्येतत् इत्यनुरोधेन प्रवर्तनार्थमेवं कृतम् । तस्य विशेषाः उत्तरस्यानिरुक्तस्य तन्त्रे । अन्ये ऽनिरुक्ताविशेषाः स्युः । यानि पूर्वयोश्चतुर्विंशतिरात्रयोश्चत्वार्यनिरुक्तान्यहानि तदर्थमिदमुक्तम्[5] । ततस्तानि चत्वार्यपि एतदहरुपजातसामविशेषानुत्सर्गेणाहनि कल्प्यानि । दीर्घतृचा गायत्रपार्श्वाविपरमृतेन इयं स्यात् । सामतृचः पूर्वस्मादनिरुक्तात् प्राप्नोति । तस्य भावे ज्ञापकमनुस्तोमव्याख्यायामेवावोचाम[6] अभावश्चेदासीत् । दैर्घश्रवसस्य समन्तस्य च दोषोऽय प्रादुर्भूतः । गायत्रपार्श्वमुत्सेधश्च निधनवत् सामद्वयं सन्निपतितम् । आचार्येणैव त्वनयोः तेष्वपतितत्वादस्य[7] दोषस्यापवर्तकमनुमीमहे वचनम् । यथा पवितौ यशउत्सेधयोः । त्रिककुभौ नवमेऽन्हि अर्कपुष्पोत्सेधयोः, यथा च गर्ग[हर ?]मध्यमेऽन्हि अहोरात्रपृष्ठेषु ।

चिन्त्यात्राजामिताचार्यो　विध्यन्तरमनाश्रितः ।
लक्ष्मीरिव हरेर्यत्र.........स्य हृदये त्रयी ॥
अस्माभिर्वृत्तिकल्पस्य व्याख्या..................।
व्याख्यातानि..................................॥
ब्राह्मणाभरणं ब्रह्म सामरूपं सहस्रधा ।
भिन्नं भूतिमतो वन्दे जैमिनेर्मुखनिस्सृतम् ॥
क्वाहं मोहान्धकारस्थगितमतिपथः क्वैष मेधंविगाहै—
राकीर्णो वाक्यदुर्गैरवगमितमतिव्यक्तिराचार्यकल्पः ।
व्याख्यातो ऽभूत्तथापीश्वरगुरुकृपया दुर्ग्रहांशोऽत्र यस्मिन्,
एकाहाहीनसत्रात्मकमखविधयो ब्राह्मणाम्नायसिद्धाः ॥

इति जैमिनीयश्रौतसूत्रवृत्तौ विकृतिकल्पवृत्तिः
समाप्ता

---

१ को. ०र्थकम्　　२ को. ऊर्ध्वतीनि?　　३ को. काक्षीवितमु०
४ को. काक्षिवतं ?　　५ को. तदर्थमिह　　६ को. ज्ञापयथाकर्मनु०
७ को. सप्विपाति तत्वा०

# अथ पर्यध्यायः

सरसममृतं........................त्रयीमयमक्षरं,
सरसिजभुवः चत्वारस्ते जयन्ति मुखेन्दवः[1]।
नयनकमलैर्निद्रामृष्टैर्नयन्ति जगन्ति[2] ये,
प्रलयमुदयं निद्रापायप्रकाशितकान्तिभिः ॥

अथ भगवानाचार्यो जैमिनिः सूत्रं कल्पं च प्रणीय तदर्थसन्देहनिरासाय तदनुक्तार्थवस्तुक्लृप्तये च द्वादशाध्यायीमिमां[3] व्यधत्त। सैषा पर्यध्यायाख्यया[4] प्रसिद्धिमेति। अध्यायशब्दः[5] कर्मसाधनमाचार्याधिगतकल्पसूत्रवाचिनं प्रकल्प्य परितोऽध्ययं वर्तत इति वा। परिशेषार्थोऽध्यायगण इति वा। अस्य पर्यध्यायता विचार्या[6]। तत्रादौ कल्पसूत्रस्थं सन्देहपदं निर्णयोपायविवरणाय प्रतिज्ञेयं न्यस्ता। अथेत्यधिकारार्थः। आनन्तर्यार्थो वा। अतः शब्दो हेतौ। उभयमप्यनुक्रान्तापेक्षायते। अस्माभिः कल्पसूत्रऽनुक्रान्ते ऽतस्ताभ्यामनन्तरं गतसन्देहापोहाय प्रयतामह इत्ययमभिप्रायः इह निपातद्वयेन विव्रियते। एकाहिकानि, आहीनिकानि, सात्रिकाणि च सवनत्रयात्मकानि ज्ञायन्ते। अनेनेति कल्पोऽयमिदं[7] चात्र तस्य [व्या]ख्यानम्[8]। आहन्तात्रिक। आहन्तात्रिकस्य यथान्यायप्रतिज्ञां न्यायानुगतां प्रतिज्ञामाचार्याणां व्याख्यास्यामः। कल्पस्य व्याख्यानं प्रति सर्वाचार्याभ्युपगतो न्यायानुगतः समयो वक्ष्यत[10] इत्यर्थः। अपरो मार्गः[11]। यान्यह्नां स्तोमपृष्ठसंस्थासंख्याननामानि तेषामहर्ज्ञानित्वं वक्ष्यते[12]। पञ्चतयमहर्ज्ञात्रिमिति। तानि व्याख्यायन्ते कल्पेन। ततोऽयमहर्ज्ञात्रकः कल्पः पूर्ववदितरेभ्योऽन्यः[13] पञ्चम इति[13]। आम्नायः ऋक्समाम्नायः ब्राह्मणप्रसिद्धः[14]। सहकारिणोऽध्वर्युब्रह्मचः सह कुर्वन्ति आर्त्विज्यमिति तेषां प्रत्ययोऽवगमः। सविकारिप्रत्ययसंस्थासमापनं, तस्यानुकूल्यं, संस्थावशं न्यायो मीमांसा एतैः पञ्चभिर्धर्मैर्हेतुभिः कल्पमपेक्षेत अवगाह्येक्षेत। प्रज्ञया कल्पशब्दस्य यज्ञशास्त्रोपलक्षकत्वं युक्तमिति कृत्वा सूत्रमप्यपेक्ष्यम्।

राथन्तरबृहद्वामदेव्यान्यग्नेरुपस्थितौ ।
प्रसक्तान्यविशेषोक्तेरेकर्चेषु तृचेषु वा ॥

एकर्चेष्वेव आधाने तृचपाठोऽर्थवत्तया ।
तृचाम्नाये न्यधिकारे तृचेष्वेव नियच्छति ॥

चतुरेकर्चकल्पौ च प्रकृतौ पृष्ठकल्पवत् ।
अव्यवस्थाश्रुतेः प्राप्तौ आम्नायेन व्यवस्थितौ ॥

---

१ को. मखेन्दवः    २ को, जगति    ३ को. ०यीमेषां
४ को. ०याव्याख्याया    ५ को. ०यशब्द    ६ को. चिर्या
७ को. ०ऽयमहं    ८ को. अतः परं बह्वचोऽन्तोदाद्रन्तीति तंविधेः, इत्यधिकः पाठः
९ को, आहन्तात्रकं    १० को. वक्ष्यतीत्यर्थः    ११ को. मार्ग
१२ को. वक्ष्यति    १३ को. ०भ्यः अन्यं पञ्च नेति    १४ को. ब्राह्मण प्रसिद्धम्

.ाप्ता चतुऋचान्त्य माह्निक्यमावृत्तिषूद्धृतिः[1] ?
समाम्नायात्तु तद्विष्णोरित्यृचोऽस्यामसामतः ।।

तथा चतुऋचं प्रति भवेद्वृद्धिर्यदि पाक्षिकः ।
उपर्यहीनर्चानां तु संसदर्थमश्रोष्यत ? ।।

आम्नायादुपलभ्यानि बहूनीदृशि[2] दर्शयेत्
स्वयंभुवोऽस्य मात्रापि निष्क्रिया हि न कल्प्यते ।

भाषितं बृहता वेति सूत्रे श्यैतेन वेति न
ब्राह्मणाद् बृहति श्यैतं नोभयत्रापि नौधसम् ।।

धुरामगाने रेतस्यामपि धूरिति नोत्सृजेत् ।
ब्राह्मणे ह्युभयेन त्वा वेत्यस्या-नित्यतोच्यते ।।

रथन्तरप्रधाने चैकस्यां प्राकृते बृहत् ।
चत्वार्यूहेति वचनात् बृहन्मुख्ये रथन्तरम् ।।

गवि ज्योतिषि चैकाहे सत्रक्लृप्त्यतिदेशनात् ।
गौरीवितमनायासं प्रसक्तं ब्राह्मणात्त्यजेत्[3] ।।

अस्य प्रत्ना वषट्कारः प्रत्यादि च निदर्शनम् ।
भक्षणं देवसोमस्य युक्तितौपनिषद्गते ।।

सुब्रह्मण्यापि संप्रैषः[4] स संप्रैषाश्च भेदतः ।
न विदुस्तत्र नोऽध्वर्युप्रवृत्तिर्बोधकारणम् ।।

सुब्रह्मण्यस्य भक्षोऽस्ति न वेति बहुसंशयः ।
न स्यादसत्रे सत्रे स्याद् गिरा बौधायनी यथा ।।

भक्षयामीति वान्ते स्याद् यजुर्वेदमिति स्थिते ।
न यजुरादिग्रहः सन्धावध्वर्युप्रत्ययादसौ ।।

आज्यस्य सुषमिद्धो न इति मध्यमयो ऋचोः ।
बह्वृचप्रत्ययादेकां त्यजेत् त्याज्या न तूत्तमा ।।

अनेकेष्वर्थजातेषु वक्तुं शक्येष्वनेकधा ।
प्रायेण सममाचार्यो ब्रूते स समयः किल ।।

संस्थाशब्देन सोऽप्रोक्तः तद्वशेनापि संशये ।
विशिष्टार्थोपक्लृप्तिः स्यान्नासत्रे मार्जनं यथा ।।

---

१ को. ०त्तिषुद्धतिः
२ को. बहूनि दृशि
३ को. ब्राह्मणा त्य०
४ को. संप्रैषाः

शार्ङ्गसोमव्रतानां च प्रशमानियमो यथा ।
यथैकाहविधा तन्त्रं द्वितीयेऽहनि संसदाम् ।

यद् द्विरात्रत्रिरात्रेषु श्रुतिसिद्धोऽपि कथ्यते ।
यष्ट्वैकं स्वर्गकामादिस्तत्रोक्तं च निदर्शनम् ।।

ज्योतिरग्निष्टुतोऽत्युक्थः स्तोम तद्विकिवेशयोः ।
अभेदे भिन्नशब्दोक्तेरुक्तं तदपि लक्ष्यताम् ।।

अथवा संशयं तन्त्रं मा संस्थाया अवक्ष्य यत् ।
उक्तो निश्चीयते धर्मः संस्थावाजमुशन्ति तम् ।।

यथैकाहविधापेक्षा प्रसक्तोपसदादिषु ।
बृहत्प्रधानस्येत्यादावतिदेशोऽत्र कल्पतः ।।

ऊर्ध्वेडवन्तीति विधिं पुनः सोमे स्वराजि च ।
विराट्स्वराजबृहतीं गायत्रानुष्टुभं तथा ।।

अन्यत्रेदृशमन्वीक्ष्य कथं सिद्धं वदेदयम् ।
आचार्य इति मन्वानैस्त्यज्यते मुक्तसंशयम् ।।

तथापि विधगायत्रवस्थादित्यमखादिषु ।
बृहत्यादि विधा गुर्वी लघु किं नोक्तवानिति ।।

अथवेदमिदं[1] वेति संशये दुर्विनिश्चये[2] ।
प्रयोगलाघवं नो चेद् यत्नः पुण्येऽपि दुर्लभः ।।

अथवा विहितद्रव्यावित्तेः कर्मणि सीदति ।
यतः प्रतिनिधिः सोऽयं धर्मः संस्थाप्रचोदितः[3] ।।

साम्यादेकर्चविहितं ततो विद्याद् गुणादपि ।
शब्दस्य वृत्तिरस्तीति नोहः प्रतिनिधावतः ।।

मध्वाह्लांस्तीति ? शमीमारभेतेति चागतौ ।
घृतधाय्यादिविषयां कल्पयेत् करणादतः ।।

आपन्नानि गतिं गौणीं मत्वा मधुशमीति वा ।
वदन्ति[4] याजुषाणीह सार्थकान्येव मन्यते[5] ।।

तैत्तिरीयानुकल्पे तु धर्मस्यास्य निदर्शनम् ।
उक्तं प्रतिनिधेरेव ग्रहणं नापरं बहु ।।

---

१ को: अथदमिदं ? २ को. दुर्विनिश्चयं ३ को. ०पशोदितः
४ का. वदानि ५ को. मन्यते

एषामविषयो यः[1] स्याद्धर्मिणामिह संशयः ।
मीमांसया स सर्वोऽपि निरस्यो न स्वमेधया ।।

एतेऽपि तुन्नसामर्थ्यं मीमांसानुगतेर्विना ।
लभन्ते चक्षुरादीनि मनसोऽनुगतेरिव ।।

विष्टुत्यौदुम्बरत्वस्य मत्वान्नाद्यवरोधनम् ।
फलं न तदसत्कामः कुर्याद् वा संशयीत वा ।।

मितानध्वर्युणा[2] धिष्ण्यानन्विष्यौदुम्बरीं[2] पुनः ।
उप्तेषु धिष्ण्येषूद्गाता भातुमिच्छेद्यथोदितम् ।।

मध्यन्दिने तु सवने वेद्यां[3] मित्यादि[3] कर्म यत् ।
पवमानस्य तत् पश्चादाशङ्क्येतातिदेशतः ।।

वचनं विश्वरूपाणां गानानङ्गमिति स्मरन् ।
इहापि सवने कश्चित् प्राज्ञंमन्यः प्रकल्पयेत् ।।

प्रकृतेर्बहवो भेदाः बृहत्पृष्ठादयस्तथा ।
नास्माभिरवगम्येरन् न्यायदीपो न चेद् भवेत् ।।

अश्वत्रिरात्रादीनां च न सामपरिकल्पनम् ।
बुध्येमहि यदाचार्यः सुकल्पमिति नाकरोत् ।।

इति दोषाः प्रसज्येरन् बहवोऽपि पदे पदे ।
भवेदतिमहान् ग्रन्थः सर्वेषां तु प्रदर्शने ।।

मीमांसापेक्षया त्वत्र सर्वमिष्टं प्रसिध्यति ।
तद्गतोऽस्यामलस्तर्कः[4] सोत्करो[5] ऽन्यानतर्कयत्[5] ।।

ग्रहणावनयोपाया तत्त्वसन्देहयोरिमे ।
अप्रमादेन तत्तत्वमन्वेष्टव्यं[6] सुमेधसा ।।

**नवा तन्त्राणि ।** **अह्नां संघातोऽहीनः ।** तन्त्राणामेकाहस्तोमसमवेतानाम्[7] । तेषामप्यवस्थानविशेषः[7] । अहीनस्य तन्त्राणि नव सन्ति । अयमहीनशब्दो द्विरात्राद्यनेकाहःसङ्घातवानपि[8] सन् अत्र द्वादशाहविषय एव मन्तव्यः । **अथाहीनिकानि ।** त्रिवृतः पञ्चदशस्येति वक्ष्यमाणत्वात् त्रीण्यैकाहिकानि । एकाहानामिमानि इत्यैकाहिकानि तन्त्राणि । अत्रापि एकत्रिंशत्प्रकारज्योतिष्टोममुपसदादींश्च[9] क्रतुविशेषानभिदधाति[10] ।

---

१ को. ये
२ को. मितानुष्वर्युणा धिष्ण्यानन्युष्यौदु०
३ को. द्यामीन्त्यादि
४ को. ०तोऽस्माम०
५ को. सोत्करोनान्यतर्कयप्
६ को. तेतत्व०
७ को. तन्त्राणामेहस्तोमसमवेततेषामप्यव०
८ को. सङ्घातवात्यपि
९ को. ममुपशदा०
१० को. ०षानभिधानो

अप्ययमेकाहशब्दः त्रिकद्रुकविषय एवोत्तरवाक्यसामर्थ्यादिवगन्तव्यः[1]। ज्योतिकान्दिमरराययोरुपरि श्रुतानां ज्योतिरादीनामिदं ग्रहणम्। त्रीण्यैकाहिकानि उक्तानि यानि तानीमान्येषामेकाहानां तन्त्राणि।

ननूपदेशकक्रमेणाहीनतन्त्राणि पूर्वनिर्देशानीत्यत्र ब्रूमः—इहैषामैकाहिकानामाहीनिकानां चतुरनुक्रमः क्रियते। तत्र द्विः पूर्वमैकाहिकानि निर्दिश्यन्ते, द्विः पूर्वमाहीनिकानि, तदुभयेषामहर्गणपरिकल्पनायां तुल्यतावबोधनार्थम्। यदि हि चतुरप्यन्यतराण्येव पूर्वं निर्देक्ष्यन्ते, मुख्यान्यन्यतराण्येतानि इतरेभ्यो मंस्यामः।

ननु गवामयनेऽपि श्रूयते–अथैते ज्योतिर्गौरायुरितिस्तोमा भवन्ति इति,। तथा च सति ज्योतिरादीनां तन्त्राणि सात्रिकाण्यपि स्युः। नैकान्तेनैकाहिकानि। अत्र ब्रूमः—उभयत्र श्रवणे सति यत्रैषामृक्सामक्लृप्तिस्तत्रैषामुत्पत्तिरिति मन्तव्यम्। तथा पृष्ठस्य द्वादशाहगवामयनयोः श्रूयमाणस्य द्वादशाहे एवोत्पत्तिरभ्युपगम्यते[1]। नैव याज्ञिकाः पृष्ठ्यानि व्यपदिशन्ति, न गवामयनेन चैतेषां ज्योतिरादीनामुभयत्रापि तन्त्रक्लृप्तिः तत्रैषामुत्तरमस्मच्छ्रुतावस्ति। वदति चाचार्यः तत्तन्त्राणि त्रीण्येकाहिकानि तन्त्राणीति। तत्रास्माभिराचार्यप्रामाण्यादित्थमनुमन्तव्यम्। एकाहभूतानामेव ज्योतिरादीनां शाखान्तरे तन्त्रमधीते। तत्रैकाहे ज्योतिरतिदिशति। नैष दोषः। गवामयनब्राह्मणक्रमात् प्रकृतित्वाच्च पृथगेकाहेभ्यः कल्प्यम्। तत्राभिप्लवेन सन्तायते। तस्य चेयन्त्यहानि ज्योतिर्गौरायुरिति। तत्र ज्योतिरादिषु क्लृप्तेषु गवामयनक्लृप्त्यसम्भवस्तत्रैव[2] तत्तन्त्रमधीतं पुनरुक्तभयात्तत्रैकाहेष्वतिदिश्यते[3]। यथा त्रिवृदादीन्यहानि द्वादशाहे श्रुततन्त्राणि तद्विकृतौ गवामयने कल्पयत्याचार्यः। नच तावत्तैषां गवामयनिकत्वं, द्वादशाहिकान्येवेमानि संप्रतिपद्यामहे। तद्वदत्रापि। **अथास्येति**। दशमप्रकृतेरह्नोऽभावात्तन्त्रस्यापादानं तथा पुनरन्यस्मिन्नपि तन्त्रजामतऽसभूनि ? विद्यमाने समाने समवगाह्य यज्ञराशिमेतान्येन द्वादशोपादीयन्त इति। तत **आह**– अथ कैश्चाथ खल्विति प्रायिकार्थविवक्षायाम्। प्रायेण द्विविधैरेवाहोभिर्यज्ञस्तायते वर्धते। तनोतेर्वा कर्मणि तायते विस्तायते चोदनाभिराचार्यैर्वा। कैरहोभिरिति चेत् ऐकाहिकैरेव[4]। एवशब्दोऽर्थविशेषग्रहणार्थम्। तस्मादेकाहानां विकारैः ऐकाहिकैः। अहीने भवैराहीनिकैः[5] इति योज्यम्। युक्तमेव चैतत्।

नन्वेकस्मिन्नहनि अन्यदहर्भवति। भवतीदमस्य विकारो नचाहस्सङ्घातः। अहर्विकारोति[6] भवति त्विदमस्मिन्। **तद्य...तानि**। द्विरात्राद्यहीनाहःसंप्रत्ययां मा भूदित्युच्यते। तत्र यान्यहीनिकानि उक्तानि तानि दशरात्रे भवानि त्रिवृदादीन्यहानि प्रत्येतव्यानि। **अथ...तानि**। इदमपि ज्योतिष्टोमविकारोपसदादिसंप्रत्ययाभावाय। अथ यान्यैकाहिकानि उक्तानि तान्यभिप्लवस्याहानि प्रत्येतव्यानि। ज्योतिराद्येकाहत्रयभूतानि हि।

ननु पूर्वस्मिन्नेव वाक्ये आभिप्लाविकैश्च दाशरात्रिकैश्चेति वक्तव्यम्। सत्यम्। इत्थं लघु भवति। नन्विदं सूत्रं व्याख्यागम्यार्थविशेषं लघु ग्रन्थं स्यात्। अयं हि पर्यध्यायो नाम बह्वभिप्रायस्य बहुपरिष्कारस्य बहुसंशयस्यानुक्रान्तस्य यज्ञशास्त्रस्य साकल्यसंप्रतिपादनाय[7] व्याख्यानरूपो ग्रन्थः। तत्र समस्य व्यस्य च सामान्यतो विशेषतश्चार्थानामुपवर्णनं गुणायैव भवति। यतश्चैतैरहोभिः संघाता एव

१ को. ०थ्यत्तिमभ्युप०
२ को. क्लृप्त्यसंभवं त०
३ को. क्तभयात्रैका०
४ को. ऐकाहिकैश्च
५ को. भत्रैराहिनिकै
६ को. तः हर्विकरोति
७ को. ०नाय सन्दृस्वो

तायन्ते । ततोऽत्र यज्ञशब्दोऽहर्गणविषय एवार्थवान् भवति । किं पुनरेतैरेव द्वयैरहोभिः द्विरात्रादयस्तायन्ते, नैवम्, अभिजिदादिभिरपि तायन्ते । कतिपयैश्च तत्र तत्रोपपाद्यामानैः । यथा द्विरात्राणां पूर्वमहः, अभिप्लाविकमुत्तरं तत्रैव कल्प्यते । त्रिरात्रादीनामृक्सामसमवायानुरोधेन कल्प्यत्वात्, नैतानि द्वयान्याश्रियन्ते । चतूरात्रादयस्तु[1] प्रायेणैतैरेव तायन्ते । उक्तञ्च—प्राथमिकत्वमस्य चोपवर्णनस्य प्रयोजनमस्मत्तन्त्रे स्फुटमनिर्दिष्टानामेतैरेव द्वयैः परिकल्पनानिर्दिष्टानां च प्रकटीकरणम् । अथ इति । इहाथशब्दो यद्यर्थे । यत्र क्वचिद् विषये आक्रामन् उपवर्णयन्नहानि यदि समस्यादिशेत् द्व्यह इति वा, त्र्यह इति वा । कथमिह प्रतिपत्तव्यमिति प्रश्नरूपमिदं वाक्यम् । तन्नु...रिति । तदिति तत्रार्थे । न्विति पौरातन्ये । हेति प्रसिद्धौ । एते आचार्या ब्रुवते—दशरात्रस्यैवाहान्येतानि । द्व्यहादिशब्दैरुपात्तानि वेदितव्यानि स्युरिति । कस्य...रिति । कस्य हेतोरेवमाहुस्ते । दश...कृति । निर्धारणे षष्ठी । द्विरात्रादीनां सहस्रसंवत्सरान्तानामहर्गणानां मध्ये दशरात्र एव प्रकृतिः । प्रक्रियन्ते प्रदर्श्यन्ते विक्रियन्तेऽस्मिन् अङ्गानीति हि प्रकृतिः । सर्वं च सत्राहीनभेदं वयमवेक्षमाणा द्वादशाहस्यैव स्वरूपविधिसाकल्यम् अनूच्यमन्वहमनुब्राह्मणं च पश्यामः । ततोऽस्य प्रकृतित्वम् । अतः पूर्वे परे च तद्विकृतिभूताः । एवमपि द्विरात्रादीनां द्वादशाहप्रकृतित्वं नोपपद्यते । अन्यत्वात्त्रयोदशरात्रादीनां तदुपपद्यत एव हि । यदेव विहितं ततोऽधिकं तदेवैषां कल्प्यम् । तत्र प्रतिपादितम् एकाहेन चेज्ज्यायः सत्रं चिकीर्षेत् इत्यधिकारे । न तु ये पूर्वं तदर्थं किञ्चिदप्येकाहेन चेत्कनीयः इत्यादि भाषितमिति चोद्यमाशङ्क्य तत्परिहरन्नाह—दश इति । अवच्छेद एकदेशः । दशरात्रस्यैकदेशेन द्विरात्रादयोऽपि अहर्गणाः कल्पन्ते संपद्यन्ते । ततः साधीय एव दशरात्रः प्रकृतिरिति । अथ चात्रैवान्य आहुः—द्व्यह इत्यादि चोदनायामभिप्लवस्यैवाहान्येतानि स्युः इति । कस्य...रिति अभिज्यते । अहर्गणेषु सह निवृत्तयोरनयोरभिप्लव[2] एव हि पूर्वं प्रयुज्यते । तदुपलक्षणं गवामयने सप्तत्रिंशद्रात्रे च । ततोऽस्य प्राधान्यमवगच्छामः । यथा लोके ये ये प्रधानास्ते ते पूर्वमुपविशन्ति[3] तद्वदत्रापि सामान्यचोदनासु प्रधानस्य पूर्वमेव गतिर्भवति । तेनैव वार्थसिद्धौ नेतरदाद्रियते ।

अभि...तति । इतश्चाभिप्लवस्य प्राधान्यम् सत्रेषु षडहवृद्धौ अभिप्लवो भूयिष्ठं निर्वपति । यथा गवामयने द्वावभिप्लवौ, पृष्ठ्यः षडह इति । त्रयोऽभिप्लवाः षडहाः । पृष्ठ्यः षडह इत्यादौ च न पृष्ठ्यः स न भूयिष्ठं न भवतीति, न गतिः स्यात् । अभिप्लवो भूयिष्ठं निर्वपेत् । पृष्ठो वा तुल्यं वोभौ । तत्र पूर्ववाक्ये ऽभिप्लवभूयिष्ठवचनात् इतरद्वयमर्थात् अपानुतमिति पुनरनयोरन्यतरस्याद्यमपह्नवः क्रियते । तुल्यमपि षडहद्वयं निपतति । यथोपरितनयोरेकषष्टिरात्रयोरादेक्ष्यति[4] । अयं पञ्चाहान्ते निर्देशे पृष्ठ्याहर्गतो दोषः प्रादुष्क्रियते । आदेशो विशेषवचनम् । आदेशस्यैव हेतोः यदनन्यविषय वचनं स्यात्, पृष्ठ्यद्व्यह पृष्ठ्यत्र्यह इति तदा पृष्ठ्यो विच्छेदं गच्छति । नान्यथायं न्यायस्त्यक्तः स्यात् । द्वादशरात्रिकपक्षे कथ पुनर्ज्ञायते, पृष्ठ्यविलापाक्षेपः[5] । सा त्वा...सस्तीति । इह पृष्ठ शब्दो वैरूपवैराजशाक्वररैवतेषु । यथा—आत्मा वै बृहद्रथन्तरे पशवः पृष्ठानि इति । सङ्घातशब्दश्च कर्मसाधनम् । संहतानामेव दर्शनमेषामिति सङ्घातदर्शनानि । वैरूपादि हि पृष्ठ्यचतुष्टयमस्मिन् कल्पाध्वनि सहैवैकस्मिन्नेकाहे ऽहर्गणे वा प्रवर्तते न प्रवर्तते वा । इत्थ योज्यम् यतः सङ्घातदर्शनानि भवन्ति वैरूपादीनि पृष्ठानीति, अतः कारणात् असति वचने पृष्ठ्यविलोपो न युक्तः । एवमिदमविशेषः । तौ द्व्यहादिचोदनायां दाशरात्रिकाणां नाभिप्लविकानां

१ चतुरात्रा० २ को. निवततो० ३ को. ०मुपदिशन्ति
४ को. देच्छति ५ को. ०विलापोक्षेप

वा ग्रहणं प्रापय्य पुनरेव पृष्ठ्यविलोपभयादाभिप्लविकान्येव नियमितानि । ततश्च अथ परस्योर्ध्वंषडह-द्वयम् । यथैं ज्ञात्रं । यथैतद् यस्मादिह स्तोमेनाह्नराख्यायते—त्रिवृतोऽह्नः सामानि, त्रयस्त्रिंशस्य गायत्री इति, पृष्ठेन च महाव्रतमिति, संस्थया च वाजपेयाप्तोर्यामे इति, संख्यानेन च सप्तमस्याह्नो ऽष्टमस्याह्न इति च । नाम्ना च विषुवतस्तन्त्रे विनुक्तैः आर्भव इति । इतिशब्दो हेतावित्यनेन हेतुना एतत्पञ्चतयं स्तोमपृष्ठं[1] संस्थासख्यानं नाम इति प्रत्येकमहर्मात्रं भवति । अहस्तायते ऽनेनेति एतैः स्तोमादिभिरह्नानि ज्ञातसम्बन्धानि । यथा धूमगन्धादिभिरग्निचन्दनादीनि । तत्र यथा धूमगन्धाद्युपलब्धि चन्दनादीनि प्रज्ञापयन्ति[2] एवं स्तोमादयोऽप्यहर्विशेषमिदमेतदहरिति प्रतिपत्तिलाघवार्थमुत्तरविवक्षया चोक्तमेनत् । अथ—मिति । यान्यस्माकं न सन्ध्यन्तानि परतन्त्रे सन्ति, यथाग्न्याधेयमग्निहोत्रमिपर्वञ्जश्येन इति । तदर्थैषा[3] चिन्ता । अथ यस्मिन् विषयेऽनेन पञ्चतयेनासमत्तन्त्रावत्तन्नं तद्वर्तिना परतन्त्रस्थमहर्विप्रयुज्येत, विना चोद्येत, तत्र ज्ञान केन । तस्याह्नो रूपमसमाभिर्ज्ञायत इति पृच्छति । अस्योत्तरवाक्यं प्रतिवचनं पृष्ठवतः पृष्ठं ज्ञायते । आभ्यामिति पृष्ठज्ञाने अध्वर्युश्च होता च भवतः । ताभ्यामवगमितं, पृष्ठमुपादाय पृष्ठवशेन तदहः परिकल्पयेत् । कथं पुनरध्वर्युवह्नृचाभ्यां पृष्ठं ज्ञायते, इदमुच्यते—पृष्ठ...इति । पृष्ठं निमित्तमस्येति पृष्ठनिमित्तः । पृष्ठनिमित्तत्वेनोपादाय तदहरध्वर्युर्ग्रहं[4] गृह्णाति । श्रूयते च हि—यदि रथन्तरसामा सोमः स्यात् गायत्र्या माहेन्द्रं ग्रहं[5] गृह्णीयात् । यदि बृहत्सामा त्रिष्टुभा, यद्युभयसामोभाभ्यामिति । अपरं च यदि रथन्तरसामा स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् । यदि बृहत्सामा, शुक्राग्रानिति । एवं च सति त्रिवृतौ यत्राध्वर्युभिर्गायत्रादिभिः ग्रहणं नियम्यते । यत्र चैन्द्रवायवाग्रतादि तत्र पृष्ठत्वेन रथन्तरादि नियमः कार्यः । पृष्ठे सति पृष्ठस्य स्तोत्रीयतृचं होता निष्कैवल्ये शंसति । तत्र यस्य स्तोत्रीयादिभिः शंस्यते तत्पृष्ठं तदहर्विद्यात् ।

अथ···क्लृप्तिः । खल्विति चार्थे । अयं चान्योऽप्यहर्ज्ञानोपायः—पञ्चतयविप्रयोगे विद्यते—यथार्द्रमक्लृप्ति भ्रमाबहुत्वमुपचयः । प्रकृतावपि विद्यमानवैकृत विधिजातमित्यर्थः । श्रूयते च—एतावान् यज्ञो यावानग्निष्टोम. इति भूमवाक्यस्यात ऊर्ध्वं क्रियत इति च । भूम्नः क्लृप्तिरस्मिन्निति भूमक्लृप्तिः प्राकृतोऽग्निष्टोमः । तस्माद्धि विकृतय उत्पद्यन्ते । अथ मा भूमेति विधिसाकल्य, तस्य क्लृप्तिरुत्पत्ति-रस्मिन्नस्तीति उभयथापि हि यथाभ्रमत्वक्लृप्तिः । यथाप्रकृतीत्यर्थः । पञ्चतयविप्रयुक्तमहर्यथाप्रकृत्येव संपादयेत् ।

ननु साहसमिवैतत् यदप्रज्ञातरूपस्याह्नोऽपि नैव वचनात् प्रकृत्यैक्यरूप्यावधारणं, नहि नहि, युक्तमेवैतत् । कुतः—न्याये प्रविशन्ति[6] यान्येतानि स्फुटक्लृप्तीन्यहानि तान्यपि छन्दोगाचार्यन्यायेनैव बहुविधेन प्रदिशन्ति[7] उपकल्पयन्ति । काश्चिदेव ऋचः कानिचिदेव सामानि वचनविहितानि उपसदादिषु[8] न्यायादेवेतरेषामागमनं विषयमुख्यो[9] न्यायः प्रकृतिसम्भवो रुध्यते । ततः सिद्धं यस्याह्नो विशेषागमहेतुर्न दृश्यते तद्यथाप्रकृति कल्प्यम् ।

---

| | | |
|---|---|---|
| १ को. स्तोमः पृष्ठ० | २ को. प्रज्ञापयति । | ३ को. तदर्थैषां |
| ४ को. युगृहं | ५ को. गृहं | ६ को. शन्ति |
| ७ को. प्रविशन्ति | ८ को. उपशदा० | ९ को. भिषद्यमु० |

प्राप्तक्लृप्तिरेवायं[६] प्रदिष्टो क्रतुवर्त्मनि ।
अप्रकाशैकदेशं हि नाहुः प्रायेण लक्ष्यते ।।

इषुवज्रादयः सोमाः परं छन्दोगकल्पिताः ।
तदाश्रयेण चोह्यन्ते कल्प्यास्तन्त्रवशेन च ।।

यथे···मिति । अथ यथेति कथमर्थे । कश्चिदाचार्यः पृच्छति, अथ कथं तावदेतद्विज्ञायते, पञ्चमेऽहनि महाव्रत, सप्तमेऽहनि महाव्रतमिति । छन्दोमाश्चतुर्विंशश्चतुश्चत्वारिंशोऽष्टचत्वारिंशस्तत्स्तोमाः पवमानाः यस्याह्नस्तच्छन्दोमपवमानमहः । एवं चाभिप्रेत्य पृच्छति । अहान्येतानि पञ्चमादीनि । अहरेव चेद् द्वयं महाव्रत. मिथाश्रयमह्नोराधाराधेयभावो विहितो दुःसंपादः । तत्र किं पञ्चमेऽहनीति सप्तमी प्रथमार्थे कल्पयित्वा पञ्चममहर्महाव्रतमित्युक्ते योऽर्थस्तं गृह्णीयाम आहोस्वित् पञ्चमेऽहनि महाव्रताख्यं साम भवतीति यथाश्रुतमेवार्थं गृह्णन्तो पुत्रहत्यायेति सामपञ्चमादिषु प्रयुञ्जीमेति । अधि···श्याम। महाव्रतमिति नात्राह्नरभिमिनाङ्गिरः पक्षः पुच्छात्मभावेनावस्थिते गायत्रादौ सामपञ्चतये महाव्रतशब्दो निरपेक्षः प्रवर्तते । तत्पृष्ठे त्वह्निलक्षणाश्रयाऽस्य प्रयोगमुख्यस्त्वहनि शब्दो महाव्रतीयमिति । नच मुख्येऽर्थे सम्भवति लक्षणाश्रयितुं युक्ता, वैयधिकरणतो वा सामानाधिकरण्यम् । तस्मादाधिमिव आधेयमिव पञ्चमादिष्वहस्सु आधीयमानं पृष्ठमेवेदं पञ्चसामात्मकं महाव्रतशब्देनाभिहितं पश्यामः । जानीम आधीयमानमिति हेतौ शानचः प्रयोगः । आधीयमानत्वात् पृष्ठमेवेदं महाव्रतं नाहः । नहि शक्यमहरन्याधातुमिति[१] । एवमपि पृष्ठान्वयानि सामानि रोहिणकादीनि ऋचश्च । तमीं हिन्वति (जै. सं. ४. ४. ८) इत्यादयः प्रयुज्यन्तामिति चेन्न । आधिपायं पञ्चमादिभिः शब्दैः प्रसिद्धरूपाण्यहानि निर्दिश्यन्ते । तेष्विदं पृष्ठत्वेनोपदिश्यमानमिदं महाव्रतमाधेयभावायैव केवलं प्रभुः सन् आधारभूतस्याह्नो विकारान्तरजननाय भवति । यत्त्वहरस्वरूपं बाध्यते तत्र स्तोमपृष्ठादीन्युपदिश्यमानानि स्वान्वयमपि विशेषं प्रवर्तयितुं शक्नुवन्ति[२] । तत्र ह्यहराधारभूतमपि स्वरूपनिवृत्तिमाकांक्षते । अत्र तु यावद्वाचनं तावद्वाचनिकमिति पृष्ठमेवाधीयते नान्यदिति ज्ञात्रं स्तोमादीनामहर्ज्ञात्राणां सन्निपाते इत्यनेन प्रकारेण यः पञ्चमेऽहनि महाव्रतमिति अत्राश्रितस्तेन परमं प्रधानं बलवदहर्ज्ञात्रं विज्ञातव्यम् । यथात्र संख्यानं पृष्ठाद् बलवदध्यवसितम् । अनेनैव द्वारेणाहर्ज्ञात्राणां बलाबलं सति सन्निपाते चिन्त्यमित्यर्थः ।

वाच्यं महदहःक्लृप्तौ ग्रन्थेनानेन सूत्रितम् ।
अस्फुटस्य कथं त्वस्य मन्वीरन् मानवाः स्थितिम् ।।

गुरूपदेशात्त्वस्माभिः द्वारस्य विवृता तया ।
प्रविश्यान्तर्गतानर्थानस्यादर्धं सुमेधसः ।।

इति पर्यध्याये
प्रथमः खण्डः

---

६ को. ०रेवेयं    १ को. शक्यामह०    २ को. शक्तोपृन्ति    ३ को. ०दहंलात्रं

## अथ द्वितीयः खण्डः

गीतिस्तोत्रसमुदायात्मकानामन्वाहानां[1] तावद्विज्ञानोपायः[1] प्रदर्शितः । स्तोत्राणां त्विदानीं गीतिगता भेदाः प्रदर्श्यन्ते । त्रिप्रकारः स्तोत्रगानस्य न्यायः । आविर्गानं[2], लेशगानं, छन्नगानमिति ।

आविरिति विस्पष्टं योनिगतादभिन्नमीषद्भिन्नं वा गानम् । यथा कौथुमानामूहः । ऊर्ध्वं चाग्निष्टोमादस्माकं भवतु । कौथुमोहो योनेरभावादाविर्गानस्योदाहरणम्[3] । अस्मदूहस्त्वनुदाहरणमिव । योनौ ह्यदृष्टमिह बहु दृश्यते । सर्वोद्गीथोपद्रवाणां छन्नादित्वं केषांचित्स्वराणां क्रुष्टत्वोत्पत्तिप्ररोहबाहुल्यमित्यादि । सत्यमस्त्येवायमिह योनेर्भेदस्तथापि इदमाविर्गानमेव श्रुतेर्निश्चितम् । श्रूयते हि—तस्मादग्निष्टोमसामान्येव गानीकृत्य गायेद्, यथागीतमितराणि इति । अथ यद् रात्रिच्छन्नां सतीं तामाविर्गायति इति । अथ रात्रिमाविरेव गायेत् इति च । यथा रात्रौ तथा सर्वोहे गानं, नान्यदिति ।

लेशेनेति योनिगानाद् भिन्नाभिन्नं गानमाविर्गानापेक्षया[4] भिन्नं, छन्नगानापेक्षया त्वभिन्नमीदृशमपि गानं केषां चिदस्तीत्यनुमेयम् । अथवा । नातिविस्पष्टोच्चारितव्यञ्जनं गानं लेशगानम् । ततः सर्वेषामप्यस्ति ।

छन्नमिति योनिगतस्यात्यन्तविमर्दनेन प्रगेहावरोहबहुलमोंकारप्रायमबहुवर्णं गानम् । यथास्माकमग्निष्टोमसामसु । आविरिति गुणविवक्षयेदं चोद्यते ।

सुगायेति[5] । इह भिन्नमपि वस्तुजातमविस्पष्टानुपलभ्यमानविलेषक्रमागतसादृश्यमेकवदाभाति । यथा काकानां रूपम् । आवीनां[6] च । यथा वा बहूनि मृगवयोवाशितानि । एवमिदं सामगानमपि छन्नलेशावस्थागतविस्पष्टत्वाज्जातसंकरमनेकैः[7] सामभिर्व्यापितमिव भाति । न त्वाविर्गानं स्फुटतरत्वात्, तदिदमुक्तम् । अव्याहृतमन्यैः सामभिर्भवतीति तस्य नीतिः[8] । अयं चात्र गुणस्तस्य प्रशंसार्थवादश्रुतावस्ति पशुमान् भवति इतिगुणादियं कामावाप्तिर्यजमानस्य छन्नवदिति[9] । यद्येवं बहुगुणमाविर्गानमिदमेव, न बलवच्छन्नगानं, पुनः कस्मादिति चेदिदमुच्यते—ओंकारः प्रणवः स एवायमापन्नाकारादिबहुरूपो मात्राविशेषेष्ववतिष्ठमानः तिरोदधत्प्रकाशमानश्च सामेत्युच्यते । श्रूयते च—ओमित्येतदक्षरमुद्गीथमुपासीत इति । यतश्चैवं तस्मात् स्वारैः स्वरात् परैराकारादिभिरनौक्तिकैः परिवृतामृचमेतां स्वरेण च वैशेषिकेण प्रुष्टप्ररोहावरोहादिना छन्नां तिरोहितबहुव्यञ्जनाङ्गां साम[11] इति छन्नगानमाश्रियते । हेत्वभिधानद्वारेण रूपमपि छन्नगानस्य निरूपितम् । तस्य नीतिः ।

---

१ को. ०मन्वाहान्ताव०
२ को. आविर्भानं
३ को. दाविर्भान०
४ को. आविर्भाना०
५ को. सुगावति
६ को. अवीनां
७ को. ०करमनैः
८ को. नीति
९ को. छन्नदिति ?
१० को. ०णमाविर्ज्ञानमि०
११ को. स्याम

यज्ञा...वति । आविर्गानिच्छन्नगाने यज्ञायज्ञीयेष्वन्यसामवत् प्रसक्ते, अतः पविवभिषय. । अयमर्थवादस्यार्थो निदर्शितः । अग्निरित्युक्तमग्न्युक्तं, तदेतद् यज्ञायज्ञीयम् एतदग्न्युक्तं भवतीति । श्रूयते हि—एष वा अग्निर्वैश्वानरः यद् यज्ञायज्ञीयम् इत्यादि स्तौत्यर्थवाक्यीकृताग्नित्वेऽनुस्तुतमिति निर्वाच्यम् । स चेद् गायेत् स इति प्रकृतार्थज्ञस्य परामर्शः । एवं विद्वानुद्गाताविर्गायेच्चेत् तदा यज्ञायज्ञीयालेशो न गायेत् । संवृत्त्यामीनमग्निर्न दहतीत्यर्थः । लेश···रेण । लेशगानशील: लेशगानपक्षावस्थितो लेशतरेण यज्ञायज्ञीय गायेत् । छन्नगायी लेशगायिनो लेशतरविधेः छन्नगायिनोऽपि छन्नतरपक्षाशंका स्यात् । तन्निवृत्तौ पूर्वो निपातः । छन्नमेव यज्ञायज्ञीयमपि छन्नगायी गायेत् । अस्मिन् विधावसति पूर्वविधिद्वयानगत्या यज्ञायज्ञीयोद्गानं छन्नतरं प्रसजेत् ।

तस्यै...मिति । तस्य यज्ञायज्ञीयस्य छन्नं गीयमानस्य त्रातृशब्दमवितृशब्दं भुवच्छब्दममृतशब्दमित्येतानि न छादयेत् । नन्वर्थसंप्रत्ययार्थ एव शब्दानां प्रयोगः, सत्यमेतत् । इह तु छादनप्रतिषेधस्यार्थविषयस्यासम्भवात् स्वरूपग्रहणार्थमेवैषामुच्चारणं ग्राह्यम् । यथा वस्तुरूपोपलम्भनार्थं सदपि प्रदीपस्योत्पादनमुत्मवमंशलेषु स्वरूपग्रहणार्थमपि प्रवर्तते तद्वत् । अथवार्थस्यैव छादनप्रकाशनमनभिधानं प्रतिषिध्यते, ततश्च त्रातृप्रभृतीन् चतुरोऽर्थान् अभिदध्यादिति उक्तं भवति । नचैतेऽर्थाः त्रात्रादिभिः शब्दैश्छन्नवृत्तिभिरभिधातुं शक्या इति सिद्धमर्थतस्त्रात्रादीनां शब्दनामाच्छादनमिति व्याख्येयम् ।

अथै··भवति । सर्वत्र गच्छतीति सर्वस्मिन् छन्नगानविषये प्रविशति । नाधस्तनविधिवत् एकदेशवर्ति । सर्वत्रग एव सर्वत्रगः, स्वार्थे तद्धितः । अथवा सर्वत्रगो वेदः प्रत्यक्षादिप्रमाणातीतमपि स्वर्गापवर्गादिवता पूर्वादि सर्वमवगाहते, तस्मिन्[1] भवः प्रदेशो विधिः सर्वत्रगः । अथैष सार्वत्रगो विधिः छन्नगानविषये गानोपयोगी विद्येतावक्ष्यमाणप्रदो बहुत्वेऽपि जात्याश्रयेणैकवचनप्रयोगः ।

स्तोभ···दयेत् । अनार्चिकः सामावयवः स्तोभ इति सामगाः समाचक्षते । तमयं छन्नगायिनश्छादयेत् । यथा रौरवादिषु दहा पुवा इत्यादि अच्छन्नमेवाधीमहे । ननु छन्नमेवाधीमहे, यथा वामदेव्ये औहो हायीति स्तोभौ उभौ। हो हा इति, एहीया इति च । श्यावाश्वे ओहा इयेति । परिहृतमेतत् वाचनिकं छादनमदोष इति । श्रूयते हि—श्यावाश्वे ओहा[2] इया इत्येव गायेत् इति वामदेव्येऽप्यस्तीति अनुमातव्यम् । नहि इयानेव वेदः, यावन्नः प्रतिभाति । श्रूयते च काठके—भरद्वाजो ह त्रिभिरायुर्भि ब्रह्मचर्यमुवास, तं ह जीर्णं स्थविरं शयानमिन्द्र उपव्रज्योवाच, भरद्वाज, यत्ते चतुर्थमायुर्दद्यां किमेनेन कुर्या इति, ब्रह्मचर्यमेवैनेन चरेयमिति होवाच । तं ह त्रीन् गिरिरूपान् अविज्ञातानिव दर्शयाञ्चकार । तेषां हैकैकस्मान्मुष्टिनाददे । स होवाच भरद्वाजेत्यामन्त्र्य, वेदा वा एते । अनन्ता वै वेदाः । एतद्वै एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरदनुक्तमेव इति । भरद्वाजो महर्षिः स्वेन सर्वेण आयुषा वेदानां महीयस एवांशानध्येतुमशक्तो नातः परमीदृशो वेदानां विस्तरः ।

देव···दयेत् । देवता इत्यत्र देवेष्वेकनिपयेनृद्धचः तुल्यरूपास्थक्भागावलंबि वा गानमुपलभमानाः प्रतीतार्थरूपाः शब्दाः उच्यन्ते । यथा हुवे वाचामिति, इन्दुरिडा, सत्यं, सहस्वान्, सहसस्पतिरदियवत् इति । तां देवतां न च्छादयेत् । समीचीनमुदाहरणं नास्ति । अग्निष्टोम सामस्वेव हीनच्छन्नगानमाविगीयते ।

---

[1] को. कस्मिन्    [2] को. ओहो

नचैषां देवताग्निष्टोमसामस्वस्ति। अथवा एतान्युदाहरणानि भ्राजाभ्राजा, यूवायूरा, हुहन्नारूहन्नगस्त्येति। अत्र ह्युद्गीथोपद्रवयोरादिरपि न च्छाद्यते।

उद्गी···नाय। उद्गीथस्यान्तं न च्छादयेत्। प्रतिहारविज्ञानार्थं छादने हि प्रज्ञातमुद्गीथान्तमशृण्वन् प्रतिहर्ता प्रतिहारवेलानवगमात् प्रमाद्येदपि। अयमपि विधिरनित्यो दृष्टः। कावसंहितवामदेव्येषु हि छाद्यत एवोद्गीथान्तः। अनुमेयं त्वत्र वचनमित्यदोषः संभवति। उपनायनानि···दिति। कल्याणमर्थमभिव्याहरन्ति वदन्तीति कल्याणाभिव्याहाराणि। यान्यक्षराणि कल्याणाभिव्याहाराणि स्युस्तान्याच्छादयेत्। इतः कारणादित्यर्थः। कुत इति चेत्, कल्याणाभिव्याहारत्वादेव प्रकाश्यमेव हि। कल्याणप्रयन्नतोऽपि न छाद्यमित्यभिप्रायः।

लेशः···तदिति। लेशगानं पुंसः कस्य हेतोः कार्यमिति चेदिदमिह ब्राह्मणमेव प्रदर्श्यते। तस्य च्लीवेषु औल्सीया नाम छन्दोगभेदास्तेषु केचिल्लेशगानस्येदं ब्राह्मणमधीयते।

कुरु···हिरे। इदमादिवाक्यच्छेदं कृत्वा यो यो दुरवगमार्थस्तं तमेव वक्ष्यामः। स्फुटार्थप्रायत्वात् ग्रन्थस्याक्षरगौरवभयाच्च ब्रह्मोद्यवेदोद्यः वेदाश्रितो वादः श्रूयते—एवेदो ब्रह्मेति बकश्शालानां वक्ता। बभूवेति शेषः। उच्चैः रूणात्। आभ्येत्येति। कथं, किंरूपमित्यर्थः। अथवा कथं गेयमिति, यथा इति। इत्थं बकः प्रत्याह। प्रस्थो निम्नोन्नतः क्षितिप्रदेशः। स वै स्मेति। जलक्लेददेशोऽनूपः। खातेऽप्यलब्धजलो धन्वेत्युच्यते[१]। प्रस्थो हि न जलक्लेद। खाते चास्मिन्नापस्यप्ताः। यथा चासौ प्रस्थो नानूपः इति शक्यो वक्तुम्, न च धन्वेति, तथेदं गानं नाविरिति न छन्नमिति च। यथा च धन्वानूपयोः दुःखं जीवितुं, न दुःखं प्रस्य इति। प्रस्थे वासः[४] प्रशस्तः[४] तद्वदिदं लेशगानमपि प्रशस्तमित्यर्थः। कथमाह यथे...इति। प्रकर्षेण शेरतेऽस्मिन्नवयवा इति प्रशयः समुदायः। अध्येतृप्रमादजो वा शकारः। प्रचय इति मूलपाठ इति केचित्। तदशोभनम्, अश्रुतत्वात् उक्तवदपि निर्वक्तुं शक्तत्वात्।

सवै···द्यते। नाभि शीति। इक्षुभारो ह्यप्सु प्रक्षिप्तो नोत्प्लवते न निमज्जति। यथा—तीति। मद्गुरिति कश्चित् पक्षी पतति नदीं तरतीति। स वाहन्तीमति। स वाहन्तीं नोपैतीति, स्पृशत्यपः पक्षाभ्यां न क्लिद्यते। यथातीति। कुली मार्जारीकुलमिति गृह, तद्योगात् कुली। सा वैशतीं नोपन्तीति। न दन्तैर्दशति नाप्योष्ठसन्धं विश्लेषयति। यथाहीति स वेदति नो नातीति यत्किमिति। अस्येति लेशगानमन्वादिश्यते। अथापरम्। अपरमपि ब्राह्मणं लेशगानस्य। किमिति ऋचा इति प्रश्ने, क्लृप्तिः प्लुतिः। हे शालावत्यः, प्रतिब्रवीति। नैव वयं केवलमृचो गायामः, नैव केवलं सामेति। आविर्गानेऽृगक्षराणामच्छादनात्[१] ऋचाविकं[२] भवति। छन्नगाने च तेषां बहूनामोंकारिभावात् ओंकारस्य च सामत्वेन श्रवणात् साम्ना गीतं भवति। लेशगाने तु उभयाभावात् छन्नाविर्गानयोः अत्यन्ताकरणात्। तत्सो-तेति। एवं लेशगानस्वरूपमुक्तवन्तं शालावत्यमितरः पूजयति। हे सोम, सोमतुल्यगुण, हृदयानन्दं किरतर्कतस्माद् भवदुक्तात् लेशगानस्वरूपात् सर्व एव यूयम् भवत[५] मत्पक्षाश्रयणा[५] यथा मान्या लोके भविष्यथ। ते यूयमेवं विजानन्तो गातेति बक[६] उवाच[६] उत्तर इति। कारणं कथं, तज्ज्ञानार्थम्। एत...न्यन्ते। तस्मिन्नेतस्मिन् प्रसिद्धे स्तोत्रगते साम्नि यदाद्यक्षरमुद्गीथोपद्रवाणां तस्मिन् आचार्या विचारयन्ति। किमिदमक्षरमुदगायन्नुद्धरेदुत नोद्धरेदिति विचारे सति उद्धरणमक्षरस्यानुच्चारणमुद्धपद्यमवददिति[७] शेषः। तद··पद्यन्ते[८]। तदिति तस्मिन्

१ को. आविर्भा०　२ को. कचाभिकं　३ को. धन्ये०　४ को. वासं प्रशस्तं
५ को. भवान्भवत्पक्ष्या०　६ को. कठोवाच　७ को. ०मवदतीति　८ को. तदपद्यः

पक्षे अतिहायैव उत्सृज्यैवावधारणं मनसाप्यनुपादानार्थं केचिदोमिति प्रतिपद्यन्ते । केचिदो...इति । न तयो-रिदमन्यतरस्य[1] ग्रहणमुभयोर्लक्षणार्थम् । नेतरनिवर्तनार्थम् । तमेवाचार्याः । दृतिरुपमा अस्येति दृत्युपमं, तदेवंभूतं साम दृत्युपमं[2] भवतीत्याचार्याः वदन्ति । मृतानां ह्यजादीनां शिरोऽवच्छिद्य तं विवरम-न्येनापिधाय प्रसाधितमाद्दतिर्भवति । तद्वदिदं साम उद्धृताद्यक्षरं तद्विवरसमर्पितप्रणवं भवतीति सिद्धास्य दृतितुल्यता ।

आग ··न्ते । अनुद्धरणपक्षोऽपि कैश्चिदाश्रितः । के ते, एते हि ताण्डिनश्च वैदभृतीयाश्च । वेद-भृतीया नाम छन्दोगाः इममादिवर्तिनमोंकारमन्यवत आगन्तुं कृत्वा ऋगक्षरैर्णैवाद्येनोद्गीथोपद्रवान् प्रति-पद्यन्ते । नाक्षरमुद्धरन्तीत्यर्थः । तति···न्तीति । ते स्तोत्रगतं साम योनेरतिरेचयन्ति । उभयं हि वदन्ति । अक्षरमोंकारं च वाक्यशेषो दोषापगममतिरेकाद् वदन्तीति हेतौ अतिरेचयन्तीति, यथा हन्तीति, पलायत इति । उद्धरणपक्षे दृतितुल्यता साम्न उक्ता । इतरस्मिन् वज्रार्तिः तत्र । दृतेरर्थवत्त्वात् दृत्युपममिति तद्गुणाकीर्तनं वज्रमृच्छन्ति इति प्रस्फुटो दोष एव । तस्मादुद्धरणपक्षः शोभन इति उक्तमासीत् । तत्रैव गुणविशेषं विधित्सन् प्रश्नरूपं वाक्यमुपन्यस्यति ।

अथ... दिति । अथ पुनः प्रयोगकाले कथं कुर्यादितीदमुच्यते--वाचा ब्रूयात् । प्रसिद्ध एवार्थो विशेषविधित्सयानूद्यते । वाचैव यथा प्रसिद्धमोंकारं ब्रवीति, किन्तु मनोक्षरं[3] मनसा तु तदक्षरं गृह्णीयात् । तस्योदाहरणमुक्तम् । एत...त्याह । एतदिति यद्विहितमृगक्षरस्य मनसा ग्रहणं तदुपादीयते । शक्नुवत एतत् कर्म । अशक्नुवंस्तु मनसैतदक्षरमगृह्णन्नपि न दुष्यतीत्यर्थः । दुष्कर हि तद् यदन्यद् वदन्नध्यायेत् ।

अथैमिति । प्रदेश इतीह स्थानमुच्यते । अथैतदपरमपि त्रिविधं स्थानं स्तोत्रगतस्य साम्नोऽस्ति । परीक्ष्यं समुदात्तमिति । यथा शाकलवार्शादीनां प्रस्तावः । नानदमस्ये । स्वारक्रौञ्चादीनामुद्गीथादयः त्रैशोकयौत्ताश्वादीनां प्रतिहाराः, वासकालेयादीनामुपद्रवादयः । अध्यर्धेडेति द्राघितमिति छन्दसि ह्रस्वं दीर्घतामापन्नम् । यथाथर्वणस्योद्गीथादिः । अथवा द्राघितमिति नेदं द्विमात्रस्यैव ग्रहणम्, किं तर्हि आयतस्य यच्छन्दस्यायामः ततोऽधिके यामेन संयुक्तं द्राघितमिति । यथा नानदप्रतिहारः ।

नन्वेतत् समुदात्तस्योदाहरणम् । सत्यमेतत् । द्राघितस्यापि तूदाहरणं भवति । दीर्घीकृतान्त-त्वात् । यदि ह्युन्नतिमात्रविशेषोऽयमश्रोष्यत समुदात्तस्यैवोदाहरणमभविष्यत् । त्रैशोकप्रस्तावावत् । परोक्षमिति छन्दसि श्रुतानामिकारादीनामाधिकारादिभावः । यथा सञ्जयस्य प्रथमस्तोत्रीयायां तृतीयपदान्त्यस्याक्षरस्य । अथास्योपन्यस्तस्य त्रयस्य गुणसङ्कीर्तनं प्रश्नप्रतिवचनरूपेण क्रियते ।

समुदिति । अदः सामभक्तिशब्दः कर्मसाधनं[4] भजनीयं वदति । असावादित्योऽस्य भक्तिरित्य-दोभक्ति साम । श्रूयते हि—तद्यदेभ्यः तत्साम प्रायच्छदेतमेवैभ्यस्तदादित्येभ्यः[5] प्रायच्छत् इति च । स यदनुदितः स हिंकार इत्यादि च । सामवेद आदित्यात् इति च । बहुविधं साम सौहृदमा-दित्यस्य । तदिदमुक्तमदो भक्तिसामेति । तत्...भ इति । तत्सामस्थया भक्त्या आदित्येन सम्यग्वर्धयिष्याम इत्येतदर्थं समुदादानमुच्चैः पदावस्थितो ह्यादित्यः समुदात्तेनाप्तवद् भवति । द्राघदिति । सम्यञ्चेति द्राघणं च परोक्षं चेति । यदेतद्द्वितयं तत् सम्यगित्याहुराचार्याः । सम्यक्सङ्गतमित्यर्थः केन सङ्गतम्......

[ इति द्वितीयः खण्डः ]

---

१ को. तयोरुद० २ को. द्रुत्युप० ३ को. मनक्षरं ४ को. कर्मसाधनः ५ को. तदादित्यं

अतः परं ग्रन्थपातः.................................................................................

साम्नां दीर्घपरोक्षबाहुल्यं हि साम्नः समृद्धिं जनयति। द्राघणकारणे पृष्टे द्वितयस्यापि कारण-मसमत्वात् युगपदुक्तम्। स ह...दिति। पूर्ववाक्यावगमितानां समुदात्तादीनां सदृशगीतिष्वपि बहूनां साम्नां प्रस्तावप्रभृतिषु क्वचित् प्रवृत्तिं क्वचिदप्रवृत्तिं च प्रतिपादयितुमेतद्वाक्यं न्यस्तम्। स इत्याचार्यस्य[1] प्रसिद्धयतिशयप्रकाशनार्थम्। तेन[2] भगवान् वार्षगण्य एवमाह स्म ह अब्रवीत् किल। इहोदात्तमुन्नतिरनुदा-त्तमवनतिः। उदात्तानुदात्ते च ह्रस्वदीर्घे च परोक्षप्रत्यक्षे चेतरेतरयोगद्वन्द्वात् एकवद्भावाभ्यां पदानि सिद्धानि। अयमर्थः उन्नत्यवनत्योश्च ह्रस्वत्वायतत्वयोश्च परोक्षप्रत्यक्षयोश्च यथायोन्येवोहे प्रसक्तेऽपि येन प्रकारेण गीतं बहुश्रवणसुखं[3] मन्येत, तेन प्रकारेण गायेदिति। बहुपुरुषाणामव्यवस्थिताभिलाषत्वात्। या तत्र तत्र स्तुतिभागिनी[4] देवता[5] ताम् प्रतिपादिता[5] ? ग्राह्या। दुर्ज्ञानो देवाभिलाषः। स्वरूपेणेति चेत्, अपर्यनुयोगोऽयमूहस्य। नित्यत्वात् सिद्धस्यैव हि ऊहस्य पाठस्य लक्षणानुविधानमाचार्यः करोति बोधवृद्धये। पाठस्य चाध्येतृभिरपि वादेन कृतस्याप्रमादार्थः। प्रमादसंभवश्च दर्शितो ब्राह्मणेन—को ह प्रमादस्येशः, उत वै प्रैव माद्यतीति। नाना ह्युदात्तानुदात्तह्रस्वदीर्घपरोक्षप्रत्यक्षाणि क्वचिद् यथायोन्येवोहे प्रवर्तन्ते। क्वचिद् योनिवैपरीत्येन। तत्सर्वं स्तूयमानदेवतावशादागतं ज्ञेयम्। नान्यदतर्क्यमिति[6]। इहैतान्युदाहर-णानि उदात्तानुदात्तयोस्तावद् गौरीवितस्य प्रस्तावाद्यन्तौ, ऊहेऽवनतौ, तृतीयार्दिहि योनौ प्रस्तावे ऊहे मन्द्रादिः, चतुर्थान्तश्च योनौ, ऊहे मन्द्रान्तः, कालेयस्य तु नावनमत्यूहेऽपि, आदित्यसाम वाजदापर्यश्च सदृशप्रस्तावे सामनि[7], ऊहे तु एकस्योन्नमति प्रस्तावः। नैकस्य ऊवा[8] उ ऊवा[8] सदृशस्वर-योर्निधनयोरेकमूहम्। नेमति। नैकं बहून्यनुदात्तोदाहरणानि।

अथ ह्रस्वदीर्घयोर्नानिदस्य प्रतीहारान्तश्छन्दसि द्विमात्रः सन्नूहे एकादशमात्रो भवति। साकमश्वसौभरवैणवानामुद्गीथमध्या ह्यूहे लब्धोन्नतिविशेषाश्छान्दसीं गीतिं पूरयित्वापि पुनरुन्नम्याय-च्छन्ते। आथर्वणस्य उद्गीथादिह्रस्वोऽप्युपान्तन्तुच्छक्तोऽनुन्नमन् दीर्घीभवति। एवं बहूनि ह्रस्वोदाहरणानि।

अथ दीर्घाणाम्। सौश्रसस्य निधनान्तरच्छन्दसि षड्विंशतिमात्रः सन्नूहे सप्रदरामात्रो भवति। जमदग्ने व्रतस्योद्गीथोपद्रवयोः हहावुह ह् हावु इति स्तोभौ अह्रासेनावुन्नन्तु शक्तौ ह्रसतः। गोष्ठ-पञ्चविंशत्यक्षरनिधनयोः स्तोभा उन्नमन्तोऽप्यूहे योनिमात्रां न जहति।

अथ परोक्षप्रत्यक्षयोः परोक्षस्य तावन्नोदाहरणं पश्यामः। यानि हि छन्दसि परोक्षाणि तान्यूहे प्रत्यक्षत्वं न गच्छन्ति। ततः परोक्षतायामप्येवैनत्तेषां तु वल्गुत्वमनुमेयम्। प्रत्यक्षस्य संज्ञयोद्गीथे प्रदर्शितमुदाहरणं भवति। किं पुनरग्निष्टोमसामस्वेषामुदाहरणानि अनादृत्य शिष्ट एवोहपथे सप्रयत्नं दृश्यते। अत्र ब्रूमः—यानि भवानग्निष्टोमस्वेषामुदाहरणानि मन्यते यानि तत्र वाचनिकयोः छन्नगानी-करणयोरेवान्तर्भावादेषां वल्गुत्वं प्रयुक्तानामुदात्तादीनामनुदाहरणानि।

इति पर्यध्याये तृतीयः खण्डः

१ को. इत्यस्याचास्यर्प २ को. स्तन ? ३ को. वद्रुश्र० ४ को. स्तुतिमागिनी?
५ को. प्रतिपदुता ६ को. नान्यदनतर्क्यं० ७ को. सामनी ८ को. ऊषा उ ऊषा ?

## अथ चतुर्थः खराडः

तदा···नीति । येन द्व मिथः संगच्छमाने परस्परं विश्लेषयति निर्विवरीकरोति तत्तयोः श्लेषणमन्तर्गतं श्लेषणमन्तःश्लेषणम् । तत्राहुः सामविदः—यो वै पुरुष ऋचश्च साम्नश्चान्तःश्लेषणं जानाति स न रिष्यति नैव रिष्यतीति । अथैवं प्रशस्तमेकान्तवेद्यमेतदुपदिश्यताम् इत्याकांक्षायामाह—एतन्मनः यदेतन्मन एतदेवैनयोरन्तःश्नेषणाम् । अन्तः शब्देन विशेषणं वागपेक्षया । वाचा हि प्रकाशं संश्लेषणमृक्सामयोः क्रियते । अथास्य प्रयोजनापेक्षायामाह—

तन्म···मिति । तदिति हेतौ[1], तस्मान्मनसैवान्तरा अन्तः शरीरं पृथग्गेयम् । एव शब्दः समुच्चये । मनसा च गेयं, न केवलं वाचेति । अथवा सम्भावनायाम् । यथा द्वारि मामवस्थितं राजेव दृष्ट्वाऽस्मयदिति । वाग्गतं सामैव मनसपि ध्येयम् । नान्यदित्यर्थः । पदा[2] इति । पदशब्दः पादवचनः । पश्यामः –त्रीणि चाष्टाक्षराणि पदानि । अथास्य पदानामिति । क्नृञ्ति हि न प्रदेशः पदान्तेषु नारमेत् । पदान्तेषु नावस्येदित्यर्थः । य एते पदान्ताः साम्नि एतत् क्नृञ्ति[3] । इति शब्दो हेतौ । क्नृञ्न्तत्वादप्रकाश्यम्[4] । अविच्छेदगाने हि गूहितं भवतीत्यभिप्रायः । ततो नौशने निवेदेत्येवावस्येत्[5] । नान्धसेति[6] बृहति । चकारव इति विधानावसाने त्वर्थकृतेनैष विधिः प्रविशति स्तोभेन तु पदान्तप्रवृत्तिना दोषोऽस्ति नारमणे । यथोर्ध्वसद्मने बर्हिषि वा हो यीति । यथा च गारे उदरोहोवेति । किं पुरर्बृहत्साकमश्वादिषु आम्नायविरोधेन अक्षरसन्धानमपि सविकारं कार्यम् उतानुश्वसनमेव, अत्र ब्रूमः––आरमणप्रतिषेधेऽक्षरसन्धानमर्थलभ्यं भवति । यदि ह्यक्षरसन्धानं च स्यादहुतमेव भवेत् । ततस्सिद्धं बृहत्साकमश्वयोः सन्धानं वास्तु नवेति चरा इति च । क्व पुनः शक्तेन आरन्तव्यम्, इति चेदुच्यते—उक्त वान्यात्[7] । उत्तरस्य पदस्य किञ्चिदवयवमारभ्य गीत्वा वान्यात् । यथा बृहति स्तुवा औहोवेति यथा वैतहव्ये विश्वासहमिति परस्मिन्नध्याय उद्गीथोपद्रवयोरनवानगेयत्वं विधाय पुनरेव वक्ष्यति अशक्तः पर्वान्त आरमेत् न तु पर्वमध्ये इति तदपवादार्थमेतद्वाक्यद्वयम् । पूर्वेण तावत् पर्वान्नतभूतेऽपि पादान्तमेत्रारमेदित्युक्तम्[8] । न तु पर्वमध्येऽपि । पादान्तरस्य मध्य आरमेत्काममिति । ततो नो॰सयज्ञायज्ञीययोः पर्वान्तिभूतऽपि नादान्तेऽनारम्य पर्वमध्य एव उत्तरपादाद्यऽक्षरद्वयमारम्यते ।

अथेह वयं मन्दबुध्यपेक्षया कांश्चित् पर्वसन्धीन् प्रदर्शयिष्यामः । बृहत्यां[9] तृतीयायां स्तोत्रियायां वागारामः[10] इति, साकमश्वे प्रथमायां ग्म्ययि रा ए भा इति । तृतीयायाँ पाता अथा इति । अद्वितीये प्रथमायामर्कायिणा ब्रह्मेति, तावुद्व शमिति च । तृतीयायां कक्ष्या, प्रा, अथेति । षष्ठाह्निक औशने पवास्वा अधीति निदर्शनात् । सोमपाशब्दं च पुनरुन्नम्य सन्दधाति । शाक्त्ये द्वितीयायां ना वा उ ता इति । पाञ्चमाह्निके वार्शे प्रथमतृतीययोः पादान्तः पुनरुन्नमति । द्वियीयस्वरो भवति । वैखानसस्य द्वितीयपादान्ताः पुनरुन्नमन्ति, अन्यानि नैवंविधानि ।

---

१ को. तहतौ ?　२ को. तदा　३ को. क्नृम्मिति
४ को. क्नृन्तत्रत्वाद॰ ?　५ को. ॰त्येवस्येत् ?　६ को. चान्धसेति
७ को. उक्तवान्या ?　८ को. वादान्तमेनार॰ ?　९ को. बृहती　१० को. वागारामा

अपरं मतम्—उन्नतेनैवात्र सन्तानम्, अष्टानिधने एवं दर्शनात्, एविला एश्रुता इति । सत्यां च गतौ स्वरातिरेकस्यानारभ्यत्वादिति । कः[1] पक्ष[1] एनयोः[1] श्रेयान्, दुरवधारमेतत् । पूर्वस्तु प्रयोगवेलायामाश्रेयः[2], बाहुल्येन दर्शनात् । पुनरुन्नमनस्य उच्चातीये सैन्धुक्षिते प्रथमायां पादान्तः पुनरुन्नमति । द्वितीयायां द्वितीयस्वरो भवति । पुरोद्वितीयस्य बृहतः प्रथमायां वा आ वा इति । अग्निष्टुतस्य नौधसस्य द्वितीयायमूताया आग्नायीमिति । कावस्य प्रथमायां पदान्तो द्वितीयस्वरः यज्ञायज्ञीयस्य तृतीयान्ताया इति । एवं सर्वत्र दृष्टसध्यानुरूप्येणाप्रमादो वितर्क्य सन्धेयः[3] । केचित् त्वस्मिन् सन्धाने सन्निकर्षोच्चारणमात्रमेव कुर्वन्ति । नाक्षरविकारः । तैर्नु नमौशननौधसादिषु इन्द्रोशास्तिहादक्षामित्युपलक्षितम् । यदि ह्युपलक्षितं, मोहमूलमेतत्प्रसजति ।

**स···यदिति** । स्तुतिरियं पूर्वस्य विधेः । स इति तत्रार्थे । आक्रमतेऽनेनेत्याक्रमणम् । **तत्रैवमुल्लक्तम्**[4] ? । पादान्तमुपक्रम्यानन्तरं पादमारमणे कृते, यथा दूरारोहात् पर्वतशिखरादीनारोहमाणः शिलावृक्षविटपादेशक्रमणात् परमाक्रमणमाक्रम्यैव खल्विति नान्तराले पदं दधाति तादृक् समीचीनं तद्भवति । **तदा···तीति** । य एनयोररण्यं वेद स तत् परिहर्तुं शक्तत्वात् न रिष्यतीति कल्प्यमस्तु । न वेद स, एतत् आस्कन्द्य रिष्यतीति । **एत···थञ्च** यदि प्रस्तावोद्गीथयोर्मध्ये रिक्तः कालः स्यात् 'एतत् खलु ऋक्सामयोररण्यम्' । किं च उद्गीथं चेत्यनुवर्त्यम् । उद्गीथप्रतिहारयोर्मध्ये द्वितीयमरण्यम् । उपद्रवं प्रतिहारं चेत्यनुवर्त्यम् । विधानं च उपद्रवं चेत्यनुवर्त्यम् । **तन्नारभ्यम्** । यदेतच्चतुर्विधमरण्यं तन्नोत्पाद्यम् । **ईश्व···न्नते** । य एतदरण्यमुत्पादयति सोऽरण्ये भवामार्तिमार्तुं गन्तुमनुभवितुमीश्वर एव स्यात् ।

अथैवं सत्यरण्यपरिहाराय त्वरमाणो विधा सन्दधत् तदन्तादीनामैकान्त्यमेव हि कदाचिदापादयेदिति कृत्वा तत्परिहरन्नाह—**नोतु...नाय** । यथोद्यतशिरसोऽप्यनड्वाहः स्कन्धासक्तायां धुरि भरमसहमाना ह्लसन्तीव चोत्सेधावनमन्ति । य एवमेताः प्रस्तावादयो विधा अपि पूर्वोन्तपरादीनामैककाल्यां वर्तनव्यतिषिक्ताः सत्योऽवनमन्तीव च । अवनमितिलक्षणं च ह्लासलक्षणा वामवनता । अतो विधासन्तासन्तव्यतिषङ्गात् यजमानस्योद्गातॄणां वा कुब्जवामनापत्यत्वं दोषः प्रादुर्भाव्यते । आजायतेऽस्मादित्याजानम् । श्रूयते च इन्द्रो ह्येतेषामाजानम् इति । इदमाजानमेषामित्यत आजानाः । इतराभ्योऽपि दृश्यन्त (पा. ५.३.१४) इति विधेः प्रथमाया अप्यस्ति तरप्रत्ययः । अलुक्[5] त्वन्वेष्टव्यश्च[5] क्षणम् । अयमर्थः ततोऽयं विधाद्यन्तव्यतिषङ्गः क्रतुधूः क्रत्ववयवस्य धूरिव अनडुहो ह्लासमवनतिं च करोतीति । एतस्मात् कारणात् अत आजानाः कुब्जाश्च वामनाश्च । ततस्तत्परिहाराय, नोनुव्यतिषज्यं, नैवायं व्यतिषङ्गोऽपि कार्य इति ह स्माहाचार्यः ।

ननु पुनः क्रतुधोरिति पाठः, सत्यमेवं पठन्ति । उकार एव त्वयमध्येतृप्रमादादोकारीभूतः, इति कृत्वार्थबलात् व्याख्यातः । अथवा श्रुतमेव पाठं प्रमाणीकृत्य वीप्सायां धो प्रत्ययो मृग्यः । ततः **क्रतुधोः** प्रतिक्रतुव्यतिषङ्गात्, अत आजानाः स्युः । कुब्जाश्च वामनाश्चेति योज्यम् । अनडुद्दृष्टान्तश्चोत्सीदति । तत्—**प्रस्तुयात्**[6] । तत एव कारणादेत् प्रस्तुयाव नान्यत् कुर्यात् । एषां वाक्यानामर्थं सर्वान्ते विस्तरिष्यामः । **उदेव गायेत** । उद्गायेदेव । प्रत्येव हरेत्, नवै द्रवेत् । अस्योक्तेष्वेवान्यतमत्वादयमित्युक्तम् । नासाविति ।

---

१ को. कः पक्षयोः २ को. ०मासोयः ३ को. सन्धेयम्
४ को. ०मुल्लक्तम् स्थण्य ? ५ को. अलुकस्त्वन्वे० ६ को. प्रैस्तुयात्

ग्रयात्तीति। उक्तवद्गीते सति विधानां सन्धानान्नाख्यामाच्छेति। व्यतिषङ्गाकरणान्न ग्राम्यामपि। ग्राम्या हीयमार्तिः यत् कुब्जवामनापत्यत्वम्।

अथैषामर्थो विव्रियते। उक्तग्राम्याख्यार्तिपरिहारार्थमेव—एते त्रयः सम्भूयैव सर्वस्तोत्राणि गायन्ति। न च यथा होत्रादयः शस्त्राणि तथा विभज्यैकं स्तोत्रमेते इति। यदि ह्येको गायेत्, कावस्य प्रस्तावोद्गीथौ सन्धायाः व्यतिषङ्गो न सम्भवेदस्य गातुम्। आभ्योदयाणीति गीते सन्धानापत्तेररण्यरंभः स्यात्। अथो आभ्यो-दयाणीत्युक्ते[1] व्यतिषङ्गदोषः स्यात्, गातृभेदे तु आभ्यो वा दयाणीत्येवं सन्धिः सम्पन्नो भवति। न च व्यतिषङ्गः। संहिताकार्याणां तत्राप्रसङ्गात्। अयमभिप्रायः—सन्धानार्थमेवैते त्रयः संभूय गायन्ति। एको ह्यविरम्य न पारयेत्। नच विधानमसमाप्य विरतिः प्रशस्ता इति। तत्···गायेत्। यत उभयं दोषकृत् असन्धानं च व्यतिषङ्गश्च, तस्मात् खलु विधासन्धागानशून्यकालं बर्हिष्ठमन्यमनुत्पादयन् न व्यतिषङ्गः। प्रस्तावादिविधान्तादीनामैककाल्यं परिहरन् गायेत्।

ननु अयमर्थस्तन्नारम्यं, नो तु व्यतिषज्यम्, इयत एव सिद्धः। सत्यमेतत्। इत्थं तु पौनरुक्त्यं परिहरामः। एष दोषो संधाने एष व्यतिषङ्ग[2] इतीयत्, वरौ तौ विधी। अस्य तु विधेः सन्धानविधानं व्यतिषङ्गश्चार्थं इति। सन्दधादिः। सन्दध्यादेव नान्यत्कुर्यात्। पृथगवस्थितानामवधारितादीन्[3] सन्दधदपि स्वरतो वर्णतो वापि विकृत्य[4] न गायेदित्यर्थः।

ननु वक्त्रभेदविधासु संहिताकार्याणां सिद्ध एवाभावः, एवं चेदन्यत्र सन्धानावच्छेदयोः स्वराक्षर-विकारो यथाप्राप्तं कार्य एव। नाशङ्कनीय इत्येवमर्थमेतद् भवति। ततः पर्वसन्दधानेषु यदस्माभिः प्रदर्शितं स्वराक्षरवैपरीत्यं तत्र न किंचिदपि संशयितव्यम्। आम्नायो बाध्यत इति। उद्गी-रारिं-प्रति-वारिम्-उपमिति।

इति पर्यध्याये चतुर्थः खण्डः

---

१ को. वौ याणी० २ को. व्यतिपङ्गो ३ को. ०धारितान् दीन् ४ को. कृत्य

जघनपार्श्वप्रतिष्ठितं वान्यतरजघनपार्श्वे वा, इतरपादतलप्रतिष्ठितं वा। प्राण्यापान्येति सिद्धे प्राणापानग्रहणात् यथावत् प्राणानामायामः। प्राण्यादपान्याच्चेत्येवमर्थः। द्यावापृथिव्योः सन्धिमीक्षमाण इति ऊर्ध्वमुखताधोमुखतानिवृत्त्यर्थम्। यथाधः पृथिवीमुपरि द्यौस्ततो मध्यावस्थितमुखः, सन्धिमनु द्यावापृथिव्योरीक्षमाण इव भवति।

**अप्रमुञ्चन्निति**। पुरः पृष्ठतः पार्श्वतो वा अनवनमन्नित्यर्थः[1]। ओपोहन् क्लिश्नन्। ओष्ठावविचालयन्। ओष्ठ्याक्षरोच्चारणादन्यत्र न तौ विचालयेत्। अतिसंवृतौ अतिविवृतौ वा तौ न कुर्यात्। **अनम्बूकृतः**। वर्णोच्चारणविप्नुषां निर्गमनमम्बूकरणं[2] तदकुर्वन् गायेत्। **अनम्बूकृतं**[3] **गेयम्**। **अननुनासिकं गेयम्**। नासिकामनुगतमक्षरमनुनासिकं ततोऽन्यदननुनासिकं, तथा गेयम्। न तु नासिकया सहितम् **ओङ्कारनिश्रितम्**। ओंकारनिषेवितम्। ओंकारमाश्रितमित्यर्थः। उद्गीथोपद्रवाद्योंकारार्थमेतत्। यद्येवम्, सिद्धोऽयमर्थः पाठतः. सविशेषश्चानूदितः पूर्वमपि। एवं चेदन्यथा वर्ण्यते। **निर्गतम्**। ओंकारान्निर्गतं यदिदमनेकभेदं साम तत्सर्वमोंकाराश्रितमोंकारादेव निष्कृष्य मया[4] गीतम्[4], इत्येवं संकल्प्य गायेत्।

**अथ···वन्ति**। यत्कर्मणि वा केनचित् क्रियमाणे, वाचि वोच्चार्यमाणायाम् असन्तमपराधमार्तिं च तन्निमित्तादेवोन्मादकृतात्[5]। प्राग्यदुपवर्णितमस्मादपराधादिदमशिवं[6] प्राप्स्यतीति तत् खेदन्या वाचो वचनं तदनुव्याहरणं, तस्य कर्तारोऽनुव्याहारका नाम भवन्ति। खलु नवा भवेयुरपि। **तान्ना···क्रोद्धुं**। तान् प्रति क्रोद्धुं नाद्रियेत नेच्छेत्। **साम्न···शायत्**। साम्न एव शीयमानाद्यत्प्रमत्तवत्तस्यां[7] गायेदिति। अन्तवाचि पदमाशायत् आसमाप्तेरिति केचित्।

अथ केचिद्—आशा इच्छा तां यच्छतीत्याशायत्। इच्छावशमवगच्छन्नित्यर्थः। गमः क्वौ (पा. ३.४.४०) इति अत्र लक्षणमस्यां व्याख्यायामिति[8]। **साम्नो···स्पृशेत्**। यः साम्नोऽनुव्याहारः सोऽप्रमत्तं न स्पृशेत्। शक्नोतेरर्थेऽयं[9] प्रयोगः। ततः स्प्रष्टुं शक्नोतीति निर्वाच्यम्। **स चेत्···हरेत्**। तान्नाद्रियेत प्रतिक्रोद्धुमिति। विधेरासमाप्तेः स्तोत्रस्य क्रोधमुत्पन्नमपि शमयेत्।

अथ स प्रक्रान्तस्तोत्रपारगतः क्रुध्येन्नेत्। य एते ब्राह्मणवन्तः अथ वादवन्तः प्रत्यनुव्याहाराय—यज्ञस्य रेतःसिक्तिमचीक्लवं यज्ञमारोऽरेतस्का ते प्रजा भविष्यति इत्येवं ब्रूयात् इत्येवमादयः। तद्यथाविहितमनुव्याहारकान् एतान् प्रत्यनुव्याहरेत्। योऽसौ सर्वप्रत्यनुव्याहारान्तेन हैवंवित् इत्यादिरर्थवादः तस्य सर्वप्रत्यनुव्याहारसाधारण्यात् ब्राह्मणवन्तोऽर्थवादवन्त इति निरुक्तम्। नहि प्रत्येकमर्थवादाः सन्ति।

अथ ब्राह्मणे य एषां विधेयतया तदर्थमाम्नायन्ते ते ब्राह्मणवन्तः। कः पुनरस्तोत्रविषये। स्तोत्रेषु चोर्ध्वमग्निष्टोमसाम्नः प्रत्यनुव्याहार इत्यपेक्षिते उच्यते। **सख···कारी**। अन्त इति शब्दोऽध्याहार्यः। य एतेभ्यः प्रत्यनुव्याहारवद्भ्यः द्वादशभ्यः स्तोत्रेभ्योऽन्यत्रानुव्याहृतः[10] स खल्वेवं विधया[11] बुध्या संबुध्येत। सङ्कलय्य यः मामकारी साम्ना करोति, प्रधानं तदङ्गं वा निर्वर्तयति स सामभूतः, यजुर्भूतश्चेतरः[12]।

---

१ को. अनुव०  २ को. ०नमंबुक०  ३ को. अनंबुकृतं
४ को. मायागीत ?  ५ को. तन्निमित्तान्मेदोन्माद०  ६ को. ०दुपवर्ण्यत्व ?
७ को. शीयमानाय प्रमत्तास्यां ?  ८ को. व्याख्यानमिति  ९ को. शकनुतनोऽर्थे
१० को. ०नुव्याहृतः  ११ को. विध्यात  १२ को. यत्तु०

स अ···सीति। पूर्वमेवं सङ्कल्पितवान् स स्वयमेव सामर्ग्यजूंषि कुर्वन् तद्भूतः सन्नित्यं प्रतिब्रूयात्। अस्तोत्रविषये स्तोत्रेषु चोत्थादिषु अयमस्य प्रतिवचनस्य समानार्थः। यो मा सामर्ग्यजुष्कारिणं तद्भूतमनपराधं सन्तमेवानुव्याजहार[1], स त्व सामर्ग्यजुष्येवाह तत एव तदभिधेयभूतं ब्रह्मचारः। तदतो दोषात्त्वं, यथा सर्वमृत्वा[2] सर्वत्र प्रतिगतः पुरुषः पराभवति एवं पराभविष्यसीति। अयमभिप्रायः—ब्रह्मार्तेः सर्वेश्वर[3] योऽसावुपरि सर्वस्यावस्थितोनित्यो निरञ्जनः पुमान् सर्वया त्रय्या[4] बहुविधं तोष्टूयते, स ब्रह्म सर्वस्यास्याः[5] जगद्विभूतेः तदधीनत्वात् सर्वमयोऽसौ भवतीश्वरः[6] इति। कुश···पति। आत्मना। स्वयमित्यर्थः। यथा—अथात्मना मनोमयः समभवत् इति। एवं प्रत्युच्य कुशलवानेव स्वयं भवति। परा···भवति[7]। एवं प्रत्युक्तोऽनुव्याहारकः पराभवति।

इति पर्यध्याये पञ्चमः खण्डः

---

१ को. ०वानुव्याहरहारः ? २ को. 'सर्वं वृत्त्वा' इति वा पाठः स्यात् ? ३ को. सर्वक्ती
४ को. तूर्या ५ को. सर्वस्याश्वास्या ६ को. भवतीयश्वरः
७ को. परचति !

# अथ षंष्ठः खराडः

एका-वति । पञ्च साम्नोऽवयवाः । प्रस्तावः, उद्गीथम्, प्रतिहारः, उपद्रवो, निधनमिति । तेषां परिमाणस्वरूपावस्थानविकारवृद्धिह्लासविज्ञानमादिनाध्यायत्रयेण[1] क्रियते । आदौ तावत् प्रस्तावपरिमाणमवधार्यते । योऽपराध्र्यः प्रस्तावेष्वन्यतमः[2] स एकाक्षरो भवति । षं निराध्यः । पराध्र्यो महत्तमः । यथं-इति । उक्तयोरवध्योः उदाहरणे प्रदर्श्येते । यथैतत् प्रस्तूयत इति नेयम्[3] कृष्ट...यति ? षट्त्रिंशदक्षर इतीयता प्रस्तावो भवतीति वचनमभ्यासविध्यपेक्षम् । विंशत्यक्षरसमवेतो ह्ययं प्रस्तावः षट्त्रिंशदक्षर एव भवति, न पुनर्विंशत्यक्षर इति । तद्वै इति । तत्रैव तु केचिदाचार्या राजनस्यैतस्य महाव्रतपृष्ठभूतस्य पञ्चपञ्चाशदक्षरः प्रस्ताव इत्यतः कारणात् पञ्चपञ्चाशदक्षर एव पराध्र्यः प्रस्ताव इत्याहुः ।

तद्वै ...खलु । खल्वितीह प्रतिषेधे । तद्वै खलु । तत्तु नेत्यर्थः । तत्तु...वति । राजनस्य दृष्टः पञ्चपञ्चाशदक्षरः प्रस्तावः कुतः प्रत्याख्यातः, पूर्ववाक्येनेति चेद् वदामः । तत् पञ्चपञ्चाशदक्षरप्रस्तावत्वं राजनस्य यज्ञजं भवति । अस्य चेह[4] ऋषभस्य तु रैवतस्य षट्त्रिंशदक्षरमेव । प्रस्तावान्ताविति । द्वितीयया यौ द्वौ प्रस्तावौ प्रदर्शितौ तदपेक्ष[5] एवायमधिकारः इति राजनप्रस्तावस्य पञ्चपञ्चाशदक्षरत्वोपन्यासादवगम्यः । किंचि...इति । एकाक्षरषट्त्रिंशदक्षरयोरन्तराले नानाक्षरसंख्येषु प्रतिसंख्यं द्व्यक्षरम् । त्र्यक्षराश्चतुरक्षरा इत्यनुक्रमप्रदेशेषु[6] किञ्चिदेव[7] खलु गानस्थानं[8] शून्यं प्रस्तावाक्षरपरिमाणेनासमवेत भवति । तत्र द्व्यक्षराणामोग्नायी हावु हावु हावानिति[9], तद्वा हो वा उच्चा इति चेद्दशान् प्रदर्शयेत् त्र्यक्षरान् । आ गन्ता (जै. सं. १.४५.३) इति । [चतुरक्षरान्] प्र तु द्रव[10] (जै. सं. १.५४.१) इति[10] । सुलभाः परे । पञ्चाक्षरान् प्रमित्राय (जै. सं. १.२७.३) प्राहाविति । षडक्षरान् ऐन्द्रसानसायिं यदा कदा च (जै. सं. १.३०.६) माहाविति । सप्ताक्षरान् यः जगृह्याते[11] (जै. सं. १.३३.५) इति तृतीयस्य[12] प्रथमयोः । सुलभाः परे । नवाक्षरान् त्वमग्ने यज्ञानाम् (जै. सं. १.१.२) त्वमग्नायीति । दशाक्षरान्, यौ द्वितीयार्षभवज्रयोः । सुलभाः परे । ततः परे च त्रयोदशाक्षरान् । यो द्वितीयस्य गवां व्रतस्य चतुर्दशाक्षरान् । यः प्रो अतासीद् (जै. सं. १. ५७. ४) चतुर्दशस्य । पञ्चदशाक्षरान् यो जगृह्या ते[13] (जै. सं. १.३३.५) तृतीयस्य । सप्तदशाक्षरान् । सुलभाः परे । यो वात्सप्रस्य दीर्घतमसो व्रतस्य च अष्टादशः । अश्वव्रतस्य आयाह्युप[14] (जै. सं. १. २४. ७) इत्यस्य सृष्टिः[14] । इत्थं चास्याः पादव्यवस्थानम्—प्रथमाः षष्ठश्च द्वादशाक्षराः पादाश्चत्वार इतरेऽष्टाक्षरा इति । तत्र यद्यप्ययं पादो व्येत्यतो ऽन्यस्याक्षरस्य क्षेपस्याभावात् एकादशाक्षर एव तथापि द्वादशाक्षरतां गमयितव्यः । तन्न्याय्यत्वाच्छन्दसः । यथा अभी षु णः सखीनाम् (जै. सं. ३.४.५) पान्तमा[15] वो अन्धसः (जै. सं. १. १७. १) इति अष्टाक्षरावेव तद्वत् । नवदशाक्षरो नास्ति ।

---

१ को. ०विज्ञानमदमादि    २ को. ०ष्वन्व्य०    ३ को. ज्ञेयम्
४ को. मेह    ५ को. पेक्ष    ६ को. ०मप्रदत्र्येसु
७ को. हिञ्चि०    ८ को. गनास्थानं    ९ को. हावान्निति
१० को. प्रतुद्रन्ति    ११ को. जगृह्यतायां    १२ को. तृतीयस्य सुलभ्यां
१३ को. जगृह्यतायां    १४ को. आ पा रुचेत्यसृष्टि१:    १५ को. वान्तमावो

नन्वयमस्ति तृतीयस्य इन्दुः पवीयस्य (जै. सं. १. ५०. ५)। नैवं भवति । विंशत्यक्षर एवायं भवति । अश्ववव्रते कृतया कल्पनयापरं दर्शनम् । यान्यक्षराण्यक्षरभेदतोऽप्युपलब्धुं न शक्यानि तान्यसन्ति कथमिवाक्षरसंख्याः[1] लभेरन्निति, अस्मिन् दर्शने सप्तदशाक्षर एवाश्ववव्रतस्य प्रस्तावः। इन्दुपवीयस्य (जै. सं. १. ५०.५) त्वस्य नवदशाक्षरः। तस्मादष्टादशनवदशाक्षरौ सक्तायां न संवदेते विंशत्यक्षरौ। यस्त्वरिष्टयेति सप्तमस्य परं स्थानं शून्यं, द्वाविंशत्यक्षरः। परस्य यमव्रतस्य वृत्रस्य[2] (जै. सं. १.३४.२) इत्यस्य[2] च परं शून्यं, चतुर्विंशत्यक्षरम्। पयसंवरस्य च वैश्वानरव्रतस्य च बृहदैरेरिणस्य च पराण्यष्टौ स्थानानि शून्यानि। त्रयस्त्रिंशदक्षरो राजनस्य परं च शून्यम्। पञ्चत्रिंशदक्षरः परस्य वसिष्ठव्रतस्य च पक्षिणश्चैलान्दस्य। सय वति। वक्ष्यत्यवसानपरिमाणत्वं प्रस्तावस्य, तस्यायमववादः। अवसानादर्वागपि, अवसानोल्लङ्घनेनापि। यद्वै खलु यदेव खलु तत्र साम्न आदितः सम्यक्साधयिः सदृशं, तुल्यमुद्गीथादिभिः वीतं स्यात्। स तावानेव तस्य प्रस्तावो भवति। तस्मादिमं स्तोमम् अयमग्निः श्रेष्ठतमः (जै. स. १. १२.६) इति वत् द्वितीयपादादेः सर्वः प्रस्तावः। आप्ययाभि प्रियथोः[3] (जै. सं. १. ५७. १) पदान्तनिष्ठी अदर्दर (जै. सं. १, ३३. ३) इति चाद्यस्य। एवमेवाभविष्यद् यदि सम्यगिति नावक्ष्यत्। तद्वचनात् अदर्दरुत्स इत्येवास्य प्रस्तावः। ऋतुनिधनस्य चैवमेव द्व्यक्षरप्रस्तावता सिद्धा तदपि सम्यग्ग्रहणाभावे[4] परसाकमुक्षीयवत् परप्रस्तावमभविष्यत्। नैव विच्छिन्द्यात्। येषु पूर्वो विधिर्नावतरति तानि सर्वाणि यावदवसानप्रस्तावानि। वाक्यद्वयं त्वेतत्। अल्पे साम्नि महत्तरस्य, महति चाल्पीयसो विषयस्य प्रस्तावत्वेन कल्पनमयुक्तमिति कृत्वा स्वाध्यायाद्यर्थमेतदवसानम्। 'उक्तेष्विमं स्तोमोयादिष्विति, वेति या वक्ष्यमाणस्य प्रस्तावस्याव-सानमात्रता, तां प्रति केषुचित् सामस्वाशङ्का जायेत, तन्निवर्तनार्थमनवसितस्य गीयमानस्य महतोऽपि सामभागस्य नावच्छिन्द्यात्। अर्धप्रस्तावतया यथावाहीनि। तृतीयस्य नानदस्य स्वदिष्ठया (जै. सं १. ४६. २) इन्दुः पविष्ठ (जै. सं. १. ५०. ५) इति च सप्तमतृतीययोः। नावक्रामेत्। अल्पत्वं प्रस्तावस्य परिहरन् नावसानमतिक्रामेत्। प्र तु[5] द्रव[5] (जै. सं. १. ५४.१) धर्ता दिवः (जै. सं. १. ५७. ५) इत्यन्तयोः अपि विद्यात् एव।

इति पर्यध्याये षष्ठः खण्डः

---

१ को. कथदि    २ को. वृत्रहत्यस्य

३ को. आप्ययोश्चाभिप्रियोः    ४ को. म्यग्रहणा०    ५ को. प्रतुदिव

# अथ सप्तमः खण्डः

अथात आदेर्विचारः । करिष्यत इति शेषः । नन्वत्र पूर्वमेव विचारः कृतः, तस्मिन्नेतस्मिन्नित्यधिकृत्य । सत्यमेतत् । स तु विचारः सिद्धे प्रणवे ऋगक्षरस्य तस्योच्चारणमनुच्चारणमिति । अत्र पुनः प्रणवस्यैव भावाभावपरः शाखान्तरीयपक्षभेदप्रदर्शनार्थश्चेत्यपुनरुक्तम् । यदिदमस्माकं च क्षरं तद् गौतम एवं खलु प्रदिशति स्म । कथमिति चेत्, यथाध्यायं, यथायोनि, अच्छिन्नमेवैतत् ब्रुवन् उदात्तमुन्नतं योनावुत्पन्नं स्वरमपि उन्नतस्वरयुक्तं कुर्वन् स्वराभिभारमिव गातुमिच्छेदिति । स्वराभिभारमिवेति यदेतदक्षरं प्रणवेनाच्छाद्यते तत्प्राप्तप्रणवरूपं प्रणवस्य गौरवापेक्षया पूर्वप्रणवाद् गुरुतरं भवति । गुरोः छेदमभिधानं यत् अभिभार इति । एवं च सति प्रणवादानपक्षे तद्गौरवादयमाद्यक्षरगुरुर्भवन् अक्षराभिभारो भवति । अस्मिंस्तु पक्षे प्राप्तोदात्तस्वरस्वरकृतात् गौरवात् स्वराभिभारो भवति । इव शब्दोऽवधारणायाम् । उदात्तकरणेन स्वराभिभारमेव जिगासेत् । न प्रणवकरणेनाक्षराभिभारमिति । प्रणवञ्जय्यः[1] । सम्यक् स्वरति समतया स्वरति, वर्णतः स्वरतो वा अनूनमनधिकमुच्चारयतीति संस्वारितरः[2] प्रणवादायी प्रणवादानशीलः स, इतरस्मात् संस्वारितरो भवतीति विधानं जय्यो ब्रवीति स्म । प्रणवादानमुद्गातुः संस्वारितरत्वं साधयति । बैल्वो यूपोऽन्नाद्यमिव प्रभामिव च परिवर्तिनीविष्टुतीष्विति अपरं दर्शनम् । स्तुतिरियं प्रणवादानस्य न फलव्यक्तिरिति । अपि···इति । अथ चायं प्रणवस्य महिमा, तदेवाक्षरं वस्तु नान्यदिति उपनिषद्रहसि निर्देश्यं कूटस्थं कृत्वा कुलान्येव ब्रह्मवादिनामुपासते । न शुष्को वास्या इव केचिदेव पुरुषाः । ते स्वतीति । बहवः प्रणवादायिनस्ते खलु केचित् प्रणवेनाददानाः प्रणवादानशीलाः प्रथममक्षरन्नोत्तारयन्ति, योनिगतादतिरेको न भवत्येवमिति वदन्तः ।

अथ···वते । अथ च वज्रसंस्तुतं ह्वते । एनद् यदतिरेचनं । पूर्वोक्तमेनद् यदतिरेचनम्, पूर्वोक्त एवायमर्थः उत्तरविवक्षयोपन्यस्तः[4] । शाण्डि[5]···वन्ते[5] । प्रणवेन चैवादित अक्षरं चेदं न लुम्पेदिति शाण्डिल्य आह स्म । युक्तिं च वदति । य एते स्तोभा ओंकारादयो यावत्कृत्वः ऋचमुपप्लवन्ते संश्रयन्ते, वदन्ति, गहनमर्थरूपं पुरुषो न परिगच्छति च तदिति । अतः कारणादित्यर्थः । न ते न्यन्ते । न च तेन स्तोभो [प]प्लवेन तं साम्नोऽतिरेकं केचिदस्य मुख्या मन्यन्ते । स्तोभ एवायमादिसमवायी योऽयं प्रणवो, यथान्येषु सामसु ओंकारा इत्यभिप्रायः ।

यथा···णवः । अथ यदिदं प्रणव इति वस्तु, एतत् साम्नो रूपं मन्यामहे । किमत इति चेत्, कथं···दिति । कथमित्यनवक्लृप्तौ । कथमेव साम्ना सता अनेन प्रणवेन स्वात्मनः साम्नोऽतिरेकः स्यात् । नायमतिरेको भवेदित्यर्थः । नहि स्वं शरीरमायतं स्थलमिति वातिरिक्तं भवति । अथ···नि च[6] । अथेति पक्षान्तरमपि करोति । अथ खल्विमानि सामानि द्विविधानि भवन्ति । स्वरादीनि च, व्यञ्जनादीनि चेति । स्वराक्षरमादिरेषामिति स्वरादीनि । व्यञ्जनमादावेषामिति व्यञ्जनादीनि । केवलव्यञ्जनादित्वं हि

---

१ को. प्रणञ्जरय    २ को. सस्वारतरः    ३ को. फलविक्तिति॰
४ को. ॰रविक्षया॰    ५ को. शाण्डीवन्ते    ६ को. ङिच ?

नास्ति। तद्यथा···हरेत्। तत्र यान्येवमादीनि स्वराक्षरादीनि भवन्ति, तमेव च तेषामादिभूतं स्वराक्षरमोंकारं कृत्वोच्चारयेत्। रौरवयौधाजययोरुक्तायाः स्तोत्रियायाः वामदेव्यस्य च मध्यमाया व्यञ्जनादित्वे सत्यपि स्वरादिस्तोत्रियाबहुत्वापेक्षया एषामत्र दर्शनम्। व्यञ्जनादिषु तु स्तोत्रियासु एषामपि उत्तर एवं विधः प्रविशति।

अथ···कुर्यात्। आगन्तुकेन प्रणवेनैष्वेव सामसु व्यञ्जनादि स्तोत्रियाबहुत्वमेवाभिहितम्। ततः स्वरादिष्वितोऽपि पूर्वो विधिः प्रविशति। एवमृगक्षरादिषूद्गीथेषु स्वरादिव्यञ्जनादिभेदेन द्विविधं प्रणवादानं निरूपितम्।

अथेदानी स्तोभादिषु वदामः। यानि···विति। चतुः शब्दः प्रकारान्तरद्योतकः। वाव शब्दः प्रसिद्धौ। यानि च स्वरादीनि स्युः—काण्वं, सुवर्णिधनं, गंभीरमिति। यानि च व्यञ्जनादीनि—संक्रोशो, भ्राजमिति, तेषामुभयेषां प्रणवेनैवागन्तुकेनादिं कुर्यादिति। स्तोभस्य च्छादनमन्याय्यमित्यभिप्रायः। अस्मात् स्वरादिव्यञ्जनभेदावलम्बिनः पक्षात् प्राक्तनेषु पक्षेषु स्तोभादय उद्गीथा अविकृतादय ऋगक्षरेण प्रतिपद्यन्त इति च। ऋचं स्तोभा उपप्लवन्ते इति च ग्रहणात्। स्तोभाद्यक्षरलोपे आम्नायेन विरोधप्रसङ्गात्।

अथ···तेति। अथ खलु योऽयमूर्ध्वं प्रतिहारादादातव्योऽस्ति तं कथमाददीतेति, प्रश्नकृदि वाक्यम्। परमस्य प्रतिवचनम्। यानि कुर्यात्। यानीमानि, भेदाः कालेयवान् सगौरीवितादीनि प्रत्यवेतस्वराणि स्युः तेषां प्रणवेनैवागन्तुकेनादिं कुर्यात्। इति ह स्म गौतम आह इत्येव तत्स्वराणि इति। येषामेवं स्वर उपद्रवान्तस्तेषामियमौक्यादिशास्त्रसिद्धा संज्ञा। कथमन्यत्र गौतमः कामयते। विशेषस्यानुक्तेर्यथार्थेऽन्ये[1] एव पुनः जय्यः। ऊर्ध्वमपि प्रतिहारात् पुनरेवैकमक्षरं प्रणवेन लोप्तव्यं स्यादित्यर्थः। किं सर्वत्र विधिरयं प्रविशति, प्रत्यवेतस्वरेभ्योऽन्यत्र प्रविशति। तेषु विध्यन्तरं परेण वाक्येन करिष्यते। अत्र पुनरेवेति वचनादुद्गीथादिविकल्पितानां पक्षाणामक्षरलोपपक्ष एवायमभिमतः इत्यवगतः।

यानि···तेति। यं च विशेषाधानं[2] जय्यपक्षस्येति, एवं सति यानि तु प्रत्यवेतस्वराणि स्युस्तत्र तदेवोपद्रवाद्यमक्षरं प्रत्युदाददीत उन्नतस्वरं कुर्यात्। नत्वत्र प्रणवादित्यर्थ[3] एवकारः। नैवा···ण्डिल्यः। प्रज्ञातो वाक्यार्थः। एवमेतेषु बहुष्वाद्याश्रयेषु पक्षेषु सत्स्वेक एव पक्षोऽस्माभिः आर्विकोद्गीथोपद्रवाद्यक्षरस्थानप्रतिसमर्पितौकारः समाम्नायनियत आश्रीयते। विज्ञानार्थ एव केवलमयं प्रपञ्चः कृतः।

अथ...दीत। प्रज्ञातकाण्वलोह्यादि[4] प्रस्तावान्तेनास्य सन्धानविधानादप्रज्ञातकालं चोपगानमिति साम्नोऽन्तररण्यम्। यत्प्रस्तावमादिं चान्तरा वर्तमानच्छिद्रमरण्यमिव भयस्थानं, तन्नापेयान्नावसर्पेत्। अवसर्पितुं न शक्नुयात्। श्रूयते हि—साम्नोऽन्तररण्यं नावेत्यम् इत्यधि कृत्य 'एतद्ध वै साम्नोऽन्तररण्यं यत् प्रस्तुतमनभिस्वरमाद्रियते। स्वरेण सम्पाद्योद्गायेत् इति च। 'स्वर इति चोपगानीभूतस्यौकारस्याख्या तेभ्यः स्वरं प्रायच्छत् इति च। उप मा गायत अधि मा स्वरेत इति च। प्रस्फुटमुपगानविधौ श्रवणान्निश्रिता। अथ शलमलाश्मणमुद्गीथमध्ये शक्तौ सत्यां संपाद्यमित्यर्थः। ऊर्ध्वं एव निधनसमीपे तत्र आरमेत्। इह सामशब्दः

[1] को. ०र्थेन्येव [2] को. विशेषोधानं [3] की. प्रणयादित्यर्थः ?
[4] को. ०तकाण्वो० ?

सामावयवभूतयोरुद्गीथोपद्रवयोः वर्तते । उतेति यद्यर्थे । यत्र गुरूणि एकोच्छ्वासेनोद्वोढुमशक्यानि आयतनानि सामानि भवन्ति, स खलु तत्राशक्तः सन् परं पर्वमभ्यस्यमानस्य स्तोभस्य पादस्य वा खण्डमवयवमारभ्य निष्पाद्य समाप्यारमेत् । यथा विकर्णभास इति । बहवः स्तोभास्तेषामिष्टस्य निष्ठायाम् आरमेत्[1] । राजनस्य पादाभ्यासनिष्ठायाम् । अतस्तूत्सर्गाद् औशौकावयोरिति पादस्याप्यवयवत्वाविशेषात् । पादान्तरमणौ प्रसक्तं तत् पुरस्तादपोदितम् । तदाहुः—न पदान्तेष्वारमेत् इति । नान्त...वान्यात्[2] । अन्तरेण पदे पदस्य मध्ये न व्यवान्यात् नारमेत् । अतो यत्नाद् विकर्णप्राप्तराजादीनां स्तोभस्य वा पदस्य वाभ्यस्यमानस्य सकृद्वचनेन द्विर्वचनेन वा नारमेदिति सिद्धं भवति । पादमध्येऽप्यत एवारमणाभावः प्राप्तः, स पुरस्तादपोदितः । तदाहुः—न पदान्ते उत्तरस्य पदस्य आरभ्य वाभ्यस्यति ।

**साम्नो** दिति । निवेष्ट आवर्तः । यथा जलं स्रोतसो निवेष्टः । एवं सामस्रोतसोऽप्ययं निवेष्टो यदुक्तस्य पर्वणो मध्यमिति । एवं कृते साम्नो निवेष्टमुद्गाता । **नावसर्पेत्** । नद्यावर्तमिव परिहरत्येवेत्युक्तं[3] भवतीति ।

इति [ पर्यध्याये ] सप्तमः खण्डः

---

१ को. आरमेत २ को. वान्यम् ३ को. ०वेन्युक्तमिति भवति

# अथाष्टमः खण्डः

**अथातो गीते:**[1] **गुणविशेषपरिग्रहः ।** करिष्यत इत्यध्याहार्यम् । तस्यानन्तरं करिष्यमाणत्वात् । **षड्....वर्त च ।** इह वर्तनिशब्दः क्रुष्टादिषु स्वरेषु वर्तते । वर्तत एभिः सामेति । केनेति चेत्, क्रुष्ट[2] प्रथमो, द्वितीय[3]:, तृतीयः चतुर्थो[3], मन्द्र इति । सप्तमश्चातिस्वरो गातस्वारो[4] नाम । स त्वस्माकमासुरायणानां बादरायणानामिति न दृश्यते गीतौ । दृश्यते तु कौथुमादीनाम् । यदिदं षड्वर्तनि षट्स्वरं नाम तन्न्यस्तेनोपगृह्यते[5], न च परोक्षेण, प्रत्यक्षेण च । क्षिप्रेण, दीर्घेण च । षड्भिरेतैः षड्विधं भवति । **न्यस्तोद्गृहीताभ्यामिति ।** अर्थतस्तत्र क्रुष्टादिस्वरकृतस्य नतोन्नतत्वस्य पूर्वमथैषोपरमप्रदेशो भवतीत्यधिकृत्य परिच्छिन्नस्येह वचने पौनरुक्त्यप्रसङ्गादिह वार्कस्थानानां मन्द्रस्योत्तमानां गानाश्रयभूतानामेकैकस्यापि नत्युन्नतियोगाद् भिन्नरूपस्यायं परिग्रहः क्रियते, न्यस्तोद्गृहीताभ्यामिति इत्थ व्याख्येयम् । अत एव च कारणात् **परोक्षप्रत्यक्षाभ्यामिति ।** मृदुसुकुमारमुच्चारण परोक्षमिति । स्पष्टकठिनं प्रत्यक्षमिति । तथा **क्षिप्रेण च दीर्घेण चेति ।** स्वराक्षराणां रूपोपलब्धमात्रकरणमुच्चारण क्षिप्रं, विलम्बितोच्चारणं दीर्घमिति ।

**तत्···वेत**[6] । तत्र तु षड्विधेऽपि सति त्रिविधमेव कर्म युक्तः सेवेत । **न्यस्तोत् ।** गीतमेव हि सम्यगुच्चारयितुं शक्यतरमस्माद् भवति । संस्थार्यशब्दस्य वा शब्दार्थे भिद्धस्य तरपि संप्रसारणं कल्पक्षणमात्रानुमेयम् परोक्षमेव । **तद्धि-वति ।** अक्षराणां हि मृदूच्चारणं साम्नो रूपं भवति । मृदुपक्षत्वात् क्षिप्रमेव तद्धि भवति । स्तोत्रमर्हतीति स्तोत्रियं, क्षिप्रमेव हि स्तोत्रियतरं भवति । विलम्बिताद्यतः स्तोत्राणामाशु निर्वर्तने कर्मणः कालानत्ययः, तदपेक्षमिदमुक्तम् । **एष वन्ति ।** यदिदं षट्स्वेषु न्यस्तादिषूद्गृहीतपरोक्षक्षिप्राणामेवोक्तं परिग्रहणम्, एष इह एष नु प्रदेशः प्रकृष्टो विधिः, प्रकृष्टावचनमात्रमेतत्, नात्यन्तिकमस्यैव त्रयस्याश्रयणं कार्यम् । कुत इति चेत्, इतराण्यपि हि न्यस्तप्रत्यक्षविलम्बितान्यपि हि पुरुषविशेषापेक्षया सम्यगुच्चारयितुं शक्यानि[7] भवन्ति । कश्चिद्धि पुरुषो न्यस्तमेव सम्यगुच्चारयितुं शक्नोति, नेतरत् । कश्चित् कठिनमेव, नेतरत् । कश्चिद् विलम्बितमेव, नेतरत् । का पुनरिह प्रवृत्तिः, इत्यपेक्षित उच्यते— **स य–हरेत् ।** स एव[8] विजानत्, यथा येन प्रकारेण एवास्य तदानीं यस्मिन् परिग्रहीते सम्यगुच्चारयिष्यन् स्वयं मन्यते, तथैव तेन प्रकारेणैवाभिव्याहरेत् युक्तः कर्मणि, इदमुक्तं भवति । उक्तस्वरूपयोः न्यस्तोद्गृहीतयोः, परोक्षप्रत्यक्षयोः, क्षिप्रदीर्घयोश्च, गातृशक्यावस्थापेक्षया व्यवस्थितः परिग्रह इति ।

**अथ हरेत् ।** इदं प्रसिद्धगानस्वभावस्य कस्यचिन्निवर्तनार्थमुच्यते । विनामांश्च परिकर्षांश्च प्रायेण गायन्तोद्रायन्ती ? तस्य च तथात्वमेवाधस्तनाद् विधेः प्रसक्तं निवर्त्यते ।

अथ ये विनामाः—'नायिहोपुरूह' इत्यादयो ये च स्वरिकर्षाः, यथा पौष्कलस्यौर्ध्वसमनस्येत्युपद्रवान्तास्तानत्यजन्[9] तदीया मात्रां, लघुतरानेव सतोऽभिव्याहरेत् । **अथ···न्ति ते ।** अथ ये उपग्रहाः उप

---

१ को. गीतो | २ को. क्रुष्ठः | ३ को. द्वितीयो चतुर्थो
४ को. ०श्चातिस्वते ? | ५ को. तन्यस्तेनोपगृह्णीत ? | ६ को. वेत
७ को शक्या | ८ को. एवं | ९ को. ०र्ध्वसत्मनस्य

शब्दा: ऊपा-इहा-उपा-ऊपा-उप इत्यादयस्ते उपयन्ति उपगच्छन्ति । युक्तोऽभिव्याहरेत् इति अधिकारात् कर्मणि युक्तं सामोपगच्छन्ति ।

नन्वयत्नसिद्धमेतत् । सत्यम् । अपादुशि प्रयन्धस (जै. सं. १.१६.१५) इति तु छन्दः[1] पदमेव प्रकृत्य, तमेमथाया इत्यदमथ्नादिदर्शनात् सन्दिह्येतापि, तन्निवृत्त्यर्थोयं[2] यत्नः । उत्सी-पन्नात् । उपगच्छन्तोऽप्युपशब्दाः स्तोत्रापन्नाः स्तोत्रगतसमापन्नात् सुपरिदामथायेत्यादेः स्वस्थानवर्तिनः शब्दात् कारणादुत्सीदन्ति अभावमाप्नुवन्ति नोच्चार्यन्त इत्यर्थः । अथवा स्तोत्रापन्नात् साम्न इति व्याख्येयम् । तथा सति पठितोहानां जज्ञान उपहर ? इत्यादीनामप्यूहप्रस्वगे सति[3] सिद्ध उपग्रहोत्सादो भवति इति विद्यात् । इति शब्देनोपग्रहापन्नाः सुपरिष्टादयः शब्दा उपलक्ष्यन्ते । अस्तोत्रविषये उपशब्दमुच्चारयन्निति विजानीयात् । स्वरिति वा, इष्टेति वा, यस्तद्योगीशब्दः, तमवगत्य एव गायेदित्यर्थः । ततः प्रवर्ग्यविषये श्यावाश्वारूढवदाङ्गिरसयोः[4] यथाम्नायं निधनमुपयन् सुवर्णिधनगतामवगच्छेत् । एवं पान्तम् (जै. सं. १.१७.१) वयं घाते (जै. सं. १ २४.६) इति चैन्द्रं पशुं प्राप्तयोः इट इष्टाहि ईष्टेत्येतन्निधनताम् ।

इति [पर्यध्याये] अष्टमः खण्डः

१ को. छन्दं   २ को. यो   ३ को. सन्ति   ४ को. वदाङ्गीर०

## अथ नवमः खण्डः

अथ···नानि । अन्तः शब्दो मध्यवाची । अन्तःसामभवान्यन्तःसामिकानि साममध्यगतानि, निधनान्युपलक्षयिष्यामः । त्रया···यते । त्रिभेदाद् वा षड्भेदाद् वा उपायात् परोऽन्तःसाम साम्नो मध्ये वर्तमानो भागो निधने[न] जायते निधनत्वेन प्रादुर्भवति । स च एष उपायः शड्भेद उपदेक्ष्यते। अक्ष···यस्य। अक्षरस्य स्वरात् स्वरान्तरप्राप्तिरक्षरान्वयः। एतस्मादुपायात् परं निधन जायते। यथैतद् यौधाजयस्य निधनद्वयम् सुलभान्युदाहरणानि। वाचोष्ठस्य[1] योऽयं वा औहोवा हावु वा इत्यादौ। स्तोभ-विशेषे वाशब्दः, स वागित्युच्यते। तस्य वाचो विसर्गात् विरमणात् अवसानात् परं निधनं जायते। तथा गोष्ठस्य ऋक्पादाः सेहेष्ठाशब्दाः। सुलभान्युदाहरणानि। स्वरिसाम्नो यदक्षरस्य द्वितीयोपक्रमस्य तृतीये विरमणं तदिह स्वरितं नाम, ततोऽपि परं निधनं जायते। यथा त्वाष्ट्रसाम्नः—एन्दिराया एक्षरन्ना। नात्रोदाहरणबहुलम्।

अका···मस्यम्। अकारादपि बहुकृत्वः कृष्टात्परं निधन जायते। यथान्धीगवस्येद मध्ये निधनम्। नात्रोदाहरणबहुत्वम्[2]। प्रथमोपक्रमस्य वा द्वितीयोपक्रमस्य वाक्षरस्य मन्द्रादनुक्रमेण परिकर्षः, तस्मादपि परं निधनं जायते। यथेदं पौष्कलस्य निधनम्। अनुदाहरणमेतत्। अनन्तः[3]सामिकत्वात्, उक्तस्वरूपात् च परिकर्षादक्षरान्तरेण यथोदिते[4][न] व्यवहितत्वात्, इतिशब्दस्य च वैयर्थ्यप्रसङ्गादिति। अन्यथा व्याख्या-यते—परिकर्षस्वरूपावधारणमेवेह पौष्कलं करोति, नाधिकृतनिधनविषयत्वेन यौधाजयादिवत् इदमुपादी-यते। एवं योजयितव्यम्—परिकर्षादपि परं निधनमन्तःसाम जायते। यथायं पौष्कलपरिकर्ष इति। इत्थं रूपादीदृक् सदेकाक्षराधिकाक्षराधिक्यादित्यर्थः। अन्विष्योदाह्रियते[5]—यथोत्तमस्यावद्रप्सि अतायिष्ठा-दिति। परिकर्षात् परं सहस्रै रित्यन्तं निधनम्। कथमवच्छेद्यमिति चेत्, लक्षणसाम्यात्। यथा हरिश्रिया-मिति। तद्वत् सोमं पिबत[6] इति च। द्वितीयस्य मातायिनामिति परिकर्षात् पर निधनम्। अथवा अत उदाहरणादाचार्यः[7] कथमत्रैव नोदाहरेदिति[8] कृत्वा पौष्कलमित्येतयोरेवान्यतरत् सामोपन्यस्त-मिति वर्ण्यम्। अदृष्टैरपि ह्यार्षेये दृष्टैः साम्नां नाभिव्याहारः, प्रजापतेर्हृदयेन विराट् स्वराजमिति।

अथ···मिकाः। अथ त्वेषामेकमुपयामाशूर्णमिति यज्ञविद आचक्षते। कीदृशमित्यपेक्षिते वदति—उदात्तेति। औक्थिक्यं नाम शास्त्रं यज्ञविज्ञानोपबृंहणकरं, तद्विदः औक्थिकाः। यदभिप्रायेणौक्थिका उदात्तात् स्वरात् परं निधन जायत इत्याचक्षते। यथा गूर्णमिति विज्ञेयम्। यथा दाढर्च्यच्युतस्य आर्षाः। इहा···त्समा इति। सुलभान्युदाहरणानि। वार्हद्गिररायोवाजीयपार्थरश्मवृषकल्मेनसीमानीत्यवत्साितीषङ्गमहावैरा-जेषु। एवमेतेषूपायास्तेषां तु स्वरितादयस्त्रयोऽक्षरान्वये एवान्तर्वर्तिनः। तद्विशेषत्वादिति कृत्वा त्रयाद्वेति विकल्पितः। किं पुनरयमुपायो नेहोक्तो यथा पुरीषपदेष्वेवेति, उक्त एवायमागूर्णविशेषत्वात्।

एते···वन्ति। एतेभ्यः खलूपायेभ्यः प्रत्ययाः ये परभागवर्तिनः गीत्यवयवास्तद्गीताश्च निधनस्व-

---

१ को. वाचोष्टस्य ? २ को. ०रणबहुत्वं वरिष्येति ? ३ को. अनान्तःसामि०
४ को. यतोदितेन ५ को. ०न्विष्यरुह्याह्दि ६ को. सोम पेवत ?
७ को. उदाहरणाचार्यः ८ को. नोद्वाहारे०

रिणो निधनस्वरवियुक्ताश्च भवन्ति । तानि निधनानि निधनलक्षणोपेतत्वादेव । तन्निधनानिधनलक्षणोपेता अप्येते प्रत्ययाः पुरःस्थितमुपायमर्थवन्तं कर्तुं निधनीभवेयुरिति । तन्निवृत्तये वदति नो ए···दिति । असियदिति लुङश्चिन्त्यो विधिः । उपायः सिद्ध इत्यतोऽपि कारणात् नो एव भवन्ति हीदृशानि निधनानि । यथा घाय इति, इमे[1] । साम्नि वाग्विसर्गेभ्यः परेषामनिधनत्वम् । यथा च प्रथमान्निधनात् परेभ्यः पञ्चभ्यो वाग्विसर्गेभ्यः परेषां निधनत्वम् । यथा चायास्ये प्रस्तावान्तर्वर्तिनः परिकर्षात्परस्यानिधनत्वम् ।

अगि···वन्ति । अथानुपायाद् यस्मात् कस्माश्चित् परे प्रत्यये अगीता वा निधनस्वरिणो भवन्ति चेदपि न भवन्ति, तानि निधनानि स्वमतं[2] निधनलक्षणमर्थवत्कर्तुं[2] निधनीव भवेयुः, तन्निवृत्तये[3] वदति नो ए···इति । निधनस्वर इवास्य गानस्य स्वर इति निधनस्वरं गानं नो एव । किञ्चिदपि गानं निधनस्वरमहमस्मीत्येतावता कारणेन निधनं भवितुं न शक्नोति । अनुपायं सत् यथैतद्यो रयिवोरयाहावित्यस्मिन् सम्नि तामा इतिनिधनं सदसि अनिधनं न भवति । हावु इत्यस्यानपात्तत्वात् । उपाय एवायं स्वरिताख्य इति चेत् न, उकाराधिकत्वात् । उभ ··वन्ति । सिद्धशब्दः समुपलब्धस्वरूपसाकल्ये वस्तुनि वर्तते । यथा सिद्धाः प्रकाराः, सिद्धमध्ययनम्, सिद्धं यौवनमिति । अत्र तु प्रथमसिद्धशब्दः सयुक्तवचनो द्रष्टव्यः । एवं योगः, लब्धस्वरूपश्चोपायः लब्धस्वरूपप्रत्ययः एतदुभयं तु खलु यस्मिन् प्रदेशे संयुक्त भवति तत्र तानि प्रसिद्धानि निधनान्येव भवन्ति । उक्तेषु यौधाजयादिषु अन्येषु चोद्वंशीयादिषु सुलभान्युदाहरणानि उभयथा । अत्र नन्वर्थे खलु शब्दः । तु शब्दः अप्यर्थे ।

नन्वेतदुभयमपि सिद्धरूपमिह भवति । यथेदमातिषादीयस्य मध्यवर्तिनि निधने । विषयसप्तम्येषा । अत्र ह्युभयं सिद्धम् । अक्षरान्वयादिधरोऽय निधनस्वरः प्रत्ययः । तदेकाक्षरं निधनं सिद्धं चेदमुत्तरविवक्षयोपन्यस्तम् । अनित्सेभ्यः सिद्धेऽप्यस्योक्तवत् निर्दोषानिधनन्वे कुत्सेभ्योऽन्य आचार्या अनिधनमिदं कुर्वन्ति । कुत्सः ऋषिस्तच्छिष्याः कुत्साः । मृग्यमवृद्धेर्लक्षणम् ।

कस्य···रिति । अनष्टान्तः । योऽयमस्य कुत्सानिधनस्य प्रदेशः सोऽनष्टान्तश्च भवत्यपदान्तश्च । सवृतमिदमुक्त्वा स्वयमेव विवृणोति वाक्यद्वयेन । नैवा···मन्तः । अप्यर्थे एवशब्दः । नाप्यय पदस्यादिरतोऽष्टाक्षराणामन्तो भवति । यदिह्येवमभविष्यत् पादान्तभक्तिर्लब्धाभविष्यद् । न पदस्य । न च पदस्यान्तेऽष्टान्ते वा पदान्ते वावस्थिते ईदृशानां निधनत्वं युक्तम् । नान्यथेत्युक्तमासीत् एत···तावा उ शब्दोऽवधारणायाम् । खल्विति ग्रन्थालङ्कारः । यदिति हेतौ । लोक्यन्ते दृश्यन्तेऽस्मिन्निधनानीति निधनलोकः यन्निधनलोको भवत्यष्टापदान्तता वा, यस्मादष्टान्ते वा पदान्ते वा यौधाजयादेव स्थानेनादिषु निधनानि दृश्यन्ते । नचान्यत्र प्रायो दृश्यन्ते, तस्मादेतदेव द्वयं निधनायतनं निधनस्य स्थानं भवितुमर्हति । ततो नष्टान्तत्वादपदान्तत्वाच्च नेदं निधनम् । अथापि वा यदभविष्यत्, एतत्सामाधिकृत्य श्रूयते—एतस्य साम्न आतमितोन्निधनमुपेयात् इति । निधनमासाद्य आतमनादनुच्छ्वासमासित्वा नान्तो निधनमुपेयादित्यर्थः । निधनमुपेयादिति च सिद्धस्यार्थस्य गुणविधानार्थमनूद्यमानत्वश्रुतावपि एकत्वं विवक्षितुमशक्यमिति त्रिभिरपि तान्तैरुपेतव्यं भवति । तत्रैतस्मिन् सति, सति चास्य निधनत्वे तान्तैरुपेतव्यमेवेति निधनत्वाविशेषाद् भवति । तत्रायं दोषः । यदिति यद्यर्थे । अस्मिन् यद्यतामिष्यदनन्ते साम्नस्तमन्वभविष्यत् । तत्र प्रतिहर्ता तान्तो निधनमुक्त्वा तावतैव क्षीणशक्तिरनुच्छ्वस्य प्रतिहर्तुं न शक्नुयात् । सति···म्नो ।

---

१ को. मे  २ को. को. स्यान्मतं निधनपक्षणं  ३ को. तन्निवर्तये

विहितान्यत,[1] उक्त्वैव प्रतिहारमुच्छ्वास्यादितिचेत्, निधनतान्तोऽव्ययमिति मृषा स्यात् । अथैतत् स्यात्, प्रतिहारसन्तानार्थं पदान्त एवोपेयादिति, तत आह—यन्ना··नेन । यदि पुनरस्मिन् नातमिष्यत् यदन्तदं व्याधास्यत, विविधमाधास्यत । अतुल्यं क्रियेतेत्यर्थः । यथा निधनत्वमेनयोरस्ति[2] । एवं तन्निधनाङ्गभूतं तमनमपि भवितुमर्हति । एवमस्य निधनत्वे सत्यपि तमने दोषः स्यात् ।

अथा···सत्यपि । अथापि अग्रवतः अग्र एव पूर्वया·········यदिदं गुणनिधनं यच्चान्ततः । कथमिति चेत्—एका···वति । द्व्यक्ष···धनं । ऋगक्षरापेक्षया द्व्यक्षरतुल्यान्येव निधनानि मध्येऽन्तश्च प्रायेण दृश्यन्त इत्यभिप्रायः । एत···रिति । क्व वयमकुत्सा आहोस्वित् कुत्साः, अकुत्सा एव वयम् । उत्तरत्र अतीषादीयमप्यधिकृत्य पूर्वैरेव चतुर्भिः धनंजय्यः प्रतिहारयांचकारेति वक्ष्यमाणत्वात् । अपि तु खलु अपरमपि विचित्रमस्मिन् । वाक्यद्वयेन प्रदर्शयिष्यामः । नाहै···न्वेति । यत् प्रतिज्ञातमुक्तविषयादुपायात् परेषामुक्तविधानां प्रत्ययानां निधनत्व तस्यापि क्वचिदसिद्धत्वमातीषादीये प्रदर्शितम् । अथेदानीमनुपायमपि आन्तःसामितं निधनं, क्व तदस्तीति प्रदर्श्यते । आहेति क्वचिदर्थे ग्रन्थालङ्करणम् । एतेषामुपायानां वर्णितानामेकोऽपि नेवेह विद्यते । अथ पश्यामः । तथापीति योऽर्थस्तस्मिन्निहाथशब्दः । उपायाभावेऽपि निधनानि पश्यामः । क्व यथै इति । ननूक्तेषूपायेषु कश्चिदिहास्ति, अनुपायत्वादेषामनियतत्वमस्ति चेन्न, निधनयुक्तत्वात् । अथैतस्य निधनस्वरस्यापि अनुपायस्य निधनाभावे शक्तिर्नास्ति । यथा गौतमरयिष्ठे प्रदर्शितमिति । तत आह—नव न···स्यात् । वशशब्दः शक्यत्वे वर्तते । यद्धि शक्य तद्धिरमित्युच्यते । यदस्य साम्नोऽन्ततो निधनं न स्यात् तत्र वशो नास्ति । शक्यत्वं नास्ति । निमासादा इत्यस्य निधनत्वाभावा शक्य इत्यर्थः । कथमशक्यत्वम् अनिधनस्य साम्नः, कस्यचिदप्रदर्शनात् । अन्त्यस्य निधनत्ववचने किं कृतमित्यपेक्षित आह सा···दृर्वन्ति । स्वरूपोपाधितश्चान्त्यसादृश्येनेतयोः[3] सदृशत्वात् पूर्वेऽपि निधने कुर्वन्त्याचार्याः । तद्ध—भागुरिरिति । अन्त्यसादृश्यात् पूर्वयोर्निधनत्वमुक्तम् । भागुरिः परेण वाक्यद्वयेनोपालभते । ओं स्व···वीत । ओमित्यभ्युपगमे । अभ्युपगतमस्माभिरपि खलु, यन्निमासादा इत्येतदनुपायमप्यन्तताया: कारणत्वान्निधनत्वेन ब्रुवीत, किन्तु नेति[4] । किमर्थं पूर्वेऽपि द्वे ऽनुपाये निधने ब्रूतः[5], निधनभूतान्त्यसादृश्यमात्रमेव[6] निधनत्वं न संपाद्यमिति भागुरिः । फंफा···वीत । फंफाकेति प्रलापस्याभिधानम् । रूपशब्दो हेतौ । अरूपा इय फंफाका, अहेतुकोऽयं प्रलापो भागुरेः । योऽयमेषां मिथः सदृशानां तुल्यरूपाणां सतामुत्तमनिधन ब्रुवन् पूर्वे द्वे निधनत्वेन निस्संशयं ब्रुवीत । वक्तुं शक्नोतीत्यर्थः । यदि पूर्वयोर्निधनत्वमुत्तमसादृश्यमात्रादेव साध्येत, सादृश्यस्य भिन्नजातीयेष्वपि दृश्यमानस्य व्यभिचारेणाप्रामाण्यादयुक्तं भवेत् । निधनस्वरयोगात्तु अनयोर्निधनत्वं प्राप्तम् । कर्त्रपायवियोगादुपरुद्धं यदसंशयितनिधनेनोक्तं तमनेन सादृश्यालंध्यानिश्चीपमानं युक्तमेव भवतीति धानञ्जय्योऽभिप्रैति । आचार्यमतयोः किं कृतान्त इत्यपेक्षित आह—सर्वांत्तेत ।

इति [ पर्यध्याये ] नवमः खण्डः

---

१ को. विहितन्यत २ को. ०योरस्तः ? ३ को. स्वरूप उपाधितश्चन्त्यनेनयोः ?
४ को. तेति ? ५ की. ब्रुवीतः ६ को. ०श्यमात्रेव

# अथ दशमः खण्डः

अथ...ष्टायाः। गतिर्वक्ष्यत इति शेषः। निधनभूताया एव चेदमुच्यते, नान्यविधायुक्तायाः। निधनाधिकाराद् भवन्ति गीतानि निधनानीत्यादेर्वक्ष्यमाणाच्च। इष्टा...तीति। एतामिष्टां सुप्रगायन्ति-समस्तां प्रगायन्ति सह नकारेण निधन कुर्वन्ति, कुत्सशिष्य आह। कस्य हेतोरिति चेत्, एवं कृते कृत्स्ना इष्टानिधनत्वेनोपेता भवन्ति। नेति षष्ठी तृतीयार्थे। अस्माभिरित्यर्थः। इति अस्य हेतोरित्युक्त भवति। पञ्चदशमात्रा गीयत इत्युत्तरत्र दर्शनादूर्ध्वाया इष्टाया अयं वाद इति सुज्ञानम्। अथैतस्य द्राघितगीतत्वादिष्टाशब्दादधस्तनस्य भागस्योद्गीथमेव युक्तमिति, तत आह—भव...त्याहुः इत्यस्य परिहारमाहुः कुत्साः। सन्त्यन्यान्यपि गीतानि निधनानि। यथेदमृषभस्य रैवतस्य निधनं, द्विनिधनस्य चाप्यस्य मध्ये निधनं तद्वदत्रापि द्रष्टव्यम्। अस्माकं कुत्सैरैकमत्यम्।

धान...स्माह—वाक्यत्रयेण, स्वमतमनेनोच्यते। ऐष्टायेयुः। यत इमान्यूर्ध्वेष्टायुक्तान्यपि सामान्येष्टानि नाम भवन्ति तत इष्टा इति, इयदेवैष्ट निधनमुपेयुः। इकारस्तु पदावयवत्वादत्राभवन्नपि भवतु। इष्टाशब्दो निधनमस्येति[1] नैष्ट भवति कुत्सपक्षे। तत्पक्षे तु ओयिष्टाशब्दो निधनमस्येति औयिष्टमिति प्रसजेत्। अथैतत् स्यात्—औयिष्टशब्द एवापि निधने सति निधनावयवभूतत्वात् इष्टाशब्दस्य तत एव ताद्धितत्वं वक्ति ? इष्टशब्दनिधनमस्येति, निधनावयव इत्यर्थः। अस्ति ह्यवयविशब्दोऽवयवे। यथा पटो दग्धः, पशुना चरन्तीति। अतिप्रसङ्गः स्यात्, किमिति। इडानि... सन्ति। इष्टाशब्दो निधनमस्येत्यतो ऽन्येन प्रकारेणैष्टानि सन्ति। इमान्यैष्टानि वा। चार्थे वाशब्दः। डानि चाभविष्यन्। डाशब्दोऽपि निधनावयव एव ताद्धितो व्यक्तिः प्रसजेदित्यर्थः। नचेमामिमे[2] कुत्सा अपि डां दिशन्ति। किं पुनराचार्येण डानि इति पठितः, नष्टानीति उपेयुर्डानीति अस्वरपूर्वमुच्चारणम्। अस्यां हि शाखायां स्वरमध्यवर्तिनोऽस्य ष्टुत्वे लक्षणं द्रष्टव्यम्। मृडयपुरोडाशशब्दौ त्वपवादपदम्। अथैवं कुत्सानाभभिप्रायः इष्टाशब्दे य इकारः स परोक्षकरणादोयि शब्दः सञ्जातस्ततोऽस्माकमपि इष्टाशब्दो निधनमस्येत्यैष्टता युक्तैव। उक्तञ्च कृत्स्नेऽष्टोपायनमिति। तत्र न...आग इति। योऽयमवयवः 'पुरस्तादिष्टा' इत्यक्षराभ्यां स्थितस्तं खल्वहं स्तोभमागन्तं[3] मन्ये। आगन्तमितीष्टाधिकारादिष्टाया अनवयव भूत इत्यर्थः। तद्ध – मते। कुत्समतं धानञ्जय्यमतञ्च। यथा...मिति। यथेति निपातो यदर्थे। न्वैरिति ग्रन्थालङ्करणम्। यदेतदुक्तं संप्रगाणमिति, अत्र दोषः श्रूयताम्—प्रत्यु...वति। उक्तं संप्रगाण[4] क्रियमाणं द्राघितौकारयोर्महत्वाच्चोद्गीथान्तरमिव वर्तेत, तत्र प्रत्युद्गीत एवोद्गीथः[5] स्यात्। अपि भवति। अथ चान्यो दोषो निधनमेव। तद् ओयिष्टास्वरूपं भवदनुपायं स्यात्। ऊर्ध्वोष्टानां हि प्रश्निसोमसामादीनामिष्टा······ इत्यादयो भागा उपायान्तरैरतुल्यत्वान्नोपाया भवितुमर्हन्ति। तत्र इयो[6] शब्दः स्यात्। अक्षरस्याभिग्रहकार्यो भवति। अभ्युच्य ग्रहणमभिग्रहः। निधनभूतेनेष्टाशब्देन सहान्यस्याक्षरस्याभिग्रहणकार्य[7] भवति। कस्य, यकारस्य। यिष्टा इति निधनं प्रसजेत् इत्युक्तं भवति। अथैतत्परिहर्तुं मोयिशब्दः स्यात्। उक्तं···च्यते। ओयिशब्दादूर्ध्वमिष्टातिनिधने सद् एकमक्षरं पुनरुच्यते। किमिति चेत्, इकारः। अथैतद् द्वयं परिहरता

१ को. ०नमध्येति ? २ को. नचेमामियं ३ को. ०भमागन्तुं ४ की स: प्रहाण

५ को. एवोद्गीया ६ को. पय्यो ? ७ को. ०भिषंहणं कार्यं

य इकारात् पूर्वो यकारस्तदन्तोऽयं स्तोभो धानञ्जयेन परिकल्प्येत । क्वचिदप्यदृष्टस्य परिकल्पना कृता स्यात् । अभीक्ष्णं हि सामपथेऽयकारान्ता दृश्यते । ओहा हावु हावु इति । अथवा ओयि होयि आयि हायि इति । न त्वेते यकारान्ताः क्वचिदपि दृष्टान्ताः । तस्मादयं पक्षो दुरुपपादः । अथ···वन्ति । आगन्तोरवनतमवनत स्वरं क्रमेण गत्वार्वाचीनात् सतः स्तोभात् परिवर्तिनी चतुर्थं वा मन्द्रं वा एकमेव स्वरं संप्रश्रिता या इष्टा सा प्रतीचीना नाम । यस्य साम्नः प्रतीचीना इष्टा प्रतीचीनेष्टं यथाकारितं छन्दस्यम् । अथवायमन्यो दोषो धानञ्जय्यप्रवृत्तानामेषामादित्यसामादीन्यपि सम्मानि प्रतीचीनेऽष्टत्वमापन्नानि भवन्ति । नोर्ध्वेष्टानि । ऊर्ध्वा इष्टा अस्येति ऊर्ध्वेष्टम् । ऊर्ध्वयोगाच्च इयम् उर्ध्वा स्यात् । नचास्या धानञ्जय्यपक्षे ऊर्ध्वस्वरयोगोऽस्ति । स्तोभ्यो ह्यत्र ऊर्ध्वस्वरः । इष्टा शब्दो मन्द्रस्वरः । यादृशी तु प्रतीचीना तादृशी धानञ्जय्येन सम्पादिता । अन्या···चिति । यदिति यद्यर्थे । यदि त्वेवं धानञ्जय्यो ब्रूयात्, तुल्यलक्षणाप्येषा[1] प्रतीचीनया युता प्रतीचीनेष्टा न भवति, प्रतीचीना न कीर्त्यते । ऊर्ध्वेव कीर्त्यते । तत ऊर्ध्वैव भवतीति सिद्धमस्याः स्यात् । किं त्वन्याय्यो खलु अन्याय्यैव तु स्यात् । न ह्यस्ति न्यायो यदिष्टा इय प्रत्यक्षमनूर्ध्वस्वरा सती ऊर्ध्वेति श्रुता उच्येत । यथेयमूर्ध्वैव[2] यथाश्रुति सती न्याय्या भवेत् उक्ताश्रयदोषाः न स्युः, तथा वयं वक्ष्यामः । तावि···वतः । द्वे एवाक्षरे इष्टाशब्दे स्तः । इकारश्च उकारश्च, नापरं तृतीयमस्ति । तयो···च्यत । तयोरिति निर्धारणे षष्ठी सप्तमी वा । तयारयमीकारः[3] परोक्षीभूय ओयीशब्दीभूत्वा पञ्चदशमात्रः[4] । उकारस्तु दीर्घीभूय एव स्वर एव तिष्ठति । मात्रा शब्दस्य कालविशेषवचनत्वात् अत्यन्तसंयोगलक्षा द्वितीया । यावता कालेन ह्रस्वमक्षरमुच्चार्यते तावति काले मात्राशब्दः । इत्थं चायं पञ्चदशमात्रो[5] विज्ञेयः । प्रथमादि प्राङ् मन्द्रात् प्रतिस्वरमोंकारस्य तिस्रो मात्राः द्वे मन्द्रे, ताश्चतुर्दश । यिकारस्य मात्रा पञ्चदशीति ।

नन्विकारात् पूर्वस्य व्यञ्जनस्यापि अर्धमात्रिकस्येह विद्यमानत्वात् अपर्याप्तेयमुक्तिः[6], पञ्चदशमात्रा इति नैष दोषः । गीतिमात्राविकल्पान्तायामस्यां सर्वस्यामपि छन्दःशास्त्रे मात्रा जातिविकल्पनायामिव व्यञ्जनमात्राणामपरिग्रहात् । स य···गीथ । स इति तत्रार्थे । तत्रेदं निधनमनिधनमिति[7] संशये, यद्वै खलु साम्नोऽवयवजातं[8] विशेषेण गीतं स उद्गीथो भवितुमर्हति । यत्व · धनम् । यत्त्वत्रागीत तदेव निधनं भवितुमर्हति । एता···कारः । वाव शब्द इह एवार्थे । एतावदेव ।

नन्वगीतमेवैतस्येडाशब्दस्य भवति, कियदिति चेत्, यावानेष उकारः । तेन···रिति । तेनानेनोक्तेन कारणेन वयं मन्याममे डा इत्येव निधनमुपेयुरिति । एवं च सति ओयिशब्दस्य उपद्रवान्तर्भावोऽर्थसिद्धः । अस्मिन् पक्षे यौ, संप्रगाणपक्षे यौ दोषौ निर्दिष्टौ, उद्गातुः प्रत्युद्गानं, पक्षगताः त्रयो दोषाः । अक्षराभिग्रहः उकारस्य पुनर्वचनम्, निधनस्य चानुपायत्वम् । उभावप्येतौ ओयिशब्दस्योपद्रवान्तर्भावादेवोत्सीदतः । ये च धानञ्जय्य प्रतीचीनेष्टत्वप्रसङ्ग इति, तेषां द्वौ पूर्वस्यैवाक्षरस्येह निधनत्वाभावात् नोपसर्पतः । प्रतीचीनेष्टत्वापत्तिश्च न प्रसजति, उपद्रवान्तर्भूतस्यास्येष्टाशब्दावयवस्यैव ऊर्ध्वत्वादूर्ध्वेष्टान्येवैतानि भान्ति । इष्टाभिरिष्टवत् । एवमस्मिन् पक्षत्रये सत्यपि कुत्सपक्ष एवास्माभिः आस्थेयः । आम्नायानुरोधात् । अथ···ष्टानाम् । प्रसृतानामसायरौरवकालेयादीनाम् इष्टाशब्दोऽत्र प्रारम्भवत् । अतिसृष्टाकृष्टा प्रारम्भे सृताप्रसृताः[9] । यतोऽन्या ऊर्ध्वं प्राच्यादय इष्टा बहुकृत्वः कृष्यन्ते न

१ को. ०णाप्येता    २ को. यथाय०    ३ को. इकारः
४ को. ०दशमात्रा    ५ को. दशरात्रो    ६ को. यमुक्यिः ?
७ को. निधनं कमनिधनं०    ८ को. प्रशब्दो    ९ को. सृताप्रसृता

केवलं प्रारम्भ एव । न च प्रतीची प्रारम्भेऽपि । इयं तु प्रारम्भ एव नान्यत्र । तत इयं प्रसूतेत्युच्यते । प्रसूतैषामिष्टेति प्रसूतेष्टानि । इह कश्चिद् यदि प्रतिबध्नीयाद् यादृशी[1] कालेयस्य[1] तादृश्य एवेष्टाः प्रसूता भवितुमर्हन्ति, नतु यादृशी रौरवस्य । सा हि परिष्टुब्धा नाम । तथा हि श्रूयते—प्रसूतेष्टा प्रथमस्याह ऊर्ध्वेष्ट द्वितीयं, परिष्टुब्धेष्टं तृतीयम् । इति च श्रुतिविरुद्धं वाच्यमिति, तत्रैवं प्रतिसमाधेयम् । प्रसूतैव रौरव-स्येष्टा । या हीयमुक्तसशयं प्रसूता कालेयस्य तस्या इयमभिन्नरूपा । परिष्टुब्धेष्टं, तृतीयम् इति तु श्रुतेः । एवमविरोधो वाच्यः । प्रसूताया एवोपायविशेषः परिष्टुब्धेति । यथोर्ध्वेष्टस्याष्टाभिः इष्टमिति तद्वत् । ओयि इति हिनस्ति । हन्तीत्युक्ते हननप्रतीतेः तदादिभूते हकारेऽप्युच्चारिते सहसा हननप्रतीतिः स्यात्, इति हकारो हतसंशयः । हतः हननम् । हतमस्मिन् संशयितमिति तमेतमीदृशं हतसंशयं विकार हकाररूपं[2] माभिव्याहार्ष्म[3] यज्ञे वयमिति वदन्तः केचिद् आदिस्थमस्याः प्रसूताया हकारमतिहाय[4] रौरवादिषु ओयिष्टा इत्येव यज्ञे युक्ताः कुर्वन्ति । माभिव्याहेष्मेति वक्तव्यम् । तथा त्ववचनात् आचार्याप्रमाण्याच्च अनित्यत्वं ङित इत्यस्य विधेः ? प्रकृतिभावस्य लक्षणमिहानुमेयम् ।

हतसंशयत्वं हाकारस्यान्यथा विवर्णयामः । तुल्यार्थे संशयशब्दः । सति हि तुल्यत्वे संशयो भवति । ततो हतसशयत्वं हननतुल्यत्वमित्यर्थः । कथ पुनरस्य हननतुल्यता, यथा क्रियासु हननमुग्ररूपं दुष्करञ्च तथा हकारोऽपि[5] वर्णेषु[5] अमधुरश्रवणात् उग्ररूपो भवति । दुर्वचश्च स्वभावादिति ।

ततो 'हसोत, 'हृष्यति[6] इत्यादयो मङ्गलप्रततीतयोऽपि शब्दा हकारादयः सन्ति बहवोऽपि । ततो हतसंशयत्वं पूर्वोक्तप्रकारमपरितोषकरमित्यपरोऽस्य प्रकारो वर्णितः । तद्य···तीति । तदिदमुक्तमेषां मतमेकधा स्थितं शाण्डिल्य आचार्यो विभजति स्म किल । कथमिति चेत्, होपि···तीति । फंफाञ्जय्यः यथागीतामेवैतां प्रसूतेष्टामभिवाञ्छन् धानञ्जय्यहकारत्यज आचार्यानित्थं निर्भर्त्स्यं वदति ।

अभि···दति । सामसु गीयमानेषु स्तोभगतमार्चिकं च हकारं गाताभीक्ष्ण पुनः पुनरासीदति संश्रयति । न ह्ययमनासत्तुं शक्यो गाता । नचायं यत्नेनान्वेष्यः । कुतः, आप्य···इति । प्रथम एवास्मिन् सामनि आसीदत्यस्मिन् उपद्रवेऽनेन । न···रोति । न चैनं तत्र तत्र हननरूपपरिजिहीर्षया परोक्षीकरोति गाता । यथा च ते हकारा आम्नायवर्तिनो. हतसंशयानभिव्याहारयुक्त्याभासमाश्रित्य न परिह्रियन्ते । एवमयं प्रसूतेष्टास्थोऽप्यपरिहार्यः । अस्मिन्नपि हतसंशयत्वं नास्ति । यथान्येष्वित्युक्तं[7] भवति । अथ यत् शाण्डिल्यो वदति, हकारस्य प्रसूतेष्टायामभिचारणीयार्थः पाठ इति, तदपवदति धानञ्जय्यः परेण ग्रन्थेन । अपि···कुर्यात् । हकारोत्सर्गपक्षेऽपि तु खलु एवं चेत्, अभिचारणीयानभिचारणीयव्यवस्था चेदेवं विभजेत्—अनभिचारणीये होयिष्टा इति कुर्यात् । कुतः, यद्धि···णीयं । यद्धि यथातथ यथाश्रुति अवितुमुच्चारण तदनभिचारणीयमर्हति, ओयि—णीये । कुतः, विलो···दिति । लोपो विलोपः, इत्यभेदः । यथा - तानो, वितान इति । अस्याम्नायसिद्धस्य हकारस्य विलोपेन परस्य योऽभिचर्यते तस्य विलोपान्वेषणं कृतं स्यादिति मन्यामहे । अषो अषलिङ्गं भवतीत्यभिप्रायः । अपहासार्थमिवैतदुक्तं, शाण्डिल्यस्य पक्षस्तु । धानञ्जयस्य पूर्वोक्त एव, सर्वत्र हकारलोप इति ।

---

१ को, यादृशी कालेयस्य तादृशी कालेयस्य  २ को. धाररूपं  ३ को. ० व्याहार्ण ?
४ को. इयिहाय ?  ५ को. ०विवर्णेषु  ६ को. दुष्यति
७ को. ०न्येधि प्युक्तं

अथा···ष्टानां । तिस्र इष्टा येषां तानि त्रीष्टानि[1] । यथा महावैश्वामित्रो अरिष्टे इति । उत्तर···न्ति—या आसां तिसृणामुत्तमा तामेव निधनमुपेयुरिति केचिद् ब्रुवते । इतरयोरुपद्रवान्तर्भाव इहार्थसिद्धः । कुतः पुनरवसानपठितानामासामवच्छेदेनोत्तमैव निधनं क्रियते । इति चेद् वदामः । एव···न्तीति । द्रवन्तीमिष्टामुत्तमामुपयन्ति इति, यदेतद्ब्राह्मणं तदेवं हि वदति—उत्तमैव निधनमिति वदति । द्रवन्ती[2] आयता विलम्बितगतिः । येयमुत्तमा द्रवन्तीष्टा तामुपयन्तीति हीदं[3] वदति । तत इतरयोरनुपायनमर्थाक्षिप्तं भवति । सर्वा···पेयुः । सर्वा अपि त्वेना इष्टनिधनमुपेयुरेव । अवसितगीतत्वान्नोत्तमामेव । असंदिग्धनिधनभूतयोत्तमयापि सदृशे पूर्वे अक्रुष्टा चेषत्क्रुष्टा चेतरे तदितरयोरनिधनत्वमिति, तदयुक्तम् । कुतः, पश्या[4]··· भवन्ती । बहुशो वयमस्मिन् सामवर्त्मनि यादृश्यौ एते, तादृशीः क्रुष्टाक्रुष्टाः स्वनिधनं भवन्तीरिष्टाः पश्यामो[5] न क्रुष्टतमा एव । क्रुष्टा इतीषत्क्रुष्टानां साध्यपक्षस्थानां बहिष्करणार्थं न । ईषत्क्रुष्टा नवस्तोभादिषु प्रदर्श्याः अक्रुष्टाः कृषकश्येनादिषु । यथो···यति । यथो[6] इतीह कथमर्थे । यदि पुनरेताः सर्वा अपि निधनमुपेतव्याः, कथमुत्तमाया एवोपायनमदो ब्राह्मणं चोदयति, विदधाति, द्रवन्तीमिष्टामुत्तमामुपयन्तीति । एवं प्रतिबन्धः सर्वनिधनत्वमनपवादं कुर्वन्नाह द्रुते···रिति । यत इमे पूर्वे द्रुते शिप्रे भवतः । अद्रुता चोत्तमा तस्या[7] हेतोरिति । एवं हि श्रूयते—द्रवन्तीमिष्टामुत्तमामुपयन्ति इति । नेदमुत्तमाया निधनत्वं चोद्यते[8], किं तर्हि, सिद्धे अस्या अपि निधनत्वे द्रवन्तीत्वं गुणस्तुत्युपयोगमभिसन्धाय कीर्त्यते । न हीदं विवक्ष्यते उत्तमामुपेयुरिति । किं तर्हि, उत्तमां द्रवन्तीमिति ।

इति [ पर्यध्याये ] दशमः खण्डः

इति तृतीयोऽध्यायः

---

१ को. त्रिष्टानि　　२ को. द्रवन्ति　　३ को. हीन्दुं
४ को. वश्या　　५ को. वश्यामो　　६ को. यतो
७ को. तस्य　　८ को. नास्ति

अथ चतुर्थो ऽध्यायः—

## अथ एकादशः खराडः

**अथा···राणां** । [अथातः प्रतिहाराणां] प्रज्ञापनं करिष्यत इति शेषः । **षण्णां···ङ्क्तीनां** । तेषां षण्णां छन्दसां यः प्रतिहारः स उत्तमं पदमासेवते संश्रयति । ननु ककुबप्युष्णिगेव न छन्दोऽन्तरम् । यावन्ति ह्यु ष्णिहि तावन्त्येवास्यामक्षराणि । दृश्यते[1] चास्यामुष्णिक्छन्दो नार्मेय ब्राह्मणे—उष्णिक्ष्वच्छावाकसाम कुर्वन्ति इति च । मध्य उष्णिगेके इति च । ततः पञ्चानामिति वक्तव्यम् । सत्यमेतत् । उष्णिगपीयं सनी छन्दोऽन्तरमप्युच्यते । श्रूयते हि—पञ्चैतानि छन्दांसि आर्भवे पवमाने भवन्ति इति अथ षट् छन्दांसि तृतीयसवनम् इति च ।

**अथ···राणां** । अथ प्रतिहाराणां लक्षणं वक्ष्यामः । **षण्णां...ङ्क्तीनां** । गायत्र्यादीनां षण्णां छन्दसामुत्तमं पदमासेवते भजते प्रतिहारः । उत्तमे पदे प्रतिहारो भवति इत्यर्थः । यानि गायत्र्यादीनां संबंधीनि सामानि, तेषु[2] त्वक्षानि नैषां प्रतिहार इति कल्प्यम् । किं पुनरितरेषां छन्दसां प्रतिहारो नास्ति, क एवमाह, अस्ति, पञ्चावयवत्वात् साम्नाम् । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनैः पञ्चभिरवयवैः संयुक्तानि सामानि स्तोत्रेषु उपयोगमर्हन्ति । तं वै चाचार्योऽप्यवोचत्—संदध्यादेव प्रस्तावान्तेनोद्गीथादिम् इत्यादिना ग्रन्थेन । कस्मात् पुनरन्येषां छन्दसां प्रतिहारो नाधिकृतः, अधिकृत एव । अथातः प्रतिहाराणाम् इति बहुवचननिर्देशः[3] सर्वच्छन्दस्यसामप्रतिहारपरिग्रहार्थः । इतरथा प्रस्तावमिवैकवचनेन निरदेक्ष्यत् । प्रतिहारोऽप्युत्तरत्रैकवचनेन निर्देक्ष्यते । एवं चेत्, षण्णामिति कस्मान्नियम्यते, नायं छन्दोनियमः । षण्णामुत्तमं पदं नियम्यते । क्व पुनरितरेषाम्, अत्र ब्रूमः—एतेषां षण्णामुत्तम एव प्रतिहारस्त्रैष्टुभजागतानामेकप्रतिहाराणां चोत्तरत्र वक्ष्यते । इतरेषामपि प्रतिहारकालावगतेरुपायमानं वक्ष्यते । संरोधादहमत्रैव । पदानामिति वाक्यानाम्[4] कानि पुनः शेषाणि, एकपदा द्विपदा त्रिच्छन्दांसि । कस्मात् पुनरेषामनिर्देशः, इति चेत्, एषामनियतकालत्वज्ञापनार्थम् । तस्मादतिच्छन्दःसु केषुचित् चतुर्थे, केषुचित् पञ्चमे, केषुचित् चतुर्थषष्ठयोः, द्विपदासु कासुचितदुत्तरस्यादौ, कासुचिन्मध्ये, कासुचिदन्ते, कासुचिद् बहिरेव, केषुचित् पदासु तत्रैव । यथासम्भवमेषां नित्यतयोपायत्वं वक्ष्यते । संरोधादहमत्रैव पदानामित्यत्र । किमेषां षण्णामुत्तमं न व्यभिचरति, व्यभिचाराविषयमप्युत्तरत्र निर्देक्ष्यति । 'अव्यावर्गम् च' इत्यादिना ग्रन्थेन । प्रतिहारस्य सामविषयत्वात् 'गायत्राणां बार्हतानाम्' इत्येवं वक्यव्ये सति यदयं 'गायत्रीणां बृहतीनाम्' इति छन्दोग्रहणानि ऋगभिधायिन्येव निर्देक्ष्यति, तस्य प्रयोजनं वक्ष्यमाणास्वक्षरसंख्यासु ऋगक्षराणामेव ग्रहणं स्यादिति । तस्मात् संहितादिषु स्तोभाक्षरा न गण्यन्ते । उष्णिहां ककुभामिति वक्तव्ये समासनिर्देश उभयोस्तयो समानताज्ञापानार्थः । तस्मात् कालेयातिष्टवनिमित्तोपकल्पितचतुष्कस्तोमकादार्भवात् उष्णिक्ककुभोः अन्यतरस्य अनिर्गमे प्रसक्ते उभे सहैव निर्गच्छतः । यदि परं तु विहितो वाभंवश्चतुष्कं स्तोभो विद्यते, तत्रास्माभिरवश्यकल्प्यत्वादुत्तरवदेव कल्प्यम् । आचार्येणापि 'चतुष्कं सर्वमहः कल्पनीय' इति चेद् ब्रूयात् इत्यत्रोक्तवदेव कल्पयिष्यते । आर्भव एव सहचारित्वं वक्ष्यामः[6] । इदमुच्यते--छन्दसामक्षरक्रमेण आनुष्टुभोपरि कल्पनीयायाः बृहत्याः क्लृप्तिमपहाय पवमानगतक्रमपरिग्रहोऽस्य विधेः पवमानविषयत्वज्ञापनार्थम् । तस्मात् सौभरकौत्सादिषु एकवचनत्वं न दोषाय ।

---

१ को. दृश्यन्ते    २ को. तास    ३ को. निर्देशाः
४ को. वाक्याभ्यां    ५ को. समानज्ञा०    ६ को. कञ्जामः

**तेषां ''प्रस्तौति** । तेषां छन्दसां यानि त्रैपदानि । त्रीणि पदानि येषां[1] तानि त्रिपदानि छन्दांसि, तेषूत्पन्नानि त्रैपदानि तेषामाद्येन प्रस्तौति । किमर्थमिदमुच्यते, पूर्वमेव हि प्रस्तावलक्षणमुक्तम्, अवसानमात्रः प्रस्ताव इति । किमयं विधिः तेन विकल्पते, प्रस्तावस्य प्राथम्यविधानार्थमिति चेत्, 'यत्र न आदितः साम्नामृक्साद्दश्यं गीतम् स प्रस्तावो भवति' अनेन विपरीतत्वान्नायं[2] विधिः पूर्वं विधिं बाधते, तस्यानर्थत्वप्रसंगात् । अस्यानर्थक्यं[3] प्रसजति न सावकाशत्वात् । क्वावकाशः, त्रैपदचातुष्पदपाञ्चपदेभ्योऽन्यत्रावसानमात्र इति भवतु । नेवं कल्प्यम्[4] आम्नायविरोधात् । बृहत्यादिषु हि त्र्याक्षरा एव प्रस्तावा दृश्यन्ते, नैव विकल्पः, बृहत्यादिषु पदप्रस्ताक्लृप्तेराम्नायविरोधात् ।

ननु व्यवस्थामाश्रित्य विकल्पयितुं शक्यम्, यत्राम्नायानुरोधस्तत्रायं विधिः, यत्र न, तत्र पूर्वं इति । ऊहगतानामसौ, छन्दस्यानामायम् इति, नैवं घटते । उभयथापि छन्दस्यानां प्रयोगभेदाभावादेकस्यापि साम्न उभयत्र भिन्नप्रमाणत्वप्रसंगात् । अयं वाक्यार्थः । अवयवे हि समुदायशब्दो दृश्यते । पुरोडाशेन यजन्ते, सोमेन यजन्ते इत्युक्ते पुरोडाशावयवैः सोमावयवैरिति गम्यते । तद्वदत्रापि प्रथमपदावयवेन प्रस्तौतीति गम्यते । प्रस्तावस्य प्रथमं पदं विषयत्वमापन्नमुद्गीथस्य द्वितीयं प्रतिहारादीनां त्रयाणामेकस्मिन् पदे संरोधकारणविवक्षया[5] पूर्वोक्तलक्षणः प्रस्तावोऽनूद्यते । हेतुरूपेण यस्मात् प्रथमे पदेऽवश्यं प्रस्तावेन भवितव्यं, द्वितीये उद्गीथेन । तस्मात्तृतीय एव पदे त्रीण्यपि प्रस्तावोपद्रवनिधनानां स्थान इति योज्यम् ।

अयमभिप्रायः—पञ्चानामवयवानां प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानां समतया त्रिभागे प्राप्तेऽनेन प्रकारेण विभागः कर्तव्यः इति । पदे यतिद्वितीयं पदमुद्गीथस्य स्थानम् । त्रय ..बन । प्रतिहारोपद्रवनिधनमित्येतत्त्रयमुत्तमे पदे संरुध्यते, संरुद्धं भवति । अल्पतरप्रमाणं भवतीत्यर्थः । **अथ स्तौति** । **द्वाभ्यां-यति** । **अथ वेलास्तमनं श्रमः** । वेला कालः । **द्वाभ्यां यति** । **अथ वेला**: । तमनं श्रमः । वेला कालो द्वाभ्यां पदाभ्यामुद्गातुरुद्गायतः तमनस्य वेला भवति । श्रमो जायत इत्यर्थः । तान्तः कालः उद्गातरि तान्ते प्रतिहारस्य कालो भवति । यदोद्गाता ताम्यति तदोपरमते । उपरते गानविच्छेदः स्यात् । विच्छेदपरिजिहीर्षया गानसन्धानार्थं तस्यां वेलायाँ प्रतिहारेण भवितव्यमित्यर्थः । **अथ—स्तौति** । **त्रिभिः—यति** । **अथ—वेला** । त्रिभिः परैरुद्गायतोऽत्यन्तं तमनं भवति । **तान्तः—कालः** । **संरा—दानां** । अह इति निपातो हेतौ । उद्गीथस्य सरोधात् कारणात् त्रैपदानामकालेऽपि प्रतिहारः स्यात् । एवं व्याख्यायमाने ऽध्याहार्यम् । बहु विन्यते ? पूर्वं च वाक्यमनर्थकं स्यात् तस्मादन्यथा वाक्यद्वयमेकीकृत्य व्याख्यास्यामः । **अता—दानां** । त्रैपदानां साम्नां संरोधात् संरुद्धत्वात् अल्पीयत्वात् छन्दसोऽतान्त एवोद्गातरि प्रतिहारस्य कालो भवेत् । किमर्थम्, इदमुच्यते—पूर्वमेव हि षण्णामुत्तमं पदं प्रतिहार आसेवते इति विहितः । अथ ब्रूमः—प्रतिहारोत्पत्तेरुद्गातृतमनं हेतुरूपेण कथितमाचार्यणेति कृत्वा कनीयस्सु छन्दस्सु तमनाभावात् प्रतिहाराभावशंकायाः उत्पन्नायाः निवृत्त्यर्थं वक्तव्यमेव, तथापि न वक्तव्यमेव । क्लृप्तत्वात् तमनमुत्तमे[6] पदे सरुध्यत इति सिद्ध एव प्रतिहारकालोऽन्यार्थत्वज्ञापनाय हेतुना साध्यते । त्रैपदानां सरोधाद्धेतोरतान्तेऽपि प्रतिहारो भवेदेव इति । कोऽर्थोऽनेन ज्ञापितः, अयमुच्यते—कनीयश्छन्दोदैवतानां[7] तमनासद्भावेऽपि यथासंभवं प्रतिहारकालः कल्प्यते इति ।

---

१ को. तेषां २ को. विपत्वात् ३ को. अस्यानर्थक
४ को. क इयम् ? ५ को. विक्षया ? ६ को. तयमुत्तमे ?
७ को. कनीयं छन्ददवैदानाँ

काल--दानाम् । आद् इति निपातोऽवधारणार्थे, निपातद्वयं वा भवेत् । काले स्वकाले गमनकाल एव चातुष्पदानां प्रतिहारो विहितो मन्तव्य इत्यर्थः । किमर्थमिदमुच्यते. पूर्वमेव ह्येषां प्रतिहारकालो विहितः । चतुष्पञ्चपदानां प्रतिहारकालः[1] स एव न्याय्यः प्रतिहारकाल इति ज्ञापनार्थमुच्यते ।

ननु चातुष्पदपाञ्चपदस्य क्लृप्तिरयुक्ता, एकमेव न्याय्यं भवितुमर्हति । सत्यमेतत् । यद्यप्येकस्मिन्नेव काले विदधीत, तथापि उभयोरपि न्याय्य एव प्रतिहारकाल इति ज्ञापनार्थमुभयोरनुक्रमणमिति । किमेतस्य ज्ञापने प्रयोजनम्,[2] वरीयसां छन्दसां षट्पदानां चोक्तन्यायानुसारेण प्रतिहारक्लृप्तौ कर्तव्यायामुभयन्यायानुवर्तनेन चतुर्थे पञ्चमे वा तमनवशाद् यथायोगं प्रतिहारकल्पनायां[3], सान्निध्यात्[3] पञ्चम एव प्राप्नोति । द्वैपदानां यथा विश्वतो दाभन्[4] ( जै. सं. १. ४६. १ ) इत्युभयोरुत्तरपदादौ षडक्षरः प्रतिहारः । एष ब्रह्मा (जै. सं. १. ४६. २) इति प्रथमस्य द्वे अक्षरे, द्वितीयस्य षट्, तृतीयस्य चत्वारि, चतुर्थस्य ऋगक्षरैस्यः पञ्चमस्य पञ्चमषष्ठे । उपप्रक्ष (जै. सं. १. ४६. ८) इत्यस्य च धर्मविधर्मणोश्च भद्रश्रयसां च स्तोभावयवैरेव प्रतिहारः कल्प्यः स्यात् । ऋगक्षराणां[5] पदमित्यस्य मध्यमैश्चतुर्भिरक्षरैः । एकपदानां, यथा राजानो न (जै सं. ३. ३५. ६) इति परस्य पञ्चमषष्ठे । इमं वृषणम् (जै. सं. २. ५. ३) इति पञ्चमादिभिः । एन्द्र याहि (जै. सं. १. ३६. ७) इति षट्पदस्य चतुर्थे पादे नवाक्षरः प्रतिहारः । अस्तु श्रौषड् ( जै. सं. १.४८.७) इति च । अग्निं होतारम् (जै. सं. १. ४८. १०) इति द्वितीयस्य चतुर्थषष्ठसप्तमेषु पदेष्वादितश्चत्वारि चत्वारि ।

नन्वेषां सप्तमपदानामुत्तमेऽपि पदे न्याय्यप्रतिहारोपलक्षणौपखण्डो दृश्यते, सोऽपि प्रतिहार एव । एवं चेदेषां हि प्रतिहारत्वं प्रसजति । कामं प्रसजतु, नैष दोषः । साप्तपदानां सर्वेषां द्विप्रतिहारत्वमिष्यत एव । विभाग्यानां चतुर्थषष्ठे प्रतिहारः । शेषाणां चतुर्थे तमननिमित्तमाचार्यः । तमननिमित्तयोर्भिन्नरूपत्वं[6] न दोषाय । यथा नित्यव्रतसाममहानाम्नीनाम् । इति विद्यादिति । इत्थमनेन प्रकारेणोक्तेन न्यायेन सर्वेषां छन्दसां प्रतिहारकालः कथित इति विद्यादित्यर्थः । अतिक्रान्तेन ग्रन्थेन निरूपितस्यास्यार्थस्यायं समुदायार्थः । गायत्र्यादीनां षण्णामुत्तमपदादौ प्रतिहारो, द्वैपदानामुत्तरस्य पदस्यादौ वा मध्ये वा यथायोगमेकपदानां मध्य एव । अतिजगतिप्रभृतीनां वरीयसां चतुर्थे पञ्चमे वा । अन्त्ये च तमनवशात् गानवशाच्च नियम्येतेति ।

तेषां···स्याम । अष्टावक्षराण्यस्येत्यष्टाक्षरम् । अष्टाक्षर पदमष्टाक्षरपदम् । अष्टाक्षरपदमुत्तमं येषां तान्यष्टाक्षरपदोत्तमानि पदनिधनानि पदावयवनिधनानि यानि, तेषामष्टाक्षरपदोत्तमानि पदनिधनानि अग्रे व्याख्यास्यामः ।

किमत्र व्याख्येयम्, प्रतिहारोपद्रवनिधनानां प्रमाणम् । एवं चेत्, तेषामिति वक्तव्यम् । वक्तव्यं चेदुत्तरस्य वाक्यस्यादावेव । एवं चेत्, तानीत्यनर्थकम् । नानर्थकम् । प्रतिहारादिनयपरिग्रहार्थत्वात् । अयमर्थः—यान्यष्टाक्षरपदोत्तमानि पदनिधनानि सामानि तेषामग्रे उदञ्चि[7] यानि, तानि व्याख्यास्याम

---

१ को. प्रतिहारः कालः

२ को. प्रतिनाँ ?

३ को. प्रतिहारकालः कल्पनीन्निध्यात्

४ को. भावन्

५ को. रां पदमि० ?

६ को. तमान नि०

७ को. उदचि ?

इत्यर्थः । बहुवचननिर्देशात् अग्रविषयत्वाच्च प्रतिहारोपद्रवनिधनानि त्रीणि ज्ञायन्ते । तेषामेव ह्येकपद-संरुद्धत्वादनवगतप्रमाणानामियत्ता वक्तव्या । उत्तरत्रापि तान्येव वक्ष्यन्ते । कथं[1] पुनरयमग्रशब्दः प्राथम्येन गृह्यते, अग्रं सामलिलंभयिषेत्यत्र[2] प्राथम्येन दृश्यते । लोके च— अग्रं ब्राह्मणाय दातव्यम् इत्युक्ते प्रथमं [ब्राह्मणाय] दीयते । सत्यमेतत् । अन्तवाच्यपि दृश्यते— 'अग्रात्[3] उपक्रम्यामूलात्' इत्यत्र 'तस्मादोषधयो मूलतो जायन्ते, अग्रतः पच्यन्ते इत्यत्र च । 'अग्रशीर्णाग्रे' इति च । उभयथा दृश्यमानत्वादन्तवाचि हरिगृहीता ।

अपि···रति । चतु चति द्वे निधनं । द्वे अक्षरे निधनं स्यात् । यथा—मिति । संहितादीनामवच्छेदः कार्यः । किं त्रयाणामेव, नहि, येषु सर्वेषामिति ग्राह्यम् । यथा—प्रत्यग्ने (जै. सं. १.१०.६) ऐन्द्र[4] सार्नासि (जै. सं. १.१४.५) वयमु त्वा (जै. सं. १.१०.३) इति । परम् । तुभ्यं सुतासः सोमा (जै. सं. १.२२.१०) आ मन्द्रैः (जै. सं. १.२६.४) यथा गौरो अया (जै. सं. १.२६.७) शचीभिर्न (जै. सं. १.३०.५) आ याहि (जै. सं. १.४६.७) इति । द्वितीयं चायास्यम् । वृषा पवस्व । (जै. सं. १.५६.३) इति द्वितीयम् । पुनानः सोम जागृविद् (जै. सं. १.५३.६) अभिद्युम्नम् (जै. सं. १.५६.२) इति द्वितीयम् । इत्येवमादिषूपलक्षयेत् ।

अथा रति । ननु क्रमपरिग्रहार्थं त्रिभिरित्युक्त्वा चतुर्भिरिति वक्तव्यम्, सत्यमेतत् । प्रतिहारस्य चतुरक्षरत्वं मुख्यमिति ज्ञापनार्थम् । एवं चेदिदमेव प्रथमं वक्तव्यम्, मुख्यत्वाद् द्व्यक्षरस्यापि मुख्यत्व-मिष्यत एव । द्वाभ्यामिति चतुर्भिरिति चादौ पृथग् विधाय पुनर्द्वाभ्यामिति परिक्रमग्रहायारभ्यते । तेन ज्ञायते द्व्यक्षरस्यापि मुख्यत्वम् । किं मुख्यत्वज्ञापनेन साध्यते, अव्यावर्गनिमित्ताः प्रतिहारा द्व्यक्षरस्यापि चतुरक्षरा वा भवेयुरिति सिध्यति । किमयं तुल्यो विकल्पः, नेति ब्रूमः । यदि प्रतिहारोपद्रवविषयश्चतुर-क्षरस्तत्र द्व्यक्षरः, यत्र षडक्षरप्रभृतिर्विषयस्तत्र चतुरक्षरः । यथा—प्रेष्ठं व.[5] (जै. सं. १.१.५) इत्युत्तमम् । अग्ध्यू षु (जै. सं. १.२७.१) इति च प्रथमम् । यथा च स्वराणा तृतीयम् इन्द्रो दधीचः (जै. सं. १ १६.५) इति वैक्रान्तम् । किमुपद्रवनिधयोः प्रमाणवैषम्यादुक्तान्युदाहरणानि सम्पद्यन्ते, प्रकृतत्वात् प्रतिहारस्य उपद्रवनिधने ह्यत्र विवक्षिते । एवं चेदुपद्रवनिधने प्रमाणवचनमेषूदाहरणेषु सर्वेष्वनर्थकमेव संवृत्तम्, कः सन्देहः, तत्र सर्वनिधनवचनेऽपि विज्ञायत एव । उक्ते प्रतिहारप्रमाणे वाविशेष्यादुपद्रवोऽपि विज्ञायत एव । प्रयोजनमपि किञ्चिद् वक्तुं शक्यते । सर्वतोपद्रवनिधनवशेनैव प्रतिहारः कल्प्यः इति ज्ञापनार्थमिति । किमेतस्य ज्ञापने प्रयोजनम्, पाञ्चपदानां विभाज्यानां निधनोपायत्वादुत्तमं पदमुपद्रवः, तदासन्नमेव उपोत्तमं पदं प्रतिहारः स्यादित्येतदर्थम् । इतरथा पदेन पदेन प्रस्तौति पदेनोद्गायति, पदेन प्रतिहरति इत्यस्य विधेरनवोदि[त]त्वात् तृतीयमेव प्रतिहारः प्रसजति । पूर्वेषु वाक्येषु वाच्यमस्ति ।

यथा···न्यन्ते । एवंप्रकाराण्यपि छन्दांसि सन्तीत्यर्थः । छन्दसि मार्गणाय आरभमाणः प्रथम एव साम्नि पश्यतीति मत्वा नानामनिर्देशमकरोत् । अथवा । पर्कस्येति सिद्धे, छन्दसि विद्यन्त इति यत्नगौरवं क्रियते तस्य प्रयोजनमेवं वक्तव्यम्—यत्र गीतिवशात् त्र्यक्षर एव निस्संशयं प्रतिहारो दृश्यते तत्रायं विधिः प्रवर्त्यः । यथा तमिन्द्रम् (जै. सं. १.१३.५) इति तृतीयस्य । वास्तोष्पते (जै. सं. १.२६.३) इत्युभयोर्न । पक्षप्राप्तौ यथा परस्य पर्कस्येति ।

अथा—नानां । अपि—इति । किमर्थं द्व्यक्षरं त्र्यक्षरं च प्रतिहारमतिक्रम्य बहिर्निधनानां चतुरक्ष-

१ को. कत्वं ? २ को. लीलाभंयिषा ३ को. अग्रामात्
४ को. एन्द्रा ५ को. प्रेष्ठः

रमेवारभ्यते, प्रथमं चतुरक्षरस्य मुख्यत्वज्ञापनार्थम्। तस्माद् बर्हिर्निधनानां बहुषु विकल्पेषु युगपत्प्राप्तेषु चतुरक्षरत्वमेव प्रतीयते। तथा तृतीयस्य साम्नस्तानि। यत्र यानि चतुरक्षराणि सदृशमेकरूपमेकविधं यदि गीतानि स्युः। ये च द्वे अक्षरे उत्तरे अन्यथा गीते, पूर्वाक्षरगीते, भिन्नरूपगीते यदि स्यातां, तानि षडक्षराणि प्रतिहाराहाण्यपि भिन्नरूपत्वात् द्वेधाप्यावृज्यन्ते छिद्यन्ते, व्यावर्गमर्हन्तीत्यर्थः। यथा साकमश्वादीनामुत्तमपदादौ यानि षडक्षराणि, तेषां चत्वारि एकप्रकारेण गीतानि, उत्तरे च द्वे अन्यप्रकारेण। तस्माद् द्विप्रकारगीतत्वाद् द्वेधा प्रकरणमर्हन्तीति केचिदाचार्या वाञ्छन्तीत्यर्थः।

किमर्थं प्रतिहाराहाण्येव, नोपद्रवाहाणीति ज्ञापनार्थम्। तस्माद् यौक्ताश्रयप्रकाराणां[1] षडक्षर उपद्रवो बहुरूपगीतियुक्तो ऽपि न व्यावर्गमर्हति। षडिति किमर्थम्, कर्णान्मा भूदिति। यथा वयमिन्द्र त्वा ( जै. सू. १.१४.८ ) इति चतुर्थस्य प्रकृते गौषूक्तसौभरे एकविधगीते निरस्य साकमश्वादीनि बहुरूपगीतान्युदाहरणान्याचार्यो बहुरूपगीतिव्यावर्गकारणमिति ज्ञापयति। किमेतस्य ज्ञापने प्रयोजनम्, अव्यावर्गं चेदुत्तमं पदं भवतीति, अत्र प्रयोजयति।

पूर्वै...कार। तथाविधेषु पूर्वैरेव चतुर्भिः प्रतिहारयाञ्चकार धानञ्जय्यः। पञ्चलम्भिः क्षैरकलम्भिः द्वाभ्यामेव पञ्चमषण्डाभ्यामेव कारणात् षड्भिरपि केचिदिच्छन्तीति ज्ञायते।

अथ प्रतीहारादीनां प्रमाणविधयो बह्वः सोदाहरणमभिहिताः। उक्तेषूदाहरणेषु स्पष्टमवगन्तुं प्रमाणानि नेतरेषु। एकमेव सर्वविकल्पप्रसंगः, क्व पुनरेव प्रसङ्गः, सर्वेष्वेव चानुदाहृतेषु। एकमुदाहृत्य वक्तव्यम्। त्वमग्ने यज्ञानाम् ( जै. सं. १.१.२ ) इत्यत्र सर्वे विकल्पाः प्रादुर्भवन्ति। प्रतिहारस्य द्व्यक्षरत्वं शक्यं कल्पयितुम्। त्र्यक्षरत्वं, चतुरक्षरत्वं, पञ्चाक्षरत्वं च। एवं चेन्मन्यते भवान्, भवन्तं व्यामोहमहार्णवाभ्यन्तरपतितमहं मन्ये। श्रूयताम्--सम्यगेतत्, स यद्वै खल्वादित इत्यादिना ग्रन्थेन ये धर्माः प्रस्तावे प्रस्तावे ऽपिहितास्त उद्गीथादीनामपि तुल्या एव। कथमेतज्ज्ञायते, इति चेद् ब्रूमः—आदितः साम्नोऽवसानमात्रः प्रस्तावः इत्येतावता प्रस्तावगते विधातव्ये सर्वस्मिन् सिद्धे यो वचनविस्तरः कृतस्तेन ज्ञायते, सर्वोऽर्थोऽसौ विधिरिति। कथं प्रस्तावग्रहणे वर्तमाने यददो ऽवसानमात्रप्रस्ताव इति प्रस्तावग्रहणमकारि। तेनापि ज्ञायते पूर्वो विधिरन्यत्रापि प्रसजतीति।

'अथ चावसानमात्रः' प्रस्तावः इत्येतदन्तेन ग्रन्थेन प्रस्तावलक्षणं विहितमिति विद्यादिति पदद्वयं पृथग् वक्तम्। तस्यायमर्थः---इति-इत्थम्। एवमनेन प्रकारेणोत्तरेष्वपि विद्यात्। यानि लक्षणानि प्रस्तावे विहितानि तानि उद्गीथादीनां पर्वणां साधारणानि विद्यादित्यर्थः। तस्मादपि ज्ञायते तस्य विधेः सर्वार्थता। किं बहुना प्रलपितेन, सर्वथा सम्यक् सदृशं गीतमिति च नैव गीयमानस्यावच्छिद्यात्, इति च नावसानमतिक्रामेदिति च। एतत्त्रयं सर्वसाधारणमिति मन्तव्यम्। आचार्यो ऽपि गीत्यवसानवशेनैव सर्वान् विधीन् प्रवर्तयति। तस्मादस्मिन् साम्नि पञ्चावच्छेदात् क्रमेण पञ्च पर्वाण्यवलम्बन्ते। यथा बर्हिषीत्यस्यापि। तथाविधेषु सर्वेष्वेवमेव विद्यात्। किम्, प्रसंम्राजम् ( जै. सं. १.१५.१० ) इत्येषां प्रथमे साम्नि समानमेत्, न हि न हि। एवं सत्युत्तमं पदं प्रतिहार आसेवते इति वचनमनर्थकं स्यात्। एतदानर्थक्यपरिजिहीर्षया प्रतिहार उत्तम एव पदे कल्प्यः। अथास्योत्तमे पदे द्वे विधे, त्रीणि पर्वाणि। किमत्र कुर्मः, अत्र ब्रूमः, प्रथमो अवसानमात्रः प्रस्तावः। अन्त्यमवसानमात्रं निधनम्। नानयोः प्रायेण व्यभिचारोऽस्ति। इतरेषां त्रयाणां

१ को. यौक्ताश्च प्रकाराणां ?

बहुरूपः सङ्करे दृश्यते। क्वचिदुद्गीथप्रतिहारौ संसृष्टौ, क्वचित् प्रतिहारोपद्रवौ, क्वचिदुद्गीथप्रतिहारोपद्रवाः, क्वचित् प्रतिहारस्थानमपि द्वेधा त्रेधा वावच्छिद्यते। यथा— शं नो देवीः (जै. सं. १.३.१३) इति च दूतं वः (जै. सं. १.२.२) इति च। गव्यो षु णः (जै. सं. १.३०.३) इति च। विशो विशः (जै. सं. १.६.७) इति च। दधन्वे वा (जै. सं. १.१०.४) इति च। तेषा मध्यगतत्वात् प्रतिहारस्य प्रामाण्यवचनादेवा-न्ययोरपि प्रमाणावगतिः सिध्यतीति कृत्वा तत्प्रमाणनिर्णयोपायमात्राशंसनम्, इतीममध्यायमाचार्यः[1] पर्वणां सङ्करनिराचिकीर्षया भगवान् जैमिनिराम्नातवान्।

तत्र बहवोऽवच्छेदमार्गाः सोदाहरणमुदाहृताः सर्वसामप्रतिहारप्रमाणावगति प्रत्याचार्यगतीव परिश्रमेण। तथापि 'त्वया मया च' न्यायेनैव सकलपर्वावगतिः स्यात्। का ऽसौ 'त्वया मया च' न्यायः, एवमुच्यते—

'बभूव किल कदाचिदर्जुनो नाम राजपुत्रः। तस्य वैरी वैकर्तनो नाम। तमर्जुनोऽत्यद्भुत युद्धं कृत्वा जघान। न प्रहर्षं जगाम[भगवान् वासुदेवः]। तदा भगवता वासुदेवेनोक्तं कर्णवधनिमित्तो हर्षो भवता न कर्तव्यः। न केवलं भवत्पत्रिणः[एव कर्णवधे निमित्तम्]। एवमुक्तोऽर्जुनः किमन्यदित्यचूचुदत्। एवं चोदितः पुनरुवाच वासुदेवः—

त्वया मया च कुन्त्या च धरण्या वासवेन च।
जामदग्न्येन रामेण षड्भिः कर्णो निपातितः॥

त्वया शरा विद्धाः, मया उपायाः दर्शिताः, कुन्त्या उच्छिष्टशरवेधः प्रतिषिद्धः, धरण्या नाशापाते स्यन्द-नापकर्षः [कृतः], वासवेन कवचग्रहणं [कृतम्], रामेण प्राप्तकाले ऽस्त्रविस्मरणशापः कृतः। इत्येतैः परिक्षीणबलत्वादन्तकवशं गतः कर्ण इति, अयं त्वया मया च न्यायः। तद्वदत्रापि विज्ञातव्यम्। उक्तैश्च सोदाहरणैरवच्छेदमार्गैः गीतिवशेन च, ऊहाम्नायानुसारेण च, अवसानवशेन च, आचार्यप्रवृत्त्या च सिद्ध-प्रतिहारगीतिप्रमाणसादृश्यकल्पनया च, अभिश्रेण्यावचनानुसारेण च अन्येषु सामसु सर्वं पर्व सम्यगव-गन्तव्यम्। न केवलमेतावता ग्रन्थेन सर्वमवगन्तुं शक्यते। उदाहृतावच्छेदवशेन एन्द्र सानसिम् (जै. सं. १.१४.५) इति पूर्वस्य च। पुनानः सोम (जै. सं. १.५६.६) इति प्रथमस्य च। क्वास्य वृषभ (जै. सं. १.१५.८) इति मध्यमस्य च। तमिन्द्रं वाजयामसि (जै. सं. १.१३.५) इति तृतीयस्य च। अग्ने मृड[2] (जै. सं. १.३.३) इत्युभयोश्च। अच्छा[3] हि[3] त्वा[3] (जै. सं. ४.२५.५) इति मध्यमस्य च। प्रेष्ठं वः (जै. सं. १.१.५) मध्य-मस्य च। ऋजु नीति[4] नः (जै. सं. १.२३.५) इति च निधनकामस्य गीतिवशेन। उप त्वाग्ने (जै. सं. १.२.४.) इति च चतुरक्षर ऊहाम्नायवशेन। यथा तृतीयस्य स्वरसाम्नः अवसानवसेन। यथा हृषोयस्योत्तमं पदं सर्व-माचार्यप्रवृत्तिवशेन। यथा प्रेष्ठं वः (जै. सं. १.१.५) इति उत्तमस्य। नमस्ते अग्ने (जै. सं. १.२.१) इति च द्व्यक्षरत्वम्। मध्यमपदान्ते चतुरक्षरत्वं च कथमिति चेत्, अव्यावर्गं चेत्, इत्यत्र औशनेन[5] वैरूपादीनां छन्दस्योशनस्योत्तमपदगीतिवैरूप्यादर्शनोपलब्धमेतत्। तत्रैव विवरिष्यामः। सिद्धसादृश्याद्यथा वयमु त्वा (जै. सं. १.१७.३) इति पूर्वस्य चाभिश्रेण्यवचनेन। यथा वैराजस्योत्तमे पदे मध्यमोऽभ्यास इति। प्राकृतस्य पुनः साम्नः कियान् प्रतिहारः, चतुरक्षर इति ब्रूमः।

---

१ को. इति मम० ? २ को. मृष्टेऽपि ? ३ को. अच्छन्नत्वा ? ४ को. ऋजुनीति
५ को. औशेन ?

ननु शाकलसादृश्याद् द्व्यक्षरत्वमिति प्राप्नोति । तथा सैन्धुक्षितसादृश्यात् चतुरक्षरत्वमेव । उभयप्राप्तौ हि चतुरक्षरत्वमुक्तम् । अत्रैवायमन्यो विचारः । एवं सत्यस्य साम्नः उद्गीथेऽस्यावसानद्वयं प्राप्नोति । अवसानानतिक्रमणं च सर्वपर्वणामिष्यत इति हि भवतोक्तम् । अत्र ब्रूमः--उद्गीथस्य बह्ववसानत्वमाचार्येणापीष्यत एव । यदयमुद्गीथस्य पदोद्गायति, द्वाभ्यां पदाभ्यां त्रिभिः पदैरिति च बहुरूपं विधिं शास्ति । तेन ज्ञायते ह्रासवृद्ध्योरुद्गीथविषयत्वम् । अथ चाहुः न पदान्तेष्वारमेत इति चोत्तरस्य पदरयारभ्य वान्यदिति च । तत्रोत्तरगुरूणि सामानि भवन्ति । स खलु पदमारभ्य आरमेत इति च । एतैर्विधिभिः ज्ञायते अनेकावसानत्वमुद्गीथस्येति । अथ विशोविशीयस्य बह्ववसानमुत्तमं पदं, तत्र प्रतिहारोपद्रवविषये बहून्यवसानानि विद्यन्ते । तत्र कथं प्रतिहारावगतिः स्यात्, पञ्चमषष्ठाभ्याम् इत्ययं पक्ष आश्रयणीयः । सस्तोभाभ्यामिति वचनाद् हिंकारोऽपि प्रतिहारभागेव । अभिश्रेण्येनापि तथैव क्लृप्तमेव । प्रमादरहितः[1] सर्वं विधिवर्त्मावलोकयन् पश्यति तत्त्वमर्थम्[2] । एवमुक्ताननेकविधान् प्रदर्शितेषूदाहरणेषु सम्यगवलोक्य तदनुसारेण गीत्यविरोधमितरेषु यथायोगमवच्छिन्द्यात् । किमष्टाक्षरपदोत्तमानामेतावन्त एव भेदाः, नैवम्, अन्येऽपि भेदा विद्यन्ते । द्वाभ्या प्रतिहरति । षड्भिरुपद्रवति । बहिर्निधनम्, यथा यौक्ताश्वयोः सर्वमुत्तमं पदं प्रतिहरति । अभ्यासाभ्यामुपद्रवनिधने । यथा बार्हिषीयस्यावच्छेदविज्ञानप्रदर्शनार्थो ऽयं ग्रन्थः । न सर्वविधातव्यविधायी ।

आलोक्य गीतिक्रममूहपाठम् ।
उक्तान्[3] विकल्पानपि[3] नैकरूपान् ।।
तदानुकूल्येन समीक्ष्य सम्यक् ।
शेषेषु कुर्यात् प्रतिहारक्लृप्तीः[4] ।।१।।
उदाहृतस्वल्पथपाश्रयेण ।
शक्यावगन्तुं सकलेति मत्वा ।।
छन्दःस्थसामार्णवपर्वक्लृप्तिः ।
न ग्रन्थबाहुल्यभयादकारि ।।२।।

इति [ पर्यध्याये ] एकादशः[5] खण्डः[5]

---

१ को. प्रमाद तङिरहितः ? २ को. तत्वमर्थः ३ को. उक्तानपिकल्पा०
४ को. प्रतिहारक्लृप्तिः ५ को. प्रथमः

## द्वादशः[1] खण्डः

अथा···मानां । अत्र रोधः । अत्रास्मिन् द्वादशाक्षरे पर एतानि प्रतिहारादीनि त्रीणि सामपर्वाणि असंरुद्धतमानि भवन्ति । विस्तीर्णतमानि भवन्ति । पदस्यासंरोधमनुवर्तमानानीति[2] हेतुरूपेणेदमुच्यते । पदासंरोधानुवृत्त्या पदासंरोधाकरणादेतानि[3] विस्तीर्णतमानि भवन्तीत्यर्थः । किमर्थो ऽयमारम्भः, प्रतिहारादीन्येवोत्तमं पदं व्याप्तुमर्हन्तीति प्रतिपादनार्थः । तमपः प्रयोगादुद्गीथात् प्रतिहाराधिक्यमनुमतं भवति । अयमस्य वाक्यस्याभिप्रायः—उद्गातुः भूयिष्ठभागित्वं, ततः साधुत्वं चोद्गातृतमनकालत्वं कनीयस्तत्वं चानादृत्य पदाश्रित एव विधिराश्रयणीय इति । तस्मात् प्रतिहारस्योत्तमं पदमाश्रित्य विहितत्वात् प्रतिह्रोद्गीथेऽपि साम्नि महानपि प्रतिहारो विधातव्य एव । यथा— अपत्यं वृजिनम् ( जै. सं. १.११.९ ) इत्यत्र चतुरक्षर उद्गीथः । अष्टाक्षरः प्रतिहारः । विभाग्यानां च पदाश्रितत्वात् यथा बार्हतानां विभाग्यानामष्टाक्षरः उद्गीथः, द्वादशाक्षरः प्रतिहार इति ।

नन्वत उत्तरत्र विधीयमानेषु बहुरूपेषु विधिषु प्रतिहारादिभिरेव सर्वपदं व्याप्यमानं दृश्यते, किमतो वाक्यमिदमनर्थकं स्यात्, तत्रानुदाहृतेष्वेतत् सार्थकं भवति । कान्यनुदाहृतानीति चेद् ब्रूमः—चतुर्भिः प्रतिहरति, षड्भिरुपद्रवति, द्वे निधनं यथा एन्द्र नः ( जै. सं. १.२९.१० ) इति । पूर्वस्य चतुर्भिः प्रतिहरति, सप्तभिरुपद्रवति, अक्षरं निधनम् यथा य इन्द्र[4] सोमपातमः ( जै. सं. १.४४.४. ) इति । त्रयाणां चतुर्भिः प्रतिहरति, अष्टभिरुपद्रवति । बर्हिर्निधनम् यथा अपामीवाम्[5] ( जै. सं. १.४४.७. ) इत्यस्य । असति ह्यस्मिन् वाक्ये प्रतिहारादीनां संरोधश्रवणादुद्गातृतमनकालत्वश्रवणाच्च, तदनुग्रहार्थमेतेषां साम्नामुत्तमपदाद्यक्षरचतुष्टयमुद्गीथसात्कृत्य मध्यमैश्चतुर्भिः प्रतिहारक्लृप्तिः युक्ततरेऽस्याशङ्का जायते ।

किमस्य विधेर्व्यभिचारो नास्ति, अस्ति । तदुत्तरत्र आचार्यमतिभेदेन प्रदर्श्यते । तत्रैव वक्ष्यामः ।

अपि...रति, चतु...वति, चत्वा...वनं, यथा...तयोः । यथा प्र होत्रे ( सं. १.११.२ ) इति । पूर्वस्य इन्द्राय साम ( जै. सं. १. ४३. ८ ) इति च । एवंरूपाणामन्येषामपि कल्प्यः । उक्तं...लभिः । आक्षरादिभिस्तुल्यरूपाणामाद्यक्षरचतुष्टयस्योद्गीथसात्करणमेव वाञ्छति क्षैरकलम्भिः । अव्या...स्येति । व्यावर्गोऽवच्छेदः । नानाकरणमव्यावर्गयोग्यम् । व्यावर्गहेतरवसानं वा । अवसानयोग्या[6] वा गीतिः । अव्यावर्गं चेदुत्तमं पदं स्यात् तस्मात्पूर्वं पदं गच्छति प्रतिहारः । उत्तमस्याव्यावर्गत्वमुपोत्तमगतमनस्यनिमित्तं, तस्मादुपोत्तमं व्यावर्गयोग्यं चेदेवं भवितव्यम् । यद्युपोत्तमोत्तमं च अव्यावर्गे स्याताम् तदा क्व च प्रतिहारः स्यात्, उत्तम एव[7] स्यात् । कथं ज्ञायते, यत्र तत्र वा प्रतिहारस्यावश्यकल्प्यत्वात् ।

---

१ को. नास्ति पाठः । २ को. अनुवर्तमानानी । ३ को. ०रोधाकारणा०
४ को. इन्द्रा । ५ को. अपामिवाम् । ६ को. अवासानयो०
७ को. एवं

अन्यस्थानविधानात् स्वस्थानविधानस्य न्याय्यत्वात् । उद्गीथापखण्डनादुपद्रवापखण्डनस्य युक्ततरत्वाच्चोत्तम इति निश्चीयते । आचार्योऽपीमं न्याय्यं प्रदर्शितवान्—

येन छन्दस्यस्य औशनस्य अव्यावर्गोत्तमस्य उत्तमे द्व्यक्षरः प्रतिहारो विहितः । ऊहाम्नायोऽपीममेव न्यायं दृढीकरोति । ऐन्द्राग्ने इन्द्रो दधीचः (जै. सं. १. १६. ५) इति सुवर्णिधने तृतीये च स्वरसाम्नि विलोक्य निश्चीयताम् । यदा व्यावर्गयोग्यां गीतिमवलब्धाप्रतिहारसङ्घावप्रतिपादनायावच्छिद्यते तदा चतुरक्षर एव कल्प्यः । यथा—अग्नाहुति । यदा तु प्रतिहारोपद्रवविषयश्चतुरक्षर एव तदा द्व्यक्षरः स्यात् । यथा प्रेष्ठं वः (जै. सं १. १. ५) इत्युत्तमस्य । अभिश्रेण्येनापि तथैवोक्तम्—चतुर्भिरक्षरैर्न्याय्य इति । के पुनर्वैरूपभासे, एवं रूपे अध्वर्योरित्युत्तरं वैरूपमत्र गृह्यते । प्रसिद्धे वैरूपभासे उक्तगुणाभावादत्र न गृह्येते । भासे पुनः आर्षेये आस्माकीने द्वे भासे श्रूयेते । यस्ते मदः (जै. सं. १. ४९. ४) इति प्रथमं शुक्रियाणां चतुर्थं च । तयोरेवं गुणवत्ता न संभवति । भासमन्यन्न दृश्यते । गायत्रानुष्टुभबार्हतानि सिद्धानि । काकुभं न दृश्यते । तस्मात् काकुभानां यदेवं गुणमन्विष्य लभ्यते तस्य भास इति संज्ञा अनुमातव्या, अन्विष्येदं लभ्यम्[1] । यथा[2]—पवस्व मधुमत्तमः (जै. सं. १. ५६. १) इति । एतेषां प्रथमयोरन्यतरत् काममन्विष्यतामन्यद्वा ।

अथ...इति । यत्र यस्मिन् साम्नि सर्वपदं निधनं, सर्वपदस्यापि निधनत्वं भवति तत्रोत्तमात् पूर्वं पदं प्रतिहारश्चोपद्रवश्च भजते । यथा तरत् स मन्दी (जै. सं. .५२.४) इति । कथितम् पदमत्र सर्वपदमिति निर्दिश्यते । निधनसंबंधादुत्तममेव उपोत्तमस्योद्गीथगोचरत्वात् स्वस्थानत्वादुत्तमस्य निधनस्य सतोऽपि प्रतिहारोपद्रवार्थमपखण्डनस्य प्रसजतो निवृत्त्यर्थमिदमुच्यते । यथा जरा बोध (जै. सं. १. २. ५) इति । पूर्वं यदिन्द्रोऽनयत् (जै. सं. १. १६. ४) इति च । सं वत्सः[3] (जै. सं. १. ३४. ७) इत्युत्तमं च ।

अथ...मिति । यत्र सर्वं पदं भूयश्च ततोऽधिकं च निधनं भवति तत्रापि प्रतिहारोपद्रवौ ततः पूर्वस्मिन्नेव पदे भवतः । पूर्वेणैव वाक्येनास्यार्थस्य सिद्धत्वादिदं वाक्यमनर्थकं स्यात्. नानर्थकम् । स्वरतः[4] उपासनतश्च[4] भिन्नरूपयोरपि सतोर्निधनयोरेकरूपत्वज्ञापनार्थत्वात् । किमेतस्य ज्ञापने प्रयोजनम्, एवं स्वराणां मध्ये निधनानामेवैवं यथासन्नतस्यैव यथा तृतीयमपि पदं सर्वं निधनमेव स्यात् । इतरथा उत्तरस्योपायाभावान्निधनाभावः प्रसजति । एकस्मिन् सति निधने एकेनैवोपायेन भवितव्यम् ।

अथ...यमिति । वाशब्दौ द्वौ चेदर्थे गृह्येते । प्रतिहारावेलयां स्तोभोऽस्ति चेत्, स चेत् प्रतिहारस्वरी प्रतिहारस्वरसंयुक्तः[5] । अथवा पूर्वो ऽवधारणायामुत्तरः चेदर्थे । प्रतिहारवेलायामेव प्रतिहारस्वरी स्तोभो ऽस्ति चेद्, येषु सामसु तानि स्तोभप्रतिहाराणि प्रोचुः पुराणास्ताण्डिनस्ताण्डिनामेव पुराण इति । एवमाभीशवाविनामेकप्रतिहारवेलायामेवेत्येवं चाकृतत्वात् शग्ध्यू[6] षु ( जै. सं. १.२७.१ ) प्र[7] मित्राय[7] ( जै. सं. १.२७.३. ) इति तृतीययोर्नेष्यते । प्रतिहारस्वरीति बहुषु दृष्टप्रतिहारस्वरयुक्त इत्यर्थः ।

---

१ को. लब्धम्
२ को. यत्
३ को. सर्वस्व
४ को. स्वरतोपासनतश्च
५ को. ०रसंयुक्ता
६ को. शग्घूषु
७ को. प्रतित्राय

**एते...चक्रु** । एतेषां हि साम्नां स्तोभैरेव ताण्डिनः प्रतिहारयाञ्चक्रुः । पूर्वेणैव वाक्येन सिद्धत्वादिदं वाक्यमनकर्थम् । अनर्थकं न । श्रुतिविहितमेषां स्तोभप्रतिहारत्वमितरेषां तत्सादृश्यादनुमातव्यमित्यवबोधनार्थत्वात्[1] । अथवा । ताण्डिभ्यो ऽन्येपि केचिदाचार्याः अभीशवादीनां स्तोभैरेव प्रतिहारयाञ्चक्रुरिति । अथवा वाक्यद्वयमेकीकृत्य व्याख्येयम् । यस्मादभीशवादीनां स्तोभानेव प्रतिहारयाञ्चक्रुः तस्मात् प्रतिहारस्थानस्तोभवन्ति स्तोभप्रतिहाराण्येव चक्रुरिति ।

**तद्ध···विन्देत्** । लिलंभयिषेदेव[2], स्पर्शयेदेव प्रतिप्रतिहारमृचा यत्रावकाशं विन्देत् सम्भवो ऽस्ति चेदिति धानंजय्य आहस्म । **अपि...र वेति** । यत्र प्रतिहारवेलागतस्य स्तोभस्य समीपे ऋगक्षराणि न सन्ति तत्र स्तोभ एव प्रतिहारः स्यात् । यथा ओयितं[3] वः सखेति प्रस्तावः । किम् ऋगक्षराण्यत्र न सन्ति, सन्ति । न सन्ति प्रतिहारार्हाणि । किमर्हाणि तानि, निधनार्हाणि । कथमेतज्ज्ञायते, श्रूयताम्—ओयितं[3] वः सखेति प्रस्तावः योमरायावुवेषूद्गीथ उपायवान् । उपायवत्त्वान्निधनस्वरयुक्तत्वाच्च परं षडक्षरं निधनं, स्तोभ उद्गीथ एव द्व्यक्षरं निधनं, स्तोभ उद्गीथः अष्टाक्षरं निधनं, स्तोभः प्रतिहारः द्व्यक्षरं निधनं, स्तोभ उपद्रवः परं निधनम् । केन पुनः प्रमाणेन एषां पदखण्डनां निधनत्वज्ञापानम्, स एव प्रमाणम्, योऽस्यानवकाशत्वं शास्ति । किमेवं स्वराणि पदनिधनानि सन्ति, न सन्ति । स्वराः पदनिधनानामुत्तरत्र वक्ष्यन्ते । अत्र न दृश्यन्ते । ते स्तोभैः सन्धाय गीतत्वात् तिरोभवन्ति । सन्धानावसानयोः स्वरभेदमान्धीगवमध्ये निधनोदाहरणमवलोक्य निश्चिनुयात् । ऊहाम्नाये च धर्मविधर्मादीनि ।

**अथ···साम्ना** । अथ खलु ऋचः पदं पदप्रमाणं पदविभागो ऽन्यप्रकारेण भवति, साम्नश्चान्यप्रकरेण । केषुचित् सामसु ऋचश्च साम्नश्च भेदेन पदविभागो दृश्यत इत्यर्थः । यथा गंभीरदेवस्थानविद्रथेषूत्तमस्योपद्रवविषयत्वात् अव्यावर्गत्वाच्च उपोत्तममिति । कथमेतज्ज्ञायते, पदवचनात्, सर्वं पदमिति उत्तरस्योपद्रवस्य विषयत्वादव्यावर्गत्वाच्चोपोत्तममिति ।

अपरा व्याख्या—**अथ···वति** । अथ खलु ऋचः पदमन्यतरत् । एकं पदं सर्वं प्रतिहारो भवेत् । क्व च पदानामेवं पदप्रतिहारः स्यादित्युक्तं भवति, कुतः प्रतिहार इति ज्ञायते, अधिकारात् । कथमुपोत्तममिति, उत्तमस्योपद्रवविषयत्वात् । किंविषयोऽयं विधिः, ब्रूमः—उत्तमस्य व्यावर्गविषयत्वे बहवः पक्षा उक्ताः । अव्यावर्गे उत्तमे यत्र व्यावर्गयुक्तमुपोत्तमं तत्रोपोत्तमः इति प्रतिपादितम् । यत्रोपोत्तममुत्तमं चाव्यावर्गे तत्रोत्तमे[4] द्व्यक्षरश्चतुरक्षरो वेति ज्ञापकात् प्रतिपादितम् । यत्र पुनरव्यावर्गमुत्तममुपोत्तमं चाव्यावर्गं तयोः पूर्वं उद्गीथविषयप्रतिहारादगरिष्ठः स्यात् तत्रायं विधिः स्यात् । यथा स्वर्णिधनं[6] काम्यमानाना[7] स्वराणां चतुर्थं वषट्कारनिधनमित्येवमादीनि । अन्यत्साम्नः, साम्नः पदमप्येवमुपोत्तमं प्रतिहारो भवति । ऋक्पदानि चान्यथावच्छिद्य गीयन्ते । समं विषमं वा तानि सामपदान्येकं वा पदं द्वे वा बहूनि वा । यथा गम्भीरं, विद्रथं, देवस्थानमिति ।

---

१ को. बोधनार्थः २ को. लीलंभ० ३ को. आयितं
४ को. ०सुतगीथ० ५ को. तत्त ? ६ को. स्वर्णिधनं
७ को. काम्यमानायां

अपि ''स्येति । ऋक्पदे अपि द्वे । द्वयोः पदयोरवयवौ सम्भूय साम्नः पदमेकं कुरुते । कर्तुरभावाद् भवत्यर्थे करोतिर्गृह्यते । अथवा सामशब्देन गीतिरुच्यते, पदं कुरुते सामगीतिविशेषः । क्वचित् पदावयवे द्वे संयोज्यैकपदमिव वर्तते । तथा वज्रादिषु उपोत्तमान्त्यानि उत्तमाद्यानि चत्वारि चत्वार्यक्षराणि सम्भूयैकं पदमिव भवति । प्रतिहाराधिकारात् तत्पदं प्रतिहारो भवति । ज्ञायते च[1] प्रसिद्धं ताश्रवसम् । उत्तरम् अश्व न त्वा (जै. सं. १.२.७) इति । प्रथमच्छन्दस्यं वारवन्तीयम् । वारवन्तीयस्यैव[2] रूपे स्तस्तयोरुत्तरमेव प्रतिहारः, स्वस्थानत्वात् । नाना'''वन्ति । प्रतिहारा अष्टाक्षरा एव नानापदाः स्युर्न षडक्षराः । दशाक्षराः । द्वादशाक्षरा वा इत ऊति । (जै. सं. १.३.१) इत्येवमादिषूपलक्षयेत् । इन्द्र नेदीय (जै. सं. १.२९.१०) इति पूर्वस्य द्वादशाक्षरत्वान्न भवति । वज्रस्य षडक्षरत्वं न भवति ।

इति[1] [ पर्यध्याये ] द्वादशः खण्डः[3]

---

१ को. प ?  २ को. ०स्यैवं ?  ३ को. द्वितीयः

# त्रयोदशः खण्डः

अथ…राणि। अथ गणप्रतिहाराणि बहुप्रतिहाराणि वक्ष्यामः। उत्त…भवति। उत्तमः प्रतिहारो न्याय्य एव भवति। उक्तलक्षण उत्तमे पदे द्व्यक्षरश्चतुरक्षरो वाष्टाक्षरो वा न्याय्यः। प्रतिहारः किमर्थः न्याय्य एवेति नियम्यते, अन्याय्यो गणप्रतिहाराणामुत्तमो मा भूदिति। तस्माद् अव द्रप्सः (जै. सं. १.३४.१) इति द्वितीयं गणप्रतिहारं न भवेत्। पञ्चाक्षरोऽत्रोत्तमः प्रतिहारः।

साद्…र्वन्ति। तेन न्याय्येन[1] प्रतिहारेण सादृश्यात् पूर्वानपि प्रतिहारान् कुर्वन्ति। न्याय्येन[2] प्रतिहारेण सदृशावयवानीत्यर्थः। कथं पुनः सादृश्यं भवति। प्रमाणतः, स्वरतः, स्थानतश्च सादृश्य भवति। इदं वाक्यद्वयमेकीकृत्य व्याख्येयं चेच्छब्दमध्याहृत्य। उत्तमः प्रतिहारो न्याय्यश्चेत्[3] पूर्वेऽपि सादृश्यात् प्रतिहारा भवन्तीति।

अथा…वति। श्येनस्य प्रतीतोदाः प्रतिहारा भवन्ति। प्रतीतोदा नाम पक्षिणः। आहारार्थमासीना यत्किंचिदाहारं दृष्ट्वा तदादानार्थमुच्चैर्भूतं[4] तुण्डमधा नयन्ति प्रतीतोदाः। तत्सादृश्यादेतेषु प्रतीतोदशब्दः प्रवृत्तः। एते ह्यदात्तात् स्वरात् तृतीयं स्वरं प्रत्यवनमन्तः प्रतीतोदा इव भवन्ति हि। यथा श्येनस्य प्रतीतोदैः प्रतिहाराः। यथा श्येनस्येति सिद्धे प्रतीतोदग्रहणमनर्थकम्। नानर्थकम्। अन्यत्रापि प्रतीतोदस्वराः प्रतिहारा एव स्युरिति एतदर्थत्वात्। तस्मान्नित्यत्ववत् सातिषङ्ग्योः प्रतीतोदाः प्रतिहारा एव स्युः। एवं चेत् महानाम्नीनामध्यासपुरीषेष्वपि प्रसजति, न प्रसजति, न्यायप्रतिहारात् पूर्वे प्रतीतोदाः प्रतिहाराः स्युर्नापरे। महानाम्नीषु न्यायसिद्धात् प्रतिहारात्[5] परे प्रतीतोदाः। परत्र न प्राप्तिः। तथाष्ठयोरच्छिद्ररयिष्ठयोश्च प्रतिहारसदृशाः प्रतिहाराः स्युः। किं पुनरेतेषां साम्नां प्रस्तावो नास्ति, क एवमाह। प्रथमोऽवसानमात्रः प्रस्ताव इति पूर्वमेव विहितः। उद्गातृतमनकालविषन्नत्वादुद्गीथोत्तरकालप्रतिहारः। आद्यस्यावच्छेदस्योद्गीथोत्तरकालता न भवति। तस्मादादिः प्रस्ताव एव। किमयं विधिः षण्णामेव छन्दसाम्, नेति ब्रूमः। श्येनस्य जागतस्यात्र दर्शनात्। तस्माद् द्वित्वदाप ? इत्युत्तरत्र त्रयः प्रतिहाराः। विधुं दद्राणम् (जै. सं. १.३४.३) इति च।

अपि…वतः। अत्र गीतमिति विधा शब्द्यते। गीतं विधा अवच्छेद इत्यनर्थान्तरम्। यत्र पदे पदे द्वे द्वे विधे भवतः ते च यदि प्रतिहाराभावाय उद्गीथाभावाय च सदृशे अयोग्येऽनुकूले च भवतस्तत्रैव पूर्वो विधिर्ग्राह्यो नैकगीते, यथा प्रति प्रियतमम् (जै. स. १. ४०. १०) इत्येतत् पदानामेकगीतत्वात् गणप्रतिहारत्वं न स्यात्। कथमन्योऽन्यसदृशे, इति चेत्, न। सादृश्यादिति पूर्वमेव विहितत्वात्।

सह…हारो। प्रतिहारेणैव सदृशौ प्रतिहारौ भवतः। कथं तयोः साम्नोः प्रस्तावप्रतिहारयोर्मध्ये सर्वविधाः प्रतिहारसादृश्यात् प्रतिहारत्वं न प्राप्नुवन्ति, स्थानसादृश्याभावान्न प्राप्नुवन्ति। तस्मात्

---

१ को. न्यायेन ?
२ को. न्यायेन ?
३ को. न्यायश्चेत
४ को. तदानार्थं
५ को. प्रतीहारात्

पदानामुत्तरे भागा उद्गीथा भवन्ति । उद्गीथसादृश्यात् पूर्वेऽपि प्रतिहारत्वं न लभन्ते । एवं चेत्, मध्यमस्य चक्षुष एकप्रतिहारत्वं प्राप्नोति । न तत्र उद्गीथेन सकलेन सादृश्यम्, उद्गीथैकदेशेन सादृश्यमस्ति । तस्माद् गणप्रतिहारमेव ।

अथै...वन्ति । गणप्रतिहाराणां लक्षणमुक्तम् । तेन लक्षणेन युक्तान्यपि कानिचिदेकप्रतिहाराणि सन्ति । तानि कीदृशानीति चेदुच्यते—यथा...गातः । यथा सोमसाम, यद्वाहिष्ठीये एकप्रतिहारे भवतः न तत्कृतमेकप्रतिहारमित्यर्थः । कं लक्षणमाश्रित्य एकप्रतिहारत्वम्, इत्याकांक्षयोच्यते—यान् युजेत सोमसाम यद्वाहिष्ठयोर्गणप्रतिहारत्वे सति गीतिमन्त्यवयवानि वसानानि प्रतिहर्ता भजेत । अगीत्...गाता । अगीतान्यवयवान्युद्गाता भजेत । उद्गीथकुलेषूद्गाता[1] तु खलु गीते साधुगीतानामर्हः । उद्गीथकुलेषु उद्गीयत्वापादनार्हेषु अवयवेषु सत्सु गीतिमत्सु गीत्यर्हत्वादुद्गातुस्तानि सर्वाण्युद्गीथत्वमर्हन्ति । साधुरिति वक्तव्ये साध्विति छान्दसः प्रयोगः ।

उद्गा···रिति । उद्गातृगीतसाधुत्वात् उद्गातारं गीतादनिर्विभाजयिषन्तः अवियुयोजयिषन्तः एकप्रतिहाराणि यद्वाहिष्ठीयादीनि कुर्युः । तत्र गीतियुक्ताः प्रतिहारांशाः, अगीता उद्गीथार्हा तान्येकप्रतिहाराणि स्युरित्ययमर्थो लब्धः । अनिर्भाजयिषन्तः इति भवितव्यम् । वकारं प्रमादगतं मन्ये । अथवा छान्दसः ।

अथ···मिति । यत्र येषु सामसु यद्युपोत्तमे पदे द्वे गीते भवतः, ते च यदि प्रतिहारत्वोद्गीथत्वयोः सदृशे भवतः, यदि प्रतिहारौ चान्योऽन्यस्य सदृशौ भवतस्तानि द्विप्रतिहाराणि भवन्ति । यथा अभीषवादीनि । एवं सति मानवैषम्यान्नार्मेधस्य प्रतिहारत्वं न प्राप्नोति, तन्नौधसस्य प्राप्नोति । तद्द्वयमूहाम्नायमभिश्रेण्यवचनं चानुसृत्यानुष्ठातव्यम् ।

नौधसस्यान्यो ऽपि परिहारोऽस्ति । एकगीतमुपोत्तमं पदमिति सादृश्यात् पूर्वान् प्रतिहारान् कुर्वन्तीत्यनेनैव सिद्धे सति सदृशौ प्रतिहारौ इति पुनर्विधिरनर्थकः । नानर्थकः । द्विप्रतिहारगणप्रतिहारयोः भेदोऽस्तीति ज्ञापनार्थः । कथं भेदो ज्ञायते, यदयं सादृश्यादिति वर्तमाने पुनः सदृशावित्यन्योऽन्यसादृश्यं दृढीकरोति, तेन ज्ञायते गणप्रतिहाराणां सादृश्यं व्यभिचरतीति । क्व नु व्यभिचारः, नित्यवत्सातीषङ्गप्रभृतिपु द्रष्टव्यः ।

ननु द्विप्रतिहाराणामपि सादृश्याभावो दृश्यते, आयास्ये द्व्यक्षरो न्याय्यः प्रतिहारः पूर्वो दशाक्षरः । अत्र ब्रूमः—तत्रैक एव प्रतिहारो, न्याय्येन च सदृशत्वात् अभिश्रेण्येन चानुक्तत्वात् उपोत्तमेन प्रतिहारः । किं तदुद्गीथ एव, नैवम्, ऊहाम्नाये चान्याक्षराभावात् । निधनोत्तरविषयत्वाद्धि[2] द्व्यक्षरेण भवितव्यम्, किं तर्हि मध्येनिधनमेवैतत्, चतुर्दशाक्षरो द्वितीयस्य पदस्यान्त्यमक्षरद्वयं, तृतीयञ्च पदं द्वादशाक्षरं भूय 'चतुर्दशाक्षरं मध्ये निधनं भवति' । तथा च शाखान्तरे श्रूयते यान्यस्य चतुर्दशाक्षर मध्येनिधनम् इति । बह्ववसानानि द्विनिधनान्यन्यत्रापि दृश्यन्ते[3] । यथा आग्ने[3] च राक्षोघ्नेषु ।

अपि···त्क इति । यद्यपि गीते सदृशे भवतः प्रतिहारौ च सदृशौ, तथापि सुज्ञानादीन्येकप्रतिहाराणि भवन्ति । को हेतुरिति चेदुच्यते—उद्गात्येव उद्गातारं गीतादनिर्विभाजयिषन्तः इत्येवमन्तान्येव वाक्यानि

---

१ को. उद्गालेषू ? २ को. ०त्वाद्धिच्छा ? ३ को. अग्नेरनेरने इति । अन्वेष्टव्यः मूलपाठः

पूर्वोक्तानि सुज्ञानादीनामप्येकप्रतिहारत्वे कारणानि मन्तव्यानीत्यर्थः । व्याख्या···विधा । आख्या व्याख्यानं । गणप्रतिहाराणां, द्विप्रतिहाराणामेकप्रतिहाराणां च बहुरूपा व्याख्या कृतेत्यर्थः । अथवा, इदं वाक्यद्वयमेवेति कृत्वा व्याख्येयम् । उद्गातारं गीतादनिर्विभाजयिषन्तः इत्येवमन्ता या व्याख्या विविधा आख्याः । सोमसाम-यद्वाहिष्ठीयादीनामेकप्रतिहारत्वे हेतुरूपेण कथितास्ता एव सुज्ञानादीनामेकप्रतिहारत्वे हेतव इत्यर्थः । एवं चेत् सोमसामसुज्ञानादीनां तुल्यत्वम् । न्याय्यत्वात् सुज्ञानार्थः पुनर्विधिरनर्थकः । नानर्थकः । भिन्नविषय-त्वात् सोमसामादीनां विधिः गणप्रतिहारविषयः, सुज्ञानादीनां द्विप्रतिहारविषयः । तस्मात्तद्वक्तव्यमेव । गणप्रतिहारैस्तुल्यन्याय्यत्वात् द्विप्रतिहारविधिरप्यनर्थक एव, धर्मवैषम्यान्नानर्थक इति । किं तद्धर्मवैषम्यम्, द्विप्रतिहाराणां प्रतिहारानित्यमन्योऽन्यतः सदृशा[1] गणप्रतिहाराणा[2] क्वचिदसदृशा अपि विद्यन्ते । नित्यवत् सातीषङ्गप्रभृतीनामिति पूर्वमेवोक्तम् ।

इति [ पर्यध्याये ] त्रयोदशः खण्डः

---

१ को. ०शां   २ को. ०राणां

# अथ चतुर्दशः खण्डः

अथा...तानां। त्रैष्टुभजागतानां च प्रतिहारान् वक्ष्यामः। तृतीय...वते। त्रिष्टुब्जगतीसंबन्धानां साम्नां तृतीयत्वं पदमासेवते प्रतिहारगुरुवेला गुरुणि महतिच्छन्दसि, यत्र हि तमनवेला[1] तत्र प्रतिहारेण भवितव्यम्। छन्दसो महत्त्वात्तृतीयं पदमत्रावाप्येव[2] तमनं भवति। तस्मात् तृतीये प्रतिहारः स्यादिति।

अथा...वतः। विभागो न्याय्यः अनयोरिति। विभागन्याय्ये विभागो नाम प्रस्तावोद्गीथप्रतिहारोपद्रवाणामेकैकैः पदैर्व्यवहारः। अथापि विभागो न्याय्यो हि त्रिष्टुब्जगत्योः। तस्मादपि तृतीयं पदं प्रतिहारः स्यात्। तयो...वयोः। तत् तत्र त्रिष्टुब्जगत्योर्यानि सामान्यसदृशगीतीनि असदृशगीतसर्वपदानि, असर्वपदा प्रस्तावानि स्युः। तृतीयं चेद् पदमविगीतं बहुविधगीतियुक्तम्, न च तेषु सामसु. तदेव तृतीयं पद प्रतिहारो भवति। यथौशनकावयोस्तथैवात्र द्रष्टव्यम्। तयोर्द्व्यक्षरः प्रस्तावः प्रथमोत्तमे विकृतिगीते। तृतीयमेकविधमेव गीतम्, तस्मात् तृतीयं पदं प्रतिहारो भवेत्।

तत्र...ख...यन्ति। तत्र खलु तयोः खल्वौशनकावयोः सर्वपदप्रस्तावे यथा तथा असर्वपदप्रतिहारे करिष्याम इत्युत्तरमनयोः पदयोः यथाव्यावर्गः। व्यावर्गवशात् प्रतिहारवन्ति प्रतिहारं कुर्वन्ति शाण्डिलानामाचार्याः, इति न्याय्यो हि पदप्रस्तावः। प्रस्तावम्। अतश्चेन्न्यायादनपेते औशनकावे भवतः। प्रतिहारो ऽपि खलु न्याय्यायेतेऽपीष्यते। इत्यस्मात् कारणादितर एव पूर्वोक्ति एव पक्षः समारंभतर आश्रयणीयः।

अथ...वयोः। यत्र प्रस्तावो ह्रसते अल्पतरो भवति तत्र प्रतिहारः प्रत्ययीभवति प्रतिलोममागच्छति। तृतीयं पदं भजत इत्यर्थः। अथौनशकावयोरयमप्याश्रयणीयो न्याय्यः। यत्र...नुनोः। यत्र प्रस्तावो ऽभिवध्यते[3] पदं वाधिकं[4] भवति, तत्र प्रतिहारः प्रत्युत्क्रामति ऊर्ध्वं गच्छति। उत्तमं भजत इत्यर्थः। यथा 'मरुतां धेनुनोत्तमे पदे चतुरक्षरः।

ननु पूर्वस्य मरुता धेनुनः प्रस्तावो द्व्यक्षरः। तत्र ह्यवसानमामनन्ति[5], तस्मादाचार्यक्लृप्तेराम्नायानुसारित्वादाम्नायं प्रमाणीकृत्यान्यत्र प्रमादः कल्पयितव्यः। क्व कल्प्यः। अस्मिन् वाक्येऽन्त्यो रेफः प्रमादादागतो मन्तव्यः। युक्ततरा हि श्रुतिप्रमादक्लृप्तेः पौरुषेयप्रमादक्लृप्तिः। न ह्यत्र श्रुतिप्रमादो नचाचार्यस्य, उभयत्राप्येतत्प्रमाद एव। किमत्र कर्तव्यम्। सन्धानं वा क्रियते। रेफो वा निरस्यताम्। अक्षरत्यागादक्षरगुणभूतस्यावसानस्य त्यागो लघीयानिति कृत्वा सन्धानमेव कुर्मः। अन्यत्रापि प्रभावविषये सन्धानावसानयोर्व्यभिचारो दृश्यते। प्र धन्वा सोम ( जै. सं. १.५८.२ ) इति। प्रथमचतुर्थयोः सन्धानार्हेऽवसानं दृश्यते। कार्तवेशराहितकुलीययोरवसानार्हे सन्धानमिति।

विगी...विले। विगीतं विविधगीतं बहुविधगीतम्। तृतीयं पदं विविधगीतयुतं चेद् भवति, तदा उत्तमं पदं प्रतिहारो गच्छति। ह्रसिष्ठे प्रस्तावे तृतीयपदं प्रस्ताव इति पूर्वमुक्तं तस्यायमपवादः। यानि

---

१ को. त्वमन०   २ को. पदमत्र   ३ को. ०भिवन्धते
४ को. वाधिक वा   ५ को. ह्यवसायामन्ति   ६ को. रेवसा०   ७ को. चतुर्थमं

त्रीणि पदानि सामराजगतानि, तानि विभाग्यानि। चतुर्थपदं[1] सामराजं न श्रूयते। किमिदं सामराजमित्युच्यते। अभिप्लविकेषु[2] सामराजगन्धो ऽपि नास्ति। सत्यमेतत्। यथार्थः सम्पद्यते तथा व्याख्यास्यामः। स्वार्थे तद्धितः, अभिप्लव एवाभिप्लविकः। तृतीयोऽभिप्लवो नानान्त्यः[3]। तत्रातरत्र यस्याभवान्त्यानि[4] जागतानि स्वराणि पावमानानि कल्प्यानि सन्ति तत्र कल्पयितुं योग्ये 'चोदस ?' इत्युत्तमे तयोः प्रस्तावौ ह्रसिष्ठौ। तृतीयं पदं विगीतम्, उत्तमे कल्पयितुं शक्यः प्रतिहारः। तस्मात्तयोरन्यतरस्य सामराजेन समानयोनित्वात् सामराजाभिधानमप्यस्तीत्यनुमातव्यम्। यत्तृतीये ऽभिप्लवे सामराजस्य यथेति सम्बन्धः। अथवा पञ्चम्यर्थे षष्ठीं कृत्वा सामराजादारभ्य तृयीये साम्नि अभिप्लवविनियोज्ये इति कल्प्यम्। यदिति निपातो ऽलकारार्थः। अथवा। प्रसिद्धस्य सामराजस्योपरिष्टात्तृतीये साम्नीति कल्प्यम्, निपातानामनेकार्थत्वात् अत्र यदिति निपात उपरिष्टादर्थे गृह्येत।

अपि...कामेति। एवकारस्तृतीयशब्देन योज्यः[5]। अपि शब्दो विगीतशब्देन विकल्पवाची। तृतीयं पदमविगीतं भवति। चतुर्थं विगीतमेव भवति। कथं चतुर्थमिति गृह्यते. प्रथमस्य प्रस्तावविषयत्वात् द्वितीयस्योद्गीथविषयत्वात्. तृतीयस्य च द्वितीयेन सादृश्यदर्शनात् चतुर्थमिति निश्चीयते। चतुर्थं विगीतमिति च कथं जानीमः, तृतीयमेवेत्यवधारणायाः सदृशगीतेः विभाग्यं भिन्नकर्तृत्व मा कार्ष्म इति अस्मात् कारणाद्द्वितीयं पदमुद्गीथं, तेन सदृशगीतं तृतीयं प्रतिहारं कल्पयितुं न युक्तमित्यर्थः। यत्र[6] सर्वपदप्रस्तावो भवति तत्रोत्तममेव प्रतिहारो भजते। यथा मरुतां धेनूनाम्। यत्र विहितास्त्रयो विशेषाः युगपत् संपतन्ति[7] तत्रोत्तमे प्रतिहारे, यत्र वैकल्यं तत्र तृतीयमेव। यथा कावस्य प्रस्तावह्रासात् तृतीयमेव, यथा द्वितीयतृतीययोश्च सादृश्यात्ताक्ष्यसाम्नोः। यथा चतुर्थस्य विगीतत्वात् को अद्य (जै. सं. १.:५.१०) इति।

तदा...वन्ति। अत्रान्तशब्दोऽन्त्यार्थे वर्तते। अन्त्यं पदं पदमिति। अथवा यथान्यासमेव भवतु। अन्तशब्दो विवक्षावशात् पदे, अक्षरे, वावसाने वर्तते। अत्र पदं परिगृहीतम्। अन्तोऽस्य चतुर्थं पदमिति। कथमत्रान्तशब्दः[9] पदे गृह्यते नाक्षरे। यद्यक्षरे गृह्येत, व्यर्थोऽयं विधिः स्यात्। न ह्येकमपि साम एकेन एकेन स्वरेण गीतमस्ति। यद् ऋगक्षराण्येव परिगृह्णीम, तदा कश्यपव्रतमेव विभाग्यत्वेन विधेयं भवति। तदनिष्टम्। वासिष्ठादीनामपि विभाग्यत्वश्रवणात्। तस्मात् पदमेव परिगृहीतम्। किमयमाङ् विधौ आहोस्विन्मर्यादायाम्, मर्यादायामिति ब्रूमः। अभिविधौ पुनर्गृह्यमाणे वासिष्ठपार्थादिषु दोषः स्यात्। सस्तोभविभाग्यानामृक्सामान्त्यानामेवायं विधिः स्यात् यद्युपेयनिधनकृतं विकारमवश्यंभाविनमुपेक्षितुं शक्यं चेत्, अभिविधिरपि गृह्येत। तत्र सामान्यन्तात् सदृशगीतीनि विभागस्येव भवन्ति। यथा एष प्रकोशे[10] (जै. सं. १. ५७. ३) इति। प्र गायत् (जै. सं. १. ५५.३) इति च वासिष्ठस्य च पार्थस्य च। असति ह्यस्मिन् विधौ पूर्वेण विधिना उत्तमे प्रतिहारः प्रसजति।

इमं स्तोमम् ( जै. सं. १.७.४. ), आसावि देवम् ( जै. स. १.३३.१. ) अवद्रप्सः ( जै. सं. १.३४.१) अच्छाव इन्द्रम् ( जै. सं. १.३६.६ ) अभि प्रियाणि ( जै. सं. १.५७.१.) इत्येतानि सामानि किं विभाग्यान्युत

१ को. चतुर्थमं
२ को. अभिल्पवि॰ ?
३ को. नानान्त्या
४ को. तत्रोत्तरत्रयहस्या॰
५ को. योज्यम्
६ को. यतः ?
७ को. संवदन्ति ?
८ को. अन्यं ?
९ को. कथमस्य तान्तशब्दः ?
१० को. प्रकाश

गणप्रतिहाराण्याहोस्वित् न्याय्यप्रतिहाराणि । अत्र ब्रूमः—त्रयमेतद् युक्तम्, असर्वपदप्रस्तावत्वात् तृतीयस्य च पदस्य विगीतत्वात् उत्तमे युक्तः । आन्तसदृशगीतत्वाद् विभाग्यमपि युक्तम् । मध्ये ऽवसानत्वान्नेति चेन्न, वसिष्ठव्रतसपक्षेलान्दात्मादिषु बह्ववसानदर्शनात् । उक्तलक्षणवत्त्वाद् गणप्रतिहारत्वमपि युक्तमेव । अगीतोद्गीथत्वं हि प्रत्याख्यातम् । न कनिष्ठोद्गीथत्वम् । गीतियुक्ताश्चेदुद्गीथाः, तत्र वरिष्ठा अपि प्रतिहारा भवन्त्येव यथा तस्मात् त्रयमपि युक्तमेव । कोऽत्र निश्चिनोति, यस्य न्यायमार्गे भवति मतिविशेषः । गणप्रतिहारपक्षे मामकी[1] मतिः[1] विलम्बते ? पर्व[4]-अन्ति । पर्वशो ऽवयवशः पच्छ इत्यर्थः । यस्मात् पच्छऋचमुद्गातारो ऽपि विभजन्ते । प्रथमं पदं प्रस्तोता भजते, द्वितीयमुद्गाता, तृतीयं प्रतिहर्ता, चतुर्थमुपद्रव इत्येवं विभजन्ते । तस्मादेतेषु विभाग्याभिधानं प्रवृत्तम् । विभागमर्हन्तीति वा । विभागाय हितानीति वा विभाग्यानि । अथवा कृत्यप्रत्ययश्चेत्,[2] कुत्वं छान्दसम् । विभाग्येति[3] छान्दसः । अध्येतृप्रमादादागतो वा । **तानि-वन्ति** । विभागरहितानि पदान्येव विभज्यन्ते । त्रैष्टुभं जागतं पालाशाभिधानमस्मिन्नार्षेयेण श्रूयते । तस्मादेवंलक्षणायास्मै द्वितीया चोदसीयसदृशाय लौशाभिधानं नेयम् ।

**सस्तो···रिष्टमिति । अथ...जन्ते** । तत्र को ऽपि नियोगः पदानामिति मीमांसायामुच्यते—साद्धं-न्याहुः स्तोभविभाग्यानां पदानि सर्वाणि सहवाच्यानि स्युः । **यथा...स्येति** । यथा महादिवाकीर्त्यस्येति सिद्धेः आत्मन इत्यनर्थकम् । आत्मन्यपि प्रस्तावप्रापणार्थत्वात् । तस्मादात्मनः प्रथमेन स्तोभेन प्रस्तुयात् । किं पुनः अनाद्यौ नास्ति प्रस्तावः, अस्ति । सर्वाणि हि सामानि प्रस्तावेनैव आरब्धानि । आदौ च निरुक्तं स्तोभद्वयम् औहोवान्तं प्रस्तावः । सर्पशब्दवत्त्वात् बाभ्रव्यं तृतीयं संसर्प इत्युक्तम् । नचार्षेये संसर्पसंज्ञा कृता । कथमेषु विभाग्यत्वम्, पदान्तासदृशगीतित्वम्, यत्र पर्वशः ऋचो विभागस्तदुभयमेषु विद्यते । सर्वेषां हि साधारणानि पदानि निधनत्वाद्, ऋक्स्वराश्रितत्वात् पदानि भिन्नगीतीनि । अत्र ब्रमः—पदान्याश्रित्य ये स्तोभाः सदृशरूपाः क्रमेण विद्यन्ते तैः विभज्यमानानां पदानां विभाग्यत्वं लक्षणया शक्यं कल्पयितुम् । इदमेवापि तावदेवं[5] कारणं यदयमेनयोर्विभाग्यत्वं[6] शास्ति ।

इति [ पर्यध्याये ] चतुर्दशः खण्डः

---

१ को. मामकिमिति ? २ को. कृत्ययश्चेत् ३ को. विभक्ष्यतेति
४ को. पर्वशो ५ को. तावदेवं ६ को. यदयमे०

## अथ पञ्चदशः खराङ्कः

### अप्रगीतसामप्रतिहारविधिः

**प्रगी···स्याम** । प्रकर्षेण गीतानि प्रगीतानि । गीतस्य प्रकर्षो बहुकृत्वो गानम् । यानि योनावुत्पन्नानि सामानि स्तोत्रार्थमूहाम्नाये गीयन्ते तानि प्रगीतानि । अथवा ओकारः स्तोभावृत्त्युदात्तादिभिः विशेषैः विकृत्य यानि गीयन्ते तानि सर्वथा ऊहाम्नायगतानीत्यर्थः । तेषां प्रगीतानामूहाम्नायगतानां साम्नां प्रतिहारान् यथावदधीतान् अध्ययनवशेन क्लृप्तान् व्याख्यास्यामः । प्रतिहारानित्येतावता सिद्धेः यथाधीतानित्यनर्थकम् । नानर्थकम् । अध्ययनवशेनैव गेयानि । यथा गीतिविशेषैः परोक्षैः स्तोभैश्चाध्ययने विशेष्य गीयन्ते तथैव प्रतिहारकाले ऽपि गेयानीत्येतदर्थत्वात् । आमहीयवस्य चतुरक्षरः प्रतिहार उक्तः । स उदात्तानुदात्तविशिष्ट एव स्यात् । नैकश्रुतिः । पौष्कलस्य द्व्यक्षरः परोक्षीकृत्यैवोच्येत ।

**बा···मीति** । बाभ्रवस्य चतुरक्षरः समध्यमस्तोभसहित एव स्यात् न केवलमृगक्षरमात्र एव । प्रतिहारस्य तु परिमाणमात्रमेवोच्यते न तु रूपलक्षणमित्येतदर्थं निरूपणार्थमुक्तम् यथाधीतानिति । अथवा सति विकल्पे संशये वा यथास्थमाम्नायमनुसृत्यैव निश्चेतव्यमित्येतदर्थं यथाधीतानित्युक्तम् । एकैकानि हि सूत्राणि अनेकशाखोपकारकाणि तस्मात् सौमेधस्य प्रागभ्यासादुत्तमेन पदेन प्रतिहरेत् इत्याभिश्रेण्यः । अभ्यासादिभिश्चतुर्भिः इति शाण्डिल्यः इति । अत्र यासु शाखासु अभ्यासादावेव छन्नमस्ति, तासु पूर्वपक्ष आश्रयणीयः । यासु अभ्यासपञ्चमे तासूत्तरः । यासु छन्नं नास्ति तासु विकल्पः । त्रिनिधनस्य त्वाष्ट्रीसाम्नो ऽपि तथैव । अभ्यासवतो वैदन्वतस्य त्रीणि सस्तोभानि तृतीयमेन वा इत्यत्र समस्याध्यायिनां[1] त्रीणि निगृह्य अध्यायिनां तृतीयमिति । अथवा । अत्रोक्तलक्षणस्य साम्नस्तद्विरोधि श्रुतिवचनं श्रूयते । तच्छ्रुतिवचनमेव ग्राह्यमित्येतदर्थं यथाधीतानित्युक्तम् । रथन्तरस्येत्यत्रोक्तं –शानमिन्द्रेति प्रतिहरति इति श्रुतिस्तत्र यथाधीतानिति वचनात् प्रथमायां स्तोत्रियायां चतुरक्षर एव प्रतिहारः कल्प्यः ।

किं पुनरिदं विस्मृत्योच्यते, अथातः प्रतिहाराणाम् इत्यधिकृत्य प्रतिहारलक्षणं पूर्वमेव विहितम् । इदमिदानीं पुनरुक्तमनर्थकमिव प्रतिभाति । अत्र ब्रूमः—अथातः प्रतिहाराणाम् इत्यधिकृत्य भगवता आचार्येण जैमिनिना प्रतिहारलक्षणं सामान्यरूपेण प्रतिपादितम् । न व्यक्ततरं प्रतिसाम्योक्तम् । इदानीं पुनस्तावता ग्रन्थेन अधुनातनानां नराणामल्पमेधसां सर्वसामप्रतिहारावगतिरशक्येति मत्वा भगवान् आभिश्रेण्यानामाचार्यः प्रयोजनमात्रानुजिघृक्षया स्तोत्रार्थानामेव साम्नां व्यक्ततरं प्रतिहारानाचिख्यासुरेवमारब्धवान् । तत्रोक्तं चाखिलं प्रतिहारलक्षणमत्रोच्यते । तस्मादाचार्यभेदात् पुनरुक्तदोषो न भवति ।

**प्रति ··र्वत्र** । प्रतिहारस्य स्थानं प्रतिहारस्थानं, पदानामादिः पदादिः, प्रतिहारस्थानं पदादिरिति विज्ञेयम् । सर्वस्मिन् विषये आन्धीगवस्य द्वे इति वक्ष्यति । पदादौ द्व्यक्षरः प्रतिहारः स्यात् । सर्वत्रेति किमर्थम्, एकस्मिन् साम्नि अनेकेषु प्रतिहारेषु सत्सु पदानामादिष्वेव सर्वं प्रतिहारो भवेदित्यर्थम् । श्येनस्य पदे पदे प्रतिहारा विहिताः, तत्र पदादिष्वेव ते यथा स्युरितीदं च तस्य प्रयोजनं सर्वत्र ग्रहणे ।

---

१ को. समस्यासमस्यायिना ?

ननु तदर्थं तत्रैव यत्नः करिष्यते, 'सर्वे प्रस्तावसदृशा' इति। तस्य वाक्यस्य प्रयोजनमन्यद् विद्यते। किं तत्, तत्रैव वक्ष्यामः। तथापि नार्थः, ये केचित् प्रतिहारा विहिताः पदानामादौ वा मध्ये वा अन्ते वा नियमेन प्रसक्ता अनया परिभाषया एवमेव हि नियमेन विधीयन्ते तस्मान्नार्थः। एवं चेत्, शक्वरीषु प्रयोजयति, तासामूधस्सु द्वाभ्या द्वाभ्यां त्रींस्त्रीन् प्रतिहारान् प्रतिहरेदिति वक्ष्यति तत्र ऊधो नाम एकंपदम्। एकस्मिन् पदे त्रयः प्रतिहारा विहितास्तस्यादौ त्रयाणां प्रयोगस्यासम्भवात् द्वौ मध्ये प्रसक्तौ। सकृद्विहितो हि विधिः गुणमुख्ययोः युगपदयत्नेन भवितुं नार्हति। तस्माद् गुणभूतयोरभ्यासयोः आद्यौ द्वौ प्रतिहारौ स्यातामिति। एतदर्थम यत्नयं कृतः।

सर्वत्रेति किमेवमेव पद त्रिरभ्यस्तमेकमेव भवति, कः संशयः। अन्यथा तु शक्वरीत्वं विहन्येत। यत्नमन्तरेण त्रित्वसिद्धिरशक्या। आचार्योऽपीमं न्यायं दृढीकरोति। यथा ब्राह्मणो न हन्तव्यः इत्युक्ते सर्वे-ब्राह्मणा न हन्तव्याः स्युः। एवमत्राप्यूधस्सु द्वाभ्यामितीयत्युक्ते सर्वमूधस्सु द्व्यक्षरः प्रतिहारः सिध्यति। एवं सिद्धे यदयं त्रींस्त्रीनिति वक्ष्यति तदाज्ञापयत्याचार्यः।

नहि गुणभूतयोर्यत्नमन्तरेण मुख्यो विधिः प्रवर्तत इति। तस्मात् तयोरप्यादिः प्रापणार्थं सर्वत्र ग्रहणं कृतम्। अथ चैताभिः समानप्रतिहारो नित्यवत् सातीषङ्गावित्यत्रापि सार्थक शक्वरीणां चतुर्थं पद-मूधो नाम तत्त्रिरावृत्तम्। तत्र त्रयः प्रतिहारा विहिताः। अतिषङ्गस्य चतुर्थं पदं सकृदेवोक्तम्। तत्र शक्वर्य-तिदेशेन त्रयः प्रतिहाराः प्राप्ताः। तत्र संशय उत्पद्यते। किं तत्, साम्याकांक्षया तदेव पदं त्रिरभ्यस्यते आहोष्वित् सकृदुक्त एव तस्तिन् पदे यथासम्भव त्रयः प्रतिहारा; कल्प्या[1]:, उत पदस्यैकत्वादनभ्यस्तपठित-त्वाच्चोभावुत्सीदतः, क एवाश्रयणीयः पक्षः। अत्र ब्रूमः—प्रतिहारत्रित्वविधायिना वाक्येन पदाभ्यास-क्लृप्तिरयुक्ता। अश्रुतपरिकल्पनादिदोषा भवन्ति। अथ कथमेकेन वाक्येन विहितानां त्रयाणां प्रतिहाराणा-मेकं गृहीत्वान्यावुत्सादयेत्। श्रुतहानमपि दोषवदेव। पारिशेष्यादेकस्मिन् पदे त्रयः प्रतिहारा इत्ययं पक्षः स्थितः। तत्र यत्र क्वचित् प्रतिहारक्लृप्तौ प्रसक्तायां पदादिष्वेव सर्वे प्रतिहारा भवेयुरित्येतदर्थमयं यत्नः क्रियते, सर्वत्रेति।

अविहितस्थानाः प्रतिहाराः पदादिष्वेव भवेयुरिति त्रयाणां प्रयोगस्यैकत्रासंभवात्, तदादिष्वेवाव-श्यंभावित्वाच्च तदासन्नयोरेव तृतीयपञ्चमयोः पदयोः द्वौ कल्प्यौ[2]। किमत्रापि अश्रुतकल्पना विद्यत एव। कथं चतुर्थे पदे विहितयोः प्रतिहारयोः तृतीयपञ्चमयोः क्लृप्तिरश्रुता, नेयमश्रुतकल्पना। त्रयः प्रतिहारा विहिताः। त्रयाणां पदादिस्थानताविधानसामर्थ्यादेव तदासन्नयोर्भवतः।

नन्वत्रापि स्थानान्तरक्लृप्तिरश्रुतास्त्येव। सत्यमेतत्। अनभ्यस्तपठितस्याभ्यासक्लृप्तिराम्नाय-विरोधित्वाद्दूरीयसी। स्थानान्तरक्लृप्तिराम्नायानुरोधित्वाल्लघीयसी। तस्मादाम्नायानुरोधेन कल्प्या[3]। अध्ययनवशेनैव कल्प्यमिति पूर्वमाचार्येणैव कथितम् 'यथाधीतानि', तस्मादयं प्रतिहारः साधूक्तः। उक्तदेशे पदानामनादेशे निर्दिष्टेषु पदेषूत्तम एव पदे प्रतिहारं विदध्यात्। पूर्वस्यापि विधेरनादेशविषयप्रापणार्थं पूर्वविधिशेषताशङ्कानिवृत्त्यर्थमुक्तार्थो न सिध्यति। किं त्वनादेश इत्यध्याहार्यं भवति। न्यायलभ्ये ऽर्थे ऽध्या-हारेण प्रयोजनमस्ति।

---

१ को. कलयाः  २ को. कलयौ  ३ को. कल्प्यः

उत्तमे पद इति सामान्यविधिबर्हुविषयः । 'द्यौयानस्य तृतीये पदे' इति विशेषविधिरल्पविषयः । सामान्यविधिं विशेषविधिर्बाधते । यथा दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्याय इत्युक्ते दधि कौण्डिन्याय न प्राप्नोति । तद्वदत्रापि । अत्र ब्रूमः—अनादेश इत्यनुच्यमाने उत्तमे पदे इत्येतावदेव वाक्यं भवति, उत्तमे पदे प्रतिहारो वेदितव्य इति वाक्यार्थ एव स्यात् । किम् अविशेषेण स्यात् नेत्याह । यत्र विशेषो विद्यते ततोऽन्यत्र । एवं चेदेतद् वक्तव्यम्—'वक्तव्यं चेदुक्तमनादेश' इति । कथं चिदध्याहारेण साध्यत इति चेत्, अध्याहार्यस्य शब्दस्य वचने ऽपि स्पष्टे विज्ञेयत्वाद् गुणायैव भवति न दोषाय । आचार्या ह्युभयथा कल्पयन्ति । यथा 'त्रयाणि विभाग्यानि भवन्तीति' त्रयाणि विभाग्यानीति परिभाषासिद्धस्य वचने दोषो भवति । न लोकसिद्धस्येमं न्यायं ज्ञानतो ऽपि प्रसङ्गादपवादो बलीयानित्युक्तवतो भगवत आश्वलायनस्य को दण्डः, तस्माद् अवश्यवक्तव्यमेवोक्तम् ।

अथ क्वात्र नियमः कर्तव्यः, उत्तम एव पदेऽनादेशविषये इति, उत अनादेशविषय एवोत्तम इति । किमनया विचारणया प्रयोजनमुच्यते । यद्यनादेशविषय एवोत्तमे इति गृह्येत, आदशविषय उत्तमे पदे प्रतिहारो न प्राप्नोति । 'तेषां पदे पदे प्रतिहारा' इति वक्ष्यति । तत्रोत्तमे प्रतिहारो न प्राप्नोति । अथ यदुत्तम एवानादश इति तत्र सर्वमिष्टं सिध्यति । कः पक्ष आश्रयणीयः, येनेष्टं सिध्यति स आश्रयणीयः । व्याख्यानतो विशेषप्रतिपत्तिः न्यायः । यः यथेष्टं सिध्यति तथा व्याख्येयः ।

**द्वि···पदयोः** । द्वौ प्रतिहारौ यस्य साम्नस्तद् द्विप्रतिहारं साम । तेषां द्विप्रतिहाराणां द्वौ द्वौ प्रतिहारावुत्तमयोरेव पदयोः स्याताम् । यथा त्रीणिधनस्य त्वाष्ट्रीसाम्नो द्वौ प्रतिहाराविति वक्ष्यति । तत्रोत्तमयोरेव पदयोः स्याताम् ।

**पदा···पदे** । पदस्यान्तः पदान्तः । उत्तमस्य समीपमुपोत्तमम् । स्थानस्य निर्देशो यदि पदान्तः स्यात्, तत्र उपोत्तमे पदे स पदान्त इति विद्यात् । 'त्रैशोकस्य द्वाभ्यां पदान्तः' इति वक्ष्यति । तत्रोपोत्तमे पदेऽन्त्यमक्षरद्वयं प्रतिहारं विद्यात् ।

**संख्या···रेषु** । संख्याया वचनमृचोऽक्षराणि ऋगक्षराणि, संख्यावचनमृचामेव वाक्षरेषु विद्यात् । न सामगतेषु पञ्चरथन्तरस्य इति वक्ष्यति । तत्र ऋग्गतान्येव पञ्च स्युः । न सामगतानि । यानि ऋचि पञ्चाक्षराणि तानि साम्नि परोक्षीकृतत्वात् षड् भवन्ति । तस्माद् ऋचामेवेत्यवधारणार्थं तु शब्दः प्रयुक्तः। अथवा । यथा छन्दः प्रमाणपूरणनिमित्तमृगक्षराणि संख्यायन्ते तथैवात्र संख्यावचनं ग्राह्यमित्येतदर्थं तु शब्दः प्रयुक्तः । एवं व्याख्यायमाने षष्ठे द्विगौरिवितस्य प्रथमायां स्तोत्रियायां प्रतिहारस्य चतुरक्षरत्वं सिध्यति । ऋक्पाठतो द्वे एव विहिते ऽक्षरे ।

**गाय···रिति** । गायत्र्यादीनां चतुर्णां छन्दसां सम्बन्धीनि[1] सामानि यानि तेषूत्पन्नानि, तेषां ये प्रतिहाराः अस्मिंस्तन्त्रे विहितास्तेभ्यो ऽन्यत्र तान् वर्जयित्वान्ये प्रतिहाराश्चतुरक्षरा ज्ञेयाः । अनुक्तप्रतिहाराणां साम्नां प्रतिहाराश्चतुरक्षराः स्युरित्यर्थः । स एव न्याय्य : प्रतिहारो भवति । न्याय्य इत्यनर्थकम् । नानर्थकम् । अनुक्तप्रतिहाराणां साम्नामत्र विहितत्वादुत्तमपदादित्वप्रापिकाः[2] परिभाषा न प्राप्नुवन्तीति कृत्वा तत्प्रापणार्थं न्याय्य इत्युक्तम् ।

---

१ को. संबंधानिः २ को. प्रापकाः

नन्वनुक्तसामप्रतिहारविधायकवाक्यमेतत् । किमतः, परिभाषाभिरेव सिद्धत्वात् न्याय्यवचनमनर्थकमेव[1] स्यात् । एवं चेत्, संज्ञात्वेन कल्पयिष्यामः । उत्तमपदादौ चतुरक्षरः प्रतिहारः न्याय्यो नामेति। संज्ञया किं प्रयोजनम्, उत्तमयोस्तूत्तमे पदे न्याय्यवदित्यत्र प्रयोजयति। अत्रापि नार्थः। उत्तमपदवत्वादिति[2] तत्र वक्तव्यम्, अक्षरासाम्यात्तथा लघु भवति । एवं चेत्, तस्यां तु पूर्वो न्याय्यवदित्यत्र प्रयोजयति । संज्ञायामनुच्यमानायामुत्तमस्य पदस्याद्यै रित्यवश्यं वक्तव्यम् । तथोच्यमानं त्रिभिरक्षरैर्गौरवमस्ति । न्याय्यस्यान्याय्यवदिति पञ्चाक्षराणि उत्तमस्य पदस्याद्यै रित्यष्टाक्षराणि । तस्मादुक्तवदेव साधु । यथा लघु भवति तथा हि वक्तव्यम् ।

गायत्राणामामहीयवमुदाहरणम् । तस्य चतुरक्षरः प्रतिहार इति प्रत्येतव्यः । दैवानीकं, काकुभं, यद्वाहिष्ठीयम्, आनुष्टुभं, कालेयम्, बार्हतम् । एवं सर्वत्र कल्प्यम् । **उद्गा···मिति** । उक्तलक्षणात् प्रतिहाराद् यदि पूर्वो स्तोभो विद्यते तमुद्गातैव ब्रूयात् । एतानि सामानि वर्जयित्वा । **स्तोभमिति** । उक्तलक्षणात् प्रतिहारादुत्तरस्तोभो विद्यते यदि, तं प्रतिहर्तैव ब्रूयात् आच्छन्नाक्षरात् । यथादित्यसामादीनामाच्छन्नादिति । किमर्थम् । छन्नमप्यक्षरं स्तोभमितिकृत्वा, प्राप्नुवतः प्रतिहारान्तर्भावस्य निवृत्त्यर्थम् । प्रागोकारादित्यर्थः । ओकारो ऽपि हि स्तोभ एव । अत्र एवकारोऽवधारणार्थः । आच्छन्नादित्यत्र योज्यः । आच्छन्नादेवेति । यत्रोपद्रवादौ छन्नं दृश्यते तत्रैवोत्तरं स्तोभं प्रतिहर्ता ब्रूयात् । नान्यत्रेति । किमनया प्रयोजनम्, ऋषभे पवमाने प्रतिहारादुत्तरस्तोभ उद्गात्रैव वाच्यः स्यात् । छन्नरहितत्वात् ।

**प्रथा··नीति** । कानिचित् सामानि विभाग्यानि नाम सन्ति । कानि तानि चेत्, पर्वशो[3] यानि विभजन्ते तानि । पर्वश ऋचं विभजन्ते । यानि विभाग्यानि तानि त्रयानि त्रिविधानि भवन्ति । कानिचित् स्तोभविभाग्यानि, कानिचित् सस्तोभविभाग्यानि, कानिचिदस्तोभविभाग्यानि । यत्र स्तोभैरेव विभागास्तानि स्तोभविभाग्यानि । यत्र स्तोभैः सह पदानि विभज्यन्ते तानि सस्तोभविभाग्यानि । यत्र स्तोभा न विद्यन्ते केवलं पदान्येव विभज्यन्ते तान्यस्तोभविभाग्यानि ।

**तेषां···स्थानम्**—विभाग्यानां त्रयाणां, चतुष्पदां च पदानां, चतुष्पादे पञ्चपादे च छन्दस्युत्पन्नानामुपोत्तमम् उत्तमात्पूर्वं पदं प्रतिहारस्य स्थानं भवति । साप्तषष्ठे साप्तपदानां, चतुर्थषष्ठे प्रतिहारस्य स्थाने भवतः । द्वौ प्रतिहारौ स्यातामित्यर्थः । **त्रैप···त्तमम्** । त्रैपदानामुत्तमं पदं प्रतिहारस्थानम् ।

**तेषां···श्रेण्यः**—तेषां त्रैपदानां स्तोभेनैवोपद्रवेत् इत्याभिश्रेण्य आचार्यो वदति स्म । स्तोभविभाग्यानामुत्तरत्र विधास्यमानत्वात्, अस्तोभविभाग्यानामस्तोभत्वात् सस्तोभविभाग्यानामेवायं विधिर्ग्राह्यः । पदार्थसहितेन स्तोभेनोपद्रवेत् इति शाण्डिल्य आह । उत्तमस्य स्तोभस्य पूर्वार्धेन सस्तोभेन प्रतिहारः । उत्तरार्धेन सस्तोभेव उपद्रव इत्यर्थः ।

**सर्व···ग्यानाम्** । त्रैपदाधिकारनिवृत्त्यर्थं सर्वग्रहणम् । सर्वच्छन्दस्सु स्तोभैरेव कार्याः प्रस्तावादयः स्तोभविभाग्यानाम् । पदा-नानि । स्तोभविभाग्यानां पदानि सर्वाणि निधनानि भवन्ति । यानि सामानि तेषु पदाय पदाय स्तोभेत् । यथा वासिष्ठयामं सङ्क्रोश इति । एवमादीनामुत्तरयोः स्तोत्रिययोः ।

[इति पर्यध्याये ऽप्रगीतसामप्रतिहारविधिः]

पञ्चदशः खण्डः

---

[1] को. न्यायव०   [2] को. उत्तमपदेवत्वारि०   [3] को० पच्छो ?

औश···षष्ठे । औशानादीनां सप्तानां साम्नामुत्तमस्य पदस्य पञ्चमषष्टेऽक्षरे प्रतिहारः स्यात् । अभ्या···एवा । परिस्वानः (जै. सं. १, ४६. ६) इत्यस्यां तृतीयं साम अभ्यासवदैवत, तस्य त्रीण्यक्षराणि पूर्वमध्योत्तरस्तोभसहितानि प्रतिहारः स्यात् । एवकारेणावसितत्वादेकाक्षरपक्षे[1] सस्तोभमिति न गृह्येत । एवं चेदुत्तरोऽपि स्तोभो वा' इति न गृह्येत । नैवम्, स्तोभमुत्तरं प्रतिहर्तेवाच्छन्नात् इत्यनेन वचनेन प्राप्तः उत्तरस्तोभः न स्तोभवचनेन । अनन्तर एव हि विधिः एवकारेणावधार्यते । तस्मादेकाक्षरपक्षेषु वा इति प्रतिहारः ।

ऋष···त्वारि । पञ्चानां चतुरक्षरः प्रतिहारः । प्रथ-भ्यासः । उत्त···सादि । उत्तरयोर्घृतश्चुन्निधन-मधुच्छन्दसयोरभ्यासादिश्चतुरक्षरः प्रतिहारः । स[2]···नव[2] । स्तोभयक्षस्य सकृत् प्रतिहरेत् इति वचनात् उत्तमायामेव स्तोत्रियायामुत्तमपदादौ यानि चत्वार्यक्षराणि पुरस्तात्स्तोभसहितानि तानि स नवः प्रतिहारः स्यात् । एतन्नवत्वं पुरस्तात्तोभत्वं च विधित्सुराचार्यो न्याय्यमपि[3] सन्तं प्रतिहारमनुवदति । सौश्र··· स्तोभम् । सौश्रवसे ह्युत्तमान्यक्षराणि चत्वारि प्राक्स्तोभात् प्रतिहारः । दार्ढ्य···राणि । दार्ढ्यच्युतादीनां चतुर्णां द्वौ द्वौ प्रतिहारौ स्तः । द्वे द्वे तस्य दार्ढ्यच्युते । एकैकस्य प्रतिहारस्य द्वे द्वे अक्षरे स्याताम् । इत···त्वारि । इतरेषां त्रयाणामेकैकस्य प्रतिहारस्य चत्वारि चत्वार्यक्षराणि स्युः । पुर··णस्य । पुरस्ताद् यस्य स्तोभः सोऽयं पुरस्तात्स्तोभः प्रतिहारः । आथर्वणस्य यौ प्रतिहारौ तौ पुरस्तात्स्तोभसहितौ स्याताम् ।

ननूत्तरो ऽपि स्तोभः प्रतिहारः । स्तोभमुत्तरं प्रतिहर्तैवाच्छन्नात् इति वचनात् । नैवम्, यद्येवमभिप्रैष्यत् सस्तोभादित्येवावक्ष्यत् । सस्तोभादिति सिद्धे महान् यत्नोऽवधारणार्थः, पुरस्तादेव स्तोभेनेति । अथवा । आच्छन्नादेवेति पूर्वमेवावधारितं, यत्र स्तोभानन्तरं छन्नमिति कल्प्यमेव । किमत्र भवतो बलमेव समर्थयति, नहि बलमीदृश मयि विद्यते । आचार्यकृतमेव बलमवलम्बामहे । किं तत् आचार्यकृतमनूद्यते, उद्गाता पूर्वं स्तोभम् इति स्तोभमधिकारे वर्तमाने स्तोभमुत्तरमिति पुनः स्तोभवचनस्यैतत् प्रयोजनम् स्तोभ इव स्तोभो, न निधनशब्दितः सस्तोभः प्रतिहारभाक् । ततस्तस्मात् स्तोभाद्यदि छन्नमनन्तरमस्ति तं प्रतिहर्ता ब्रूयान्न निधनकृदिति सिद्धम् ।

आस्व···पञ्च । इह···ष षट् । तेषां षण्णां षडक्षराः प्रतिहाराः स्युः । उभयतः स्तोभो यस्य सोऽय-मुभयतःस्तोभः । उत्तरयोर्मैधातिथवैणवयोः प्रतिहारौ उभयतःस्तोभौ स्याताम् ।

ननूत्तमयोरिति वक्तव्यम्, नैष दोषः । चत्वारि पूर्वाणि द्वे उत्तरे इति द्विधैव विभागः कर्तव्यः । अभ्यस्यन्तो मेधातिथस्य यः प्रतिहारः उभयतःस्तोभ उक्तः स होयिकारान्त एव स्यात् । सौमे···श्रेण्यः । सौमेधस्य प्रागभ्यासादुत्तमेन सर्वेण प्रतिहरेत्, इत्याभिश्रेण्य आचार्य आह स्म । अभ्या···ण्डिल्यः । अभ्या-सादिभिः चतुर्भिरक्षरैः प्रतिहरेदिति शाण्डिल्य आह स्म । तलवकारशाखाध्यायिभिः आभिश्रेण्य एवाश्रयणीयः ।

शाखाभेदवशादाहुर्व्यवस्थानं विकल्पयोः ।
अभ्यासस्यादितश्छन्नं सौमेधः पूर्वपक्षभाक् ॥

इति [ पर्यध्याये ] षोडशः खण्डः

---

१ को. ०णावसृत्वादे० २ को. यण्वः ? ३ को. न्याय० ४ को. दार्ढ्य०

# अथ सप्तदशः खण्डः

अथौ···हानाम् । उष्णिगुत्पन्नानां साम्नां प्रतिहारान् वक्ष्यामः । पोष्क···ति द्वे । पोष्कलादीनां चतुर्णां द्व्यक्षराः प्रतिहाराः स्युः । शौक्त...भान्तः । शौक्तस्य स्तोभान्त एव स्यात् । किमर्थमिदमुच्यते, अवचनेऽप्युत्तरस्तोभः प्रतिहार एव । सत्यमेतत् । यत्नमन्तरेणापि स्तोभान्त एव प्रतिहारः । छन्नादिरुपद्रवः । तयोर्मध्ये षडक्षरं मध्येनिधनमित्येतत् प्रतिपादनार्थं स्तोभान्त इत्युक्तम् ।

वैश्व···शमे । वैश्वमनसस्य नवमदशमे अक्षरे प्रतिहारः । त्रैक···ष्टमे । त्रैककुभस्याभ्यासान्त्ये ये सप्तमाष्टमे ते प्रतिहारः । सप्तमाष्टमग्रहणमन्तरेणापि अयमर्थः सिध्यति । सप्तमाष्टमे एव हि ते, अभ्यासान्त्ये ये अक्षरे । तस्मादन्यथा व्याख्यास्यामः । अभ्यासान्त्ये वा सप्तमाष्टमे वेति कल्प्यम् । एताभ्यामेव वाक्याभ्यामिष्टार्थोऽभिहितः । द्वितीये पुनर्वाक्ये वैश्वमनसत्रैककुभग्रहणमनर्थकम् । नानर्थकम् । पादादावपि विकल्पेन प्रतिहारस्य प्रापणार्थत्वात् । तेन वाक्येन पादादौ प्रतिहारो विहितः । अनेन नवमदशमेऽभ्यासान्त्ये च सप्तमाष्टमे च । तस्माद् वैश्वमनसस्य पादाद्ये च नवमदशमे च कल्प्येते । त्रैककुभस्य पदाद्ये च सप्तमाष्टमे च विकल्प्येते । शाखान्तरेषु च छन्नवशाद् विकल्पव्यवस्था कल्प्या ।

हारि···त्वारि । हारिवर्णादीनां नवानां चतुरक्षराः प्रतिहाराः स्युः । प्रथमे पटले गायत्री त्रिककुबनुष्टुब्बृहतीनाम् इत्यस्मिन् वाक्ये उष्णिग्ग्रहणे कृतेऽस्मिन् [ वाक्ये ] हारिवर्णादिसामचतुष्टयग्रहणं कर्तुं शक्यम् । सत्यमेतत् । यदि लघुक्लृप्तिर्भवेत्ततोऽभिप्रेता । तत्र गायत्र्यादिसर्वच्छन्दोग्रहणाकरणेऽप्युक्तोऽर्थः सिध्यति । अन्यामपि लघुक्लृप्तिं शृणु । गायत्रीककुबित्येतद् वाक्यं समस्तमभेद्यम् । अनादेशे चत्वारीत्येतावत्येव वाक्ये सति सर्वमिष्टं सिध्यति । सर्वाण्यपि चत्वारि ग्रहणानि अकर्तव्यानि भवन्ति । किमनया लघुक्लृप्तिविचारणया, ह्याचार्येणातीव ग्रन्थसंहारं करोमीति प्रतिज्ञातम् । शास्त्राणि प्रणयन्तो ह्याचार्या क्वचित् संहरन्ति, क्वचित् किञ्चिद् विवृण्वन्ति । यथा धीश्री स्त्रीम् (पिंगल १. १) इत्यनेनोक्तं मकारमानं संज्ञामकरोत् पिङ्गलः । पाणिनिस्तु 'वृद्धिरादैच्' (पा. १. १. १) इति च । शि सर्वनामस्थानम् (पा० १. १. ४२ इति च महतीं संज्ञामकरोत् । तस्माद् विस्तरसंहारकरणविचारणा न कार्या । आश्वलायनः षड्भिः पटलैः समस्तं यज्ञतन्त्रमवोचत् । तदेव चतुर्विंशत्या शाम्बव्यः । तेन तेन दण्डेन[1] तस्मादचोद्यमेतत् ।

कौत्स···भ्यासात् । कौत्सस्योत्तमानि चत्वार्यक्षराणि प्रागभ्यासात् प्रतिहारः । उत्तमानि । क्रोशादीनां चतुर्णामुत्तमे पदे मध्यमानि चत्वार्यक्षराणि प्रतिहारः । त्रैज···त्यष्टौ । श्रुधी (जै. सं. १. ३६. ५) इयं गायत्रीषु गीयते तदा चतुरक्षरः प्रतिहारः स्यात् । दा···नुष्टुप्सु । यदानुष्टुप्सु गीयते तदा द्वादशाक्षरः । कार्ण···त्रीणि । कार्णश्रवस्य षष्ठादीन् ? द्वि वा त्रीण्यक्षराणि, अष्टौ वा प्रतिहाराः । अथ भानाम् । प्रम···तिद्वे । प्र मंहिष्ठाय । (जै. सं. १. १२. १) आदीनां चतुर्णां द्व्यक्षरः प्रतिहारः । सन्त···हार । सन्तनिस्तु, त्रयः

---

१ को. दण्डिना

प्रतिहाराः स्युः । ते किं···रूपाः । ते किंप्रमाणाः । इति चेत् तदाह—प्रस्तावसदृशाः या विधाः प्रस्तावतुल्यरूपाः सन्तः विद्यन्ते ते प्रतिहाराः कल्प्याः । तस्य तृचोत्पन्नत्वात् तिसृणामृचामुत्तमेषु पदादौ द्व्यक्षरास्त्रयः प्रतिहाराः स्युः । सौभरस्य षट् । विद्रस्तोमं मध्यमं पदं द्विधा विभक्तम् । तयोरुत्तमस्य पदस्यासन्नो विभागः पुरस्तात्स्तोभयुक्तः प्रतिहारः स्यात् । कथं पुनः सस्तोभमित्युक्ते पुरस्तात्स्तोभयुक्तमिति गृह्यते । अत्र ब्रूमः—यद्युत्तमस्तोभोऽभिप्रेतोऽभविष्यत्, यत्नमन्तरेण वाभविष्यत्. यद्युभयतःस्तोभोऽभिप्रेतः, उभयतःस्तोभमित्यवक्ष्यत् । पारिशेष्यात् पुरस्तात्स्तोभ एव परिगृहीतः । एवं चेत्, पुरस्तात्स्तोभमिति वक्तव्यम् । नैवम्, उत्तरत्रापि स्तोभ एकाक्षरमात्रो विद्यते प्रतिहारभाक् । इत्थं योज्यम्—सस्तोभविभाग्यधर्मणोपोत्तमं प्रतिहारमापादयिष्यामः इति, तत्रेष्टं सिध्यति । गानीकरणमप्युक्तमेवानुसरति ।

अथा··भानाम् । आन्धी-स्य-द्वे । श्यावा···दान्तः । श्यावाश्वस्य चान्धीगवस्य च द्व्यक्षरः प्रतिहारः, कस्यचित् कश्चिद् विशेषोऽस्ति च[1] । श्यावाश्वस्य यः प्रतिहारो द्व्यक्षरः स पदान्तो वेदितव्यः । उपोत्तमपदान्ते द्व्यक्षर इत्यर्थः । स्तोभो···नो । स्तोभरहित इत्यर्थः । विशोषष्ठे । विशोविशीयस्य[2] पञ्चमषष्ठे अक्षरे प्रतिहारः सहिंकारः स्यात् । त्रीणि-हारौ । चतु···ण्डिल्यः । चतुर्भिश्चतुर्भिरक्षरैः प्रतिहरेदिति शाण्डिल्य आचार्य आह । द्वाभ्यां···श्रेण्यः । द्वाभ्या द्वाभ्यां वाक्षराभ्यामित्याभिश्रेण्य आह ।

मदा···त्वरि । मदान्तं निधनस्य च त्वाष्ट्रिसाम्न उद्वंशीयस्येति त्रयाणां चतुरक्षराः प्रतिहाराः स्युः । प्रथ--सादि । तेषां त्रयाणां प्रथमोत्तमयोरभ्यासादिश्चतुरक्षरः । मध्यदान्तः । मध्यमस्यैष्टस्य त्वाष्ट्रिसाम्नः पदान्तरश्चतुरक्षरः । वैतस्य षट् । कार्त···पदम् । अथ—तानाम् । नौवेति—द्वे-श्यावा···यणे । श्यावाश्वेनोक्तप्रतिहारे समानप्रतिहारे यज्ञायज्ञीयहारायणे स्याताम् । श्यावाश्वस्य पदान्ते द्व्यक्षरः । एतयोरपि तथैवेत्यर्थः । नाम···राणि । आदि-त्वारि । आदितः पञ्चानां नार्मेधप्रभृतिनिषेधान्तानामेकैकस्य प्रतिहारस्य चत्वारि चत्वार्यक्षराणि स्युः । उत्त—द्वे द्वे । उत्तरेषामिन्द्रस्येन्द्रियप्रभृतीनां चतुर्णां द्व्यक्षरात् प्रतिहारः । नार्मे···हारः । नार्मेधस्य द्वौ प्रतिहारावुक्तौ, तयोः पूर्वः पदान्तः स्यात् । उत्त—तरः । उत्तमस्य मध्यमैरक्षरैरुत्तरः प्रतिहारः स्यात् । तया—याया । तस्य नार्मेधस्योक्थगतस्यापि तथैव प्रतिहारौ कल्प्यौ । किमेतद् वक्तव्यम्, न वक्तव्यम् । मध्यमाया विशेषविधित्सया तत्सम्बन्धार्थमिदं सिद्धमपि पुनरनुवादरूपेणोच्यते ।

तस्यां...य्यवत् । तस्यां मध्यमायां पूर्वं प्रतिहारो न्याय्यवत् भवति । उत्तमपदादौ चतुर्भिरक्षरैरित्यर्थः । किमिदं विधातव्यम्, पूर्वमेव कथितम्, एकस्मिश्छन्दसि विहितः[3] प्रतिहारोऽन्यच्छन्दोगतेऽपि साम्नि तत्सदृश एव कल्प्य इति । अत्र ब्रूमः—प्रतिहाराणामुत्तमयोः पदयोरिति वचनादस्य पूर्वप्रतिहारस्योपोत्तमे प्राप्तस्योत्तमपदप्रापणार्थोऽयं विधिः । सादृश्यप्रापणं हि सामान्यविधिमुत्तमयोरिति विशेषविधिरल्पविषयत्वाद् बाधते । एवं चेद्, विराट्सु वामदेव्यस्याष्टमनवमे एव प्रतिहारो न पञ्चमषष्ठे । तत्र पदस्याष्टाक्षरत्वात् तयोः पञ्चमषष्ठत्वं यदृच्छागतम्, तथैव गौरीवितस्य न्याय्यप्रतिहारस्य सतस्त्रिष्टुप्सु गीतस्यान्त्यानि चत्वार्यक्षराण्युपद्रवः । ततः पूर्वाणि प्रतिहारः । न पदादिरपेक्षितः ।

ननु नार्मेधस्यापि तथैव कल्पयितुं शक्यः, अन्ते द्व्यक्षर उपद्रवः, ततः पूर्वश्चतुरक्षरः उत्तरप्रतिहारः, ततः पूर्वो द्व्यक्षर उद्गीथः, ततः पूर्वश्चतुरक्षरः प्रतिहार इति । नैवं युक्तम् । प्रतिहारयोर्मध्य

१ को. च दान्तः ?　　२ को. विशोविगीययस्य ?　　३ को. निहितम्

उद्गीथत्वात् क्षयवृद्धीर्लभत एव । यथाष्टा[क्षर] स्य योनौ द्वितीयात् प्रतिहारादुद्गीथोऽप्यष्टाक्षरो दृष्टः । स एवानुष्टुप्सु चतुरक्षरः संवृत्तः । प्रथमस्य चक्षुषः स एव योनौ चतुरक्षरो बृहत्यामष्टाक्षरः संवृत्तः । तस्मादिदं पदाद्यमेव । अपरं मतम्—सामवेदस्य बह्वचः शाखाः । तासां कासुचिद् ऊहाम्नायः समग्रो विद्यते, कासुचित् ज्योतिष्टोमद्वादशाहगवामयनानामेव, कासुचिदूह एव न विद्यते । सर्वं लक्षणवशादूह्यमाने कल्प्यम्[१] । रूपवत्त्वात्[२] स्वरूपादर्शनासंभवाच्चावश्यमिदं वक्तव्यमेव ।

उत्त...मादि[३] । उत्तमस्य पदस्य सप्तमाक्षरादिश्चतुरक्षरः प्रतिहारः स्यात् । ऐष्टे—नयोः । ऐष्टेन त्वाष्ट्रीसाम्ना कथितः कौल्मलबर्हिषदेवस्थानयोः प्रतिहारः उपोत्तमपदान्ते चतुरक्षर इत्यर्थः । पुर...र्बस्य । उप...रस्य । देवस्थानस्योपरिष्टात् स्तोभसहितः । किमर्थमिदमुच्यते, स्तोभमुत्तरं प्रतिहर्तैव, आच्छन्नादित्यनेनैव सिद्धम् । अत्र ब्रूमः—आच्छन्नादप्राप्तिनिमित्तमिदमुच्यते । सर्वपदान्तसमानस्तोभमात्रान्त एव प्रतिहारः स्यादित्यर्थः । 'अथ पुनर्[४] देवस्थानादिदम्[५]' इत्येतत्त्रिरुक्तं, कः स्थान् मध्ये निधनं स्यात्, उत्तरत्र छन्दस्य विद्यमानत्वात् ।

पञ्च-रस्य । उत-षां । षट्-श्यत । कारान् । वरवा-पदम् । वैखानसादीनां चतुर्णामुत्तमं पदं समस्तं प्रतिहारः । प्राग-र्वयोः । अभ्या-रयोः । उत्त-रयोः । वरुणसामश्रायन्तीययोरुत्तमं च पदमभ्यासे च द्वे अक्षरे, सम्भूय प्रतिहारः स्यात् । अष्टौ...दादी । स्वारस्य च तौरश्रवसस्य वत्रस्य चाष्टावक्षराणि प्रतिहारः स्यात् । पदान्तश्च पदादिश्च पदान्तपदादी । पदान्तस्य पदादी सम्भूयाष्टाक्षरः प्रतिहारः । उत्तमोपोत्तमाद्यन्तश्चतुरक्षरः उपोत्तमपदाद्यन्तश्चतुरक्षरः तौ सम्भूयाष्टाक्षरः प्रतिहारः स्यात् । इह केषांचित् पाठः पदान्त्यपदादी' इति । तथापि च सति, अन्ते भवमन्त्यमिति भावार्थस्यानुपपत्तेरन्त्यस्य च तद्धितार्थस्यासम्भवादसावपि प्रमाद पाठ एव । प्रायेण छात्रवर्त्माप्रसिद्धेषु ग्रन्थेषु पाठभेदो भवति क्वचित् क्वचित् । अत्रार्थवशादेव निर्णयो, नान्यथा शक्यते कर्तुम् ।

वैरू...हरेत् । वैरूपस्य स्तोभा[५] पञ्चकृत्व आवर्तन्ते । तत्र तृतीयामावृत्तिं गतैः स्तोभैः प्रति, हरेत् । तस्य...मिति । तस्य वैरूपस्य पञ्चस्वपि बहुवाच्यानि विद्यन्ते । तानि[६] कानीति चेत् [६] देवता प्रथमः, ततः पदे, ततो दवता, ततः पदं, ततोऽध्यर्धेष्टमित्येतानीत्यर्थः । देवतेति स्तोभविशेषः परिगृहीतः । दिशंविशं, हसिति पदम् । पदमित्यृचस्तृतीयः पादः । ततोऽश्वाशिशुमतीत्यामनन्ति देवताम् । ततश्चतुर्थं पादम् । ततोऽध्येष्टमिति ।

ननु प्रतिहारविधिमेवारभ्य कथमयं निधनविधिरुच्यते, नायं निधनविधिः । निधनानां क्रमविधिरयम् । वैरूपप्रसङ्गाद् योनिविरुद्धत्वाच्च । आचार्येण हि प्रतिहारान् सर्वान् व्याख्यास्यामः इति प्रतिज्ञातम् । न किञ्चिदपि अन्यन्न वदामीति । किमर्थः क्रमविधि , आम्नायेनैव हि क्रमः सिद्धः, उत्तरस्तोत्रियार्थः । योनौ पदद्वयं देवताद्वयम् । अध्यर्धेष्टमिति क्रमः । उत्तरयोरश्रुतत्वात् क आश्रयणीयः पक्षः, आनन्तर्यं बलीयमिति केचित् । विशेषो यत्र दृश्यते तत्तत्रैव स्यादन्यत्प्रकृतिवदित्यपरे । तस्मात् संशयः, तन्निवृत्त्यर्थोऽयं क्रमविधिरनूढानामवश्यं कर्तव्य एव ।

इति [ पर्यध्याये ] सप्तदशः खण्डः

---

१ को. कल्प्यः  २ को. रूपत्वात्  ३ को. उत्तमादनी ?
४ को. पुनरेत्र स्थानादिदं ?  ५ को. स्तोमाः ?  ६ को. तामि तानीत्ति ?

# अथ अष्टादशः खण्डः

अथ···न्दसाम् ।नानाछन्दसाम् । बहूनां छन्दसामित्यर्थः । श्येनहाराः । सर्वेषु पदेषु प्रतिहारा इत्यर्थः । द्वे द्वे पूर्वयोः । श्येनपार्थुरश्मयोः, द्वाभ्यामक्षराभ्यामेकैकः प्रतिहारः स्यात् । चत्वा···चतुर्णाम् । अच्छिद्रादीनां चतुर्णां चतुरक्षरा प्रतिहाराः स्युः । उत्त···वष्टौ । उत्तमस्य दाशस्पत्यस्य अष्टाक्षराः प्रतिहाराः स्युः । अच्छि···सेषु । अच्छिद्ररयिष्ठयोस्तु ये प्रतिहारा विहितास्तेऽभ्यासेष्वेव वेदितव्याः । सर्वे···वर्जम् । श्येनादीनां सर्वे प्रतिहाराः प्रस्तावसदृशाः स्युः, दाशस्पत्यं वर्जयित्वा । एतद्वाक्यमन्तरेणापीष्टोऽर्थः सिद्धचति, न सिध्यति । कथं न सिध्यति, प्रथमेषु पदेषु प्रतिहाराभावः प्रस्तावसद्भावश्च[1] सदृशाश्च न सिध्यति, प्रस्तावसदृशा इत्युक्ते सादृश्यार्थमवश्यं प्रस्तावेन भवितव्यम् । आदावेव प्रथमं स्तवनं प्रस्तावः । तस्मात् साम्नः प्रारम्भे एव प्रस्तावेन भवितव्यम् । अथ सिद्धे प्रस्तावे तत्सादृश्यादसिद्धः[2] प्रतिहारः साधयितुं शक्यः । तस्मादस्य आदावेव प्रतिहारः स्यात् ।

ननु पदे पद इति विहितत्वात् अनादावपि प्रथमे पदे प्रतिहारेण भवितव्यम् । न भवितव्यम् । अन्यत्र सादृश्याभावात् । प्रथमस्य पदस्यादौ प्रस्तावः, उत्तरेषामादिषु प्रतिहारः एषोऽर्थोऽनेन वाक्येन निरूपितः । दाशस्पत्यस्य प्रतिहारः प्रस्तावेन तुल्यरूपः । तस्य द्व्यक्षरः प्रस्तावोष्टाक्षरः प्रतिहारः । तस्माद् विषमरूपता । द्यौता···त्वारि । द्यौतानस्य तृतीयपादादौ चतुरक्षरः प्रतिहारः । त्रैशो···दान्तः । उपोत्तमपदान्तः । काण्वं···पदं । कामयानो वना त्वम् । (जै. सं १. ५. ६) इत्यस्यामुत्तरं साम काण्वं वार्णीधनं, तस्य च ऋतुनिधनादीनां चाष्टानामुपोत्तमं पदमन्त्यात् पूर्वं प्रतिहारः[3] । काण्वं···स्तोभौ । उभयत्र स्तोभो यस्य सोऽयमुभयतःस्तोभः । काण्वस्य च ऋतुनिधनस्य प्रतिहारावुभयतः स्तोभौ स्याताम् । उभयत्रावच्छेदमात्रो विधिः ।

ओहोयिप्रभृतिः उहुवा हायीत्यन्तः प्रतिहारः काण्वस्य । ऋतुनिधनस्य तु हावुपर्यन्तः । अथवा । काण्वस्य निधनयोः प्रतिहारौ सस्तोभौ भवतः । द्वौ द्वौ स्तोभौ विद्येते इति वाक्यार्थः । स्तोभाविति द्विवचननिर्देशादसरूपाभ्यां स्तोभाभ्यामुभयतो भवितव्यम् । यथा पूर्वोत्तरौ स्तोभौ भिन्नरूपौ स्यातां तथा तावद् ग्राह्यम् । यदि हि द्वितीय तृतीययोः तृतीयचतुर्थयोर्मध्यगतौ स्तोभौ पूर्वोत्तरौ स्यातां तदा सरूपत्वादनिष्टप्रसङ्गः, तस्मात् पूर्वोक्तवदेवमर्थौ कल्प्यौ ।

उप···नस्य । वषट्कारिणिधनस्योपरिष्टात् स्तोभो विद्यते । किमर्थमिदमुच्यते, उत्तरो हि स्तोभः प्रतिहार एवाच्छन्नादुपोत्तमं पदं प्रतिहारभावाय विहितं तत् केवलं किं प्रतिहारः उत साभ्यासमिति संशयः उत्पद्यते । तन्निवृत्त्यर्थं स्तोभान्तता विहिता । उत्तम्य वत् । उत्तमयोर्विधित्साया द्यावापृथिव्योः साम्नोरुत्तमे पदे न्याय्यवत् प्रतिहारः स्यात् । उत्तमे तु पदे नादेश इति विहितत्वादुत्तमे पदे इत्यनर्थकम् । नानर्थकम् । पूर्वमेवानयोरुपोत्तमं विहितम् । अन्यत्र न्याय्यवदित्युक्ते उपोत्तम एव पदे प्रसज्येत । उत्तम

---

१ को. ०वसद्भावाश्च  २ को. ०दसिद्धं  ३ को. प्रतिहारम्

इतीष्टसिध्यर्थमुक्तम् । उत्तमे पदे इति, एतच्चेत्प्रयोजनं, नार्थः । पदवचनेनोत्तमयोरित्येतेनापि नार्थः, द्यावापृथिवीसामशब्दस्तस्माद् वाक्यादुद्धृत्यास्मिन् वाक्ये निधातव्यः, एवमुक्तोऽर्थः सिध्यति । इष्टं सिध्यति । किमिष्टम्, विकल्प इष्टः । कथं विकल्पः स्यात्, उपोत्तमं वा पदं प्रतिहारः उपोत्तमे वा चतुरक्षरः प्रतिहार इति । कथं द्वयं जानीम । पूर्ववाक्येनोपोत्तमं पदं विहितमनेनोत्तमे चतुरक्षरैर्बाध्यबाधक भावाद्विकल्प एवार्थः स्यात् ।

ननु विकल्पवाची वाशब्दः प्रयोक्तव्योऽत्र विकल्पवाची तु शब्दोऽस्ति एव । अनेकार्था हि निपाताः । आचार्यो हि यथेष्टशब्दैरिष्टमर्थं निरूपयति । तस्माच्छाखाभेदवशाद् विकल्पः । कथमत्र समुच्चयपक्षो नाश्रितः, उपोत्तमं पदमुत्तमे चतुरः प्रतिहार इति । तु शब्दः समुच्चयवाची च भवति । अत्र ब्रूमः—'तथोद्गीतात् प्रतिहारो भूयिष्ठभाग्[1] भवति' तदयुक्तम् । भूयिष्ठभागुद्गाता इति दर्शनात् । तस्माद् विकल्प एव श्रेयान् ।

**पाङ्क्तानाम्** । पाङ्क्तानां प्रतिहारान् वक्ष्यामः[2] । बार्हत्-त्रिषट् । सञ्ज-कारात् । सञ्जयस्य यः प्रतिहार उक्तः षडक्षरः स हिंकारात् प्रागेव स्यात् प्रागेव स्यात् । **संक्...हार** । संकृतिनश्चतुर्थात् पदात् पूर्वो यः स्तोभः स एव प्रतिहारः स्यात् । **तस्य...ग्यवत्** । संकृतिनः प्रथमात् पदादुत्तरस्य स्ताभस्य प्रस्तावभावार्थमुक्तम् । तस्मादस्य साम्नो द्वौ प्रस्तावौ स्याताम् द्वैपदानाम् । **धर्म**···हरेत् । औ हो वा इति स्तोभो द्वादशकृत्वोऽभ्यस्यते, तत्र दशमोऽभ्यासः प्रतिहार इत्यर्थः । **भद्रव**···**वेन** । गूर्दस्याभ्यासस्तावा-नित्यर्थः । **विण्णि**···**पञ्च** । उद्वनोक्त स्तेन तुल्य इत्यर्थः । अष्टौ वा षष्ठादीनि वा त्रीणीत्यर्थः ।

**अक्ष**···**ङ्क्तानाम्** । **स्वर**···**त्रीणि** । **वाङ्नि**··**पदम्** । **सर्व-म्यासः** । सर्वं निधनस्य सौहविषस्य । **वैरा—स्तोभः** । वैराजस्य सर्वाणि पदानि निरभ्यस्यन्ते, तत्रोत्तमे पदे योऽभ्यासो मध्यमः पुरस्तात्स्तोभसहितः स प्रतिहारः स्यात् । एकाक्षरात् पुरस्तादेव स्तोभो नोत्तर इत्यवधार्यते । नन्वादेश उतमं भवति, किमुत्तमपदग्रहणेन, पदान्तेष्वभ्यासाः सन्ति तदाशङ्कानिवृत्त्यर्थम् । तदाशङ्का पुरस्तात्स्तोभेन वचनेन निर्वर्तिता । तेन[3] पुरस्तात्स्तोभो न विद्यते, इदं प्रयाजनम् । उत्तमं पदं समस्तमभ्याससहितं प्रतिहार इति । अभ्यासमन्तरेणापि मध्यमोऽभ्यास इति शक्यं कल्पयितुम् । तस्मादन्त्याभ्यासपरिहारार्थम् 'उत्तमं पदं' वचनम् इति सिद्धम् ।

**महा**···**पदा** । महानाम्न्यो[4] नामैकं साम बहुवचननिर्देश्यम् । महानाम्नीनां यानि ऋक्पदानि तेषां प्रथमं पदं द्वितीयञ्च सम्भूय द्विपदा नाम छन्दो भवति । **त्रीणि**···**राणि** । तत उत्तराणि त्रीणि पदानि शाक्वराणि भवन्ति । शक्वरी नाम छन्दस्तस्य पदानीत्यर्थः । **तेभ्यः स्तोभः** । तेभ्यः शाक्वरेभ्यः परो यो धातुरवयवः सः स्तोभ एव न ऋक्पदम् । उत्तरविवक्षयेदमुच्यते । **स त्वेके**···**म्नातः** । सोऽपि धातुरेकेषां शाखान्तरा-णामृक्पाठे ऽपि पठितः । कासु चिच्छाखासु केवलं स्तोभ एव । कासुचिद् ऋक्पदमित्यर्थः । **वत्सः** । ततः परं पदं वत्सो नाम ऊधः । वत्सात्परमूधो नाम पदं तच्छक्वर्या पदम् । **पुरुष—क्षरः** । ऊधसः परं पञ्चाक्षरं पदं पुरुषो नाम । **त्रीणि**···**राणि** । पुरुषात्पराणि त्रीणि शाक्वराणि । **अभ्यासेति** । तेभ्यः परमभ्यासा नाम

---

१ को. भूयाद्धवति ?    २ को. वसामः ?    ३ को. तन्न
४ को. महानाम्नयो ?

इति। इत्थं महानाम्नीनां द्वादश पदान्यभिहितानि। तृतीयादीनि च त्रीण्यूधसश्च[1] पुरुषात्पराणि च सम्भूय सप्तपदा शाक्वरी भवति।

उत्त···भ्यासे। उत्तमायां स्तोत्रियायामभ्यासे द्व स्तः। पूर्वयोरेकैका। एता···सु च। एतासां तिसृणां या द्विपदा उक्तास्तासामादिषु प्रस्तावाः स्युः। शाक्वराणां प्रथमेषु च, अभ्यासेषु[2] च, पुरीषपदानामादिषु च प्रस्तावा विद्यन्ते, तथा द्वितीयायां तृतीयायां चत्वारः, पुरीषेषु च पञ्च। एवमस्मिन् पञ्चदश प्रस्तावा विद्यन्ते। पञ्च···दानि[3]। पुरीषपदानि नाम पञ्च भवन्ति। तेषामेकैकस्मिन् पञ्च पञ्चाक्षराणि स्तोभोद्गीथानि भवन्ति। तेषां···गेयानि। तेषां द्वादशाक्षरः प्रस्तावाः। अवसानमात्रः प्रस्ताव इति कथितम्। प्रस्तावेभ्य उपरिष्टात् त्रीणि त्रीण्यक्षराणि सहवाच्यानि उद्गातृभिः सहैव गेयानि। मध्येनिधनानीत्यर्थः। अथ[4] नः संशत्वाद्वरितव्यता[4] ?। तासां—हरेत्। स तासा महानाम्नीनामूधस्सु द्वाभ्यां द्वाभ्यामक्षराभ्यां त्रींस्त्रीन् प्रतिहारान् एकैकस्यां स्तोत्रियायामूधस्त्रिरभ्यस्यते। तेषां पदादिषु द्व्यक्षराः प्रतिहाराः षड्भिः···से पदे। शाक्वराणां सप्तानां पदानामुत्तमे पदे षड्भिरक्षरैश्चतुर्थः प्रतिहारः। बहुवचननिर्देशः स्तोत्रियापेक्ष इति। इत्थं महानाम्नीनां पदानां च प्रस्तावानां च प्रतिहाराणाञ्च लक्षणमुक्तम्। एता...षङ्गौ। एताभिर्महानाम्नीभिः समानप्रतिहारौ नित्यवत् सातीषङ्गौ स्याताम्।

किमत्र समानं चतुष्प्रतिहारकत्वम्, त्रयाणां द्व्यक्षरत्वमुत्तमस्य षडक्षरत्वम्। चतुर्थोत्तमपदस्थानता च तस्य साम्नः शाक्वरत्वात्। शाक्वराण्येव सप्त पदानि गण्यन्ते। अतीषङ्गस्य तु प्रथमतृतीययोः प्रतिहारयोः स्थानान्तरप्राप्तिरुक्ता प्रथमे पटले।

शुक्रि...वाभ्याम्। भ्राजाभ्राजविकर्णभासमहादिवाकीर्त्यादित्यव्रतानि षट् सामानि शुक्रियाणि। तेषु ये स्तोभास्त्रिरुच्यन्ते, तान् सर्वान् स्तोत्रापन्नेषु चतुष्कृत्वः चतुरभ्यस्येत्। भ्राजाभ्राजयोर्निधनोपद्रवौ[5] वर्जयित्वा तौ निरुक्तावेव स्याताम्। दशा...कीर्त्यम्। अनुक्रमेण गानान्यनुगानानि। दशानुगानान्यस्येति दशानुगानम्। महादिवाकीर्त्यस्य दशानुगानानि विद्यन्ते। कानि तानीति चेद् वदामः—आदित एव ज्योतिरन्तमेकमनुगानम्। देवशब्दान्तं द्वितीयम्। ईकारान्तं तृतीयम्। ऊकारान्तं चतुर्थम्। विधर्मान्तं पञ्चमम्। वौवान्तं षष्ठम्। अभ्राजोदन्तं सप्तमम्। भूतं यान्तमष्टमम्। आयुष इत्यन्तं नवमम्। शेषं दशमम्। एवं दशानुगानानि विभज्यन्ते। अष्टा...त्येके। महादिवाकीर्त्यमष्टानुगानम् इत्येके ब्रुवते। ते तेषामुत्सीदतः पञ्चमषष्ठसप्तमान्येकीकृत्य ब्रुवते। तथाष्टौ भवन्ति। कुर्वन्ति। न केवलं वचनमात्रमेव प्रयोगकालेऽपि कुर्वन्ति। कथं कुर्वन्ति, आत्मनि स्तोभविभाग्यधर्मेण क्रियमाणेयन्धर्मादि हावुवान्तं स्तोभजातं तत्सर्वं पुनः पुनरावर्तयन्ति। तेन वयं तथा कुर्मः। दशानुगानपक्षमेवाश्रिता वयम्। ऊहे तथैव दृष्टत्वात्। तस्य...कार्यः[6]। यद् ऋङ्मयं सप्तममनुगानं भ तस्यात्मा। सस्तोभविभाग्यधर्मेण कार्यः। एकमेव स्तोभं प्रस्तावाद्यर्थं पुनः पुनर्नावर्तयेत्। पदानि निधनानीत्यर्थः। तस्य...गायेत्। तस्यात्मनः पूर्वाणि यानि षडनुगानानि, यानि चोत्तराणि त्रीणि, तानि सर्वाण्युद्गातैव गायेत्। तत्र प्रतिहारौ न स्याताम्। तेषां...येयुः।

---

१ को. त्रीण्यूधश्च २ को. अभ्यासासु ? ३ को. थानि ?
४ को. मृग्योर्थोऽस्य सन्दर्भस्य, मूलेन सम्बन्धश्चापि
५ को. भ्राज भाजयोः ६ को. कार्यं

तेषामनुगानानां यानि निधनानि तान्युद्गातारः सर्वे सहैवोपेयुः । नोद्गातैव । अनि...षष्ठे[1] । न निधनमस्येत्यनिधनम् । अनिधने पञ्चमषष्ठे ऽनुगाने स्याताम् । तयोर्निधनं नास्तीत्यर्थः । सर्वानुगाननिधनोपायवचनसामर्थ्यसार्थकीकरणाय पञ्चमषष्ठयोरप्यन्त्यभागनिधनकरणप्रसङ्गनिवृत्त्यर्थोऽयं विधिः ।

प्रथम...स्तुयात् । तु शब्दः पक्षव्यावृत्तौ । प्रथमेनानुगानेन प्रस्तोतैव प्रस्तुयात् । नोद्गाता । किमत्र प्रतिवक्तव्यम्—, पूर्वमुद्गात्रैव[2] गेयानि षडनुगानानीत्युक्तमत्र प्रस्तोत्रैवेति[3] । अनयोः कः पक्ष आश्रयणीयः, प्रस्तोतैव गायेदिति ब्रूमः । सामान्यविधिं हि बहुविषयमल्पविषयो विशेषविधिर्बाधते । नासौ सामान्यविधिः, अनुगानान्युद्गातैव गायेदित्युक्ते सामान्यविधिर्भवति । षडित्युक्ते प्रथमस्यापि षण्णामन्तर्भूतत्वादसावपि विशेषविधिरेव । एवं चेदन्यत् प्रयोजनं कल्पयिष्यामः । स्तोत्रार्थानां साम्नामादिरवश्यं स्तोत्रैवारब्धव्यमित्येतदर्थम् । न क्वचिदुद्गात्रा वा प्रतिहर्त्रा वारब्धं दृष्टपूर्वमस्ति । अथ किमर्थमस्योद्गीथत्वप्राप्तिः[4], प्रस्तावस्योद्गीथत्वसाधर्म्यविधानात्[5] । कोऽनयोः समानो धर्मः, स्तोत्रसंख्यानार्थानां विष्टुतीनामन्यासः । किमस्य स्तोत्रस्य विष्टुतीन्यासो नास्ति, अस्ति । अत्र नास्ति । क्वान्यास्ति, आत्मनि यः प्रस्तावो विधास्यते तत्रेदं व्याख्यानमतीव युक्ततरम् । कथमिति चेद्, वदामः । पायादिषु वा विष्टावादिषु वास्य प्रस्तावस्य प्रयोगः । तस्य । सर्वस्तोत्रियासु तस्य स्तोमपूरणार्थानां विष्टुतीनामुत्तरत्राभ्यासात् सर्वत्रेति कल्प्यमाने महान् व्यामोह उत्पद्यते । उभयत्र क्रियमाणे ऽव्यवस्थादोषश्च भवति । तस्मादुक्तपदे युक्तम् । आत्मनि चात्मनि च प्रस्तोता प्रस्तुयात् ।

नन्वयमर्थः स्तोभविभाग्यधर्मत्वादेव सिध्यति । न सिध्यति । प्रतिहारविधानार्थं तद्वाक्यम् । स्तोभविभाग्यधर्मेण [न] कार्यमिति । ननु तस्मिन्ननुक्तेऽपि स्तोभविभाग्यमेव । स्तोभविभाग्यत्वात्प्रतिहारोऽपि सिद्ध एव । नैतत् साम स्तोभविभाग्यम् । तस्यैकदेश आत्मा स्तोभविभाग्यधर्मा । नहि सकलस्य साम्न उक्तो धर्मस्तस्यैकदेशे वर्तितुमर्हति, तस्माद् विधेय एव प्रतिहारः ।

यद्यपि तेन वाक्येन प्रस्तावो विहितः स्यात्, अननुगानासु स्तोत्रियासु कृतार्थत्वादनुगानवतीषु द्वितीयः प्रस्तावो विधेय एव । एकस्याः स्तोत्रियाया एकेनैव प्रस्तावेन कृतार्थत्वात् द्वितीयः प्रस्तावो यत्नमन्तरेण न सिध्यति । तस्मात्तदर्थो यत्नः कृतः । आत्मनि चेति । अनयोर्द्वयोरेकवाक्याभावेऽपि न दोषः । अथाप्युक्त एव वा वाक्यार्थः । तस्मिन्···रन्ति ।[6] तस्मिन् प्रथमे प्रस्तावे द्वे देवते विपरिहरन्ति विपर्यासं कुर्वन्ति ।

एके आचार्या ज्योतिःशब्दं पूर्वं त्रिरभ्यस्य पश्चादायुःशब्दं त्रिरभ्यस्यन्ति तत् प्रयोगकाले कर्तव्यम् । याना···ईयेत् । यान्यनुगानान्यादित आरभ्य प्रयोगात्मनस्तानि विष्टावादिषु वा पर्यायाणामादिषु वा सकृत् सकृद् गीत्वैव आत्मनैव स्तोभं पूरयेत् । एकस्मिन् पर्याये त्रयस्त्रयो विष्टावास्तृचभागाः आवापपरिचरा इति विष्टावानामादिषु चेत् नवकृत्वो गीयन्ते, पर्यायाणां चेत् त्रिः । उक्त···पयेत् । आत्मन उत्तराणि यानि त्रीण्यनुगानानि तानि विष्टावानां वा पर्यायाणां वान्त्येषु गीत्वा स्तोत्रियायाः समापयेत् । तस्यानुक्रमं वक्ष्यामः । तद्धि एकविंशस्तोमं, तस्य सप्तकाः पर्यायाः । प्रथमस्य पर्यायस्य प्रथमा[7] स्तोत्रिया

---

१ को. अपि | २ को. पूर्वमुदातैव | ३ को. अस्तोतैवेति
४ को. ०स्योदीतत्व० | ५ को. ०र्थ्यविधानार्था | ६ को. मिति ? | ७ को. प्रथमो

त्रिर्गेया । तत्र पूर्वाणि षडनुगानानि गीत्वा प्रथमायाः स्तोत्रियायाः सप्तममनुगानमात्मनस्त्रिरभ्यस्येत् । तत उत्तराणि त्रीण्यनुगानानि गायेत् । अथ च पुनः षट् पूर्वाणि गीत्वा तृतीयाया आत्मानं सकृदेव गीत्वोत्तराणि त्रीणि गायेत् । इत्येकः पर्यायः एवमुत्तरयोरपि कल्प्यम् । अयं विष्टवादिक्लृप्तिपक्षः[1] । पर्यायपक्षे पूर्वाणि षडनुगानानि गीत्वा प्रथमायाः स्तोत्रियायाः आत्मानं त्रिरभ्यस्येत् । ततस्तृतीयाया आत्मानं सकृदेव गायेत् । तत उत्तराणि त्रीणि गायेत् । इत्येकः पर्यायः । एवमुत्तरयोरपि कल्प्यम् ।

दश···ब्रूयात् । दशस्तोभे भासे दश निधनानि सन्ति । दशमस्य निधनस्य उपायमुद्गाता गायेत्, नेतरौ । उपायो नाम उपद्रवस्वरयुक्तात् निधनात् पूर्वो विधा एहि या हावु वा, इति । निधनानां मध्यगतत्वान्निधनाशङ्कानिवृत्त्यर्थोऽयं विधिः ।

तथा···नास्य । रोहिणके त्रयोदशस्य निधनस्योपायमुद्गाता गायेत् । हो वा औ हो वेति । अपष्टस्य अपक्षे·········चाध्यर्धेष्टस्य पूर्वमुपायमुद्गातैव गायेत् ज्योता ओहोवेति । राज...भाग्यं । राजनं विभाग्यं भवति । किमर्थमिदमुच्यत, सदृशगीतत्वादेव विभाग्यता सिद्धा 'व्यवस्तोभन्त्येके' इत्येतस्मिन् पक्षे सार्थकं भवति, तथापि विभाग्यमेवेति । यत्र अष्टकृत्वः स्तोभा आवर्तन्ते तत्र संशयः, क्व प्रतिहार इति, अष्टापदानां विधेरश्रुतत्वात् चतुष्पदवद् विभजेत् । तत्रैकस्मिन् अवयवे द्विरावर्तन्ते स्तोभाः ।

तानि...तस्य । राजनस्य पदानि सदेवतानि भवन्ति । देवताभिः सह वर्तन्त इत्यर्थः । प्रस्ताव प्रतिहारावपि देवताभिः सहैव भवत इत्यर्थः । इदमप्युत्तरस्मिन्नेव पक्षे सार्थकं भवति । स्तोभव्यवहितत्वात् संशयो जायते, प्रथमतृतीय एव पदे प्रतिहारावितरत् सर्वमुद्गीथ इति, तन्निवृत्त्यर्थमुक्तम्—तस्य साम्नः स्वाध्यायपाठे यानि शब्दरूपाणि त्रिरुच्यन्ते तानि स्तोत्रगतस्य पञ्चकृत्वः प्रवदन्त्येके । पदानि देवताश्च विविधमवच्छिद्य स्तोभन्त्येके आचार्याः । पदात् पूर्वे ये स्तोभास्ते पददेवतयोर्मध्येऽपि निधातव्या इत्यर्थः । एवमष्टकृत्वः स्तोभा आवर्तन्ते । किमुभावपि पक्षावस्माभिरास्थातव्यौ, नेति ब्रूमः । ऊहाम्नायानुरोधत्वादशीति संपच्छ्रुतेश्च पूर्वोऽस्माभिरास्थातव्यः । एकैकस्यां स्तोत्रियायां द्वन्द्वे अशीत्यौ संपद्येते । ताः पदाशीतयः[2] संपद्यन्ते इति ह्यशीतिसंपच्छ्रूयते । सा तु नोत्तरस्मिन् सम्भवति । उत्तरस्य पुनः को विशेषः, येषु शाखाभेदेष्वशीतिः सम्पन्न श्रूयते तेषु च समाम्नायेषु अष्टकृत्वः स्तोभा आवर्तन्ते । तेषूत्तरस्य प्रयोगः ।

पद···दश । पदस्तोभानां चतुर्णामपि । इष्टशब्दश्च पदानि चेष्टापदानि, यानि द्वादश तानि निधनानि भवन्ति । पदान्यवच्छिद्यापि द्वादश कर्तव्यानि । सर्वा—वन्ति । सर्वाणि निधनानि स्तोभवन्ति । द्वादशानां पुरस्तात् द्वादश स्तोभा विद्यन्ते इत्यर्थः । प्रथ—कुर्युः । प्रथमस्य पदस्तोभस्याष्टेष्टस्य पदानामादिषु चान्तेषु चेष्टाशब्दं कुर्युः । चतुर्णां पदानामादिषु चतस्र इष्टा अन्तेषु चतस्रः । सर्वा अष्टौ । तस्मात् इष्टेभ्यश्चतुर्भिः[3] पादैः सह द्वादश निधनानि भवन्ति । द्वितीययोश्च द्वितीयपदस्तोभस्य पदानां चतुर्णामन्तेषु चतस्र इष्टाः । युग्मयोः द्वितीयचतुर्थयोः पदयोर्मध्ये द्वे । सर्वाः षड् भवन्ति । तस्मात् षडिष्टस्य पदस्तोभस्य पदानां चतुर्णामन्तेषु चतस्र इष्टाः । द्वितीयचतुर्थयोर्द्वेधाकरणात् षट् पदानि षडिष्टाश्च द्वादश निधनानि भवन्नि ।

---

१ को. प्तिलक्षः ? २ को. पञ्चाशीततः ३ को० अष्टेभ्यः ?

तृतीय...ध्येषु—तृतीयस्य पदस्तोभस्य पदानां मध्येषु चतुर्षु चतस्र इष्टा भवन्ति। तस्माच्चतुरिष्टम्। चत्वारि पदानि द्विधा भिन्नानि अष्टौ भवन्ति। चतसृभिरिष्टाभिः सह द्वादश भवन्ति। चतु—न्तयोः। चतुर्थस्य पदस्तोभस्य युग्मान्तयोः द्वितीयचतुर्थपादान्तयोः द्वे इष्टे भवतः। तस्माद्[1] द्वीष्टम्। युग्मान्तयोरिति केचित् पठन्ति। तत्र तद्धितार्थकल्पनानुपपत्तेस्तेषां यकारः प्रमादादागतो मन्तव्यः। युग्मान्तयोरित्येव सुपाठः। त्र्यक्षराावितरौ पादौ प्रथमतृतीयौ। त्र्यक्षरशस्त्रीणि त्रीण्यक्षराणि कृत्वा विभजेत्। प्रथमं चतुर्धा विभजेत्। तृतीयं चतुर्धा। एवमष्टौ। द्वितीयचतुर्थाभ्यां पदाभ्या द्वाभ्यामिष्टाभ्यां च सह द्वादश निधनानि भवन्ति।

अनु···दशः। यद्यनुष्टुभि द्वीष्टं गीयते तद् द्व्यक्षरशः पदे विभजेत्। अष्टाक्षरत्वात् पदानाम्। तथाष्टौ भवन्ति। तेषां···नानि। तेषां पदस्तोभानामेकैकस्य प्रस्तावे त्रीणि त्रीणि निधनानि भवन्ति। 'सर्वाणि स्तोभवन्ति' इति वचनात् स्तोभा[2] अपि त्रयो विद्यन्ते। केचित्तु तेषां प्रस्तावे त्रयः स्तोभास्त्रीणि निधनानि पठन्ति। तत्र सर्वाणि स्तोभवन्ति इत्यनेनैव वचनेनास्यार्थस्य सिद्धत्वात् स्तोभत्रितयस्य भावप्रतिपादनार्थं त्रयः स्तोभा इत्यस्य पदद्वयस्येहोपन्यासो नैव युज्यते[3] (इति वदन्ति[3])। तस्मादिदमर्थमवश्यं नोक्तवानाचार्य इति मन्यमानेन केनचित् पण्डितंमन्येन सर्वाणि स्तोभवन्तीत्येतद् वचनं विस्मृत्यात्रोपन्यस्तमेतत् पदद्वयमिति मन्तव्यम्। 'तेषां प्रस्तावे त्रीणि निधनानि' इत्येवमेव तु पाठः। एव—रेषु। एवमेवेतरेष्वपि विभाग्येषु उद्गीथप्रतिहारोपद्रवेषु त्रीणि निधनानि स्युः। अवि—हरेत्। अविभाग्याश्चेत् पदस्तोभाः स्युः यदि, तेषामविभागपक्ष आश्रीयते, तत्र दशमेन स्तोभेन प्रतिहरेत्। दशमेन वा एकादशेन वेत्यर्थः।
सर्वेषां पदस्तोभानां चतुर्णामपि प्रथमेनैकेनैव स्तोभेन प्रस्तावः स्यादिति। अविभाग्यपक्षे सर्वेषां पदस्तोभानां प्रथमेन स्तोभेन प्रस्तावः स्यात्। प्रथमस्य नवमेन वा दशमेन वा प्रतिहारः। द्वितीयतृतीययोः दशमेनैव। चतुर्थस्य दशमेन वैकादशेन वा प्रतिहारः स्यादिति सिद्धमित्याभिश्रण्यप्रतिपादितप्रतिहारपटलचतुष्टयव्याख्यानं पर्यवसितम्।

इति पर्यध्याये ऽष्टादशः खण्डः।

इति प्रगीतसामसु प्रतिहारविधिश्चतुर्थोऽध्यायः समाप्तः

---

१ को. द्विष्टं २ को. अस्तोभा ३ को. युज्यन्ते

# अथ ऊनविंशः खण्डः

## अथ सामलक्षणम्

प्रालेयकिरणापीठं प्रणम्य परमेश्वरम् ।
सामलक्षणसम्पन्नं संप्रवक्ष्यामि तत्त्वतः ।।

गीतैर्वर्णविकारैश्च स्तोभैर्नानाविधैः स्वरैः ।
ऋग् यदा विक्रियां याति तदा सामेति कीर्त्यते ।।

मात्रावृद्धिस्तु वर्णानां गीतमित्यभिधीयते ।
लघिमा द्राघिमा[1] लोपः परोक्षाऽक्षरविक्रिया[2] ।।

ऋगक्षरेभ्यो ये बाह्याः शब्दास्ते स्तोभसंज्ञिताः ।
क्रुष्टाद्याः[3] मन्द्रपर्यन्ताः स्वराः षट् परिकीर्तिताः ।।

क्रुष्टश्च प्रथमश्चैव द्वितीयश्चैव सामसु ।
तृतीयश्च चतुर्थश्च मन्द्रश्चेत्यत्र षट् स्वराः ।।

जायते मूर्धनि क्रुष्टो ललाटे प्रथमस्वरः ।
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयो जायते मुखे ।।

कण्ठदेशे चतुर्थस्तु मन्द्रस्तूरसि जायते ।
एतान् शिष्योपदेशार्थमङ्गुलीषु हि योजयेत् ।।

गोकर्णवपुषः पाणेर्दक्षिणस्याग्रगामिनः ।
अङ्गुष्ठे प्रथमं क्रुष्टमूर्ध्वाङ्गुल्यग्रगं विदुः ।।

अङ्गुष्ठादर्धशेषाणामङ्गुलीनां यथाक्रमम् ।
कल्पयेन्मूलदेशेषु द्वितीयानपि (च) स्वरान् ।।

स्वराणां दर्शयिष्यामि रूपोदाहरणान्यहम् ।
क्रुष्टो ह्युपद्रवस्याद्यमक्षरं त्वामहीयवे ।।

चतुर्थेऽभिप्रियाणीति साम्नो[4] ऽन्यान्यक्षराणि तु ।
त्रीणि क्रमाद् द्वितीयं च तृतीयं प्रथमं विदुः ।।

मन्द्रः स्याद् हावुवा[द्य इव]चतुर्थः स्याद्विचक्षणः ।
एवमेतान् स्वरान् विद्यात् सर्वस्मिन् साममण्डले ।।
क्रुष्टा ये स्युस्त्रिमात्रास्ते विप्लवा लिप्तवर्जिताः ।।

---

१ को. द्रघिमा   २ को. परोक्षो   ३ को. क्रुष्टान्या   ४ को. साम्ना

**ओम्...गायन्ति** । त्रैष्टुभजागतानां प्रतिहारप्रसङ्गादेव विभागलक्षणमुक्तम् । इदानीं गायत्राणां विभाग्यान्यारभ्यन्ते । गायत्रीसामान्यपि सन्ति विभाग्यानि । **स्तोम...नि च** । गायत्राणामस्तोभविभाग्यानि न सन्तीत्यर्थः । **यथै...य इति** । भ्राजं स्तोभविभाग्यम्, इतराणि सस्तोभविभाग्यानि । त्रीणि पदानि । चत्वारो विभाग्याः । कथं विभाग्यत्वमित्याकांक्षायां सिद्धं[1] सम्पद्यते[1] । **तेषां...स्तौति** । **पदे...यति** । **पदे...रति** । **स्तोभे...वति** । **तद्वे...रति** । **स्तोभे...वति** । **तद्वे...न्न इति** । तत्र खल्वाहुराचार्याः 'इमानि वै खलु संप्रति सम्यग् विभाग्यानि भवन्ति' । कस्मादिति चेत्, एतेषु हि सामसु कर्तार उद्गातारः सममृचं विभजन्ते, इत्यस्मात् कारणादेतानि सम्यञ्चि विभाग्यानि इत्याहुराचार्याः । **तद्ध...चं इति** । ऋच एकशेषं परिशिष्यात् । एषोपद्रवायेत्याह स्म गौतमः । तं विलोपमवच्छेदं विकारं मन्यन्त आचार्याः । **स्तोभो...रिति** । विलोपात् कारणात् स्तोभोपद्रवाण्येव स्युरित्याचार्याः । **अनु—वन्ति** । **स्तोभ...नि च** । नचास्यां शाखायामनुष्टुभानि स्तोभानि [वि] भाग्यानि सन्ति । तस्मादाचार्येणाप्यनुदाहृतानि । तस्मात् स्तोभविभाग्यानि चेति प्रमादपाठमिव मन्यामहे । अस्तोभविभाग्यानि च सस्तोभविभाग्यानि चेति पठितव्यम् । अथवानुष्टुभस्य स्तोभविभाग्यस्य सदसद्भावनिरूपणार्थः सदसद्भावो मन्तव्यः । स्तोभविभाग्यमानुष्टुभं प्रति अस्तो [ भविभाग्यं ] नास्तीति कृत्वा प्रतिज्ञातम् । किं तदिति, चेत्, संकृतिनः[2] तच्छंकायां भवेदप्यानुष्टुभस्य स्तोभविभाग्यं[3] भवति । एवं चेत्, संकृतिनो विभाग्यादौ च प्रस्तावेन भवितव्यम् । कः सन्देहः । विभाग्यत्वे सति महादिवाकीर्त्यवत् आभिश्रेण्योऽपि तथैवाह स्म । तस्य तु प्रथमात् पदादूर्ध्वं स्तोभविभाग्यं वदति । इदमेकमस्तु, कान्यन्यानि बहुवचनमनुगृह्णन्ति, अत्र बहुवचननिर्देशमकारणं मन्यामहे । स्वभावोऽयमाचार्यस्य यथा दैवोदासम् औष्णिहमेकमेव विद्यते अस्तोभविभाग्यम्—अथाप्यस्तोभान्येकेषामिति बहुवचनेन निर्दिशति । 'अनुपद्रवाणि' इति च । इतरथापि न दोषः । जात्याख्यायामेकस्मिन् बहुवचनं विद्यते । अत्र जातिरेव हि विवक्षिता । **यथै...वति** । **अस्तो...अस्य** । नार्ह– वन्ति । बार्हतान्यपि विभाग्यानि भवन्ति ।

**स्तोभ···नि च** । यथोष्ठ इति भर्गप्रतोदे । सस्तोभविभाग्यो यथा—गोष्ठौ स्तोभविभाग्यौ ।' **पाङ्क्त···वति** । साप्तपदानामुपोत्तमं प्रतिहारं विधास्यन् आचार्यो विभाग्येषु पदेष्वधिकेषु सत्सु उद्गीथवृद्धिरेव[4] भवतीति[5] ज्ञापयति[5] । तस्मात् पाङ्क्तेषु उद्गीथं द्वे पदे भजते[6] **ऋष** क्करः । किमेकमेव, नैवम् । विराट् स्वाराजमपि । **साप्त···च** । प्रवर्ग्यं साम, यच्चावभृथ साम, एते बार्हस्पत्ये साप्तपदे विभाग्ये भवतः, किमेते एलान्दमपि । **तयोः···माहुः** । द्विपदाभ्यां चतुर्थषष्ठाभ्यां पदाभ्यां द्विप्रतिहारे स्याताम् इति लक्ष्मणिर्नाम आचार्य आह स्म इति ।

इत्थमेवमनेन मार्गेण शेषाणामपि कल्पयेत् । कानि शेषाणीति चेत्, द्वैपद[7] काकुभ वैराजादीनि । आक्षरपांक्तः विभाग्यम् परि प्र 'धन्वा[8]' (जै. सं. १. ४२. १) इति चतुर्थम् । काकुभान्यभ्रातृव्यशुक्रचन्द्राणि वैराजादीनि । काश्यपव्रतं त्र्यस्त्रिंशत्संमितमगस्त्यस्यार्कसह इति । धर्मविधर्मणोस्तु ऊहाम्नायवशादाभिश्रेण्योऽन्यथा कल्पयेत् । भद्रश्रेयसी द्वे परे, तयोर्युक्तमेवाकल्पयत् । **अथ···ष्टेति** । प्रस्तावेन

---

१ को. सिद्ध पम्पद्यते ?
२ को. संकृति तच्छङ्कयां भवदव्यानुष्टुभस्तोभ०
३ को. विधास्यम्
४ को. ०थवृद्धिमेव
५ को. वर्तव्यति ज्ञापयाति ज्ञापयति
६ को. भजेते
७ को. द्वैपदा
८ को. सन्वा

गीर्णानि प्रस्तावगीर्णानि नाम कानिचित् सामानि भवन्ति। यथा स्वादिषु इन्दु.[1] पविष्ठ[1] (जै. सं. १.४२.५) इति। एतयोः सप्तमतृतीये। किमर्थमिदमुच्यते, पदेन प्रस्तौति, पदेनोद्गायति इत्येवमादीनां विधीनामनुग्रहायावसानमात्रः प्रस्ताव इत्येवं विधिमतिलङ्घ्य पदप्रस्तावानां पदोद्गीथतां च विधातुं युक्तमिति। यदि कश्चिदाशंकेत तन्निवृत्त्यर्थमिदमुक्तम्। एवंप्रकारा महान्तोऽपि प्रस्तावा एव स्युरिति।

अथा⋯न्व इति। अस्य साम्नः त्रयः स्तोभाः प्रस्तावोद्गीथप्रतिहाराः पदानि निधनानि। उपद्रवो नास्ति। किमर्थमुच्यते, तृ⋯⋯⋯⋯⋯⋯करणेनोपद्रवो मानुग्राहीत्येतदर्थम्। अथो⋯त्तीति। उपरुद्धानि संरुद्धानि उपरुद्धावयवानि। प्रस्तावतः प्रतिहारतश्च संरुद्धः उद्गीथः प्रतिहारतो[2] निधनतश्च संरुद्धः उपद्रवः द्वाभ्यामक्षराभ्यां विभज्यमानेष्ववयवेषु उद्गी [थोपद्रव] मात्रत्वात् संरुद्धौ भवतः। तस्मादुपरुद्धान्येतानि सामानि मन्तव्यानि।

अथवा प्रस्तावप्रतिहारविधानकारणादवश्यं विभागः कर्त्तव्यः, स च दुर्ज्ञेयः। तस्मादुपरुद्धानि नामैतानि सामानि। तानि⋯वन्ति। तानि प्रस्तावगी[तनिधना]नि सामानि संरोधात् कारणात् अकर्मण्यानि अस्तोत्रार्हाणि भवन्ति।

ननु प्रस्तावगीर्ण ऋषभो रैवतः षष्ठेऽहनि विनियुज्यते, सत्यमेतत्। तदेकं क्षन्तुमर्हति, शेषाणि न प्रयोक्तव्यानि एव। क्व नु⋯⋯⋯⋯र्थतया विनियोगप्रसङ्गः, स्वतन्त्रविहितानां परतन्त्रविहितानाँ च क्रतूनामनेकत्वात् सर्वेषामेव मन्त्राणां क्रत्वर्थत्वात् अन्वयानां दशात्मकत्वात् येन केनचित् प्रकारेण सर्वाणि⋯ ⋯⋯⋯विनियोगमर्हन्ति। अथ च सर्वमेधो नाम क्रतुर्विद्यते, तत्र सर्वाणि विनियोज्यानि। तत्रापि संरोधात्कारणादेतानि न कल्पनीयानि, अयज्ञार्थत्वात्। एतेषामानर्थक्ये प्रसक्ते सार्थ⋯वक्ष्यति। अव⋯मिति। अथ यानि सामानि सुदृष्टानि ऋग्रहितानि यथा वाचोव्रतादीनि च। कानि चिच्च[3] गणानुगानानि यथा आदित्यव्रतादीनि तेषामुभयेषामूह एव तावन्न सिध्यति। देवतासु दृष्टानि सुज्ञानत्व⋯⋯⋯⋯नि गणानुगानानि दुर्बोधरूपत्वादुदाहृतानि। आदित्यव्रतं चतसृषु ऋक्षु बहुरूपैः स्तोभैः गीतत्वात् गणानुगानम्। तस्य विनिवेशस्य दुर्ज्ञेयस्थानत्वादूहाम्नायो न सिध्यति। ततश्शाव्य दू⋯⋯⋯⋯⋯तस्यापि तथैव। कश्यपव्रतं वैश्वानरव्रतमिव विभाग्यं कल्पयितुं शक्यम्। गणानुगानत्वमयुक्तमिव प्रतिभाति, तथापि गणानुगानमित्यवददाचार्यः। तस्मादन्यथा कश्यपव्रते कल्पयामः। छन्दोरहस्ये दशमोऽध्यायः।

छात्रव्यवहारेणैकादशसामात्मकः आर्षेये द्विसामात्मकः। तत्र प्रथमं विराट्स्वराजनाम्ना भिन्नमूहाम्नाये दृष्टत्वात्। एवं चेत् परं कश्यपव्रतं भवति। पञ्चममपि[4] प्रजापतेर्हृदयाख्याया दक्षिणमपि भिन्नमेवास्ति। किमार्षेये प्रजापतेर्हृदयाख्यमस्ति, आर्षेये नास्ति। अस्त्यग्न्युपस्थाने प्रजापतेर्हृदयेन पक्षमित्यस्ति। तस्मात् प्रजापतिशब्दवत्वाच्च प्रजापतेर्हृ[दयं ज्ञा]यते, विराट्स्वराजवत्। तथापि दिशां व्रतं दशविधैः स्तोभैर्दशकृत्व आवर्तते। तथापि तथैव विराट्स्वराजवत् परस्य दशसामात्मकस्य संज्ञान्तरं प्रजापतेर्हृदयमिति कल्पयितुं शक्यम्। पुरुषव्रतस्य विराट्स्वराजसंज्ञे वा। सत्यमेतत्। पञ्चममेव प्रजापतेर्हृदयमिति गुरुप[रम्पर्या प्राप्]नोति।

१ को. येन्दुरविष्ट   २ को. प्रतिहारो   ३ को. च   ४ को. पञ्चमपि

कश्यपव्रतस्य संज्ञान्तरं प्रजापतेर्हृदयमिति केनचिदपि न स्मर्यते। किं बहुना आदितः षट् सामानि पुरुषव्रतानि, परं पञ्चानुगानं कश्यपव्रतमिति वयं मन्यामहे। एवं व्याख्यायमानेन वानुगानादीना............स्य च गणानुगानत्वादूहो न प्राप्नोति। अनेकास्वृक्षु गीतानि गणानुगानानीति चेत्, अतीषङ्गयण्व[1] सन्तनिशाक्वरवर्णमहाग्नीनां दोषः प्रसजति। तस्मादिदं वाक्यमन्यथा वर्णयामः। यानि देवतासु दृ...............तादीनि चत्वारि गणानुगानानि तेषामूहो न सिध्यति। भिन्नानुगानत्वादेतानि दुरूहाणीति वा योज्यम्। तृच एकर्चेति सामगायेदिति च वचनात् तृचे वैकर्चे वैतानि सामानि न कल्पयितुं शक्यानि।

नन्वतीषङ्गो द्वे............तथा चूढश्च। नैष दोषः। एकस्यामस्योत्पत्तिः, एतराः स्तोभवन्मन्तव्याः। आचार्योऽपि ममाभिप्रायम् अतीषङ्ग एकस्याम् इति वदन् द्वितीयस्यामतीषङ्गमविधाय स्तोभं पूरयन् व्यञ्जयति। अथवा स्वय............स्योहो नचास्माभिः पर्यनुयोज्यः। पौरुषेयाणामहानां हि लक्षणं वक्तव्यम्, न स्वयभुवाम्। एवं चेदतीषङ्गानुसारेण तवस्यावमपि...ऊहमित्र प्रतिभाति। तस्योहे श्रुतिरेव प्रत्याचष्ट। तद्रुपा आहुः दुष्प्रतिज्ञाता वै तवश्यावस्य स्तोभादेव वृत्तिः प्रस्तावा प्रतिहारा देवतानिधनानि इति। यदि स्थानमादित्यव्रतादीना गणानुगानत्वात् तृचैकर्चत्वस्य दुःसंपादत्वादेव दुरूहत्वं सिद्धमिति कृत्वा देवतादृष्टाना साम्नां दुरूहत्वे हेतुं प्रदर्शयति—सह देवताभिः वर्तन्त इति सदेवतानि सामानि। सदेवतानि सामानि यदि कस्यांचिदृचि कुर्यात् पर देवतःस्थानं व्यापादयेत् व्यापत्तिं कुर्याद्। ऋक्पादैरागन्तुभिर्व्यवहितत्वात् परं द्वितीयादिदेवतापदमृक्पादैर्गृहीतं भवति।

**यथु—साम**। यदि देवतामुद्धरेत्, निरस्येत् देवतामपोह्य तस्याः स्थाने यदि तादृशी गीतिऋचि निहिता भवति तदा सामैकदेशत्यागः कृतो भवति, स दोषः। वाचोव्रतं कस्याँचिदृचि प्रयुयुक्षुर्यदि[2] देवतानां प्रथमं प्रस्तावखण्डं मुक्त्वा प्रस्तावयोगिनमृक्पादं न्यसेद्, द्वितीयस्य देवताखण्डस्य स्थानमृक्पादेन गृहीतं भवति। उभयथापि दोष एव। तस्मादूहो न सिध्यति। **तानि—येरन्**। तानि खलु सामानि अग्निचयपरिगाणेषु वा महाव्रतपरिमात्सु कदाचिदापद्येरन्[3] इति मन्यामहे। अग्नौ वा परिगाणेषु वेति व्याख्येयम्।

नूनमिति वचनादुक्तविषयेऽपि संशयितम्। **नन्वा...सिध्येत्**। न्वै इति निपातो पश्यार्थे। तेषां देवतादुष्टानां कर्म क्रियासंस्तुते यज्ञेऽग्निपरिगाणपरिमाद्भ्योऽन्यस्मिन् विषये न सिध्येत्। ऊहस्य दुष्करत्वात् स्तोत्रार्थता न सिध्यतीत्यर्थः। क्रतुयज्ञयोरेकार्थकत्वात् एकोऽनर्थकः। नानर्थकः। क्रतुशब्दः स्तुतशस्त्रवति विशिष्टविषये वर्तते। यज्ञशब्दस्तु पञ्चयज्ञादिष्वपि वर्तते। विशिष्टविषय एव प्रतिषेधो ब्रह्मयज्ञादिषु प्रयोजयितुमयं ब्रह्मयज्ञो यत्नविहितो मन्तव्यः। सामजातस्य सर्वस्य विनियोगो न चेत् क्रतौ, आम्नायस्य क्रियार्थत्वादानर्थक्यं प्रसज्येत। तस्मात् सर्वाणि सामानि सम्यगध्वरवर्त्मनि यथायोगं प्रयोज्यानि इत्याचार्याणां विनिश्चयः। तत्र स्तोत्रेषु मुख्यत्वाद् विनियोगो विशिष्यते। येषामसंभवसूत्रं तेषां स्यात् परिणामता। कर्माण्यनिसंरोधात् इति येषां वचः श्रुतं, दृष्टोऽपि स्तोत्रसंयोगस्तेषां नात्यन्तदोषकृद्। गणगीतानि चत्वारि, देवताप्रभवाणि च स्तोत्रवर्त्मदुरूहत्वान्नासेवन्ते। कदाचन आनर्थक्यभयात्तानि प्रयोक्तव्यानि चेत्, क्रतौ परिमाणात् परिगाणेषु प्रयोक्तुं प्रयतेत च।

---

१ को. यन्व २ को. प्रययक्षु० ? ३ को. ०दापन्ये

तेषां तु परिगाणेऽपि विनियोगो न शक्यते ।
सार्थकीकरणं तेषां ब्रह्मयज्ञ इति स्थितम् ।।
ज्ञातुं [च] जैमिनिश्चक्रे यज्ञशब्दं क्रतौ सति ।
फलतो ब्रह्मयज्ञस्य श्रौततन्त्रसमानता ।।
सर्वथा सन्ति यद्यज्ञे दुष्प्रयोज्यानि कानिचित् ।
तदेव नूनमुत्पत्तेः ब्रह्मयज्ञस्य कारणम् ।।
स्वाध्यायब्राह्मणोक्ता या ब्राह्मयज्ञस्य नित्यता ।
सामभिश्च परिग्राह्या कालयोगाच्छ्रुतेरिह ।।

इति पर्यध्याये [ सामलक्षणे ] एकोनविंशतिः खण्डः ।

# अथ विंशः खण्डः

## अथोहलक्षणम्

**अथा···ह स्म**। तेषामूहो न सिध्यतीत्यनेन प्रसङ्गेन आह स्म—**ऊहस्यापि किंचिल्लक्षणं वक्ष्याम** इति।

**ऋचा···वति**···ऋगभिगतरूपा रूपादनपेता भवति । साम्नां रूपं सामरूपमप्यगतरूपं भवति, स्वरूपादपैति। अयमभिप्रायः—साम्नो योनिमपास्यान्यस्यामृचि गानमूह इत्युच्यते । ऋचां साम्नां च रूपाण्यक्षराणि हि। ऊहे क्रियमाणे विधीयमानाया ऋचो रूपाण्यक्षराणि लभ्यन्ते न साम्नः, उच्चादीन्यक्षराणीत्यभिप्रेत्य चोदयति। एवं चोदित उत्तरमाह।

**वति ··ऋचा···रूपा**। साम्नो रूपं गीतिविशेषः। सा च गीतिर्वागेव। एतद्ध ह वाव साम यद् वागिति श्रुतेः। मनोगोचरा वाग्गीतिः । वाग्गोचराणां गीतीनामालम्बनमक्षराणि । अक्षरैर्विना गीतिमुच्चारयितुमशक्यत्वाद् ऋगभिधानेष्वक्षरेष्वेव तिष्ठते गीतिः। यथा व्यक्तिविशेषेष्वात्मा लक्ष्यते, तथा गीतिविशेषेषु साम। तस्मादामहीयवाख्यस्य गीतिविशेषस्य आत्मस्थानीयस्य । उच्चा ते (जै. सं. १. ४६. १) इति। इयमृग् गीतेरुपविशेषार्थं शरीरमिव मन्तव्या। तस्माद् एवा ह्यसि वीरयुः (जै. स. २. २. ५) इति। अत्र गीतिविशेषो लक्ष्यते। नोच्चा ते इत्यक्षराणि। तस्मात् सामाभिरूपं भवति । ऋगपरूपा भवतीति वेदितव्या। गीतेः सामत्वमिति चेत्, यः कश्चित् पापरत्यै रथन्तरं यथा कयाचिद् ऋचा सम्पादितं जपन् न दुष्यतीव प्रतिभाति। नैतत् साधु। रथन्तराणामूहानां परार्थत्वात् इतरासु दुरूहत्वात् अभि त्वा (जै. सं. १. २५. १) इति साधारणार्थत्वात्, प्रथमोत्पन्नत्वात्, स्वभ्यस्तत्वाच्च सर्वप्रसङ्गेऽपि पक्षप्राप्तत्वात् अभि त्वेति साम जप्तव्यम्। एवं सति देवताद्दृष्टानां गणानुगानानां च वक्ष्यमाणगदविषयधर्मेण कस्यांचिदृचि कल्पयितुं शक्यम्। सत्यमेतत्। तदर्थं हि यत्नः क्रियते। सामाभिरूपमित्येतावता[1] सर्वमुक्तं सिध्यति। ऋगपरूपेत्यस्य प्रयोजनमृगक्षराण्येवापरूपाणि न देवतास्तोभाक्षराणीति। तस्मात् स्तोभदेवताक्षराणि स्थिराणीति मन्तव्यानि। एवं व्याख्यायमाने उक्तो दोषो न प्रसजति। किमनेन प्रलपितेन, योनिस्थानि ऋगक्षराण्यपास्य गीतिविशेषैः स्तोभैश्चालंकृत्य साम कल्पयेदित्ययमर्थ उक्तो भवति। अपरं मतम्—ऊहविषये क्वचिद् ऋगभिरूपा भवति, सामापरूपम् क्वचित् सामाभिरूपं भवति ऋगपरूपा। मैधातिथस्य प्रथमे एकाक्षरे द्वे तृतीयचतुर्थौ स्वरौ भजेते । मध्यमायां स्तोत्रियायामृचोऽक्षरमाद्यं स्वरूप लभते, साम्ना त्वन्यः[2] स्वरूपो लभ्यते[2]। तया सौश्रवसस्य तृतीयवैदन्वतस्योत्तरयोः स्तोत्रिययोः साम्नो रूपं परिगृहीतमृचो रूपमपेतम्। एवमन्यत्रापि द्रष्टव्यम्। किमर्थमिदमुच्यते, उभयोः परिग्रहार्थम्। उभयमूहेऽपि दृश्यते। पूर्वस्मिन् व्याख्याने योऽर्थो निरूपितः स परत्र—तद्यानि सच्छन्दस्यानि इत्यत्र प्रतिपादयितुं शक्यः । गणानुगानदेवतादनिष्टं प्रसक्तं तदपि यद्यु वा उद्धरेद् देवतां विलुम्प्यात् साम इत्यनेन प्रत्याख्यातम्।

---

१. को. ०मित्येवता ?  २ को. त्वन्यस्वरोवलभ्यते ?

अथापरा व्याख्या—ऋक्सामयोः स्वर एव रूपशब्देन परिगृहीतः। ऋक् स्वरवशेन यत्र गीयते तत्र सामस्वरो नाद्रियते। यथा वामदेव्यस्योद्गीथे अर्कपुष्ययोश्च दिशां च दशानुगाने। यत्र खलु ऋक्स्वरमनाश्रित्यैव गीयते तत्र साम्नो रूपमेव परिगृहीतम्। यथा गौरीवितादौ।

तच्छ... हति...तत्। तस्मिन्नूहविषये छन्दस्तो वा देवततो वा योनेर्व्यापन्नं व्यापत्ति विकारमापन्नमृक्साम[2] एकरूपं चिकीर्षन्नूहति, ऋक्सामयोः प्रमाणवैषम्यप्राप्तमवयवपरित्यागमकुर्वन् ऊहेदित्यर्थः एकीकरणविधिरुत्तरत्र वक्ष्यते।

कात्र देवतेति निर्दिश्यते। ऋग्देवतैव हि सामदेवता। ऋग्वैषम्यादेव सामवैषम्यं भवति। न हि देवततो वैषम्यमस्ति। ये सामसु देवताभिधानाः स्तोभविशेषास्तेषामपि परिग्रहोऽत्र घटते। तेषामूहच्छन्दसोः प्रयोगाभेदात्। सामसु विस्पष्टार्थाः ऋक्पादसंस्थानाः स्तोभविशेषा देवताशब्देनात्र निर्दिश्यन्ते। यथा श्यावश्वान्धीगवयोरनुष्टुभि चतुष्पाद्यामुत्पन्नयोस्त्रिपदासु प्रयुज्यमानयोः पच्छोव्यापत्तिं गतयोरेकीकरणम्। अथवा सकलमिमं विधिं छन्दोदेवतावैषम्यविषयमेव कृत्वा व्याख्यास्यामः। तद्यथा छन्दस्तो वा देवततो वा व्यापत्तिः ऋक्सामयोर्विद्यते। छन्दसो वैषम्ये सति यत्र ज्यायः छन्दस्यं कनीयश्छन्द आपद्यते तत्र ऋगभिरूपा भवति। सामस्वरूपं यत्र कनीयश्छन्दस्यं ज्यायश्छन्द आपद्यते तत्र सामाभिरूपं भवति ऋगपरूपा। अत्र रूपशब्देनाक्षरप्रमाणमुच्यते। अक्षराणि हि रूपमृक्सामयोः व्यक्ततरं वक्ष्यामः। षट्त्रिंशदक्षरयोर्बृहत्यामुत्पन्नं बृहद्[3] द्वात्रिंशदक्षरामनुष्टुभमापद्यते[3] तत्राष्टाक्षरेण प्रस्तावेन भवितव्यम्। योनिवत्। विंशत्यक्षरेणोद्गीथेन चतुरक्षरेण एवमनुष्टुभो द्वात्रिंशदक्षराणि परिपूर्णानि भवन्ति। तस्माद् ऋगभिरूपा भवति। उपद्रवनिधनयोर्विषयाभावादुत्सादः स्यात्। तस्मात् सामापरूपं भवति। उपद्रवनिधनहीनत्वात्। तस्मिन्नेव त्रिष्टुभमापन्ने षट्त्रिंशदक्षरैः साम पूर्णं भवति। शिष्टान्यष्टावक्षराणि उत्सीदन्ति। तस्मात्तत्र सामाभिरूपं भवति ऋगपरूपा भवति विकल्पत्वात्। एवं प्रत्युक्ते[4], यथा द्वयोरपि दोषो न स्यात् तथा चिकीर्षेद्। ऋक्सामयोः समानप्रारम्भोदर्ककरणमेकीकरणमुच्यते। प्रारम्भः प्रस्तावः। उदर्कः प्रतिहारोपद्रवनिधनानि। तानि प्रमाणान्येव भवितव्यानि। क्षयवृद्धिस्थानमुद्गीथः। तदुत्तरत्र वक्ष्यते। देवततो वैषम्येऽपि साम कर्तव्यम्। तद्यथा, आन्धीगवस्य चतुष्पदायामनुष्टुभ्युत्पन्नस्याक्षरपदप्रस्तावस्य त्रिपदासु पिपीलिकामध्यासु प्रयोगे पदप्रस्तावता प्रसजति। उत्तमस्य पद[स्य] द्वाभ्यामक्षराभ्यां प्रतिहार इत्येवं प्रसक्ते पूर्ववदेव समीकरणे कर्तव्ये तुल्यश्छन्दस्सूहः सुकरो विषमेषु दुष्कर इति कृत्वा विषमाणामेव वक्तुमारम्भः क्रियते। तदुत्तरत्र विस्तरेण वक्ष्यते। कथं भवतोक्तमर्थमेते शब्दाः समर्थयन्ति, अत्र ब्रूमः–क्वचिद् ऋगभिरूपा भवति सामापरूपं, क्वचित् सामाभिरूपं भवति ऋगपरूपा। तदु व्यापन्नम्। व्यापत्तिश्छन्दस्तो वा देवततो[वा] भवति। तत् व्यापत्ति[5] समानकालप्रारम्भोदकरणेन ऋक्सामयोरपनुदन्नूहेदिति योज्यम्।

तद्या...पृश्नि। तत् तत्र यानि छन्दस्यानि योनिच्छन्दसा समानाक्षरेषु छन्दस्सु विहितानि तेषां स एवोहो भवति। यदस्य योनौ रूपं तदेवोहेऽपि स्यादित्यर्थः। यथा तृतीयेऽहनि तरणिरित (जै. सं. १. २५. ३) इति योन्या समानरूपः। यथा च चतुर्थेऽहनि पृश्निराश्रयते। अनयोः साम्नोः पर्वणां प्रस्तावादीनां किञ्चिदपि एकमेव पर्व नाप्याद्रियते न विकारमेति।

१ को. सलु ?
२ को. ०रमापन्नं व साम ?
३ को. बृहद्वा त्रिंश०
४ को. प्रत्यक्ते ?
५ को. वापत्ति
६ को. समाने

ननु पृश्निन उद्गीथादौ योन्यामदृष्टः क्रुष्टः क्रुष्टस्वरो दृश्यते। नेयं विचारणा चाचार्येणापि कृता[1]। पर्वणामक्षरप्रमाणगताधिकृता। अनयोः पर्वणामक्षरप्रमाणविकारो न दृश्यत इत्यर्थः। किं पुनरिदमूहे बहवः स्वरगता विकारा दृश्यन्ते, राजनरौहिणकपिकर्णसहोमहःप्रभृतीनां क्रुष्टादयः वाजदा-परीच्यापनमहावैराजादीनां विकारं न पश्यामः। क्वास्य विशेषलक्षणमाचार्येणोक्तम्। न चेदाचार्येणोक्तम्, एवं चेत् कथमेतज्जानीमो, नास्त्यत्र वेति। अस्योहपास्यो कृतकत्वादचोद्यमेतत्। एवं चेत्, प्रमाणविचारणापि न कार्या। स्वयं सिद्धत्वात्। ऊह्यसामार्थन्तु कर्तव्यम्[2]। ऊह्यसामार्थन्तु स्वरविचारणापि कर्तव्येति चेन्न, योनिवशादूढानुकृत्या चोहानां स्वरो निश्चेतव्यः। तन्निश्चयोपायमाचार्यो ऽपि कञ्चिदुक्तवान्[3]। अर्थेषः परप्रदेशो भवति इत्यधिकृत्य उदात्तानुदात्ते ह्रस्वदीर्घे परोक्षप्रत्यक्षे यथा यथा वल्गु मन्येत तथा तथा गायेत् इति। तस्मादूह्यार्थमक्षरविचारणा कर्तव्यैव।

**अपि···मिति**। अग्नि नरः (जै. सं. १.७.६) पर्यू षु (जै. सं. १.४२.२) इति वामदेव्यम्। अया रुचा[4] (जै. सं. १.३८.६) इति गायत्रपार्श्वम्। **तमा—मात्राम्**। यस्मादत्र गीतानि गीतप्रमाणानि ज्यायसी-छन्दोमात्रां प्रति उद्गुह्यन्ते ज्यायश्छन्दःप्रमाणसकलीकरणाय वर्धन्ते। तस्मात् तूदूह इति केचिदाचक्षते। तमेमात्रामूर्ध्वमुप्यन्ते इत्यस्मात् कारणादुद्वाप इति तमा नक्षते केचित्। अपि यं रक्षन्ति जै. सं १.२०.१) इति[5]। उपो षु (जै. सं. १.५१.१) इति। श्रुधी हवं[6] (जै. सं. १.३६.५) इति हिन्वन्ति (जै. सं. ३.२१.१६) इति पिशोपिशीयं कनीयश्छन्द आपन्ने तमेमात्राम्,[7] किमुदूहादिभिः संज्ञाभिः प्रयोजनम्, देवोऽपि दूरे। तन्नायमस्मद्गोचरः। किन्तु सूत्रान्तरगतानामेतासां संज्ञानां रूपप्रदर्शनार्थमिति मन्तव्यम्।

**अत्र...सेत**। उपचयसंहारयोः स्थानमावाप इत्युच्यते। निग...वापः। गतिरहितः प्रदेशो निगद इत्युच्यते। तदावस्थानं तस्मिन् दद्यात्। यानि योनेरधिकान्यक्षराणि तान्यावाप एव निदध्यात्। तस्मात् संहारस्थानमपि तदेव। **अप्ये...र्यते**। एकेनाप्यक्षरेण धार्यते, निगदा न शून्यं स्यात्। **त्रयं···धनं**। नच प्रस्तावं प्रतिहारं निधनमेव त्रयं व्यापादयितुमिच्छेत्। **प्रस्ता···स्येति**। अत्यल्पमिदमुच्यते। वसिष्ठगोतमभरद्वाजा-गस्त्यार्काणां वरिष्ठस्य च प्रस्तावो व्यापद्यते। नैष दोषः, तेषां विभाग्यत्वात्।·········ल्लो व्यवहारः नाक्षरशः। सुमन्मावस्वीरन्तीत्यस्यां वारवन्तीयस्यैकाक्षरः प्रस्तावोऽस्ति। तदेकं क्षन्तव्यम्। अथवा सर्वमप्युक्तं मन्तव्यम् इति कारणात्। **प्रति···यते**। **शुध्य···वति**। **निध···यत**। क्वचिदपि निधनं न व्यापद्यते। **अपि···यन्ति**। बृहद्रथन्तरयज्ञायज्ञीयानामुत्तरयोः स्तोत्रिययोः व्यतीषज्यं संतप्तं प्रस्तावयन्ति। पूर्वस्य ऋचोऽन्तेन प्रदेशेनोत्तरस्या आदिमासन्धयेदित्यर्थः। **प्रगा···र्षावा**। **अगू···क्षरे**। ऋग्गूढं सामोढमिति द्वयमाचार्या आचक्षते तत्कथमिति चेत्, **यथा···दिति**। योनौ यथास्वरं निधनं भवति। तथैव स्वरमुत्तरयोः स्तोत्रिययोः कुर्वन्ति केचिदाचार्याः। यथा हरिवर्णस्य निधनानि तत्सामोढं नाम। **अथ···विष्यत**। यया ऋक्स्वरवशेन निधनस्वरो भवति पूर्वस्यां तथोत्तरयोरपि ऋक्स्वरवशेनैव कुर्वन्ति केचिदाचार्याः। यदिदं साम अस्यामृचि दृष्टमभविष्यत् ऋक्स्वरानुगतस्वरमेवाभविष्यत्। तस्मादृग्वशेनैव स्वरो भवितुमर्हति। **तह···भाग**। **ऋगु···भुवः**। ऋग्गूढः पन्नानं धानञ्जय्य आश्रितवान्। **सोमो···ण्डिल्यं-उ·········**युक्त एवाह।

इति पर्यध्याये [ऊहलक्षणं नाम] विंशतिः खण्डः

---

| | | |
|---|---|---|
| १ को. न कृता | २ को. कर्त्तव्या | ३ को. कश्चिदू० ? |
| ४ को. ऋचा ? | ५ को. यमिति ? | ३ को. श्रुधीयं |
| ७ को. तमे-मात्रां तमे-मात्रां | | |

# अथ एकविंशः खण्डः

तत् स्वर···तीति। ऋक्स्वरवशान्निधनस्वरविकारे प्रत्युक्ते इदमुच्यते, को धर्मो निधनानि निपातयतीति विकरोति चोदयति। इदं शब्दो निपातो मन्तव्यः। अथवा सुपां सुलुक् (पा० ७. १, ३९) इति छान्दसेन प्रयोगेण [भवितव्यम्]·········को धर्मो विशेष्यताम्। एतानि वा निधनानि विशेष्यन्ताम्। अथवा निधनानि विनिपातयतीति को धर्मोऽवबोधयतीति, उदा···ब्रूयात्। योनिगतमनादृत्य स्वरमनेकधा धर्मरूपाणि निधनानि दृश्यन्ते, तत्र का हेतुरिति पृष्ठ आह······क्तौ स्वरौ निधनानि विकुरुत इति ब्रूयात्। अथवा इदं वाक्यद्वयमेकीकृत्य व्याख्येयम्। को धर्मो विनिपातयतीति, इदं वस्तु यदि कश्चित् पृच्छति, तत्र खलु ऋग्गतोदात्तानुदात्तकृतो विकार इति ब्रूयात्। अथ···············स्वरनानात्वज्ञापनोपायप्रदर्शनार्थमाह। यत्रो···ष्टना। यस्य पदस्यान्ते द्वे वा त्रीणि वाक्षराणि अनुदात्तानि भवन्ति तत्र तदन्त्यमक्षरं द्वितीयात् स्वरादारभ्य सकृदेव प्रकर्षति। किमेकमेवास्य कर्षणम् क एवमाह,············त्ते द्विः कर्त्तव्यम्। अत्राधोमुखरोहणं कर्षणमित्युच्यते। सकृदेवावरोहति। न पुनः पुनः प्रत्यारोहतीत्यर्थः। परस्मिन् वाक्ये निर्णेष्यते। तत्र द्विः परिकर्षतीति चत्वारि कर्षणानि सन्ति।······························रिति वक्तुं शक्यम्। कुतः पुनरान्धीगवमध्ये निधनस्य द्वितीयं कर्षणं कुर्वन्ति, तदध्येतृप्रमादं मन्यामहे। इदमिव निधनं सा [न्धे] कर्षणद्वयसहितं दृश्यते। इल·························लक्षणेन सिद्धानि इलान्दयशः- सौमित्रमहादिवाकीर्त्यपदस्तोभादिषु कर्षणद्वययुक्तान्येव दृश्यन्ते। क्वचिदेककर्षणयुक्तं दृश्यते। तस्माद् द्वे एव कर्षणे स्याताम्। अथ···श्रियां। यस्य पादस्योत्तममक्षरमुदात्तं भवति यस्य···············रभ्य क्रमेणावरुह्य पुनरपि समुदादाय किंचिदारुह्य पुनरवरोहति। अथ···बुताः। यदि पादस्योत्तममक्षरमुदात्तं भवति तदा तदक्षरं तृतीयात् स्वरात् प्रत्युत्क्रामति। प्रथमेऽवसीयत इत्यर्थः। यत्वि···एष। धर्मे··························नयतीत्येतदवगन्तव्यम्। इत्यु···विद्यात्। उभय ऊह इति विद्यात्। इयदस्माभिः पूर्वपटलान्ते तदेतद्विषयमिति विद्यात्। यत्रोदात्तानुदात्ताभ्यां निधनविकारस्तत्रैव नान्यत्रेत्यर्थः। त्रिविधादस्मिन् निधनस्वरादन्ये स..................स्वरमनाश्रित्य भवन्ति। पद...श्चेति। धातुरवयवः समानावयवः सधातुः। पच्छसधातुः। पदसधातुः। अष्टाक्षरसधातुः। अक्षरसधातुः। पदसधातुरक्षरसधातुश्च द्वावूहविशेषौ विद्येते। गाय...त इति। एतस्य गायत्रस्य योनावष्टाक्षरः प्रस्तावः।.................. गत्यापन्नस्यापि अष्टाक्षरेणैव प्रस्तावयन्ति केचिदाचार्याः। सोक्ष...रुहः। पद...वन्ति। गायत्रत्वादष्टाक्षरमेव तत्र पदं। पदं...रम्वा। इह पदं त्रिष्टुब्जगत्योरेकाक्षरं[1] वा द्वादशाक्षरं[2] वा स्यात् तत्र। यथा...सति। ...............दत्रापि सर्वपदप्रस्तावमेव केचिदिच्छन्ति। स्व...रूहः। उभ...विद्यात्। उभयं युक्तमेव। उप...ऊचेति। आगन्तुकेनाचारेणावधीयते इत्यवधिः। ऋगक्षरप्रमाणं यावदृचम्। एतावपि द्वावूहौ विशेषौ स्तः। सम्यु...इति। स...............यदग्नेस्त्रीणिधनं सोम उष्या? इति पञ्चमेऽहनि न्यूनां बृहतीमापद्यते। तत्रो...यन्ति। आगन्तुकैरक्षरैः पादपूरणं कृत्वा गायन्ति। याव...मेके। उप...मूव। याप...ण्डिल्यः। उभ...विद्यात्।

इति पर्यध्याये एकविंशः खण्डः

---

१ को. ०दशाक्षरो २ को. द्वादशाक्षरो

# अथ द्वाविंशतिः खण्डः

व्यूहश्चेति।·········व्यूहोऽपि······पुनरावर्तनम्। एतावपि ह्वावू विशेषे विद्यते। ऋष···तीश्च। बृहतीष्वप्यस्तीत्यनुमातव्यम्। सङ्कृतिश्च प्लविष्णह। तत्र···र्वन्ति। तत्र तेष्वेवैकपदाभ्यासेन चातुष्पदं वा पाञ्चपदं वा कुर्वन्त्येके। व्यूहा···विनः। ·········ञ्च पदं वावयवं कुर्मः। एव वति। एवं कृते ऋगक्षराणामनतिरेचनं भवति। व्यूहे...इति। उ इति निपात एकार्थे। एकेनैव तच्छब्दं[1] प्रतिविभवामः। ऋषभशाक्वरसङ्कृतिनोर्योनिच्छन्दः पाञ्चपदम्, ऊहच्छन्दश्चातुष्पदम्। तत्रै............कुर्मः। व्यूहेन यदसाम्यं कृत्वा योनिच्छन्दोऽनुगृह्णीम इत्यर्थः[2]। भाल्लविन इति कृत्वा वयं व्यूहपक्षमाश्रिताः। ते...तृदन्तः। अथा...हन्तः। संहान्तः प्रतिहर्तारमल्पभाजं कुर्वन्तः। अथा...इति। पोष इति कर्मणि घञ् अर्हार्थे। पोषणीयः पोषणार्हः। अल्पविभवत्वात् पोषयितुमशक्ता वयं प्रतिहारस्थानभूततृतीयपदव्यूहकरणाभिवृद्धधनुग्रहेणापि प्रतिहर्तारं पोषयिष्याम इति मन्यमानास्तृतीयपदं व्यूहन्ति। द्विती...ण्डिनः। कस्य...रिति। इति पृच्छति। एवं...वन्ति। यो—भू इति। भूयिष्ठभागी ह्युद्गाता, स इदं द्वितीयं पदं द्वेधा विभक्तं विभजमानो भू.. .........द्वितीयं व्यूहन्ति। यद्व व्यन्ते इति निपातोऽवधारणायामेव। यदुद्गातैवैनत्पदं भजते तेनाप्यविलोपः। अविकारं मन्यन्ते। द्वितीयं विभक्तमप्येककर्तृत्वादविलुप्तं मन्तव्यमित्यर्थः। एम...सतः। बृह...हामः। बृहतीषु चेत् सङ्कृतिस्तदा तृतीयमेव पदं व्यूहनीयम्। यद् द्वितीयं कुत इति चेत्, तद्धि...वति। ज्या हि बृहत्यां तृतीयं पदं ज्याय एव हि व्यूहनीयम्। कथं विभाग इति चेत्, अष्टौ...रीति। अष्टौ अक्षराणि पूर्वभागश्चत्वार्युत्तर भाग इति व्यूहेत्। चत्वा...हैके। चतुरक्षरं पूर्वभागं कृत्वा अष्टाक्षरमुत्तरभागं कुर्वन्त्येके। एव...हामः। तद्धि...भवन्ति। अष्टौ...रीति। चत्वा...हैके। उभ-विद्यात्।

इति पर्यध्याये द्वाविंशतिः खण्डः

---

१ को. तच्छब्दः ?    २ को. इत्यर्थम

# अथ त्रयोविंशतिः खण्डः

अभ्य···ञ्चेति । अभ्यस्तमनभ्यस्तमिति द्वावप्यूहविशेषौ स्तः । गौरी—वति । यच्छब्दोऽध्याहार्यः । यद् गौरीवितस्य ऋक्छन्दो गायत्री । गायत्र्यामुत्पन्नमित्यर्थः । अनु···छन्दः । उत्तमस्य पदस्याभ्यासात् अनुष्टुप् संपद्यते, तस्मादनुष्टुप्सामच्छन्दः । तद दन्तः । अनुष्टुभ आपन्नं गौरीवितं नाभ्यस्यति केचित् । अस्येदं सामच्छन्द इति वदन्तः अभ्यस्यन्त्येके । वैखा···वति । जग···छन्दः । तन्न···दन्तः । अभ्यस्यन्त्येके । अभ्य···भूप । अनजगौ···वादा···त्याहुः । भाल्लविनो वयम् । तद्ध···इति । मह्यं क्वचिदप्यभ्यासो न रोचत इत्याह गौतमः । यदि···मिति । यदि त्वभ्यासं कर्तुमिच्छेत्, सर्वपादाभ्यासान्येवाभ्यस्येत्, यस्मादेवं कृते छन्द ईप्सितो भवति । त्रिपदा गायत्री एकपदाभ्यासेन चतुष्पदानुष्टुप् संपद्यते । अनुष्टुप् पङ्क्तिः सम्पद्यते । तस्मात्सर्वपदान्येवाभ्यस्येत् । अथ···मिति । यान्यसर्वपदाभ्यासानि तानि नाभ्यस्येत् । नहि तानि छन्दईप्सायै भवन्ति[1] वैखानसमिव तस्मात् नाभ्यस्येत् । कथमेतज्जानीमो वयम्, गौरीविते अनुष्टुप् सर्वपदाभ्यासेन पङ्क्तिः सम्पद्यते । वैखानसे जगती सर्वपदाभ्यासेन अतिशक्वरी संपद्यते इति । अत्र ब्रूमः—न केवलमक्षरसङ्ख्ययैव छन्दो भवति, पदव्यवस्था अत्रापीष्यते । वैखानसस्याभ्यासकरणे पदानां वैषम्याद् व्यवस्था न भवति । तस्माच्छन्दईप्सा न भवति । अपरं मतम्—छन्दः शब्देनात्र मन्त्रोऽभिधीयते । अर्थवान् हि मन्त्रः । पदैरर्थप्रतीतिः । वैखानसे चतुर्भिक्षरैरभ्यस्यमाने पदविलोपाः[2] प्रसजन्ति । विलुप्तेषु पदेष्वर्थप्रतीतिर्न स्यात् । असमर्थे मन्त्रत्वं हीयेत । तस्मादेकदेशोऽभ्यासश्छन्दईप्सायै न भवति । सर्वपदाभ्यासे त्वयं दोषो न भवति ।

विस्तरेणोक्तमाचार्येणेदमूहस्य लक्षणम् ।
अतोऽन्यच्चिन्त्यमूहानां साम्नां योनेश्च वीक्षणात् ।

इति पर्यध्याये [ ऊहलक्षणे ] त्रयोविंशतिः खण्डः

इति पर्यध्याये पञ्चमोऽध्यायः समाप्तः

---

१ को. भवति    २ को. पदविलोपः

# अथ चतुर्विंशतिः खराडः

कल्प··· इति । कल्पानां[1] समयः कल्पसमयः । इमं षष्ठमध्यायं कल्पसमयः इत्याचार्याः समाचक्षते[2] । यस्मादस्मिन्नध्याये देवतातश्छन्दः[3] सामान्ततन्त्रजानि निमित्तेन पञ्चतयेन मार्गेण कल्पानन्वेति अनुसरति । अनुक्रान्तां क्लृप्तिं प्राप्नोति । इममध्यायं तस्मात् कल्पसमय इत्याचक्षते । पञ्चतयेनेति तृतीया विभक्तिः । देवतात इति पञ्चमी । कथमत्र सामानाधिकरण्यम्, अत्र ब्रूमः—देवतादिकारणादुपक्रान्तेन मार्गेणेति सम्बन्धः कर्तव्यः । कल्पशब्देनात्र स्तोभविषया क्लृप्तिरुच्यते । कस्मादयमध्यायो नाम्ना निर्दिश्यते, नेतरे केचिदप्युच्यन्ते । अन्यशाखाभिप्रायवर्णननिरतेन पूर्वाचार्येण कृतान्महतो ग्रन्थादिममध्यायमवखण्डचास्मिन् पर्यध्याये निहितवान् । न मया संदृब्धोऽयं ग्रन्थ इति ज्ञापनार्थं नामग्रहणं कृतम् । युक्तं ह्य तत्तन्त्रविरोधिनामपि विधीनां विश्वजित्शिल्पे चेति च तृतीयेऽहनि ककुभ आपद्यन्ते इति च अरिष्टं च विशोविशीयं चेति चेत्येवमत्रासिद्धानां सिद्धवदनुवाददर्शनात् ।

**तत्र···स्यामः** । तत्र देवतादिकारणादुपक्रम्यमाणं मार्गं प्रथमं व्याख्यास्यामः । **सर्वे···मानाः** । त्रयः पवमानाः सोमदेवत्या वेदितव्याः । **एष···न्यायः** । अयमेव न्यायोऽस्माभिः परिग्राह्यः । किमयमेव न्याय्यो विधिरन्याय्या अन्ये, सोमदेवत्यः परिग्राह्य इत्येतदर्थम् । **अथ—गिनाम्** । व्याहृतदेवताः प्रतिपन्नदेवता सुविभक्तदेवताः शाटचायनीनामाचार्याणां मतेन त्रयोऽपि पवमानाः पृथग्देवत्या एव स्युरित्येतदर्थम् । तद्यथा अग्नेवति प्रथमो बहिष्पवमानोऽग्निदेवत्यो भवति । वाय—तीयः । आदि—तीय । एव हि श्रूयते—त्रयो ह वा एते समुद्रा यत् पवमानो अग्निर्वायुरसावादित्य इति । किमाग्नेयवायव्यादित्यदेवताभि ऋग्भिः पवमानान् कथयन्ति शाटचायनिनः । नैवम्, ऋचः सौम्या एव । अग्निर्वायुरसावादित्यः इति श्रुतेः सौम्याः सन्तोऽप्याग्नेयवायव्यादित्यदेवताश्च देवता इत्यर्थः । यथाग्नेयं प्रातःसवनमैन्द्रं माध्यन्दिनं, वैश्वदेवं तृतीयसवनमिति । तद्वदत्रापि वेदितव्यम् । अथ च वायव्यादित्यदेवतानामृचामसंभवादेव न शक्यते तथा कल्पयितुम् । **अथा...ष्टुत्सु** । अग्निष्टुत्सु सर्वे पवमानाः आग्नेया एव स्युः । किमर्थं बहुवचननिर्देशः, एक एव ह्यग्निष्टुत्, ये ब्राह्मणविहितास्त्रिवृदग्निष्टुदादयस्तेषामपि परिग्रहार्थम् ।

**अथा···चेति** । विश्वजिदादीनां पवमानेषु सोमान्या अपि देवता अन्ववयन्ति, भजन्ते । विश्वजिति बहिष्पवमाने वायुः सरस्वान् बृहस्पतिः सरस्वती सविता अग्निरिति विद्यन्ते । विश्वजिच्छिल्पो नाम तन्त्रेऽस्मिन्नक्लृप्तः, परतन्त्रे विद्यते । तत्राप्येता देवता भिद्यन्ते इति मन्तव्यम् । ता एव राजसूये सति चातुर्मास्येषु विश्वेदेवाः । मरुत्वान् को वायुः विश्वकर्मा सूर्यः इत्येवमादयः । उपहव्यस्यानिरुक्तत्वात्, अनिरुक्तो वै प्रजापतिरिति वचनात् प्रजापतिर्देवता ।

ननूपहव्ये चातुर्मास्येषु पावमानानामृचः सौम्या एव, सत्यमेतत् । अनिरुक्तपवमानानां सौम्यानामपि सतां प्राजापत्यतैवेष्टेत्येतमर्थं[4] व्यञ्जयितुमुक्तम् 'उपहव्ये देवतान्ववायवचनम्' इति कल्प्यम् ।

---

१ को. कल्पनायां ?  २ को. साचक्षते  ३ को. देवताच्छन्दः  ४ को. ०तविष्टेत्येमर्थं

किमर्थं सौम्यानां प्राजापत्यता विधीयते, प्रयोगकाले तद्देवतानुध्यानार्थम् । अवश्यमनुध्येया हि देवता मन्त्राणाम् । चातुर्मास्येष्वसमस्तन्त्रेऽल्पा देवता न दृश्यन्ते । ब्राह्मणेऽदृष्टत्वात् परेषामस्तीत्यनुमातव्यम् ।

अथ···एव । आज्यानां देवता वक्तुमयमारम्भः । सर्वस्मिन्नहनि व्याप्ताः सतीश्चतस्रोऽपि देवताः प्रातःसवन[1] [ए।] वोद्गाता[1] करोति, विधत्ते । अहनीति रात्रिनिरासार्थम्[2] । काश्चतस्र इति, सोमोऽग्निरिन्द्रो मित्रावरुणाविति । आज्यदेवता वक्तुमारंभः इति भवता पूर्वमुक्तम् । अथ पवमानदेवता सोमोऽत्र गण्यते । अग्निः, मित्रावरुणौ, इन्द्रः, इन्द्राग्नी इति कल्प्यम् । तद्देवतानामृचामाज्येष्वक्लृप्ति· दर्शनात् । ब्राह्मणे चाग्नेयीषु स्तुत्यादिदर्शनाच्च । प्रातः सवन इति वचनात् सोमोऽपि गण्यत एव । कथमग्निरिन्द्रो मित्रावरुणविति ज्ञायन्ते, सौम्याः पवमाना इति वचनात् सोम एका देवता । आग्नेयं प्रातः सवनमैन्द्रं माध्यन्दिनं सवनं, वैश्वदेवं तृतीयसवनमिति तिस्रो देवताः । विश्वेषु देवेषु मित्रावरुणौ परिगृहीतौ ।

अध्व···रुत । अध्वर्युश्च होता च प्रातः सवने सर्वस्मिन्नहनि च भूयसीर्देवताः कुरुतः । उद्गाता चतस्र एव करोति । कस्य—रिति । कस्य हेतोः कुरुतः । सर्वस्मिन्नहनि व्याप्ता देवताः प्रातः सवन एव । कस्य हेतोरुद्गाता करोतीति चोदयन्ति । अग्र···पद्यः । लम्भनं[3] प्रापणम् । प्रथमाभिष्टुतसोमलम्भनार्थम्[4] चतस्रो देवताः प्रातः सवन एव करोतीत्याह वैयाघ्रपद्यः । एव···न्यते । यथा कुटुम्बिनः स्वेषु गृहेषु प्रथमं संस्कृतादाहा[5][रा ?]दादाय मान्यमतिथिमागतं मानयन्ति । सोऽति निरन्तरितः परिभूतो मन्यते । एवमेता अपि देवताः प्रथमाभिष्टुतात् सोमादन्तरिता मन्यन्ते हि । सया...इति । अहर्देवताः सर्वाः प्रथमा-भिष्टुतं सोमलंभयिता यथास्थानमेव विप्रयोक्ष्ये इति मत्वा प्रातः सवने चतस्र एव करोतीत्ययमभिप्रयो वैयाघ्रपद्यस्य ।

ताण्ड्यो ह स्माह । किमाह, वक्ष्यति । आग्ने···वनम् । ऐन्द्र···वनम् । वैश्व···वनम् । इत्येवमित्थं[6] सवनदेवता विहिताः । तद्वै···च्छति । विश्वेदेवा एव वैश्वदेवम् । स्वार्थे तद्धितः । तृतीयसवनदेवताभूतं वैश्वदेवं तृतीयसवनाल्लुप्तं, तत्रालब्धावकाशमप्रयुज्यमानं प्रथमातिक्रमस्य न्याय्यत्वात् प्रातःसवन-मेवागच्छन्ति । आर्भवसौम्यः, उत्तराण्याग्नेयैन्द्राणि । तस्मात् तृतीयसवनदेवतापि तृतीयसवनप्रयोगं[7] न लभते । तस्मात्तत्रालभमाना प्रातःसवनमेवागच्छन्ति । अत्य...वैति । अत्यक्रमीदेकदेवत्यतां प्रातः सवनं, तस्मादहमपि तत्रैव प्रवेक्ष्यामीति मत्वा इन्द्रोऽप्यन्ववैति, इतीत्थमाह स्म ताण्ड्यः ।

आर्त···स्माह । आर्तभागो नामाह स्माचार्यः । यो ह वचनम् । अग्निरेव प्रातःसवनदेवता । सो-ऽमीमांस्यः । स इति तत्रार्थे । तस्मिन्नर्थे सोऽग्निरमीमांस्यः । सर्वशाखाध्यायिनामविरोधः । अत्र ह वै । अत्र सोमशब्दयोरध्याहारः कर्त्तव्यः । यः सोमः स एवेन्द्रो वदितव्यः । सोऽन्व···वति । इन्द्रः कृतदेवता-द्वारेण । सोऽग्निमनुगन्ता भवति । अथवायं प्रमादपाठः । य इन्द्रो ह वा इति मूलपाठः । यो ह···वति । यः कश्चित् सोमो विद्यते सोऽवश्यमैन्द्र एव भवति । इन्द्रो हि यज्ञदेवता । अन्त्य इति ··लाम···ह स्माह । असा···

---

१ को. ०सवनपोदाता ?  २ को. ०त्रिनिरासार्थः  ३ को. लम्वनं  ४ को. लम्वनार्थं
५ को. संस्कृतादाहावायमाय्यमामतिथि मागतं मन्तप्यन्ति  ६ को. इति वकामित्थं
७ को. सस्तृतीयसवनप्रयोगं

शिष्टं । खलु शब्दश्चेदर्थे कल्प्यः । अनानात्वं चेत् प्रातःसवनस्य स्यात् । येन केनचिद्रूपेण नानात्वं प्रातः सवनस्य न विद्यते चेत्, अवशिष्टमेव प्रातःसवनं भवति । एकरूपत्वाद् विशेषोपलब्धिर्न विद्यते । तत् कथमिति चेत् । एकश्छन्दः । एकमेव छन्दः प्रातः सवने । गायत्रमेव[1] । एकं साम गायत्रमेव[2] साम । एकः सामान्तः स्वार एव । स···यतीति । स इति तत्रार्थे, तत्रैवं सन्ति । छन्दांसि च सामानि च । सामान्तांश्च नानारूपाणि कर्तुमहं यदि नाशकं. नानाकर्तु मे शक्तिर्नास्ति, तथापि देवतानानात्वमेव वा मे भविष्यति इति कृत्वा आज्येषु नाना देवता विहिता इति लामकायन आह स्म ।

तत...येति । तस्मिन्नर्थे तथा ब्राह्मणमाचष्टे । सर्वाण्याज्यानि स्वाराणि तज्जामिर्भवति तस्मात् नानादेवत्यैराज्यैः स्तुवत्यजामित्वाय इति ब्राह्मणम् । तथानेन अनेकाचार्यमतिभेदयुक्तेन महता ग्रन्थेन कोऽर्थः प्रतिपादितः । प्रातः सवने चतस्रो देवताः सन्तीत्येतावत् प्रतिपादितम् । कथमासां विषयक्रमनामानि च जानीमः, अत्र ब्रूमः—ब्राह्मणवचनेनाज्यविषयत्वमेव गम्यते । इतरत् सर्वं सूत्र एव विहितम् । ते पञ्चदशे-नाग्नेयेनाज्येन[3] इत्येवमादिना[3] ग्रन्थेन । एवं चेदयमाज्याधिकृतो[4] ग्रन्थोऽनर्थकः संवृत्तः । नानर्थकः । प्रतिस्तोत्रं ऋतुदेवता च वनदेवता च स्तोत्रदेवता च युगपन्मिथो वा यथाबलं सम्यग् अनुध्यातव्या इत्येतमर्थं प्रतिपादयितुमभिहितो ग्रन्थः ।

सर्वा...ष्टानि । एष न्यायः । अथातो...य । वामदेव्यं सर्वदेवत्यं वेदितव्यमनिरुक्तत्वात् । सर्वासां देवतानामनिरुद्धमित्यर्थः ।

अथा...ष्टुत्सु । अथा—व्ये । उपहव्यस्यानिरुक्तत्वात् प्रजापतिर्देवता न्याय्या, तथापि बहुवचन-निर्देशात् उग्रोवृषा पुरोवसुरिति ध्येयाः । अन्ववयन्तीत्यत्र[5] [।] नुशब्दप्रयोगादिन्द्रोऽपि[5] यज्ञदेवतात्वाद-नुध्येयः । आग्ने...साम । एष न्यायः । अथा...वति । यदि रेवतीर्नः ( ज. सं. १. १६. ९ ) इत्यासु वारवन्ती-यमग्निष्टोम साम स्यात् तदा इन्द्रो अस्या देवता वेदितव्या । अथा...वति । वायव्यासु चेद्, वायुर्देवता । अस्मत्तन्त्रे वायव्यासु न विद्यते परेषामस्तीति मन्तव्यम् । अथा...वति । देवो वः ( जै. सं. १. ६. १ ) इत्यासु चातुर्मास्येष्वग्निष्टोम साम अस्तीति चेत्, तदाग्निर्देवता स्यात् । तदा 'आग्नेयमग्निष्टोम सामे-त्यनेनैव सिद्धत्वादयं विधिरनर्थकः । नानर्थकः । उपहव्येऽप्यनिरुक्तत्वादासामृचां प्राजापत्यप्रतिपादनार्थ-त्वात् । अस्मच्चातुर्मास्येषु नास्ति । आग्ने...मुक्थम् । ऐन्द्रे...अपरे । ऐन्द्रषोडशी । ऐन्द्रो...पेयः । वाजपेये-नाग्निक्रतौ सप्तदशं स्तोत्रमत्र वाजपेयेनोच्यते । ऐन्द्री...रात्रिः । अतिरात्रे रात्रिपर्यायो रात्रिशब्देनोच्यते । न क्वाप्येति । रात्रेरिन्द्र एव देवता, क्वचिदपि विकारं न भजते । उत शाखान्तरेष्वपि । पूर्वे विधयः क्वचिच्छाखान्तरेषु अन्यदेवताकत्वमपि भजन्त इत्यनुमातव्यम् । त्रिदे...सन्धिः । अग्नि-विति । एतास्तिस्रो देवताः । आग्नेयं स्तोत्रमाप्तोर्यामे । सन्धेरुत्तराणि बहिष्ठानि, एष न्यायः । क्वचित्क्वचिदन्यान्यपि छन्दांसि आपद्यन्ते । पृष्ठानि गायत्र्यो वामदेव्यं भजन्ते । अत्रिचतूरात्रस्योत्तरे[6] ऽहनी वर्जयित्वा तयोः परस्मिन् ककुभः । तस्मिन्नेव तृतीयेऽहनि[7] होतुःपृष्ठं गायत्र्यः, चतुर्थेऽनुष्टुभः । सर्वस्वारे गर्गत्रिरात्रस्यो-पोत्तमे चाचार्योऽपि क्वचित् प्रदर्शयति । तृती...द्यन्ते । व्यूढे दशरात्र इति वक्ष्यति । तृतीयेऽहनि ककुभ आपद्यन्ते । अस्मत्तन्त्रे न विद्यते । चतु...द्यन्ते । महाविराजस्योच्चो ? विराजः । त्रैशोकस्य प्रथमा जगती ।

---

१ मो. मायत्रेव  २ को. गायतमेव  ३ को. आग्नेयेन येनेत्ये०
४ को. चोदमाज्यान्यधि०  ५ को. अन्वयन्तीत्यत्रनुशब्द०  ६ को. अत्रिचकू
७ को. तृतीयेहि

जगत्य इति बहुवचनं स्तोत्रियापेक्षं मन्तव्यम् । पंच...यन्ते । शक्वर्यो महानाम्नीषु, पङ्क्तयो बार्हद्गिरायो-वाजीययाः । षष्ठे...द्यन्ते । त्रीणि पृष्ठानि गायत्र्यः । चतुर्थं[1] गायत्रम्[1] । दश...द्यन्ते । दशमेऽहनि गायत्रीषु पृष्ठान्यापद्यन्ते । एकमेव गायत्रीषु पृष्ठम् । बहुवचनेन निर्देशो नैष दोषः । ब्राह्मणास्तर्प्यन्ते इति वदन् एकमेव तर्पयंश्चरितार्थो न भवति । यथा च—इमा गाः ब्राह्मणा गृह्णन्तु इत्युक्ते एक एव ता गृह्णन्न दुष्यति । यथा पृष्ठानामेकस्मिन् गायत्रीषु आपद्यमाने पृष्ठान्यापद्यन्ते इति वक्तुं न दोषः । पृष्ठेषु छन्दसां व्यतिचारो दृश्यत इत्येतावदत्र प्रतिपाद्यते । तदनुरूपेण व्याख्येयम् । व्यूढे···रात्रे । उक्तान्येतानि व्यूढे दशरात्र इति वेदितव्यानि । यथा—वति । व्रते···वति । महाव्रते तदिदास (जै. सं. ४. ५. ५) इति । राजानं पृष्ठं छन्दः क्वचित् क्वचिदापद्यते । छन्दो अहनि सप्तमाष्टमनवमदशमेषु अभिजिति चाक्षरपङ्क्तयो भवन्ति । अथा—विति । प्र प्रति [त्यं] (जै. सं. १. २ ६) प्र धन्वा (जै. सं. १. ५८. ७) अया रुचा (जै. सं. १. ४८. ६) इति तत्र विद्यते । यत्रे ति । यत्र यत्र द्विपदाश्चातिच्छन्दांसि च विद्यन्ते तत्र तत्र सप्तछन्दांसीति वेदितव्यानि । उपेतो···न्यत् । अथा···ध्याश्च । तद्या···दन्ति । अथ···वन्ति । अथा रात्रे । त्र्यहे त्रिष्टुभो द्वितीये गायत्र्यः । बाह...साम । एष न्यायः । अथा...यन्ते । गोतमचतुष्टोमे गायत्रीककुभनुष्टुभ आपद्यन्तेऽग्निष्टोम साम । दरा...द्यते । विराट्स्विति प्रथमार्थे सप्तमी । सुपां सुपो भवन्तीति छन्दसो विधिरस्ति । अथवा बहुवचननिर्देशोऽध्येतृप्रमादादागतः । आपद्यत इति सुपाठः इति मन्तव्यः । विश्व-ये च । अत्रापि तथैव । गाय ··मुक्थम् । ककुप्तरे । ककुप्सु द्वितीयमुक्थमनुष्टुप्सु तृतीयम् ।

ननु नार्मेधस्य प्रथमा ककुप् तृतीयोष्णिक्, सत्यमेतत् । तयोरुष्णिक्ककुभोः सत्योरपि ब्राह्मणेऽनुष्टुब्भक्तिरभिहितेति कृत्वा तयोरुष्णिक्ककुभा च नमना [दा]हृतमाचार्येण । अयमर्थो ब्राह्मणेन विस्पष्टमभिहितः । तदाहुः यन्ति वा एतेऽनुष्टुभो य उष्णिक्ष्वच्छावाकसाम अधिकुर्वन्ति इत्यधिकृत्य तेनानुष्टुभो नयन्ति । यैतासामुत्तमासां प्रत्यक्षानुष्टुप् तेनानुष्टुभो नयन्ति इति ब्राह्मणम् । पुरो···ङ्शी । इन्द्र जुषस्व इति चतुस्त्रिंशदक्षरत्वात् परोक्षानुष्टुबित्युच्यते । एकवचनं छन्दोपेक्षम् । एष न्यायः । अथा···वति । केषांचिदस्तीति मन्तव्यम् । त्रैष्टु···पेयः । वाजपेये सप्तदशस्तोत्रमत्र[1] वाजपेयशब्देनोच्यते । तत्रैष्टुभं···प्रतवते··· अद्यं ति । अभ्या ··रात्रिः । रात्रिपर्यायसाम्नां गायत्राणां सतामेकपदाभ्यासेनानुष्टुभः संपद्यन्ते । बार्हतः सन्धिः । गाय[त्रो]त्थानि अप्तोर्यामस्यान्त्यानि चत्वारि स्तोत्राण्यतिरिक्तोत्थानीत्युच्यते । अत्रानुक्तान्यपि प्रयुज्यमानानि छन्दांसि दृश्यन्ते । गायत्रं प्रथममुक्थमित्युक्तम् । पञ्च हि पंक्तयो दृश्यन्ते । षष्ठे द्विपदा । नवमे ककुभः । द्वितीयमुक्थं ककुप्सूक्तम् । द्वितीये हि गायत्र्यो दृश्यन्ते । उष्णिहः तृतीये । पञ्चमेऽष्टमे नवमे च षष्ठे द्विपदा । तृतीयमुक्थमनुष्टुप्सु विहितम् । षष्ठे द्विपदा दृश्यन्ते । एकच्छन्दा अप्यार्भवो विद्यते । एकत्रिके त्रिछन्दस्सु अत्रिचतूरात्रस्य तृतीयेऽह्नि होतपृष्ठं गायत्रम् । चतुर्थे आनुष्टुभम् । मैत्रावरुणसाम बार्हतं काकुभञ्च ।

दशरात्रस्य द्वितीये त्र्यहे प्रतिपदो जगत्यास्तृतीये त्रिष्टुभः । दशपेयस्य बहिष्पवमाने 'यज्ञायज्ञा वो अग्नयः' (जै. सं. १. ४. १) इति बृहत्यः सन्ति । राजसूयस्य अधा क्षपा परिकृतः (जै. सं ४. २४ २) इति अनुष्टुभो दृश्यन्ते । कथमिदमल्पमशेषं परिहर्तव्यम्, अयमस्य परिहारः—इदमखिलमाचार्येण जैमिनिना कृतम् । अस्य षष्ठाध्यायस्य कर्ताचार्योऽन्य इति नहि शक्यम् । आचार्ययोः भिन्नशाखाध्यायिनोः द्वयोर्मतैक्यकरणम् । तस्मादचोद्यमेतत् । इति...दस्त । कल्पनसमयोऽभिहितः ।

इति पर्यध्याये चतुर्विंशतिः खण्डः ।

---

1 को. सप्तदशश्रोत०

# अथ षड्विंशः सप्तविंशश्च खण्डौ

अथा···वादः । साम्नामन्तः सामान्तः, सामान्तानां वादः सामान्तवादः । वक्ष्यत इत्यध्याहार्यम्. एक···त्याहुः । एक एव, एकविध एव सामान्त इति केचिदाचार्या आहुः । कस्य...दिति । समा···मान्तं । समाप्यते निधनमेति[1] । समापनं निधनमित्यर्थः । निधनान्येव हि विधिषु शोष्यन्ते । यत् साम्नः समापनं सः[2] सामान्तो[2] वेदितव्यः । तद्य···प्यते । तत्र ऋग् गीयमाना हि येन केनचिद् रूपेण स्वैर्वाक्षरैरागन्तुकैर्वा स्तोभाक्षरैः समाप्यते समाप्तिं गच्छति । एवमेकैव निधनजातिः । तस्य एक एव सामान्तः । एकमेव वाक्यं समाप्यते । अत्र सम्बन्धो व्यवहितः । ऋग्गीयमाना येन केन चिन्निधनेन ऋङ्निधनेन वा समाप्यते तत् साम्नः समापनं, स एव सामान्तो वेदितव्यः । एते···भवति । एतेन प्रदेशेन निर्देशेन दर्शनेन मार्गेण एकः सामान्तो भवति । निधनजातेरेकत्वात् । त्रिषु तु तावदिदम्, किमर्थमियं सामान्तविधारणा, जामिपरिहारार्था । कस्माज्जामि परिह्रियते, वचनात् । किं वचनम्, साम । जामि न कल्पयेत् इति । एवं चेत् तत्रैव न स्वरेण सह कुर्यात् 'न निधनवती नैष्टेन क्रमे' इति गुरुणा यत्नेन ब्राह्मणे वचनमदर्शयत् । अयमभिप्रायः—न स्वारे सह कुर्यान्निधनवती नैष्टेन क्रमे इत्येवमादि विधिजातमनेकमस्माभिरनुग्राह्यम् विज्ञायते । तदनुरोधेन साम जामि न कल्पयेदिति । तस्मात् प्रजापतिः यस्माद्याने प्रजा असृजत इत्यस्मिन्नध्याये ये विधयो दृष्टास्ते चास्माभिरनुग्राह्या एव । तत्र चत्वारो दृष्टा भेदाः । कति सामानीति, चत्वारि इति ब्रूयात् इति च । तान्य ह वै त्रीण्येव इति च । तदु ह वा एकमेव इति च । तेषामुत्तमः पक्षोऽत्र प्रथममभिहितः एकः सासान्त इति । यद्येकः सामान्तः, सर्वा सामक्लृप्तिः जामिसागरे पतिता । नैष दोषः । विज्ञानविषयो ह्ययं विधिः । यदि जाम्यापद्येत, तदानीमेवं विज्ञातव्यम् । यथा आरब्धानां साम्नां समापनमवश्यभावित्वात् सर्वसामान्याच्च एकरूपमिति ध्यातव्यम्, समापनस्यैकत्वात् । अवश्यकल्प्यानां बहूनां साम्नां कथं जामि परिहर्तव्यम्. साम्नामवश्यकल्प्यत्वात् जामिपरिहारासंभवाच्चादोष एव तावन्नास्तीति ध्यातव्यम्[4] । तथा च श्रूयते—स यो हैवं विद्वान् जामिकल्पयत्यजाम्येव अस्य तत्क्लृप्तं भवति इति किं नालम्, स यदि स्वारे सह कुर्यात् इत्यादिना ग्रन्थेन प्रतिपादितो ध्यानक्रमः । असौ प्रमादक्लृप्तिविषयः । को ह वा प्रमादस्येशः, उत वै प्रैव माद्यति इत्यधिकृत्य असौ प्रवृत्तः । अयमवश्यभाविविषयत्वादवश्यभाविविषयः स्वारमग्निष्टोम साम कुर्युः इति वचनात् दैर्घश्रवसमग्निष्टोमसामविहितं तत्र कावेन स्वारजामि भवति । तत्रायं ध्यानक्रमः ।

नन्विदमपि जामिप्रमादकृतमेव, नैवम् । नैमित्तिकं दीर्घश्रवसम् । कथं च महाव्रते बृहद्रथन्तरभद्राज्नानि निधनवन्ति, तेषां वचनमूलोऽवश्यंभाविसन्निपातः । तत्राप्येवं ध्यातव्यम् । तदु—स्याताम् । तन्मतमतिक्रम्य प्रक्रामेच्चेत् प्रारभेत चेत्, द्वावेव सामान्तौ स्याताम्[5] । यदा सामान्तान् द्विधा कृत्वा जामि परिहर्तुं शक्यते तदा द्विधैव कल्प्यौ । नैकधेत्यर्थः । आ च—नी च । ऋगवयवनिधनान्येको भागः । इत्थं भेत्तव्यम् । तद्य...धनम् । ऋगवयवे ऋक्शब्दः । ऋगवयवेन यस्य निधनं तत् समार्चिकनिधनम् । अथ...धनम् । निधनमित्यध्याहार्यम् । एते···वतः ।

---

१ को. न तन्वामेति    २ को. यः समान्तो ?    ३ को. किमर्थोऽयं
४ को. ध्यातव्यः    ५ को. स्यात्

नन्वेवं ब्राह्मणेन विसंवदति । ते उ ह वै द्वे एव स्वारं चैव निधनवच्च इति श्रूयते । नात्र विसंवादः । स्वारशब्दः सर्वसाधारणीभूतो दृष्टः । त दु ह वा एकमेव स्वारमेवेति इदमपि तत्र प्रदर्शितम् । राथन्तरबार्हत-भेदेन तद्यन्तः संतिष्ठते तद्रथन्तरमथ यदृचमतिस्वरति तद्बार्हतम् इति ।

तद्··· यस्युः । सं सृ-यः स्यात् । तद्य वा इति । इति वा निधनमन्वेष्टव्यम्[1] । एत··· वन्ति । किमिद-मिति········· वदति । तान्यु ह वै त्रीण्येव स्वार निधनवदैष्टम् इति । ऐष्टं हि तत्र तृतीयं कामं विसंवदतु । न शक्यमस्माभिर्मतान्तरगतान् विधीन् संवदितुम् । अन्यशाखाध्यायिनाचार्येण तद्गतमभिप्रायं वर्णयित्वा विरचितोऽयमध्याय इति पूर्वं प्रतिपादितम् ।

तद्··· रस्युः । वाङ्नि··· र्थम् । संज्ञायाम् । चतुर्थमृक्समं सामान्तविधो नास्ति । किमस्ति, वाङ्नि-धनम् । तत् वाङ्निधनमधिकृत्य शाखान्तरश्लोको भवति । 'वाक्चतुर्थाश्चत्वार. सामान्ताः स्युः । तेषामेकोऽनुष्टुप् भागो वाक्शब्दोऽधिकृतो यतिर्बभूव । स न बहुकृत्वः प्रयुज्यते । इतरे पुनः प्रयुञ्जते । एको हि स्वामी बहवोऽ-नुचरास्तदिदं मन्तव्यम् । एते··· वन्ति । तद्··· मिति । यावन्तो निधनानां रूपभेदास्तावन्तः[2] सामभेदा भवेयु-रित्यपर मतम् । तं तु··· क्षते । तं तु खलु सामान्तमेकं वा[3] सन्त[3] द्वौ वा सन्तौ बहून् सतश्चतुर्धा कृत्वा यज्ञे व्याचक्षते विकल्पयन्ति, सति सम्भवे । असम्भवकृतमितरत् । कस्य··· रिति । छन्दाः...क्षाश्च । सर्वाणि छन्दांसि आश्रितानि भवन्तीत्यर्थः । कानि तानि, चत्वारीत्युच्यते । त्रीणि ह वै छन्दांसि यज्ञं वहन्ति, गायत्री त्रिष्टुब् जगती, तदेषानुष्टुबान्तादन्वायत्ता इति श्रुतिविहितान्येतानि । उत्तरैरपि वाक्यैरेतान्यपि ज्ञायन्ते । छन्दः··· विध्यम् । चतुर्णां छन्दसामनुकरणाय सामान्तानामपि चातुर्विध्यम् भवति । अथवा । चत्वारः सामान्ता इत्येतदन्तं वाक्यं भवितुं चत्वारः सामान्ता इत्युक्तम् । चातुर्विध्यं छन्दसामनुगतं वेदितव्यम् । तथा च श्रूयते—सोऽग्निः गायत्र्या स्वाराण्यसृजत् इत्यादिना ग्रन्थेन ।

चत्वा··· ता इति । चत्वारः सामान्ता इति भवतोच्यते । चतुर्थो न दृश्यते । कोऽभिप्रायः सोऽग्नि-र्गायत्र्याः स्वाराण्यसृजत इत्यत्र चत्वारः सामान्ता विहिताः । अथ यद् ऋक्समं स्वारं वावत मन्यन्ते सामा········· ·························समस्तस्य स्वारस्य च जाम्यजामिता इति च श्रूयते । त्रीणि ह वै निधनानि इति च श्रूयते । ऐष्टस्वार निधनवतामेव व्यवहारो दृश्यते । श्रुतितो वा व्यवहारतो वा चतुर्थं न पश्याम[4] इत्यय-मभिप्रायः विद्यते ।

छन्दो··· श्यन्त । छन्दोमातिरात्रस्य मध्यन्दिनान्त्येषु वाङ्निधनान्येव दृश्यन्ते । दृश्यन्त इति कोऽ-भिप्रायः, वाङ्निधनमनिष्टत्वात् नैष्टम् । यज्ञायज्ञीयस्य वाङ्निधनस्य कावशाकमश्वयोः[5] स्वारर्कसमयोः[5] मध्यपतितत्वात् स्वारलक्षणाभावाच्च न स्वारत्वम् । पारिशेष्यान्निधनवत्सामान्याच्च[6] निधनान्तर्भावो युज्यते । तदन्तर्भावे विरोधं पश्यामः । कथमिति चेत्, व·· ···················नां मध्यन्दिनान्त्येषु प्रवद्भा-र्गवविशालसामराजानि वाङ्निधनानि, तदनन्तरं निधनवतीबृहद्रथन्तरे दृश्येते । तेन ज्ञायते, न निधनवत्सु वाङ्निधनमन्तर्भूतमिति । तस्माच्चतुर्थः सामान्तो वाङ्निधनं दृश्यत एवेत्याभिप्रायः । निधनकामब्राह्मणे च तथा श्रूयते—नैव स्वारं, नैव निधनवदेष्टं, नैवर्कसमं तद् वाङ्निधनं भवति इति । तस्माच्चतुर्थं वाङ्निधन-

---

१ को. ०मन्वेष्टव्यः २ को. रूपभराः ३ को. वासं तदौ
४ को. पत्याम ? ५ को. कावक्षाकमश्रयोस्वानक्समपोद० ६ को. ०धनत्वात्०

मस्त्येव । तद्या···यानि । अस्मत्तन्त्रे स्वारमाग्नेयं तद्देवतयेति श्रूयते—वायुर्हि स्वरः प्राणः स्वारः प्राणो हि वायुः, तस्मात् स्वारं वायव्यम्, तद्या [न्यैं] न्द्राणि, ऐन्द्री हि त्रिष्टुप्, त्रिष्टुभ इन्द्रो देवता, त्रिष्टुब्नुगतानि निधनवन्ति, तस्मान्निधनवन्त्यैंतव्यानि । तद्या···वाङि...वैश्व···गतो । जगत्या देवता विश्वेदेवाः, जगत्यनुगतान्यैष्टानि वैश्वदेवानि । तद्या—त्यानि । । प्रजा हि वाक् वाचो देवता प्रजापतिः । तस्मात् प्राजापत्यानि वाङ्निधनानि । कथं कथं स्वारवाङ्निधनयोश्च तङा सम्बन्धो नोक्तः, वाङ्निधनस्यानुष्टुब्भाग इत्यानुष्टुभमभिहितम् । पारिशेष्यात् स्वारं गायत्रं भवति ।

एते···मुक्तं । छन्दःशब्देनात्र मन्त्राम्नायः सरहस्य परिगृहीतः । एतेन सामान्यविधायिना प्रदेशेन सर्वेषां छन्दस्यानां साम्नां निधनाश्रितमार्षेयमुक्तम् । कथं निधनानामार्षेयमिति न गृह्यते, नेति । यस्या न इत्यस्य अध्याय··············तारमाचार्यमपेक्षते स चाचार्यः स्वशाखायामविगतमर्थमवोचदिति[१] मन्तव्यम् । किमस्माकमप्येवं ग्राह्यम्, नैवम् । आग्नेयं हि न स्वारम् । स्वारमाग्नेयं तद्देवतया इति हि श्रूयते । एवं चेत्, वाङ्निधनस्य देवतां न पश्यामः । प्रजापतिमेव हि अविद्यमानमस्मत्त [ न्त्रेऽत्र ] स्यग्राह्यं परोक्तमपि गृह्णीमः, तस्मात् प्रजापतिरेव वाङ्निधनस्य देवता । कथमेतदार्षेयम्, आर्षेयगणमेव नोक्तम्, देवताभिधानातिदेशात् प्रयत्नलाघवमतिदेश्यात्रैव[२] विहितम् । स्वारादीनाँ या देवता विहितास्ता एवार्षेये वेदितव्याः इत्युक्तं भवति । उभयोरार्षेययोः भिन्नकर्तृक [त्वाद] चोद्यमेतत् । किमिदमार्षेयं वक्ष्यमाणेनार्षेयेण समुच्चीयते. आहोस्विद् विकल्प्यते, समुच्चायिक इति ब्रूमः । यदि विकल्पमैशिष्यत्, अनेनैकेन यत्नेनार्थसिद्धेरमुं गुरुयत्नमार्षेयगणं नाकरिष्यत् । इष्टपरिग्रहार्थमिति चेन्न, कोन्वल्पयत्नेनापि सिद्धेः गुरु यत्नमातिष्ठेत् । को वासीनग्राह्यफलार्थमारोहेत् । ननु सर्वत्र विकल्पविषये दे·········मस्त्येव । यथा सोमक्रयणे शमीशाखया पलाशशाखया वेति । आधाने षड् द्वादश विंशतीरिति च । आरूढवदाङ्गिरसं कायम्वेति च । इति न । अलाभविषयः । सामक्रयणे शम्यलाभे पलाश इत्यशक्तिविषयः । आधाने चतुर्विंशत्यशक्तौ द्वादस, द्वादशाशक्तौ षडिति । कावाङ्गिरसयोः पूर्वाह्णापराह्णभेदेनापि विकल्पो वक्तव्यः । एवं देवताद्वयवि·········नसे संकल्पः । अग्निश्चेन्द्रश्च तुल्यावेव । तस्मात् समुच्चय एव ग्राह्यः ।

एव साम उदाहृत्य दर्शयितव्यम् । पर्कस्याग्निः देवता, गायत्रीछन्दः, ऋषिः गौतमः । अथ निधनवत्वादिन्द्रो देवता, त्रिष्टुप्छन्दः, ऋषिरिन्द्रः । एवमितराण्यपि बलवता युगपदनुस्मरणं युगपदभ्युपगन्तव्यम् । इन्द्रः त्रिष्टुभो देवता मत्सरः ? तस्मात् साधूक्तं 'समुच्चय इति' इति । इति · वदः । धा · वादः । एक···मेव । 'ज्योतिष्टोममेवैकं तन्त्रं सर्वेषां क्रतूनां तन्त्रं भवति' इत्याहुराचार्याः ।

कस्य···रिति । एतद्धि...तमः । एतद्धि सङ्कीर्णतमः सम्यग् गतिवशेन स्तीर्णन् । सम्यगवनवशेषमाम्नायेन च सूत्रेण च क्लृप्तमित्यर्थः । एत···न इति । एतस्य ज्योतिष्टोमतन्त्रस्य सर्वगतत्वं सर्वक्रतुं व्याप्रियते इति । तस्मात् ज्योतिष्टोमतन्त्रस्यैव सर्वगतत्वं विद्यात् ।

देत···वरम् । अपरं मतम्—ज्योतिश्चेति । ज्योतिस्तन्त्रगोतन्त्रयोर्भेदपरिज्ञानोपायमाह—यस्यो··· स्तन्त्रम् । अथ · स्तन्त्रम् । समक्लप्तयोस्तत्र तयोः गायत्र्योरभावात् एतदध्यायप्रणेत्राचार्येणात्मीयतन्त्रकल्पाभिप्राय उक्तः इति । अथ—वत् । अनुलोमतन्त्रश्च कश्चित्क्रतुरस्ति । प्रतिलोमतन्त्रः कश्चिदस्ति ।

---

१ को. ०र्थमवोवदति ?  २ को. ०मतिदेश्या० ?

रूपं तयोरुच्यते । यस्यो···तन्त्रः । अथ—तन्त्रः । एवमपि क्वचिद्भवतः त्रीणि । परं···एत । किञ्च मासरात्रिकतन्त्रमनेकमपि सङ्घातचरत्वादेकं कृत्वा तृतीयमिति निर्दिष्टम् । एता...न्त इति । एतानि त्रीणि तन्त्राणि भेदेन विधीयन्ते । सप्त परं—एत । कानि दशरात्रिकाणां दशानां, कानि परिगृहीतानि, कानि निरस्तानि, चतुर्थपञ्चमषष्ठाष्टमनवमानि च परिगृहीतानि । आज्यपृष्ठसामान्यात् प्रथमो ज्योतिस्तन्त्रः । मध्यन्दिनगायत्रीसामान्यात् तृतीयं दशमं च ज्योतिस्तन्त्रमेव । द्वितीयमाज्यपृष्ठाभंवगायत्रीसामान्यात् गोतन्त्रम् । यस्ते मदागादार्भवीयाः कथिताः । सप्तमस्य वक्ष्यति । इतराणि पञ्च गोज्योतिषोरत्यन्तभिन्नत्वात् परिगृहीतानि ।

अथ···यत्···वती । द्वितीयवतः सप्तमं गायत्रीव । इदमपरं मतम् । तत्-के·दिति । तन्त्रमेकमार्भवं त्वनेकं वा । तत्रेदं चिन्त्यम्, केन मार्गेण तन्त्रं जानीयादिति पृच्छति । प्रति···म्नेति : प्रतिपादादयः शब्दा ये जातिवाचकाः पवमानानां प्रतिपद्भिस्तन्त्रं विज्ञातव्यम् । तथा पृष्ठैस्तथाग्निष्टोमसाम्ना तथा सन्धिषाम्ना । अग्निष्टोमसन्धिसाम्नोरस्माकमेकरूपत्वात् परेषां तन्त्रं नानात्वमतीत्यानुमातव्यम् । द्वाभ्यां···या च । तयोः············तरा । तयोर्माध्यन्दिनीयापि अनित्यतरा व्यभिचारिणी अपि दृश्यते । क्वचिन्न दृश्यते । तस्मादनित्या स्यात् । इति वादः ।

इति पर्यध्याये सप्तविंशतिः खण्डः

# अथ अष्टविंशतिः खण्डः

**अथा···ति···ता···रथ···णाय**। राथन्तरयोरह्नोः[१] सन्निपाते रथन्तरजामि स्याच्चेत्, अजामिकरणार्थमुत्तरस्याह्नः[२]। तयोरस्य प्रत्नमित्यनुरूपं कल्पयेत्। 'राथन्तरयोरह्नोरिति' इयता सिद्धेः 'रथन्तरजामि चेत्' इति वचनं रथन्तरप्रधानप्रतिषेधार्थम्। रथन्तरप्रधानयोरह्नोर्बृहतो व्यवहितत्वादजामि भवति। 'रथन्तरजामि चेत् स्यात्' इतीयता सिद्धेः रथन्तरयोरह्नोरिति वचन राथन्तरेऽतिरात्रे[३] पृष्ठैः सन्धिषाम्नोः जामिशङ्कानिवृत्त्यर्थम्। अत्राव्यवधानत्वात्[४] बृहता रथन्तरजामीत्युच्यते। बहिष्पवमानस्य द्वितीये तृचेऽनुरूपः शब्दः प्रसिद्धः। **बृह··णाय**। कण्वरथन्तरं माध्यन्दिने पवमाने बृहत्यां कल्पयेत्। क्वैवं प्रसङ्गः, रथन्तरपृष्ठा दशाग्निष्टोमा इत्येवमादिषु। **तत्र[५]···यं च**। तत्रेति निर्धारणे। तेष्वेव सामान्तेष्वेतान्यैष्टानि सन्निपतन्ति। अरिष्टविशोविशीये सन्निपततः। कौत्सजराबोधीये च। क्वायं सन्निपातः, अन्वेष्टव्यम्। किन्तु कौत्सजराबोधीययोरिदमन्विष्य लब्धमस्ति। द्वादशाहस्य प्रायणीयब्राह्मणे जराबोधीयेनाश्विभ्यां स्तुवन्तीति। अस्मिन् पक्षे कौत्सजराबोधीययोः इदमन्विष्य लब्धमस्ति। द्वादशाहस्य प्रायणीयब्रह्मणे श्रूयमाणत्वादत्र दोषो नास्तीत्यनुमातव्यम्। यैरेषां जामिकृत तेषा ब्राह्मणमेवमस्तीत्यनुमातव्यम्। स्तोत्रान्तरगतानां सोमोक्थग्रहव्यवधानात् जामिदोषाभाव उक्तः। एकस्तोत्रगतानां कथं परिहर्तव्यमित्याशङ्कायामाह—**अर्थ···पद्य**। यदा जामि परिह्रियते तदा अर्थो न सिध्यति। यदा अर्थः परिह्रियते तदा अजामि भवति। एवमस्मिन् सङ्कते जामिकल्पादर्थ बलीयांसं मन्येतेति व्याघ्रपद्य आह स्म। **अर्थ···तेति**। तस्मादर्थमेवापेक्षेत[६] आश्रीयेत। क्वायं विधिः प्रयोजयति, महाव्रते स्तोत्रे बृहद्रथन्तरभद्रराजनानि। यत्र निधनवतां सन्निपातोऽस्ति तत्रायं विधिः सार्थको भवति। सन्धौ च त्रीणि रथन्तराणि सन्ति। तत्र चैवमादिषु आवश्यकेषु विधिषु सामान्तप्रकरणोक्तानि निदर्शनानि कर्तव्यानि।

इति पर्यध्याये अष्टाविंशः खण्डः।

इति पर्यध्याये षष्ठोऽध्यायः समाप्तः।

---

१ को. ०रयोरहोः  २ को. ०रस्याहः  ३ को. राथन्तरोऽति०
४ को. ०धानत्व् ?  ५ को. तत ?  ६ को ०मेवोपेसे०

# अथ ऊनत्रिंशः खण्डः

पूर्वे···च्छन्तं । यावन्तो ब्राह्मणाः सत्रमुपेतुमिच्छन्ति ते सर्वे सम्भूय पुरस्तात् संवत्सरं समवस्यन्ति सह वसन्ति अन्योऽन्यस्य चरणादीनि परीक्षमाणाः । पूर्ववचनादिदानींतनानां संवत्सरो नैकान्तिकः, यावता कालेन चरितादीनि सम्यक् परीक्षितुं शक्यन्ते तदत्रेति । तस्मिन्नर्थे ब्राह्मणमप्यस्ति । शुभं फलमाशीः शब्देनोच्यते । एषां सत्रिणां सत्रस्य फलमवश्यमेतावदेव । युक्तमेत्र ब्राह्मणं कृत्वोत्तिष्ठति । ब्राह्मणोक्तेन सह दीक्षन्तेऽदुर्ब्राह्मणेन सह दीक्षन्ते । तस्मादब्राह्मणोक्तेन सह न दीक्षेत । एवं सम्यक् परीक्ष्य दीक्षितव्यमित्ययमर्थः सिद्धो भवति ।

ते ह···दिति । त इति पुरस्तात् परीक्षिताः । भो...इति । नि भो इति निपातौ[1] । कर्मेति स्वधर्मानुष्ठानम् । बन्धवः पितृपितामहप्रपितामहाः । चरणं यमनियमादि पारलौकिकं धर्माचरणम् । प्रजा विज्ञानम् । येषामेते गुणाः संपन्नास्ते सर्वे यज्ञसंभारं संपाद्य पश्चात् सर्वे सह सम्भूय संवदन्ते प्रतिजानते । एवं प्रतिज्ञां कुर्वन्ति नाब्राह्मणस्य इत्यादिना मन्त्रेण संवदन्ते ।

इति पर्यध्याये एकोनत्रिंशत्खण्डः ।

---

१ को. नियातः

# अथ त्रिंशत्खण्डः

ते य...दन्ते । ते सत्रिणो यदेतस्मिन् विचारकर्मणि संपादयन्ति, अथाह्वामुपायेषु संवदन्ते सम्वादं कुर्वन्ति । नानाशाखाध्यायिनां सत्रिणां नानाशाखाप्रभवेष्वनेकेषु प्रयोगभेदेषु सत्सु आस्थातव्यप्रयोगनिश्चयार्थं सम्भूय विचारणा सम्वादः ।

अषो...निनः । अषोडशिको ऽतिरात्रः स्यादिति शाटचायनिशाखाध्यायिनो निश्चिन्वन्ति । इहैयत्रे गवामयनमेवाषोडशिकत्वम् । अथ...रिति । गवामयनादन्येषु सत्रेष्वतिरात्राः षोडशिमन्त एव न स्युः । कस्य...रिति । अष्टा...शिनि । सोऽयं श्रुतः आक्रियमाणे षोडशिनि अष्टाविंशतिस्तोत्रोऽतिरात्रो भवति । अष्टाविंशतिस्तोत्रत्वादयमतिरात्रो युग्मान् भवति । युग्म ..द्व...मिति । अथ शकटाद्यश्वबलीवर्दादिभिर्युग्मद्भिर्युक्तं द्रुततरं याति । तस्माद्गवामयने दीर्घकालगामित्वाद् द्रुतगमनहेतुको युग्मत्करणार्थषोडशिक एव स्यात् । अषोडशिकेऽतिरात्रे सति शीघ्रं गच्छतीति । एक...माणे । षोडशिनि क्रियमाण एकोनविंशत् स्तोत्राणि भवन्ति । तत् स्थूरि स्यादिति । एकवाह्यं गोण्यादि स्थूरिशब्देनोच्यते । षोडशिनि क्रियमाणे विषमत्वात् स्थूरि भवति । अथा...वति । सप...ध्मं वा । यदि गवामयने षोडशिसङ्कल्पावसरे[1] एषामर्शो[1] वा वर्ध्म वा व्याधिरभिजायते[2] । सध्ये ब्रूयुः । यदि पुंस एतेषु त्रिषु शिश्नवृषणेष्वतिरिक्तेषु उन्नतेषु सत्सु तेषां समीपे चतुर्थमुन्नतमुपजायेत, अस्यार्शो नाम वा व्याधिरजनि, वर्ध्मनाम वा इति जना ब्रूयुः । अर्शो नाम गुदप्रदेशे मांसपेशिरूपेण जायते । वर्ध्म वृषणयोर्वृद्धिः ।

एवं...येत । यदि स्त्रियाः जायेत तत्राप्येवमेव ब्रूयुः । स यो...वस्युः । यः कश्चिदतिरात्रेऽत्र षोडशिनं कुर्वाणानामेषामर्शो वा वर्ध्म वा जनिष्यत इति यदि ब्रूयात्, ते तथैव स्युः उक्तव्याधियुक्ता एव ते स्युः, तस्माद् गवामयने षोडशि न कार्यम् एतावद् ब्राह्मणम् । अथा...पदम् । अथायमपरो दोषः । अत्र षोडिशिनि क्रियमाणे ऽग्निष्टोमसम्पद् विहन्यते । अत्ये...पद । विराट्सम्पच्च विहन्यते । सर्वा...त्येति । काः सर्वा इत्युच्यन्ते। स्तुतशस्त्रसम्पत् स्तोत्रियासम्पत् पदसम्पत् अक्षरसम्पद् इति । तेना...मेति । तेनापि कारणेनात्र षोडशिनं न कुर्यात् । अथ...दिति । एवमनेकदोषकारिणं[3] षोडशिनमन्येषु सत्रेषु कस्मात् कुर्यादिति चोदयन्ति । अहो...राय । अहोरात्रयोः कृत्स्नीकरणाय कृत्स्नमहोरात्रमनेन ऋतुना व्याप्तं भवत्विति । यथा रात्रेरुपरिष्टात्सन्धिरशून्यो भवति । सन्धिना स्तोत्रेणैवं पुरस्तात् सन्धिरशून्यो भवतु षोडशिनेति । एत. .रिति । एते दोषा गवामयनिकमतिरात्रमधिकृत्योक्ताः । अन्यत्र विधिः, न प्रतिषेधाः । अकरणेऽयं दोषः, पूर्वसन्धिः शून्यो भवतीति । क्रियमाणे ऽहोरात्रं कृत्स्नमशून्यं भवतीत्ययं गुणः परिगृहीतो भवति । किं द्वादशाहे ऽपि, नैव, द्वे स्तोत्रिये पूर्वस्याहो विराजमतीतो, द्वे उत्तरस्येति द्वादशाहात्रिरात्रब्राह्मणे श्रूयते—तत्र षोडशिनि क्रियमाणे तिस्रः स्तोत्रियाः अतिरिच्यन्ते । तस्मादत्रापि न कर्तव्य एव ।

इति पर्यध्याये त्रिंशत् खण्डः

---

१ को. ०शिसङ्कल्परेवामर्शो ? २ को. व्याधिभिर्जा० ३ को. कुर्वाणानेषामर्शो ?

# अथ एकत्रिंशत्खण्डः

अनि···ह··स्यात् । आरंभणीयमहरग्निष्टोम एव स्यात् । नोक्थमिति । अग्निष्टोमनियमा-देवानुक्थ्यत्वसिद्धेरिदं वाक्यमनर्थकम्, तदुपेक्ष्यं भवति इति ब्राह्मणे श्रूयते । तदु ह वा आहुरग्निष्टोम एव कार्यः इति च श्रूयते । अग्निष्टोमता स्थितेति प्रतिभाति । स सन्धानान्तः पूर्ववाक्येनाभिहितः । पुनरग्निष्टोमप्रकरणे त्रीण्यारम्भणीयस्य ह्नोऽतियन्ति इति श्रूयते । अग्निष्टोमसम्पदभ्याघातायोत्तरत्र यत्नः करिष्यते । तदन्तरुक्थ्यमिति । कस्य...रिति । प्रत्य...नाय । कथं प्रतिवक्तव्यमित्याकांक्षायामाह—यथै... ष्यति । यथा अद उदयनीयस्यातिरात्रस्यानन्तरं महाव्रतमग्निष्टोमसंस्थं तथैव प्रायणीयस्यातिरात्रस्या-नन्तरमग्निष्टोमसंस्थमेव स्यादिति । तस्मादग्निष्टोमसंस्थमारम्भणीयमहर्भवेत् । एत—रिति । अपि—वन्ति । उक्थ्यं चेत् पञ्चदशचतुर्विंशानि स्तोत्राणि, अग्निष्टोमश्चेत् षट्त्रिंशानि[1] षट्चतुर्विंशानि । उभयथा तुल्यस्तोत्रियत्वादेतदहश्चतुर्विंशमित्याचक्षते । तदहा इति । तस्य द्वादश स्तोत्राणि भवन्ति । तेनाग्नि-ष्टोमः । तान्यु वेति द्वादश सन्ति । पञ्चदश चतुर्विंशानि स्तोत्राणि भवन्ति । तेनोक्थ्यः । स वा एषोऽग्निष्टोमः सन्नुक्थ्यः सन्नग्निष्टोमः इत्येवमादिदर्शनात् अन्तरुक्थ्यमित्याचक्ष्महे । अन्तरुक्थ्यत्वादग्निष्टोमसंपन्न विहन्यते ।

एका··वि··स्यात् । ज्योतिर्गौरायुरिति एकाहाः सन्ति । तेषामेव यन्त्रे क्लृप्तोऽभिप्लवो न स्यात् । न पृ[2]···तन्त्रः । न पृष्ठतन्त्रः स्यात् । एकाहतन्त्र एवाचार्येण कृतः । प्रतिज्ञा इयं, न सम्वादः । कः प्रतिज्ञासम्वादयोर्भेदः । व्यभिचरति सम्वादः । प्रतिज्ञा न व्यभिचरति । यत्र सहकारिभिरास्थिताः प्रयोगाः कारणवशाद् बलवन्तो भवन्ति, असमभिरास्थिताः दुर्बलाः तत्र कृतसम्वादो विप्रयोगो व्यभि-चरति, स सम्वादः । यत्र[3] सहकारिणोऽनपेक्ष्य विधिवशादेव प्रवर्तते प्रयोगः सा प्रतिज्ञा । अथ—येति । इमा एव बृहत्यो भवन्त्यभिप्लवे, इयमपि प्रतिज्ञा । षड् वंतः । षडहो व्यज्यते । आभिरिति षडहव्यञ्जना इव भवन्ति । इतरथैकबृहतीत्वात् षडहा दुर्ज्ञेया भवन्ति । कथं षडहानि तिसृभिर्बृहतीभिः कथ्यन्ते, अहर्वशात् षडहवशाद्वा तिसृभिर्वा षड्भिर्वा भवितव्यम् । सत्यमेतत् । गोद्वयस्य बार्हतत्वात् परीतो षिञ्चतामिति स्यात् । आयुर्द्वयस्य राथन्तरत्वात् प्र सोम (जै. सं. १. ५३. ५) इति । सा हि राथन्तरी बृहती । उत्तमस्य बार्हतत्वात् प्र सोम इति न । उभयरूपवती प्राकृते भवति । पुनानः (जै. सं ३. १७. १४) इति । अव्य···ष्यदिति । यद्येकाहतन्त्रमेवाव्याहतमभविष्यत्, अभिप्लवे व्यज्यतेऽनेनेति व्यञ्जनं, न व्यञ्जनमस्य षडहस्येत्यव्यञ्जनमेवाभविष्यत् । एकाहतन्त्रे केवले कल्प्यमाने ऐकाहिकः स्यात् । षडहप्रतीति-र्नोपलभ्यत इत्यर्थः । तस्मादेता बृहत्यः षडहव्यञ्जनार्थं कल्प्या एव ।

इति पर्यध्याये एकत्रिंशत्खण्डः ।

---

१ को. षट् षट् त्रि०    २ को. नष ?    ३ को. या

# अथ द्वात्रिंशत्खण्डः

अथा...मेव । अभिप्लवविकल्पानां विधिं वक्ष्याम इत्यर्थः । द्व्यन्त्य...नानान्त्यः । द्व्यन्त्यश्चतुरन्त्यो नानान्त्य इति त्रयोऽभिप्लवविकल्पाः । तनुद्व्यन्तं...दिति । अस्माभिः प्राकृते कल्पे क्लृप्तो द्व्यन्त इत्यर्थः । अथा...दन्त्यः । औहा...स्याताम् । अन्त्यसामनी स्याताम् । वसि...तानां । पार्थ...ष्डिनः । अथ...नान्त्यः । यानि...नि स्युः । पूर्वस्याभिप्लवत्र्यहस्य औशनतावपार्थयामशङ्कोशारिष्टान्येव पवमानान्त्यानि स्युः । वात्सप्रदाशस्पत्यश्रौष्टान्युत्तरस्याभिप्लवत्र्यहस्य मध्यन्दिनान्त्यानि स्युः । अथ···रिति । अचोदस इति । पञ्चमषष्ठादीनि । दत···मिति । उक्तमर्थमपि लोकोऽनुवदति[1] । येऽभिप्लवे श्यैतनौधसे प्रगाथावति-मन्यन्ते जहति ते दीर्घाध्वनि चक्रे रथचक्रे हित्वा पदातयस्सन्तः[2] यथो मार्गात् भ्रष्टा अपथिना दुर्मार्गेण पदातयो भूत्वा गच्छन्ति । तैः समानाः श्यैतनोधसे हित्वान्यानि सामानि कल्पयन्त इत्यर्थः । कथं प्रगाथशब्दो न पुंलिङ्गवाची, नाश्यैतनोधसशब्दं नपुंसकलिङ्गं विशेषयितुमुपपद्यते, नैष दोषः । प्रगाथसंबंधिनी श्यैतनोधसे प्रगाथावित्युच्यते । प्रगाथशब्दो हि नित्यं पुंलिङ्गे वर्तते । भिन्नरूपैरपि लिङ्गवचनैः विशेषणविशेष्यसम्बन्धः क्वचित् क्वचित् विद्यते । यथा जगती होता पङ्क्तिरध्वर्युर्विश्वदेवा अच्छावाक इति । अथवा । प्रगाथौ च श्यैतनौधसे चेति व्याख्येयम् । षडाज्यं षट् प्रउगमिति प्रदर्शितम् । तदादीनि सर्वाणि स्तुतशस्त्राणि यदि षडूहरूपाणि[3] स्तुतशस्त्राणि स्युः, सर्वे ऊहाः[4] समानरूपाः स्युः । अभिप्लवाश्च पृष्ठाश्च ते सर्वान् षडहान् सीरितन्त्रमिव तन्वाना आवर्तमाना अभिप्लवं मोहयन्ति । मुह्यन्ति । पृष्ठ्याभिप्लवयोस्तुल्यरूपत्वाद् विवेको नोपलभ्यते । सीरि नाम तनूद्धारिणी कीरजातिः । अपरं मतम्—कृषिसाधनं हलं सीरं नाम । सीरमेव सीरि । सीरितन्त्रं कर्षणमस्मिन् । लोके[5] द्विप्रगाथं च षडाज्यं च द्वावभिप्लवौ श्रुतौ । तस्मादभिप्लवस्य बहुरूपत्वमस्त्येवेति ज्ञायते ।

अत्र···कृत । अत्र खलु एष खलु द्व्यन्त्यनानान्त्येषु अभिप्लवविकल्पभेदेषु यो द्व्यन्त्यो विप्रगाथो द्विप्रगाथो द्व्याज्यस्तमेव कल्पमकृताचार्यः । प्राकृते द्व्यन्त्यमेवाकल्पयदित्यर्थः । तथैव क्लृप्तत्वादेव सिद्धेरिदं वाक्यमनर्थकम् । नानर्थकम् । विशेषनिर्देशाभावे द्व्यन्त एव कल्पो ग्राह्य इति ज्ञापनार्थत्वात् । तस्मादत्र संवादे एकाहं तन्त्रमभिप्लवं[6] गृह्णद्भिर्द्व्यन्त एव ग्राह्यः । कस्मादयमाचार्यः यं पदं नाकृतेति परोक्षरूपेण निर्दिशति, नैव दोषः । एवमेवाचार्यः क्वचित् क्वचिदेवाचष्टे—कल्पयेदाचार्यमाचार्याश्च जैमिनिमिति आश्वस्त्रिवर्गः सहस्रकृत्व इति जैमिनिरिति च ।

इति पर्यध्याये [अभिप्लवविकल्पविधिः] द्वात्रिंशत्खण्डः ।

---

१ को. श्लोकानु० २ को. वदातव्यः ? ३ को. षटस्वाहरू ?
४ को. षडहा ? ५ को. श्लोके ६ को. ०मभिप्लवां

# अथ त्रयस्त्रिंशत्खण्डः

अथा···मेव। विधिं वक्ष्याम इति शेषः। प्रत्य...म इति। एते षड् विकल्पाः। तन्नु···पृष्ठाः। स इति परतन्त्रे श्रूयते। अत्र प्रत्यक्षपृष्ठो वक्ष्यते। य ए···पृष्ठः। योऽसौ प्राकृते क्लृप्तः स प्रत्यक्षपृष्ठः। अध्वनीनमाम्नायब्राह्मणकल्पैः सम्यगभिहित इत्यर्थः। स एवावृङ्क्यापृष्ठः। स इति परतन्त्रे श्रूयते। सोऽपि प्रप्यक्षपृष्ठसदृश एव। कथमावृङ्क्यपृष्ठतेत्याकांक्षायामाह। बृह···तमे। बृहद्रथन्तरे हि पृष्ठत्वेनातीव सिद्धे बहुकृत्वः प्रयोगादनेकेषु क्रतुषु ते प्रयुज्येते। इतराणि क्वचित्। तस्मात्त एव प्रसिद्धे पृष्ठत्वेन। ते य...पृष्ठः। ते बृहद्रथन्तरे यदन्येषु वैरूपादिषु पृष्ठभूतेषु पवमानेष्वावृञ्छन्ति संपर्कयन्ति पवमानप्रवेशेन वैरूपादिभिः सम्पर्कं गच्छन्ति तेन वृङ्क्यशब्द-व्युत्पत्तिः। यद्यपि प्रत्यक्षपृष्ठावृङ्क्यपृष्ठयोः परेषां भेदो विद्यते तथापि भेदोऽस्माकं नास्तीति ब्रूमः। बृह···तमे। तेय···पृष्ठः। एवं चेदेकेनैव निर्देशेन सिद्धत्वादितरयोर्ग्रहणमनर्थकम्, नानर्थकम्। होतृभिर-ध्वर्युभिश्च निर्दिष्टयोः आपृङ्क्योपाङ्क्यपृष्ठयोरास्माकीना क्लृप्तिरेकरूपेति ज्ञापनार्थत्वात्।

अथ पृष्ठस्य परोक्षपृष्ठस्य च लक्षणं वक्ष्यामः। बृह···स्याताम्। प्रथमद्वितीययोरह्नोः रथन्तरं च बृहच्च स्याताम्। सिद्धेऽपि बृहद्रथन्तरे विशेषविवक्षार्थमुच्येते। अपि···मिति। अथवा प्रथमे कण्वरथन्तरं स्याद् द्वितीये बृहत्। अथचिदिति तृतीयस्याह्नो वैरूपस्य स्थाने एषामन्यतमत्स्यात्। अथ···दिति। यस्मादाचार्यो यत्र क्वचिच्चतुर्थतन्त्रेऽहनि वैराजरहिते निधनकामं न कल्पयेत्, अकल्पयदेव स वैराजे। तस्माद् वैराजभक्तिनिधनकाममिति प्रतीयते। तस्मादत्रापि वैराजाभावात् निधनकाममपोह्य तस्य स्थाने आमहीयवं कार्यम्। अथ···दिति। महानाम्नीनां स्थाने तयोरन्यतरत् स्यात्। स्वयं येन पृष्ठेऽहनि वारवन्ती-यपृष्ठेऽस्मात् स्वयमेव परोक्षम्। किमत्र पवमाने रेवत्यो न सन्ति, वैरूपादीनां सहचारिभावात् पवमाने-ऽपि न कर्तव्या रेवत्यः। एवं चेत् पवमानगतेऽपि बृहद्रथन्तरे त्याज्ये। कः संशयः, किं तु प्रथमयोः बृहद्र-थन्तरपृष्ठपक्षे तृतीयादीनां पवमानेऽहनि रथन्तरमपोह्य तस्य स्थाने यौधाजयं कल्प्यम्। चतुर्थेऽहनि बृहदपोह्य तस्य स्थाने आन्धीगवम्। आन्धीगवस्य स्थाने मधुश्चुन्निधनं च कल्प्यम्। पञ्चमे तु रथन्तर-मपोह्य रौरवयौधाजययोरन्यतरद् यथायोगं कल्प्यम्। षष्ठे तु रेवतीनां स्थानमामहीयवं बृहदपोह्य आन्धीगवं कल्प्यम्। अथ···ष्ठस्य। यानि···स्युः। षण्णामह्नां यानि ब्रह्मसामानि तानि तेषामेवाह्नां होतृपृष्ठानि स्युः। नौधसश्यैतवैष्टंभत्रैशोकबार्हद्गिराणि ऋषभो रैवतश्च स्युरित्यर्थः। अथ···नि स्युः। यानि बृहतीसामान्यन्येन्द्राणि द्व्यक्षरनिधनानि तानि ब्रह्मसामानि कल्प्यानि। तादृशानि सुलभानि। अत्र विशेषोऽस्ति, चिन्तितव्यम्। त्रिषु रथन्तरेषु अहःसु अन्तर्निधनानि, बार्हतेषु बहिर्निधनानि कल्प्यानि। अथ···मस्य-यथा···मा स्युः। यथा सप्तानां चतुरुत्तराणां गायत्र्यादीनां छन्दसामक्षराणि स्युः। एवमस्य स्तोमाः। प्रथमस्याह्नश्चतुर्विंशः स्तोमः स्यात्। द्वितीयस्याष्टाविंशः, तृतीयस्य द्वात्रिंशः, चतुर्थस्य षट्त्रिंशः, पञ्चमस्य चतुर्विंशः, षष्ठस्य चतुश्चत्वारिंशः। षष्ठ···वनम्। किन्तु षष्ठस्य तृतीयसवनमष्टाचत्वारिंशं भवति। प्रथमे सवने चतुश्चत्वारिंश एव स्याताम्।

इति पर्यध्याये [षड्विकल्पाः] त्रयस्त्रिंशत्खण्डः।

---

१ को. क्लप्तिरेव रू० ?

# अथ चतुस्त्रिंशत्खण्डः

छन्दोहस्तोमस्य ऋक्सामक्लृप्तिं वक्ष्यामः। राथन्तर्यः प्रतिपदः अस्य प्रत्नामनुद्युतम्[1] (जै. सं. ३. ११. १), एष प्रत्नेन जन्मनः[2] (जै. सं. ३. ११. ४), उपो षु जातमप्तुरम् (जै. सं. १. ५१. १), पर्युं षु[3] (जै. सं. १. ४२.२) इति बहिष्पवमानम्। गायत्रश्चेत् सोमसामशैशवे, कौल्मलबर्हिषयोधाजये, गायत्रसंहिते, गौरीवितशुद्धाशुद्धिये, पाञ्चवाजमेकस्यामौदकमैष्टं त्वाष्ट्रिसाम। प्रथमस्याह्न इतरत्। बार्हत्यः प्रतिपदस्तृतीयाच्चतुऋचादित्यादिभिः पञ्चभिः कल्पैः क्लृप्तानि। द्वितीयादीनि पञ्चाहानि, तेभ्यः परेण कल्पेन पूर्वसवने व्याख्याते। विशेषस्तु षष्ठेऽहन्यार्भवे श्यावाश्वञ्चोदञ्चतृचयोरिति स्यात म्। संवादाधिकारे पृष्ठ्यविकल्पविधानात् एवं प्रकारेण कृत एष संवाद इति मन्तव्यम्। एवं सति पृष्ठ्येनैव न पृष्ठ्य उक्तसम्वाद? इति वचनमुपपन्नं भवति। 'अत्रैषां विकल्पानां परिग्रहणीया' वचनात् अध्वर्युर्बह्वृचवशात् परिग्रहणीयनिर्णयो ऽभ्युपगत इति विज्ञायते। नाभि...महे। इदानीमभिजितिसम्वादं न कुर्मः। प्रयोगकाले एव सहकारिणां वचनबलमभिसमीक्ष्य निश्चिनुमः। अथवा न सर्वशः स्वास्वभिजितिसंवादो ऽस्ति। तस्मात् संवादामहे। अथवा। सहकारिणोऽपि स्वचोदनावशमनुतिष्ठन्तु। वयमपि यथाक्लृप्तमेवानुतिष्ठेम। किं बहुना यथाक्लृप्तमेवानुष्ठास्यामः। उक्थ्याः न स्युः। सिद्धमप्युत्तरविवक्षयोच्यते। नानि...इति। कस्व...रिति। ब्राह्म...वति। अस्मिन्नर्थे ब्राह्मणमस्ति। तदेवावलोक्य निश्चीयताम्। अतः परं ब्राह्मणम्—तान्वादन्तः। स्तोत्रैर्बृहतीः कर्तुमग्निष्टोमानेव स्वरसाम्ना एके कुर्वन्ति। बृहतीकरणं वक्ष्यते। ये वै...त्रीणि। त्रयाणामग्निष्टोमानां स्तोत्राणि षट्त्रिंशद् भवन्ति। कथमिति चेद्, द्वादशैकस्यैकस्याग्निष्टोमस्य हि द्वादश स्तोत्राणि स्युः। द्वादशैकस्य तत् षट्त्रिंशत्। तद् द्वादशत्रयं सम्भूय षट्त्रिंशत्संख्यं भवति। षट्त्रिंश.. हती। बृह...लोकः। सैतं स्पृशति। सा बृहती एतं स्वर्गं लोकं स्पृशति। स्वरसाम्नां स्वर्गिसंस्कृतो[4] बृहती सम्पन्नत्वादग्निष्टोमान् कुर्वतस्तान्[4] स्वर्गलोकं नयतीत्युक्तं[4] भवति। ते बृह···मेति। एवमनया बृहत्या स्वर्गं लोकं गच्छाम इति वदन्ति। स्वरसाम्नोऽग्निष्टोमान् कुर्वन्ति। ते ह···देवं। ते क्षुदादिभिः[5] दोषैर्हते लोके यथा अन्नहीनाः क्षुधा हते लोके मार्गं वा गच्छन्ति, एवं ते स्वर्गलोकं गच्छन्त्येव स्वर्गगमनमस्ति। समृद्धिर्नास्तीत्युक्त भवति। तस्मादग्निष्टोमपक्षे स्वरसामसु दोष एव स्यात्। अथ···वन्ति। यदि स्वरसामान उक्थ्या भवन्ति तत्र गुणान् वक्ष्यामः। पशु···क्थानि। पशुसंस्कृतान्युक्थानि। अन्नं पशवः। स यं यन्ति। यथान्नेन सह श्रेयांसं प्रतिवदन्तमुपेयात्, एवमेवैनं स्वर्गं लोकमेभिरुक्थैरन्नभूतैः समृद्धिमन्त उपयन्ति। अथो···जितौ। विश्वजिदभिजितौ देवकल्पसंस्कृतौ। अन्नमानाः स्वरसामानः उक्थ्यसंस्कृतत्वादन्नसंस्तुताः। स यथा···रन्ति। सूनानामतत्प्रकारा एलकाः विदलमयि वदलमपि वा सापिधाना यथा सूनायामन्नमासः समीपं हरन्ति? एवमेवास्मै यजमानाय स्वर्गं लोकं गच्छते स्वर्गलोकस्थाय वा पाथेयत्वात्[6]

---

१ को. प्रश्नाम०　　२ को. प्रश्नेन　　३ को. पर्यास ? (चिन्त्यः पाठः)

४ को. स्वर्गि संस्कृतबृहतीसंपन्नत्वादग्निष्टोमान् कुर्वन्तस्तान् स्वर्गलोकं गच्छतस्त

५ को. ०दिकम्भित ?　　६ को. वाध्येत्वात् ?

अन्नसंस्कृतान् स्वरसाम्नः विश्वजिदभिजिद्भ्यां कल्पसंस्तुताभ्यामुपहरन्ति । **अथो···यते** । अथाप्युक्थैः शान्तिरपि क्रियते । कथमिति चेत्, **अग्नि···मस्यात्** । एष वैश्वानरो यज्ञायज्ञीयम् इति श्रुतेरग्निष्टोम साम अग्निः स्यात् । **अग्नि···शस्त्रम्** । अग्निमारुतमपि शस्त्रं वैश्वानरदेवत्यत्वादग्निसंस्तुतम् । विषुवान्, विषुवानप्यादित्यसंस्तुतः । आदित्योऽग्निरेव । क एतांस्त्रीनग्नीनभ्यवेत्य तन्मध्यमभिप्रवेश्य को नु शोभते । को नु जीवेदित्यर्थः । **प्रद···शयितः** । अवश्यं दग्धः शयितः । तद्यवति । यस्मादेवं तस्मादग्निमारुतविषुवतोर्मध्ये उक्थानि भवन्ति । **वशं···क्थानि** । अन्नं पशवः । उक्थ्यरूपेणान्नेनोक्थ्यसंस्कृतेनान्नेनैतानग्नीन् अशमयन ननार्मेयति । नार्मेधेनान्तं गतेनोपरिस्थं विषुवदभिधानमग्निं शमयित्वा आन्तात् सत्रमुपयन्ति । इत्थं ब्राह्मणम् तस्मादुक्थ्या एव स्युः नाग्निष्टोमाः ।।

इति पर्यध्याये चतुस्त्रिंशत्खण्डः

# अथ षट्त्रिंशत्खण्डः

सर्वजित्···स्यात्। विश्वजित् सर्वपृष्ठ एव न स्यात्। किमाङ्गिरसामयने हि नैवम्, बृहत्पृष्ठमेव हि तत्र विहितम्। यत्र विशेषेण विश्वजिद्विधीयते तत्र सर्वपृष्ठो ग्राह्यः। न···वृ···इति। कस्य···दिति। अविषु···इति। यो विश्वजित्पृष्ठः स विश्वजिदेव न भवति। असर्वत्वम्। अथ···तीति। स्तोमादिभिः सर्वैः[1] युक्त एव विश्वजिद् भवतीति। आवर्तश्चेति। आवर्तः क्रमविपर्यासः। षडहयोरह्नामावर्तश्च स्यात्। अहानि प्रातिलोम्येन भवेयुः। षडहयोर्विपर्यासश्च स्यात्। अभिप्लवेभ्यः पूर्वः पृष्ठः स्यात्। षष्ठाहः प्रथमं भवेदित्यर्थः। क्वैवं क्रियमाणेऽह्नां जामि न भवति, क्व जामिप्रसङ्गः, पृष्ठ्यानामुत्तममपि बार्हतं विश्वजिदपि बृहदन्तत्वाद् बार्हतमपि कृत्वा तयोर्जामिदहरावृत्तौ सत्याम् असत्यां पुनः पृष्ठ्यप्रथमस्य राथन्तरत्वाद् जामि न स्यात्।

नन्वेवमभिप्लवोत्तमस्य च गोश्च बार्हतत्वादस्त्येव जामि। सत्यमेतत्। तदर्थं यतिष्ये। तदु···यन्तः उभ···र्वाञ्चः। ऊर्ध्वाश्चार्वाञ्चाश्च षडहास्ते ऊर्ध्वा एव भवन्ति। यद्यूर्ध्वाः षडहाः, यद्यर्वाञ्चश्च, उभयथा ह्यूर्ध्वा एव भवन्ति इति वदामः। कथमिति चेत्, सव···वन्ति। यद्यप्यहानि आवृत्तानि अवश्यमूर्ध्वान्येव सवनानि स्युः। तस्मादूर्ध्वेषु षडहेषु यत् फलमवाप्यते तदर्वाक्ष्वपि प्राप्यत एव। आप्नु···ष्विति। आवृत्तेषु यः कामः सोऽवाप्यते। ऊर्ध्वेषु च योऽभिप्रेतः कामः सोऽपि सवनैरवाप्यते तस्मादुभयकामपरिग्रहार्थमहावृत्तिरपि कार्यैव। समि···याम। समीची युगपदनुक्रमेण सहैव गोआयुषी उपेयामः। तयि···इति। विविधं हरणं विहरणम्। कस्य···रिति। ब्राह्मवति। तद्धै···यन्ति। कथमिति चेत्-तदाह—उप··आयुः। पुर···स्य गाम्। ऐवमिति। एवं कृते बृहद्रथन्तरजामि न भवति। अथो···यनम्। अथापि पुरा एतयोर्गोआयुषोरेवमेवोपायनमासीत्[2]। उपरिष्टात् विश्वजित आयुरुपेत्य पुरस्ताद्दशरात्रस्य गामुपेयुरित्यर्थः। पुरा सर्वा एवमेवोपेयुः तत्प्रतीयुः। नैमिषीया ऋषयः सत्रमुपयन्तः परस्ताद्विश्वजितः आयुषः उपायनं प्रमादाद् विस्मृत्यातीयुः। तस्योपायनं विस्मृत्य षडहमारब्धवन्त[3] इत्यर्थः[3]। तेऽत्र···पेयुः। प्रमादादिस्थानच्युतिमिदानीं गोप्रयोगकाले संचिन्त्य तदेव गोआयुषी[4] सह उपेयुः। तत···यन्ति। ततस्तस्मा-दर्वाचीनमेवोपयन्ति। तदा प्रभृति परस्ताद्दशरात्रस्य आयुषि सहैवोपयन्ति। तदु···यन्ति। प्राणा···युषी। प्राणापानसंस्तुते गोआयुषी अन्नपाने अन्नपानसंस्कृते च गोआयुषी ते। तेऽवि···रन्ति। ये गोआयुषी विहरन्ति अन्नपाने विच्छन्दन्ति। प्राणापानौ च। अथो···युषी। स्वर्ग···रात्रः। त···एच्छन्ति। ये सहैव गोआयुषी उपेत्य तदनन्तरं दशरात्रमुपयन्ति तेऽञ्जसा स्वर्गं लोकं गच्छन्ति। तेन···वते। ते किञ्चिदपि फलं न व्यश्नुवते[5] न व्याप्नुवन्ति। तस्मात्ते इति। तस्माद् गोआयुषी न विहृते उपेत्ये इति ब्राह्मणम्। पृष्ठ्यसंवादः। पृष्ठ्य उक्तसंवादः। क्व पृष्ठ्यसंवाद उक्तः, संवादप्रकरणे पृष्ठ्यविकल्पविधानात् पृष्ठविकल्पाना-मन्यतरं सहकारिवशात् परिगृह्णीयादिति सिद्धं भवति। षडहविधौ यः पक्ष आश्रितः स एव दाशरात्रिके ग्राह्य इत्येतदर्थमिदं वाक्यमुक्तम्। अथवा। यः पृष्ठमृक्सामतो ब्राह्मणतश्च सिद्धः, अस्माभिः क्लृप्तव्यूढा

---

१ को. सर्वे　　२ को. ०मेवोषायन०　　३ को. ०मारब्धवन्त्वित्यर्थ
४ को. गो आयुषि।　　५ को. ०यश्नुते

समूढाविकल्पितः सोऽत्र कथितः । दशरात्रे स एव ग्राह्य इति संवादामहे[1] इत्यर्थः । नच्छ···महे । वद···इति । सम्य···महि । यथाविहितमेव स्तुवीमहि । न ते स्तोष्यन्तो विपरायन्तीति । अस्मिन्नध्याये यो विहितो मार्गः स विहित इत्युच्यते । तेन मार्गेण न गेयम् । न परिसर्पम् । परिसर्पमिति णमुला । आ उद्गातैव हविर्धानादिषु परिसृप्य परिसृप्य गत्वा न गायेदित्यर्थः । यत्रा···घोषाः । सामपरिमादः सन्तीत्याहुराचार्याः । तासां···पामः । या इ···मेति । श्रद्धा···ह्मणः । अद्धेति निपात इदानीमर्थे । न्वै इति निपातनम्, निपातानामनेकार्थत्वादेवं निश्चिन्वन्त इत्यस्मिन् अर्थे गृह्णीमः । कल्याणाः शोभना विद्वांसः कल्याणा ब्राह्मणास्ते इदानीमेव निश्चितवन्तः । मते । किं कारणमेव मत्प्रतिपन्नेत्याकांक्षायामाह—इत्थमस्तीति । इति श्रुतेरित्थमाचार्याणां निश्चय आसीत् । अथो हैषामेकैपुव ज्योतिष्टोमस्य स्तोमे शिवैः शाङ्कैः बेद हरितमं भवति । अथो हैषामेत एवं ज्योतिष्टोमस्य स्तोमाः रशी वाः रणान्ताः परिमात् भाजनं भवति । इति श्रुतेः सामादामकरणे निश्चयं चक्रुः । यस्मात् कल्याणब्राह्मणा अप्रतिपन्नास्तस्माद् वयमपि न कुर्याम । अथवा । वाक्यद्वयमेकीकृत्य व्याख्येम । श्रद्धा···इति[2] ? कल्याणानि ब्राह्मणानि या सामपरिमादा मता, उ इमाः कल्याणब्राह्मणाः परिमादः । अद्धेति यद्यर्थे गृह्णीमः । न्वै इत्यव्यर्थे । यद्यध्येतृकाः परिमादकाः कल्याणब्राह्मणास्तथापि अथो हैषामेतैरेव ज्योतिष्टोमस्य स्तोमैः इति स्तुतेरित्थमाचार्याणां निश्चय आसीत् । तस्मात् सामपरिमादाः[3] न कुर्याम । ब्राह्मणे सामपरिमादामकरणमविस्पष्टमधीतम् । अकरणमर्थवादवाक्ये पृष्ठत्वादनुमानगम्यमस्ति । नच तयोः करणाकरणयोः पूर्वपक्षसिद्धान्तता युक्ता । तस्मादुभौ कल्प्यौ विकल्पेते । आचार्यैरकरणपक्ष आश्रित इति मन्यामहे ।

इति पर्यध्याये षट्त्रिंशत्खण्डः[4]

१ को. संवादाहम ? २ को. कीति ? ३ को. ०मपरिमादो
४ को. मूले नस्ति

# अथ सप्तत्रिंशत्खण्डः

महा...यते। महाव्रतं नाम गायत्ररथन्तरबृहद्भद्रराजन्विर्मकं सप्तगीतिस्तोत्रियमेकमस्तोत्र...। अनेन स्तोष्यमाणस्येतिकर्तव्यता विधीयते। महाव्रतेन स्तोष्यमाण उद्गाता उदुंबरमयीमुदुम्बरावयवकृतामासन्दीमुपकल्पते[1] समीपवर्तिनीं करोति त्वैतत् स्तोत्रमस्ति महाव्रतीयेऽह्नि। कुका...वतः? तस्या आसन्द्याः[2] ये द्वे प्रापी अन्तज्ये ते, उरः कश्च माते अर्धव्याममात्रे भवतः। अरा......तिरश्चीरा। तिरश्ची अनुज्येहसो? ते अरंतमात्रे भवतः। प्रति...पादाः: तस्या ह पादाः प्रादेशमात्रा भवन्ति। कति पादाः, मन्त्रलिङ्गात् चत्वार इति गृह्णीमः। किं मन्त्रलिङ्गम्, बृहद्रथन्तरे ते पूर्वौ पादौ, वैरूपवैराजे अपरौ इति। ता सुन्वन्ती तामान्ति सुसमहताः सुदृढाः कृत्वा मौञ्जीभिर्वा मुञ्जमयीभिर्वा रज्जूभिः प्राचीमवितन्यन्ति[3]। किं प्राचीमवितन्यन्ति[3]। किं प्राचीमित्युक्तत्वात्तिर्यग्वितानो वा क्रियेत। कथमनुक्ता क्रियेत, नन्वत्रापि मन्त्रलिङ्गमस्त्येव। ऋचप्राचीनमातनाय जोषि तिरश्चीनम् इति। एवं चैतदन्यथा वर्णयिष्यामः। प्रागिति परागर्थैः गृह्णीभिः, वमः प्रागग्राभिरेव रज्जुभिरपुनरावृत्ताभिः तन्वन्तीत्यर्थः। तस्माद्रज्जुभिरनेकाभिरपुरोवर्तिभिः प्रागग्राभिः वितनुयात्। तिर्यगप्युद्गताग्राभिरेव[4]। अत्र केचित् प्राची तु त्वासुर्वीं वितन्वन्ति इति। प्रद्यवन्तीमथ......या। अथास्या आसन्यारान् यूनाम? यस्मात् कूर्चाननेकाननुनिबध्नन्ति, अनववर्धाय अशिथिलीभावाय दृढीकरणाय। कूर्चौ...र्वाते। ते प्रस्तोत्रिप्रतिहर्तारौ कूर्चौ कुर्वाते भजेते। कूर्चयोरासीयतामित्यर्थः। अत्रानयोरासने[5] कूर्चविधानात् वासस्युपनिवेशनं[5] न सम्भवति समयुतादिति चेन्न, अन्यतरेणैव कृतार्थत्वात्। उद्गातुस्तु कृष्णाजिनोत्तरायामासन्यामुपवेशनविधानात् अवश्यं वासस्युपवेशनं न सम्भवति। तस्मादिमावपि कूर्चयोरेवासीयताम्। कूर्च...न्वन्ति। अन्ये होत्रकाः[6] कूर्चसदः एव भवन्ति। कूर्चेष्वासीरन्। शस्ते...नीति। शस्ते मरुत्वतीये तस्य च सोमेषु भक्षितेपु एतामासन्दीमान्तरेण चात्वालं चोत्करं च प्रपाद्याग्नीध्रं च सदश्चोत्तरेण परिहृत्य अयत्यस्या द्वारा सदः प्रपाद्य दक्षिणौदुम्बरीं पर्याहृत्य आस्तावे उदीचीः सादयन्त्येतेन मन्त्रेण। समानकर्तृकत्वादुद्गाता एव प्रपादयेत्। औदुम्बर्या उत्तरत उदीचीं सादयेत्।

इति पर्यध्याये सप्तत्रिंशतखण्डः

---

१ को. ०मुपकल्पेते
२ को. आसन्त्याः?
३ को. ०मवितन्यन्ती?
४ को. ०गप्युर्गतशग्राभिः रेव?
५ को. रान्वने?
६ को. होतृकाः

# अथाष्टत्रिंशत्खण्डः

अध्व···ह्णाति। अध्वर्युर्माहेन्द्रग्रहं गृह्णाति। ता···स्वेति। तमध्वर्युमुद्गाता पूर्वया द्वारा सदसोऽधिनिष्क्रम्य अपरया द्वारा आग्नीध्रं प्रपद्याग्नीध्रे पृष्ठाहुती नाम जुहोति। इत्येकां जुहोति। तूष्णीमुत्तराम्। स पू···इति। स उद्गाता पूर्वया द्वारा आग्नीध्रान्निष्क्रम्य उत्तरेण सञ्चितमग्निं परीत्य पुरस्तात् प्रत्यगावृत्तिस्तिष्ठन् अग्नेः शिर उपतिष्ठतेऽनेन मन्त्रेण। दक्षि···इति। अग्नेर्दक्षिणतस्तिष्ठन्। पूर्वं···इति। दक्षि···हीति। पुच्छपक्षयोर्मध्यमपि पक्षं नाम। दक्षिणेऽपि पक्षे अपि, पक्षसमीपे तिष्ठन्नात्मानमुपतिष्ठते। आभिमुख्ये प्रदर्शनात् प्रागुदगावृत्तस्तिष्ठन्।

इति पर्यध्याये अष्टत्रिंशत्खण्डः

# अथ एकोनचत्वारिंशत्खण्डः

यथे···ध्येति । येन मार्गेण गतस्तेनैव मार्गेण प्रतिनिवृत्तः, यस्मिन् देशे राजा रथारूढस्तिष्ठति तदभिमुखो गत्वा तं राजानमुपतिष्ठतेऽनेन मन्त्रेण । राजोपस्थानस्य तत्समीपगतेन कार्यत्वात् । अर्थसिद्धा प्रतिनिवृत्तिः । आह···दिति । उपस्थानानन्तरमिमं संप्रैषमाह राजाभिमुखस्तिष्ठन् । संप्रैषत्वात् सवनत्रयस्वर एव स्यात् । भूमि···इति । भूमिकृतो दुन्दुभिः तमनेन मन्त्रेणाभिमन्त्रयते । यदा···दिति । आहेत्यनुवर्तते । कमाह, उद्वादयतादिति मन्त्रलिङ्गाद् भूमिदुन्दुभिवादकम् । आर्यं···र्मणि । आर्यं च वर्णं रौद्रं च वर्णं चात्वालामुपर्युपरि वस्तस्ताजिने वा वृषभस्य चर्मणि वाप्याययन्ति[1] व्यापारयन्ति । जातिमात्रपरिग्रहार्थं वर्णग्रहणम् । चात्वालस्योपरि सदजिनमधिकृत्याभितः स्थितौ ब्राह्मणशूद्रौ यथा कलहं कुरुतस्तथा योजयन्ति परिकर्मिणः । तयो···र्वति । अर्यो वर्णोऽन्तर्वेदि भवति बहिः रौद्रः । तयो···र्यन्ति । तयोर्वर्णयोरार्येण वर्णेन रौद्रं वर्णं जाययन्ति[3] । यथा ब्राह्मणो जयति यथा शूद्रो जीयते, तथा योजयन्ति । तयो···शति । तयोरन्यः एकः आक्रोशति । पराजितस्य हि युक्तः आक्रोशः । ब्राह्मणं प्रशंसति । जितवतः प्रशंसा युक्ता । प्रशंसतीति कर्मणि गृह्णीमः । प्रशस्यत इत्यस्मिन्नर्थे, छन्दसि हि व्यत्ययो बहुलम् (पा. ३. १. ८५) इति । वचनात् कर्मणि शप् भवति । यदा···दिति । तावाहेति वाक्यशेषः । इमं संप्रैषमुद्गाता आह । पूर्ण···णेतुम् । पूर्णकुम्भा इत्युत्तरपदलोपो द्रष्टव्यः । पूर्णकुम्भधराः स्त्रियः उपकल्पयन्ति परिकर्मिणो मार्जालीयं पर्याणेतुम् । द्वितीयार्थे चतुर्थ्या लक्षणमन्वेष्टव्यम् । याय···यन्ति । या यजमानस्य स्वाः प्रैषा भवन्ति ता अलङ्कृता समायन्ति सममायन्ति । महाप्रतीयस्याह्नः सत्रिकत्वात् यजमानानामिति वक्तव्ये यजमानस्येत्येकवचननिर्देशः एकाहहीनार्थः । किमिदमेकाहेऽप्यस्ति, कुत्र, यत्र महाप्रतीयमहरेकाहत्वेन कल्प्यते । तस्यैकाहक्लृप्तिरपि[5] परेषामस्ति । अस्माकमप्युत्तरत्र ज्ञाप्यते । ज्ञापनार्थं य एतदहरुपगायन्तीत्यत्र वक्ष्यामः । अहीने पुनः सप्तदन्नं ? सप्तममहस्तस्मिन् महाव्रतमुपयन्तीत्येवमादिषु विद्यते । पञ्चापरार्ध्यः । अर्धो भाग अपरो भाग अपरार्धः, अपरार्धे भवमपरार्ध्यम् । अपरार्ध्याः स्त्रियो यदि स्युरवश्यं पञ्च ग्राह्याः । पञ्चभ्योऽपरान गृह्णन्त इत्यन्त इत्यर्थः । पञ्च···रार्ध्याः । परार्ध्याः युक्ततराः स्युः । पञ्चविंशतेः स्त्रीणामुपकल्पनं युक्ततरमित्यर्थः । किं पञ्च प्रभृति पञ्चशतान्ताः यावत्यो लभ्यन्ते[6] तावत्य उपकल्प्याः, नैवम् । यावत्यः सत्यः पञ्चधा संविभजन्ते तावत्यो ग्राह्याः । पञ्च, दश, पञ्चविंशतिः, पञ्चत्रिंशत् इत्येवं गृह्णीयात् । पञ्चविभागकल्पनाया उत्तरत्र ज्ञापकमस्ति, तत् तत्रैव वक्ष्यामः । अध्विति । तास्त्रिरभिमन्त्रयते पञ्चभिरेभिर्मन्त्रैः । पूर्वेषां चतुर्णां मन्त्रेषु इति करणं किमर्थम्, मन्त्राणां पृथक्त्वज्ञापनार्थम् अर्थपृथक्त्वम्, मन्त्रपृथक्त्वात् कर्मपृथक्त्वमपि सिद्धम् । तस्मान्नार्थं इति करणेन । तर्हि एतत्प्रयोजनम्, स्त्रियः सर्वाः पञ्चधा विभज्य एकैकं भागम् एकैकेन मन्त्रेणाभिमन्त्रयते इति । तस्माद् यथा पञ्चभिः समं भागं दास्यन्ति तावत्यो ग्राह्याः ।

---

१ को. वाप्यायमपन्ति | २ को. कुर्वतः | ३ को. ज्यापयन्ति
४ को. ब्राह्मणः ब्राह्मणः | ५ को. तस्यैकं ह ? | ६ को. लक्ष्यन्ते

यदा…दिति। आहेति वाक्यशेषः। माग…यन्ति। मागधा नाम वन्दिनः पुंश्चल्यो वेश्याः। मागधञ्च पुंश्चलञ्च दक्षिणे वेद्यन्ते यथा सम्भवतस्तथा योजयन्ति परिकर्मिणः। ताव…मिति यदा…दिति। वाहेति वाक्यशेषः। अथ…कुर्यात्। अथ यदि सामपरिमादः कुर्यात्, एतस्मिन् काले कुर्याद् यथा ब्राह्मणम्, यथा ब्राह्मणे उक्तं तथा कुर्यात्। एवं तत्रोक्तं मागधं च पुंश्चलं च प्रथमं संप्रैषमुक्त्वा अग्नि पूर्वेण परीत्य अग्रेणाग्नीध्रं प्राङ्मुखाः तिष्ठन्तो विश्वेषां देवानां व्रतेन स्तुवते। नच अद्धार्यग्रहं गृहीत्वा भवति। स आह उपावर्तध्वमिति, ते हिंकृत्यैव प्राञ्चो निष्क्रम्याग्रेणाग्नीध्रं तिष्ठन्तो विश्वेषां देवानां व्रतेन स्तुवते। इत्यत्र हिंकारो विहितः स कथं भवता नोक्तः, उच्यते—अध्वर्योः ग्रहणोपावर्तनयोरनन्तरं हि हिङ्कारो विहितः। तत् स्तोत्रं प्रतिगृह्य हिङ्कारात् प्राक्तनं कर्म कृत्वा स्तोत्रप्राङ्गं हिङ्कृत्येति कल्प्यम्। यथा वैराजस्य स्तोत्रे हिङ्कृत्याप्रस्तुत्य मन्यतीत्युच्यते तद्वत्। अथवा। सहिङ्कारस्तोत्राङ्गं न स्यात्। एतदङ्गमेवायमस्तु। तथापि वैरूपावर्तध्वमित्युक्ते यदि परिमादां गानं तदैव हिङ्कारः स्यात्। प्राञ्चो निष्क्रम्येत्युक्तं प्रागगमनं यथार्थत्वात् तदानीमेव स्यात्तद्वत्। किं बहुना. एतस्मिन् काले कुर्यादिति कालान्तरे विधानात् पूर्वोक्तमेव साधु। ते प्राञ्चोऽभिनिष्क्रम्य चात्वालसमीपे चात्वालमवेक्षमाणा उदङ्मुखा अन्तर्वेद्येव तिष्ठन्तः क्रोशेन स्तुवते। अथापि पक्षसमीपे। सत्रस्यर्ध्यास्तु कस्मिन्नपि पक्षे सामीप्यादुत्तरस्मिन्नेव। अथ पूर्वया द्वारा हविर्धानं प्रपद्य दक्षिणस्य हविर्धानस्याग्रेण परीत्योत्तरतस्तिष्ठन्तः उत्तरेण व्रतपक्षेण स्तुवते। अथोत्तरं हविर्धानमुत्तरेण परिक्रम्य पश्चादनयोस्तिष्ठन्तोऽपानेन स्तुवते। अथ यथेतं प्रतिनिवृत्य पुरस्ताच्छ्लोकेन स्तुवते। पश्चादनुश्लोकेन। अथ निह्नवेन पुरस्तात् स्तुवते। पश्चादनिह्नवेन[1]। अथ पूर्वया द्वारा हविर्धानान्निष्क्रम्योत्तरेणाग्नीध्रं परीत्य पूर्वया द्वारा सदमौदुम्बर्याः पश्चात् तिष्ठन्त आङ्गिरसेन स्तुवते। षड्विंशत्यक्षरनिधनं सत् पञ्चविंशत्यक्षरनिधनं कृत्वा स्तुवते। कथं पञ्चविंशत्यक्षरनिधनं भवति एकः स्वरगन्म[2] देवानाम् इति गायेत्। तथा पञ्चविंशत्यक्षरनिधनं भवति। तत्रैव तिष्ठन्तो भूतेच्छदां व्रतेन स्तुवते। अयं सामपरिमादां गानक्रमः।

नन्वनुक्रोशोऽपि ब्राह्मणेन विहितो गातव्य एव, न गातव्यः। ब्राह्मणे अनुक्रोशस्य गायेदिति विधिर्न श्रूयते। कथं न श्रूयते, तस्मादु हैवं विद्वांसः क्रोशानुक्रोशाभ्यां स्तुवते इति। नैष विधिः क्रोशस्यार्थवादे प्रसङ्गादनुक्रोश उक्तः। नैवं भवति। अथानुक्रोशमिति विहित एव। अत्र ब्रूमः—क्रोश एवात्र विहितः। क्रोशानुक्रोशयोस्तुल्यमर्थं प्रतिपादयितुमथानुक्रोशमिति प्रवृत्तोऽनुक्रोशः। अथाविहित एवास्तु, स्वर्गकामाः क्रोशेन स्तुवते प्रतिष्ठाकामा अनुक्रोशेन इति योज्यम्। क्रोशानुक्रोशयोः युगपत्प्रयोगे को दोषः, त्रयोदश परिमादः इति श्रूयते। अनुक्रोशस्य प्रयोगे त्रयोदशत्वं विहन्येत। तस्मादुक्तवदेव साधु॥

इति पर्यध्याये एकोनचत्वारिंशत्खण्डः

---

१ को. पश्चादभिह्नवेन २ को. स्वर्जगन्म

# अथ चत्वारिंशत्खण्डः

स···वृद्धिति । स उद्गाता औदुम्बर्यासन्द्योर्मध्येन गत्वा आसन्द्या दक्षिणत उदक् प्रागावृत्य ऐशानीं दिशमभिमुख उपविश्य दक्षिणं जान्वाच्य नीचीकृत्यासन्दीमभिमन्त्रयते[1] ऽनेन मन्त्रेण। परिमादां गानपक्षे पूर्वमेव पञ्चविंशत्यक्षरनिधनगानार्थं तं देशं प्रविष्टत्वात् । तत्रैवोपविश्यासन्द्यभिमन्त्रणमेवारभेत । किं तस्मिन्नुपवेशने उपवेशनावृत्कर्तव्या, कर्तव्या । चोदिते ह्युपवेशने कर्तव्या । तत्र चोदितमुपवेशनमर्थ-प्राप्तम्, एतज्जान्वञ्जनमनुपविष्टस्य न सम्भवति, सम्यगनुमन्त्रणञ्च ।

अथ···स्तृति[2] । अथ तस्यामासन्द्यामुदीचीनग्रीवं कृष्णाजिनमुत्तरलोम यथा स्यात् तथोपस्तृणा-त्यनेन मन्त्रेण । अथै···येति । अथाभिमन्त्रणादनन्तरमेतामासन्दीमुत्तानाभ्यां हस्ताभ्यामन्वारोहति । इदमन्वारोहणमेकं कर्म, अस्मिन्नष्टौ मन्त्रा विहिताः । मन्त्रान्तेन कर्मारम्भसंयोगश्च याज्ञिकानामिष्टः । मन्त्रपृथक्त्वमपीष्टम् । आरोहणमष्टकृत्वः चिकीर्षोरवरोहणमवश्यमर्थसिद्धमचोदितं सप्तकृत्वः प्रसजति । मन्त्रेणानुरूढस्यास्य पुनरवरोहणप्रयोजनस्यादृष्टत्वात् । एवं स्थिते किं कर्तव्यम्, इदमुच्यते—एवं कर्म-विधानसामर्थ्यादेवाष्टानां मन्त्राणामन्ते सकृदेवारोहणं क्रियते ।

नन्वस्याप्यारोहणस्य द्रोणकलशमार्गवत् औदुम्बरीदृंहणवच्च मन्त्रपृथक्त्वात् कर्मावृत्तिर्युक्तैव । संमार्गः शुद्धिकरणार्थः । बहुकृत्वोऽपि संमृष्टेऽतीव शुद्धिर्भवति । दृंहणं दृढीकरणम् । बहुकृत्वोऽपि दृंहणे कृतेऽतीव दृढं भवति । तद्गुणायैव भवति । अत्र पुनरारोहणं तदानीमेवावरूढे व्यर्थं भवति । न च संस्कारमादधाति । प्रत्यवरोहणमपि परस्तात् विधास्यते । तस्मात् सर्वेषां मन्त्राणामन्ते सकृदेवारोहणं कर्तव्यम् ।

तामा···रोहेत् । तामासन्दीमनेन दक्षिणेन हस्तेनाधिरोहेत् । ननु पूर्वेण वाक्येन हस्ताभ्यामन्वा-रोहणं विहितम्, किमर्थोऽयं पुनर्विधिः, नायं विधिः । अनेनोत्क्रमो नियम्यते । हस्ताभ्यामारोहणं कुर्वन्नग्रे दक्षिणेनारोहेदिति । अथा···नेन । अथ सव्येनेत्यर्थः । एवं चेद्धस्ताभ्यामारोहणस्य भिन्नकालत्वात् मन्त्राणां द्विरुक्तिप्राप्तिस्तदर्थोऽयमथशब्दः कृतः । अथानेन । अथ दक्षिणेन पादेन । अथानेन । अथ सव्येन पादेन । अथानेनेत्येतेन ।

ननु शब्देन सामान्यवाचिना नामग्रहणमकृत्वा प्रत्यक्षमुद्दिश्येवोच्यमानेन कथमवबोध्यते, पाणिपादाधिरोहणमिति । अत्र ब्रूमः—चत्वार्यङ्गानि आरोहणक्रियां विवर्तयन्ति, पाणी पादौ च । नान्यानि । उत्तानाभ्यां हस्ताभ्यामिति पूर्वं हस्तौ विहितौ । पादाभ्यामित्यनन्तरेण वाक्येन विधास्यते । तस्मात् पूर्वं हस्तौ पश्चात् पादाविति ज्ञायते । अथापि हस्ताभ्यामवलम्ब्य पादाभ्यामधिरोहणं युक्ततरं सुकरं च भवति । अथ च दक्षिणपूर्वता न्यायतः प्रयोगतश्च सिद्धा । अमृ···दाभ्याम् ? अनेन मन्त्रेण पादाभ्यामधिरोहेत् । अधिरोहणकाले पादाभ्यामासन्दीस्पर्शोऽपि न कर्तव्यः । अपरा व्याख्या—अथै···वेति । इत्थंभूतलक्षणे तृतीया । अन्वारोहणं नाम पश्चादारोहणम् । एतेषु मन्त्रे-

---

१ को. ०सन्दी मन्त्रयते　　　२ को. हिति

ष्वविहिता या देवताः पूर्वमासन्दीमधिरोहन्ति तासामन्वहमधिरोहामीति मनसा सङ्कल्पः कर्तव्यः। अयमुत्तानपाणिरित्थं मनसा ध्यायन् मन्त्रान् जपेदित्यर्थः। ताम···रोहेत्। अधिरोहणमासन्द्या उपरि प्रतिष्ठानम्। अथानेन एतानि वाक्यानि। अमू...मिति। अनेन मन्त्रेणाधिरोहेत्। असन्दाभ्यां पादाभ्यामासन्दीमसंस्पर्शयन् अधिरोहेदिति। किमनयोर्व्याख्यानयोः साधीयः, वयमुत्तरमापन्नाम् तथैव श्रूयते ब्राह्मणे तां हैके नमस्कारेणैवाधिरोहन्ति इति पूर्वपक्षं हैवेके अधिरोहन्ति इत्यपरः पक्षः। तामनेनाग्रेऽधिरोहेत्, अथानेनामृतं गमयेयमिति सिद्धान्तः। अनेनैव मन्त्रेणाधिरोहणं कर्तव्यमिति सिद्धान्तः। अनेन क्रमेण तस्मादन्वारोहणमन्त्राणामनुध्यानमात्रमेव कर्तव्यमिति निश्चिनुमः। दक्षि···मिति। पादाभ्यामित्यनुवर्तते। दक्षिणश्चासावुत्तरश्च दक्षिणोत्तरः, दक्षिणोत्तरोऽस्यास्तीति दक्षिणोत्तरी। पर्याहृत्य परित आभिमुख्येन च हृत्वा, पादौ पादाभ्या दक्षिणोत्तरी स पादौ परिवेष्टचोपस्थं कृत्वोपविशति इत्यर्थः। कथम्, पादाभ्यामित्यनुकृष्य, तत्सहचारी असंस्पर्शयन्नित्ययमर्थो नानुकृष्यते। कामं सोऽप्यनुकृष्यताम्। तदनुकर्षणमेव युक्तञ्च। आरोहणकालेऽपि सस्पर्शः प्रतिषिद्धः, किं पुनरुपविष्टस्य गानाय। सव्यं पाद दक्षिण ऊरौ आरोप्य पश्चात्सव्ये पादे दक्षिणमारोप्य पादम्, उपविशेदित्ययमर्थसिद्धो भवति। अनेन मन्त्रेणोपविशेत्।

इति पर्यध्याये चत्वारिंशत्खण्डः।

# अथैकचत्वारिंशत्खण्डः

अथ...ष्ठते । अथोपवेशनानन्तरं दिश उपतिष्ठते । प्राणो...रस्तात् । उदगावृत्ते उपविश्यैव पुरस्तादञ्जलिं कृत्वा तामभिवीक्षमाणो ऽनेन प्राचीमुपतिष्ठते । अपानतः...व्यानो...पश्चात् । समारतः । उदा...रिष्टात् । अथवाधस्तादुत्तिष्ठते इति वाक्यशेषः । उपविश्यैव तां दिशमभिवीक्षमाण उपतिष्ठेत । उदगावृत्त उपविश्यैवोपतिष्ठेतेत्येतदर्थप्रतिपादनार्थाः पुरस्तादादयः शब्दाः । अथा...रन्ति । अथास्मा उद्गात्रे आसन्दीमारुह्य यवाणं परिमाद्विशेषं शततन्त्रिशतेन तन्त्रिभिर्युक्तम् आहरन्त्यध्वर्यवो यजमानपुरुषो वा । तं प्रतीम् इत्यनेन मन्त्रेण तं प्रतिगृह्णाति । तं...प्नोति । तं बाणं प्रतिगृह्य दक्षिण ऊरौ निधाय शतेनाक्षरैर्वक्ष्यमाणेन क्रमेण सन्तनोति वादयति । भूर्भु...हृति । एभिः पञ्चभिरक्षरैः पञ्च तन्त्रीरुद्हृति वादयति । शततन्त्रीर्वादयेदित्युक्ते एकैकेनैकैकमिति सिध्यति । तस्मात् पञ्चभिः पञ्चोद्हृत्यनर्थकम्, नानर्थकम् । पञ्चाक्षरं मन्त्रं मुक्त्वा पञ्चतन्त्रीर्युगपद्वादयेदित्येतदर्थत्वात् इति । एवमुत्तराण्यपि वाक्यानि व्याख्यातव्यानि । अग्नि...दश । अस्म...राति । साप्त...शति । आश...शति । शत...शमन्नेति । तं प्राणमनेन 'सन्ताननास्मा' मन्त्रेण सन्तनोति सम्यग् वादयति । अन्वर्थसंज्ञेयम् । सम्यक् तनोत्यनेनेति सन्तानः । लयखण्डमूर्च्छाभिरलंकृत्य वादयेदित्यर्थः ।

अथे...इति । नता आनता प्रह्वा । इन्द्रेण नता इन्द्रणता 'पूर्वपदात् संज्ञायामगः (पा. ८. ४. ३) इति णत्वम् । इषीका[1] नाम तरुणशरकाण्डः । इन्द्रणतेति चेषीकाया[2] एव संज्ञा । अथ तं बाणमिन्द्रणतया चेषीकया वेतसशाखया चोल्लिखति । वेतसो वञ्जुलमेभिस्त्रिभिर्मन्त्रैस्त्रिर्वादयेदिति । कथमिन्द्रेण नता इषीका लभ्यते, कोऽसाविन्द्रः, य इषीकानमनव्यापारश्चरति, अत्र ब्रूमः—स्वयं सिद्धानि हि द्रव्याणि देवकृतानि इति लोको वदति । यथा लोके उत्सतदाकारामादीन् अविज्ञाताविज्ञातकर्तृकान् स्वयमुत्पन्नांश्च वदन्ति, इमे देवकृता इति वा ईश्वरकृता इति वा, तद्वदयमपि द्रष्टव्यः[3] । इममर्थं शावरवचनमपि दृढयति 'स्वयं नतया चेषीकया वेतसशाखया चोल्लिखति' । इत्युल्लेखनस्य द्वे करणे इषीका वेतसशाखा च । 'त्रयो मन्त्रा' इति करणमन्त्राणां त्रित्वज्ञापनार्थम् । मन्त्रपृथक्त्वात् करणपृथक्त्वाच्च क्रियाभ्यावृत्तिर्युक्ता । तस्मादिषीकया च त्रिभिर्मन्त्रैस्त्रिरुल्लिखति । वेतसशाखया च त्रिभिस्त्रिभिरुल्लखति इति सिध्यति । तं बाणं यजमानाय प्रयच्छति । यजमानस्य हस्ते उपन्यस्यतीत्यर्थः ।

इति पर्यध्याये एकचत्वारिंशत्खण्डः

---

१ को. इष्टिका     २ को. चोष्टिकांया     ३ को. द्रष्टव्यम्

# अथ द्विचत्वारिंशत्खण्डः

अथे···गीति । एता अन्याः परिमादः अनेन मन्त्रेणोपतिष्ठते । उपवेशस्य[1] चोदितत्वात् उपविश्यैवोपतिष्ठते । या ब्राह्मणे विहिताः कङ्कर्याद्याः परिमादस्ता अन्या इत्युच्यन्ते । सर्वे···त्नीका । सर्वे यजमानाः सर्वाश्च पत्न्य उपगायन्ति, न चत्वार एव । तस्मादुद्गातृवर्जं[2] सर्व एव दीक्षिताः पत्न्यश्चोपगायन्ति । सर्वान् मन्त्रेण प्रत्यभिमृशेत् । अस्य वाक्यस्यैतदुक्त्वाभ्यनितीत्यस्यानन्तरं वा विधातव्यस्यात्र वचनमुपगात्रभिमर्शनस्य कालविधानार्थं मन्तव्यम् । तस्मादस्मिन्नवसरे उपगातॄनभिमृशेत् । य ए···वति । यो यजमानो महाव्रतीयमहरुपगायति स[3] वरीयानेव[3] भवति । न पापीयान् भवति । अहः शब्देनाहर्योगीनि स्तोत्राण्याख्यायन्ते । अत्यन्तसंयोगे द्वितीया । अस्मिन्नहनि सर्वेषु स्तोत्रेषु यजमान उपगायेत् । न महाव्रतीय एव स्तोत्रे । अथ बहुषु यजमानेषु उपगातृषु सत्सु यदेकवचननिर्देशं करोति तज्ज्ञापयत्याचार्यः एकयजमानकमप्येतदहरस्तीति । तस्मादेकेनापि महाव्रतीयमहः कर्तव्यम् । किमेकाहे सति सामविकारो ऽस्ति, अस्ति । तदेकाहे गौरीवितं न कुर्वन्ति इति वचनात् गौरीवितमुत्सीदति । तस्मिन्नपेते तत्र प्रतिविधातव्यस्य दुर्लभत्वात् शेषैः सप्तभिः सामभिरनुष्टुब्भिः स्तोत्रियाभिः दशक्लृप्तेरशक्यत्वाच्च तत्रापि स्तोभपूरणार्थमागतं नानदमपोह्य श्याश्वान्धीगवयोरन्यतरत् तृचस्थं कृत्वा जामिरहितः सामयोगः कर्तव्यः । कथमिति चेद् ब्रूमः—श्यावाश्वसम्मिते[5] तृचस्थे कृत्वानयोर्मध्ये इलान्दश्यैतौ, इलान्धीगवान्येकर्चषु कुर्यादित्येकः कल्पनाविधिः । अत्र चतुस्त्रिंशसम्मितेलान्दयोराम्नायक्रमविरोधो दोषः । अथ तृचयोरुपरिष्टाच्चत्वार[4] एकर्चा इत्यपरो मार्गः । अथ तृतीयः पक्षः—श्यावाश्वमेकस्यानृचे चतुस्त्रिंशसम्मितमिलान्दश्यैतौदलानि[6] सामतृचस्तृचमान्धीगवमित्ययं युक्ततरः पक्षः ।

स्तोत्रं...निति । औदुम्बरीपरिग्रहं कृत्वा स्तोत्रं प्रतिगृह्य आदित्यमुपविश्यैवोपतिष्ठते, तदभिमुखः प्राञ्जलिः ।

इति पर्यध्याये द्विचत्वारिंशत्खण्डः

---

१ को. उपविषस्य २ को. ०दुदातृवर्जनं ३ को. सवनीयाने
४को. स्तोमपू० ५ को. श्यावश्च ? ६ को. ०श्यैतोदालानि ?

# अथ त्रिचत्वारिंशत् खण्डः

अथ···धीति । अथै···तीति । एतानीति । एतानि वाक्यानि सूत्रे व्याख्यातानि । नन्वेतद्विधिचतुष्टयं बृहद्रथन्तराश्रितत्वाद् विधिमन्तरेणापि प्राप्नुवन्ति, राजनमेवैतस्याह्नः पृष्ठं कार्यम् इति श्रूयमाणत्वात् राजनं प्रधानतः पृष्ठं तदङ्गानि गायत्र्यादीनि । रथन्तरे बार्हते चाहनि होतृपृष्ठगतयोर्बृहद्रथन्तरयोः विहिता धर्माः स्तोत्रावयवभूतयोः पवमानगतयोरिव न प्राप्नुवन्ति । पञ्चसामात्मकं महाव्रतं नाम स्तोत्रमेतत् । तस्मान्महाव्रतार्थं विधेयमेतद् विधिचतुष्टयम् । अभ्यननानन्तरमावर्तिजपः कार्यः । अथ···ष्यति । अध्वर्युरिति वाक्यशेषः । ब्रह्म···माहन् । उपगात्रभिमर्शनकालः पूर्वमेवोक्तः प्रस···वति ।

नन्वेतदपि विधित्रयं प्रकृतितः प्राप्तत्वात् प्राप्तमपि संशयनिवृत्त्यर्थमुच्यते । अस्मिन् स्तोत्रे पञ्च सामानि पृथग्गीयन्ते । पृथगेव विषूयन्ते । तत्र स्तोत्रार्थाः धर्माः सर्वेषां पुरस्तात् क्रियेरन् आहोस्वित् पृथक्पृथगुत प्रधानत्वाद् राजनस्यैव, नेतरेषामङ्गभूतानां सामपरिमादामिवेति संशयः उत्पद्यते । तत्संशयनिवृत्त्यर्थं विधेयम् । अथ...ञ्चते । 'स्तोष्यन्तो विपरायन्ति' इत्यस्मिन्पक्षे कर्तृकालदेशभेदादतीव संशयः तस्मादपि वक्तव्यम् । तेति...चोषु । स्वासु...द्दशः । स्वासु...दशः । स्वासु...विंशः । तदि...जनं । ऋक्सामक्लृप्तादेव क्लृप्तत्वादत्रेयं क्लृप्तत्वादत्रेयं क्लृप्तिरनर्थिका । एकमेव पञ्चधा पञ्चावयवरूपेण विषुयादित्येतदर्थत्वात् विष्टावायतनस्य मध्यमात्मनः स्थानमिति कृत्वा तस्य पुरस्ताच्छिरः इति संकल्प्य तत्र त्रिवृतो गायत्रस्य न्यायतो विष्टावः कार्यः । तमविनाश्य दक्षिणतो रथन्तरस्य, तमविनाश्य उत्तरतो बृहतः, पश्चाद् भद्रस्य मध्यतो राजनस्य । एवं विष्टावक्लृप्त्यर्थमत्र विधानम् । अथ च पञ्चमेऽहनि महाव्रतं, 'पञ्चविंशन्महाव्रत मित्येवमादिषु चोदनासु एवं स्वरूपैव ऋक्सामस्तोमविष्टावक्लृप्तिः सर्वत्रेति । इममर्थं दृढीकर्तुमत्र विधिरिति चिन्त्यम् । उक्तं...प्राह । राजन्यस्यैवोत्तमां स्तोत्रियां होत्रे प्राह नेतरेषाम् । अयमपि विधिः संशयच्छेदायेदानीं यजमानवाचनम् । अत्रै···याये । अत्रैवासन्द्यामेवासीत, आशस्त्रपरिसमाप्तेः[1] अयमाङ् अभिविधौ । परिधानीयेति शस्त्रस्योत्तमाया ऋचः आख्या । राजा···रोहेत । राजानं सोममाश्रीयमाणं प्रत्यवरोहेत् । भक्षार्थं[2] सोमाहरणकालेऽवरोहेदित्यर्थः । यथा राज्ञो वाश्रेयसो वागमने प्रत्यवरोहस्तद्वत् । तस्य···इति । आसन्द्या इत्यवरोहोऽनेन मन्त्रेण कार्यः यथे···रौह । यथेतं यथागतं येन मार्गेणासन्दीमारूढवान् तेनैवावरोहेदप्रत्यावर्तमानः । उदङ्मुख एवावरोहेदित्यर्थः । तामे···त्विति । तामासन्दीं सदस उत्तरार्धे उत्तरभागे सादयित्वा राजानं भक्षयत्यनेन मन्त्रेण । नास्य प्रोक्तो मन्त्रः । अवेक्षणमुपह्वान्वेषणञ्च यथापुरमेव भवतः । सन्ति शस्त्रे स्तुतम् । स्तुतशस्त्रे ते इत्थं सन्तिष्ठेते इत्यर्थः । कथमप्रकृतमन्त्रः शस्त्रमुच्यते । शस्त्रस्य स्तोत्रेण सम्बन्धज्ञापनार्थमुक्तम् । स्तोत्रेषु विशेषाः श्रूयन्ते शस्त्रेऽपि कर्त्तव्या इति ज्ञापनार्थम् ।

इति पर्यध्याये त्रिचत्वारिंशत्खण्डः

---

१ को. आशास्त्रप०    २ को. भक्षार्थमं

# अथ चतुश्चत्वारिंशत्खण्डः

प्राणो···कारः। हिङ्कारः स्तोत्रेषु प्रयुज्यमानः प्राण इति। शान्तिरिति चोच्यते। अर्थवादे यथा श्रूयते—स एरिवै स हिङ्कारस्तुम्तुवानानामुद्गातॄणामविनाशाय दोषांश्च शमयति। स्तोत्रगतान्यूनानतिरिक्तदोषान् शमयन् सर्वाणि स्तोत्राण्यन्वेति। अनुगमनक्रम उत्तरत्र वक्ष्यते। सकृद् बहिष्पवमानाय हिं कुर्वन्तीत्यादि एकाहे च सिद्धमेतत्। उत्तरविवक्षया·········अथ···गायेत्। त्रिरात्रादीनामपि प्रथमोत्तमयोरह्नोरहिंकृतामेव रेतस्यां गायेत्। हिंकृतांतरे[1] यानि रात्रादिषु प्रायणीयोदयनीययोः मध्यगतान्यहानि, तेषु रेतस्यां हिङ्कृतामेव गायेत्। प्राय···ष्येयुः। प्रत्यगह्नामहःसङ्घातेषु यानि प्रायणीयोदयनीययोरन्यान्यहानि तेषु बहिष्पवमानाय प्रत्यञ्चः सर्पेयुः। सदस्येव बहिष्पवमानं गायेयुरित्यर्थः। किमयं विधीराजसूयत्रिष्टोमाग्निष्टोमादीनां[2] स्तोमचातुर्मास्यादिषु वर्तते, यत्र पत्नीसंयाजान्तमहः कृत्वा पुनरुपवसथमुत्तरस्मा अह्ने कुर्वन्ति तत्राहःसङ्घातशब्दः प्रवर्तते। यत्र पुनरवभृथान्तान्यहानि तत्र न प्रवर्तते। अन्वर्बन्ति। अन्वहः सर्वेषु अहःसु एकाहद्वयहत्र्यहःप्रभृतिषु सप्रायणीयोदयनीयेषु बहिष्पवमानाय सकृदेव हिङ्कुर्वन्ति। सिद्धमेतदुत्तरत्र विवक्षयानूद्यते। साम्नोरनयोरिदमपि सिद्धमेव। पर्य···तिष्ठ। तृचा···र्वन्ति। तृचा शीर्णः सन्धेः शीर्णश्चाभ्यावर्तित्वादेव, त्रिहिङ्कारत्वसिद्धः पुनर्विधिरनर्थकः, नानर्थकः। एकस्य हि स्तोत्रस्य त्रयः पर्यायाः। चतुष्पर्यायाणां चत्वार इति न्यायः। एवं सति सन्धेर्यदयं पर्यायत्रित्वकरणाय हिंकारत्रित्वं विदधाति तज्ज्ञापयति—एकस्मिन्नपि स्तोत्रे अनेकेषु तृचेषु सत्सु प्रतितृचं पर्याया आवर्तेरन्निति। तस्माद्रथन्तरादीनामेकैकस्य तृचस्य त्रयस्त्रयः पर्यायाः स्युः। शीर्ष्णश्चैवं प्राप्ते पुनस्त्रिपर्यायत्वमेव स्थापितम्। स्तोत्र···नस्य। त्रिकस्तोमस्य सकृद्धिकृतत्वं वक्ष्यति। सकृद्धिकृतमेव स्यात्। नैका त्रिहिंकरणमर्हति इति तस्यायमपवादः। मानसीनस्य त्रय एव हिङ्काराः स्युरिति एकसीनान्मानसीनाद् गायत्रादन्यस्य गायत्रस्यैक एव निधनमुपेयात्। किं मानसीनस्य निधनं नास्ति, अस्ति। अनेनैव वाक्येनैककर्तृत्वं विधीयते न निधनोपायः। विधीयमानस्य हि प्रतिषेधो युक्तः। तस्माद् एको निधनस्योपेता गायत्रस्येति सिध्यति। विशेषावचनादुद्गाता एवोपेयात्। गायत्रस्यैको निधनोपायको गायत्रादन्येषां साम्नां सर्वे। मानसीनस्य पुनर्गायत्रस्य किं निधनोपायकं, मानसीनस्य मानसनिधनमुपयन्तीति सर्वकर्तृत्वं वक्ष्यति। तस्मात् सर्वे एवान्त्यमक्षरद्वयनिधनं सर्वसाम्नाम्। गायत्रादन्येषां साम्नां निधनं सर्वे एवोद्गाता-[र] उपयन्ति। हिङ्कारः। गायत्रस्य हिङ्कारः प्रतिपन्नाहारश्चेत्, अनवानत्वं विहन्येत। यदि सामि ताम्येन्मेध्य ऋचोवान्यात् इति हि श्रूयते। अत्र ब्रूमः—नायं हिंकारो गायत्रान्तर्भूतः प्रतिहारत्वेन विधीयते। कुतः पुनरयमागतः, इदमुच्यते। मनसाध्येयोऽसौ[3] ब्राह्मणे विहितो मनसाध्येयो[4] हिंकारः स गायत्रस्य प्रतिहारः स्यात्। प्रस्तूयमानं मनसा प्रति हिंकुर्यात्। अपां न्यवाक् इति ब्रूयात्। इति यो विहितः स एवास्य प्रतिहारः। निधनानुपेयादप्रतिहारत्वाच्च प्रतिहर्तान्तहीनः सन्नपि अनेनानन्तहीनः स्यादित्येतदर्थोऽयं प्रतिहारविधिरन्वत्रेभ्यस्त्रिरात्रादन्ये ये सङ्घाताः तेषु गौरीवितमवश्यमन्वहं कर्तव्यम्। तथैव क्लृप्तत्वादिद वाक्यमनर्थकम्, नानर्थकम्। कल्पेषु ऋतुषु सार्थकत्वात् किन्तु ।' श्वस्तनत्वाद् गौरीवितं न कर्तव्यम्।

---

१ को. हिं कृन्तरे  २ को. स्तोमादिशां  ३ को. समग्येयायोर्सौ  ४ को. ध्येय।

नन्वेवमन्वहविधिरसंपूर्णो भवति। अथ च तद्यदेकाहे गौरीवितं न कुर्वन्ति इति या श्रुतिस्तया त्वेकाहे गौरीवितं तेनाहःसङ्घातेषु[1] इति मत्वा आचार्योऽन्वहशब्दं प्रयुक्तवानिति शक्यं वक्तुम्, अथापि एकाहेऽतिरात्रसंस्थे गौरीवितं दृश्यते च। तस्माद् ब्राह्मणवचनमाचार्यवचनेन विरुद्धं कथं गृह्णीमः अत्र ब्रूमः—नात्र विरोधः, तत्कल्पा उ खलु शाट्यायनिनो यदहीनः स आश्वत्थो प्रवाद इति ब्रुवताचार्येण वचनानां परिगृहीतत्वात्। अहीनापि यज्ञस्य सुखस्तनमुपेतेति श्वस्तनं गौरीवितमन्वशिषत्। अत्र यत्र श्वः सोमो विद्यते ऽश्वस्तनत्वादेकाहेषु प्रतिषिद्धस्य गौरीवितस्याहःसङ्घातानामुक्तमेकाहस्सु[2] अश्वस्तनत्वात् एवाभावो युज्यत एव। कथमुदयनीयेऽतिरात्रे सषोडशीके गौरीवितं परिहरेम, श्रुतिरेव न परिहरति। तद्‌ श्वस्तनवदपि प्रजाया उपक्लृप्तमित्याभंवे गौरीवितं प्रतिषिद्धम्। षोडशिनि पुनरवश्यंभावित्वात् प्रजाश्वस्तनं न सोम इति मनसा प्रयोगकाले सङ्कल्प्यमिति गवामयनिके प्रायणीये षोडशिके गौरीवितं नास्ति। आचार्येण क्लृप्तत्वात् अन्येहिप्रायणीयाः सषोडशीकाः द्वादशाः। प्रायणीये हि न गौरीवितं, गवामयनेन विशेषाभावात्। कार्यं···रात्रे। योऽन्तरसुः त्रिरात्रः स चेदत्रिरात्रः[3] अनन्त इति चाश्वःसुत्या प्रवचनीया च प्रातरनुवाककाले या च दक्षिणाकाले ता एतास्तिस्रः सुब्रह्मण्यामाह्वेयाः।

ननु श्वःसुत्याप्रवचनी पश्चाद् वक्तव्या, तथा हि क्रमः परिगृहीतो भवति। उच्यते—उपवसथीये ऽहनि श्वःसुत्याप्रवचनी पूर्वेद्युः उपवसथः, तस्मात् श्वःसुत्याप्रवचन्येव प्रथमं वाच्या। एवं चेदुपवसथ एका द्वे सुत्यायामिति वक्तव्यम्, नान्वहं तिस्र इति। नैष दोषः। अहः शब्दोऽत्र सुत्यावाची। एक सुत्यानुबन्ध्यास्तिस्रः इति व्याख्येयम्। वसतीवरीणामभिषवार्थत्वात् सवसतीवरी...रि हरिणा सम्बद्धायाः सुब्रह्मण्यायाः प्रतिग्रहमन्तवदभाव आशंक्येत, तदाशङ्कानिवृत्त्यर्थं वक्तव्यम्। अन्वहं श्वःसुत्याप्रवचनीदक्षिणाकाल इति द्वे कर्तव्ये, इत्युक्ते प्रातरनुवाककालिकाया अभाव आशंक्येत तन्निवृत्त्यर्थं सापि वक्तव्या। अथवा सर्वाः सुब्रह्मण्याः सुत्याङ्गानि, नोपसहाहोमा वसतीवरीण आज्यग्रहणा दक्षिणानयनाङ्गानि। अहःसङ्घातेषु तासां तिस्र एवान्वहमावर्तन्ते नेतरा इति परिसंख्या क्रियते। का पुनरत्र प्रतिषिध्यते अग्निष्टोमीयवपान्तकालिका। सा हि कृत्वापन्नपश्वङ्गं, तस्मात् सा श्वःशब्दविशिष्टत्वात् प्रथमेनैवाह्ना संबध्यते, न द्वितीयादिभिः। तस्माद् द्वितीयाद्यर्थः पुनः पुनः प्रयोगः प्राप्नोत्येव। तन्निवृत्त्यर्थं तिस्र इति नियम्यते। उपसदन्तविहिताः पुनः सुत्याः सामान्यव्यापित्वात्सर्वसुत्योपकारकाणि स्युः। एवं व्याख्यायमाने सर्वा एवोपसद्यः सद्यस्क्रीयां प्राप्नुवन्ति। यन्नोपात्तं निषेधार्थः कर्तव्य इति। एवं चेदन्यथा व्याख्यास्यामः। अन्वहमित्ययमनुशब्दो वीप्सायाम्। किं तर्हि लक्षणे ग्राह्यः, अहः शब्दः सुत्यावाची। सुत्यामनु सुत्यां प्रति। सुत्यालक्षणाः तिस्र एव सुब्रह्मण्याः स्युरित्यर्थः। एवं व्याख्यायमाने सर्वमिष्टं सिध्यति। औपसदीनां सुब्रह्मण्यानां वपान्तकालिकायाश्च सद्यस्क्रीयामभावः सिध्यति। यत्नमन्तरेणाप्ययमर्थः सिध्यति। कथम्, यदि सुब्रह्मण्याः सुत्याङ्गानि स्युः, सद्यस्क्रीयां दीक्षणीयाप्रवर्ग्योपवसदुपवसथादिवत् सुब्रह्मण्या अपि पूर्वदिवसान्तरगतत्वादुत्सीदन्ति। यद्युपसदङ्गानि, तदभावादेवोत्सीदन्ति।

नन्वत्रोपवसदः सन्ति, स जुह्वत्त्रीणि मीलयति त्रिर्वीक्षते ता एव दीक्षोपसदः इति अत्र ब्रूमः—त्रिर्निमीलनवीक्षणैः सर्वाभिरुपसद्भिः साङ्गादिभिश्चरितं भवति, तस्मात् प्रथमैव व्याख्या साधीयसी·

---

१ को. तेनाद्य: स   २ को. ०मुक्तमेष्यह०   ३ को. वैदत्रि०

**प्राय···मयः ।** अहःसङ्घातेषु प्रायणीयेऽतिरात्रे ऊर्ध्वमुक्थेभ्यः द्वितीयसुत्यार्थां श्वःसुत्याप्रवचनी सुब्रह्मण्यामाह्वयेदित्याचार्या आहुः । प्रायणीयस्याहःसङ्घातवर्तित्वादहःसङ्घातेष्विति किमर्थमयं प्रायणीयशब्दोऽहःसङ्घातप्रथमवर्तिनोऽह्नः समाख्या कल्प्येत, अहःसङ्घातेषु प्रथमोऽतिरात्र इत्यर्थः । तस्मादतिरात्रस्य प्रथमेऽतिरात्रेऽप्येवं भवति । **संस्मित···एके ।** संस्मित एव प्रायणीयेऽतिरात्रे श्वःसुत्याप्रवचनीसुब्रह्मण्यामाह्वयेयुरेके आचार्याः । **अद्य···पराः ।** अवश्यकृतत्वात् कालातिक्रमस्य यथाविहितमेव विधानक्रमेणैव कर्म कुर्याम इति[1] शङ्कन्तः कर्मशेषपरास्तेषामेव दोषः, यदद्यसुत्यां सतीं श्वःसुत्यां प्राहुरिति । **अद्य···पराः ।** अद्यसुत्यां सतीं कथं श्वःसुत्यां ब्रूयाम इति मन्यन्ते । अद्यसुत्यापरास्ते श्वःसुत्याप्रवचनीमपि अद्यसुमात्याह्वयन्ति । **अन्व···ह्वयेत् ।** अत ऊर्ध्वं द्वितीयदिवसप्रभृति अतिरात्रे चानतिरात्रे यदा वसतीवरीः परिहरन्ति तदैव श्वःसुत्याप्रवचनीं सुब्रह्मण्यामाह्वयेत् । उक्तो विकल्पः प्रथम एवातिरात्रे नेतरेष्विति विद्यात ।

इति पर्यध्याये चतुश्चत्वारिंशत्खण्डः ।

---

१ को. कुर्यादिति

# अथ पञ्चचत्वारिंशत्खण्डः

तूष्णीं···सर्वे। सर्व इति बहुवचनश्रवणात् अयं सत्रविषय इति ज्ञायते। सर्वे यजमानास्तूष्णीं समिध आदध्युः। अविधेरेव मन्त्राणामप्रसङ्गात्तूष्णीमित्यनर्थकम्, नानर्थकम्। मानस्या देवतायाः प्रजापतेः परिग्रहार्थत्वात्। तथा हि परैः परिभाष्यते—प्रजापतिं मनसा ध्यायेत्तूष्णीं होमेषु सर्वत्र इति। कः समिदाधानकालः, सहकारिणः[1] प्रष्टव्याः। तेऽपि न जानन्ति चेदादावन्ते वा कुर्युः। अन्वहमित्यनुवर्तते। एकै···इति। एकैकस्त्र्यपराध्र्याः समिध आदध्युः। एतेषु त्रिष्वग्निषु किमेकैकस्मिन् एकैकाः, नैवम्। एकैकस्मिन् अपराध्र्याः समिध आदध्युः। पत्न्य···पत्ये। पत्योर्गार्हपत्य एव। अहि···मिति। यानि ब्राह्मणेऽभिक्रान्तापक्रान्तेत्युक्तानि तान्येतानीति जानीयात्। तेषां···पयत्। आर्भवीयाया अनुष्टुभो मुखे एतेषामन्यतरत् साम न च्यावयेत्। अस···द्यन्ते। यानि प्राकृताग्निष्टोमसामानि तानि गवामयने बहु क्रियेरन्। अथ राजानोऽग्निष्टोमसामानि, राजपुत्राः द्वादशाहीयानि विशश्छन्दस्यानि, तस्मादेतानि त्रयाणि सामानि संवत्सरे कार्याणि इति वचनात्। राध···द्यसे। बृहद्रथन्तरश्यैतनौधसानामग्निष्टोमसामत्वात् अन्वहं प्रयोगप्रसङ्गे इदमुच्यते, राथन्तरेऽहनि राथन्तरनौधसे कार्ये न बार्हते। बार्ह···श्यैत। बार्हत एवा हि बृहच्छ्यैते न राथन्तरे न वृत्रे च, अग्निष्टोमसामानि पृष्ठ्य दशरात्रे च न प्रविशेयुः।

ननु बृहद्रथन्तरश्यावाश्वान्धीगवादीनि पृष्ठ्यदशरात्रयोर्दृश्यन्ते, सत्यमेतत्। एवं वाक्यार्थः कल्प्यः, अग्निष्टोमसामानि गवामयने नियोगतः कार्याणि। पृष्ठ्यदशरात्रे योऽनेनैकान्तिकानि स्युर्वा न वेति। क्लृप्त्यै···वति। क्लृप्त्यैव सिद्धत्वादेतानि वाक्यानि अनर्थकानि। संस्रवकलशदरणा वाक् स्तवनातिष्टवननिमित्तप्राप्तेषु सामव्यतिरेकेषु अग्निष्टोमसामलोपे जामिक्लृप्तिः कर्त्तव्येत्येतदर्थत्वात्। पौष्क···हनि। वाक्यमुच्यते। एतेष्वेव पौष्कलं नेतरेष्विति नियमः क्रियते। सर्व···नोभे। अन्वहमित्यनुवर्तमानत्वाद् बृहद्रथन्तरयोश्च पृष्ठसामत्वात् एकस्मिन्नहनि पृष्ठद्वयक्लृप्तेरसम्भवत्वाच्च सर्वत्र बृहद्रथन्तरे विपर्यस्येदित्यर्थः। प्रथमेऽहनि रथन्तरं प्रयोक्तव्यम्, द्वितीये बृहत्, तृतीये रथन्तरम् चतुर्थे बृहदित्येवं विपर्यस्येदित्यर्थः। यस्मिन्नहन्युभे बृहद्रथतरे प्रयुज्येते तत्र विपर्यासो नैकान्तिकः। सर्वत्र ग्रहणं गवामयननिवृत्त्यर्थम्। किं भरतद्वादशाहनाकसदामनयोरपि विधिरयं प्रवर्तते, न प्रवर्तते। प्रवर्तते च, रथन्तरपृष्ठा बृहत्पृष्ठा इति विशेषविधिरनर्थको भवति। एवं चेदयमपि विधिर्न सर्वव्यापी भवति। सामान्यरूपेषु विधिषु सर्वेषु क्रतुषु वामदेव्ययज्ञायज्ञीययोर्नित्यत्वात्, कल्प्यानां तु प्रकृतिवशत्वात् क्लृप्तेः प्रकृतित एव प्राप्तत्वादयं विधिरनर्थकः, नानर्थकः। महानाम्नि ईहदैर्घ्यश्रवस त्रीष्टादिभिः विश्वजिदतिष्टुतार्वाक्स्तुतादिषु अपहृतस्थानयोस्तयोः स्थानान्तरेऽप्यवश्यं प्रयोगो भवेदित्येतदर्थत्वात्।

नन्वेतयोः स्थानान्तरप्राप्तिः पूर्वमेव विहिता श्यैतयज्ञायज्ञीये आर्भवेऽनुष्टुभां बृहद्वामदव्ये तृतीयसवनेऽन्यदन्यच्छन्द इति। सत्यमेतत्। यद्यच्छावाकसाम अर्वाक्स्तवनातिष्टवननिमित्तः सवननिमित्तो वा आर्भवीयसामप्रकोपो जायते तत्राप्येनयोरनपायो विधातव्यः। आरत्···ज्ञानम्। आरम्भणीय-

---

१ को. सहकारिणा

प्रभृतिष्वहस्सु सुज्ञानं कल्प्यम् । किमस्य स्थानम्, पौष्कलस्य स्थानम् । कथमेतज्ज्ञायते पौष्कलस्येति, यथाछन्दसं सामानि प्रत्येतव्यानि इति वचनात् । औष्णिहमुष्णिहि भवति । एवं चेदिदं वाक्यमकृत्वा पौष्कलविधानवाक्यानन्तरं शेषेषु सुज्ञानमिति वक्तव्यम्, नैवमिष्टं सिध्यति । गवामयनादन्यत्रापि सुज्ञानमिष्यते । तत्प्रापणार्थं सर्वत्राधिकारे उक्तम् एकाहाहीनयोरारम्भणीयाभावादस्य विधेः सत्रविषयता ज्ञायते । किमारम्भणीयवत्स्वेव सुज्ञानम्. नेवम् । सर्वेष्वेवेष्यते । कथमेतज्ज्ञायतेऽयं वाक्यार्थं आरम्भणीयप्रयोगप्रभृति सुज्ञानमिति । यत्रारम्भणीयं प्रथम प्रयुज्यते, तदादीत्यर्थः । त्रयोदशरात्रे हि प्रथमारम्भणीयमहः श्रूयते । त्रयोदशरात्रप्रभृतीत्यर्थः । एवं चेद्, गवामयनवर्जितेषु सर्वेषु अतिरात्रयोर्महाव्रते च सुज्ञानमेव प्रसजति । सुज्ञानविधेरपवादः पौष्कलविधिरिति ब्रूमः । अभि···त्रेव । त्रयोदशरात्रप्रभृतिषु च सत्रेषु अभिप्लवे चाभिवतः प्रयोक्तव्यः । पूर्ववत्के पूर्वस्मिन्नेव पक्षे सपिष्टवत्केऽभीवर्तः न परस्मिन् । तस्य···न्द्रियम् । उत्तरस्मिंस्तु पक्षे यानि राथन्तराणि अहानि तेषु यदभीवर्तस्य स्थानं न तस्मिन्निन्द्रस्येन्द्रियं वक्तव्यम् । बार्हन्वतम् । बार्हतेऽहनि अभीवर्तस्य स्थाने सन्ततं भवति । किं पृष्ठ्यवत्सु त्रयोदशरात्रेषु पृष्ठ्याद्वुपारतनस्याह्नोऽभीवर्त आहोस्विदिन्द्रस्येन्द्रियमभीवर्त इति ब्रूमः—पृष्ठवत्स्थानापन्नमिदमहरिति ज्ञापनार्थम् । तत्र मध्येशब्दः प्रयुक्तः । अह···हीति । अनेन मन्त्रेणोद्यन्तमादित्यमुपतिष्ठेरन् । अस्य विधेः सत्रविषयत्वं ज्ञायते । आरम्भणीयप्रभृतीत्येतस्मिन्नधिकारे विहितत्वादन्वहमिति वर्तमाने पुनरहरहर्ग्रहणमहोरात्रपरिग्रहार्थः । यद्यहरहः शब्दः सुत्यावाचकोऽभविष्यत् एकस्यां सुत्यायामन्तरायबाहुल्यात् कर्तृमान्द्याद्वा बहुषु दिनेष्वनुष्ठितायाँ सकृदेव आदित्य उपस्थास्यत, तस्मात् प्रतिप्रभातमुपतिष्ठेरन्, न प्रतिसुत्याम् । अस्तं···हीति । अस्तं गच्छन्तमेवोपतिष्ठेरन् । यदि बहिर्वेदि चरति दीक्षिते सूर्योऽस्तमियात् अध्वर्युर्वा श्रावयेत् स पुनरुपेत्य गृहपत उपह्वयस्व' इति गृहपतावुपहवमिष्ट्वा तेनोपहूत इत्युक्तः पुनः स्वपदार्थमारभेत । आर···यति । वक्ष्यमाणानि[२] पृष्ठरूपाणि । श्यैतः···श्यो: । यथासंख्यम् । दैर्घ—व्यस्य—ष्टैं—वस्य—ष्टैं—वस्य—गंभि जस्य नित्य—म्नीनां—व्राज—तानीम् एतानि पृष्ठरूपाणि । अति···म्नीनां । यथा···रेवाम् । अभिजिति महानाम्नीनां रूपमतीषङ्ग इतरेषामभिजिति पूर्वोक्तान्येव च रात्रेरिहैतद् ब्रूमः । गवामयन इत्यनेन गावामयनिकस्यातिरात्रस्याषोडशिकत्वे सिद्धे पुनरयं विधिरनर्थकः, नानर्थकः । तत्राषोडशिकत्वं वचनमूलमिति ख्यापनार्थत्वात् । किमस्य ख्यापनेन प्रयोजनम्, यत्र यत्र वचनमूलात् कारणात् षोडशिनोऽभावोऽनुमीयते तत्र तत्र षोडशिनं न कुर्यादिति । क्वायं प्रसङ्गः, द्वादशाहातिरात्रयोः द्वादशाहप्रकरणे प्रागपूर्वो वैश्वानरोऽपान उत्तरः इत्यधिकृत्य द्वे स्तोत्रिये पूर्वस्याह्नो विराजमतीतो द्वे उत्तरस्य इति श्रूयते । अषोडशिके द्वि द्वे अतीतः, अषोडशिके तिस्रः तस्मादेष विधेयेष्वपि वचनेषु सत्सु षोडशिक एव कर्त्तव्यः, इत्येतदर्थोऽयं विधिः ।

कारमहः । केशवपनीयश्चरुरात्राणां चोत्तममहः कारणादषोडशिकौ स्याताम् । कारणमन्वेष्टव्यम् । हिरं···वन्ति । अश्व···क्षाय । यस्मात्···क्षते । अथ···न्विति । सूत्र एवेदं व्याख्याचतुष्टयं व्याख्यातम् । अस्यार्थस्यापि सूत्र एव प्रतिपादितार्थत्वात् अयं विधिरनर्थकः, नानर्थकः । भिन्नविषयत्वात् । असौ विधिरतिरात्रे षोडशिनोऽयमत्यग्निष्टोमे त्रयोदशस्य स्तोत्रस्य । अत्र कुत आगतोऽयमत्यग्निष्टोमप्रसङ्गः, अर्थादागतः । कथं षोडशं स्तोत्रं षोडशीत्युच्यते, नानदं षोडशिसाम, उद्वंशीयं षोडशिसाम, गौरीवितं षोडशिसाम इति सामभिः षोडशं स्तोत्रं विशेष्यमाणं दृश्यते । न ह्येतानि सामानि षोडशादन्यस्मिन् स्तोत्रे प्रयुज्यमानेन षोडशिशब्देन विशिष्टानि दृश्यन्ते । यद्यपि निर्देशो दृश्यते, स गौणो मन्तव्यः । तदेकं

---

१ को. मारंभेत २ को. वृक्ष्यमा० ?

स्तोत्रं स्यात् । षोडशीयज्ञायज्ञीयं चैतदेव त्रयोदशं स्तोत्रमत्यग्निष्टोमस्येत्यत्र षोडशिसम्बन्धि षोडश्यङ्ग-भूतं गौरीवितं निर्दिश्यते । तस्मात् स्तोत्रसम्बन्धः साम्नि वर्तमानः षोडशिशब्दो गौणः स्यात् । नहि सकृत्प्रयुक्तः शब्दो मुख्ये गौणे च युगपत् प्रवर्तितुं शक्नोति । तस्मादत्यग्निष्टोमार्थं राजन्याग्निष्टोमार्थं वक्तव्यमेव । अथ यत् स्तोत्रं षोडशिसंस्तुतं तदेव स्वैर्धर्मैः सह त्रयोदशं स्तोत्रं स्यादिति व्याख्यायमाने को दोषः, तथापि आतिदेशिकत्वात् गौणमेव भवति । किमिदानीं षोडशिशब्दस्य गौणमुख्यविचारणया प्रयोजनम्, यददो हिरण्यं संप्रदाय षोडशिना स्तुवतीति यत्रैकविंशस्तोमत्वं, तदेतद्द्वयं प्रयोजनम् । ताभ्यामेव सह नागच्छतीति च दोष. । एवं चेद् राजन्याग्निष्टोमसामार्थमिति ब्रूमः ।

नन्वत्रापि तुल्यमेव' अत्र विशेषोऽस्ति । स्तोत्राङ्गभूते यज्ञायज्ञीयाङ्गभूतत्वात् षोडश्यङ्गभूतस्य गौरीवितस्य ग्रहणं युक्तम् । यदि षोडशाख्यं स्तोत्रं स्वधर्मसहितमग्निष्टोमसामत्वं भजते । तत्स्तोत्रं द्विचत्वारिंशस्तोमकं सम्पद्यते । तस्मात् तदर्थं वक्तव्यम् ।

नन्वसति मुख्यस्य शब्दार्थस्य परिग्रहसामर्थ्ये गौणाश्रयो युज्यते । अत्र मुख्य एवाश्रयितुं शक्यते । कथमैन्द्रः तवश्शाव्येषु सामसु भेषजं वेति यत् साम तत्र यज्ञायज्ञीयं कल्प्यमाने मुख्यमेवाश्रितं[2] भवति । कथमश्रुतमूहाम्नाये क्रतुषु प्रयोक्ष्यामः ।

नन्वस्तीह पुनरूहलक्षणम् । तेन लक्षणेन न शक्ता वयमूहितुम् । अथवा श्रुतिरेवास्योहमुपह्नुते । दुष्प्रतिज्ञाना वै तवश्शाव्यस्य स्तोभाः । पदवृत्तीति प्रस्तावाः प्रतिहारा देवता निधनानीति ।

नन्वाचार्यकृतलक्षणः षोडशिशब्दः इन्द्र जुषस्व प्र वहा (जै. सं. ३. ६, ६) इति गौरीवितं षोडशिसामेति । किमतः षाडशिन्यग्निष्टोमे राजन्याग्निष्टोमे च मुख्य एव षोडशिशब्दो भवति । सत्यमेव । एवं सति नानदोद्वंशीययोः षोडशिशब्दो गौणो भवति । तदर्थं यत्नः कर्त्तव्य एव । अयं वाक्यार्थोऽविशेषेण षोडशिविधाने इन्द्र जुषस्व प्र वहा इति गौरीवितं षोडशिसाम स्यादितीयं परिभाषा न संज्ञाकरणम्, तस्माद् राजन्याग्निष्टोमार्थं विधातव्यमेवेति सिद्धम् । अथ राजन्याग्निष्टोमार्थं षोडशिधर्मा विधेया इत्येतावत् सिद्धं भवतु । कथमेतज्ज्ञायते, विधिचतुष्टयमिदं राजन्याग्निष्टोम[3] सामार्थमिति । इदमिदानीमभिधास्यते । अस्य वाक्यस्यार्थः पूर्वमेव संज्ञायां प्रतिपादितः सन्नपि हिरण्यं सम्प्रदाय षोडशिना स्तुवन्तीत्यस्य विधिचतुष्टयस्यात्र विहितस्य विषयावबोधनार्थं[4] पुनरप्यत्राभिहितो मन्तव्यः । अस्य विधिचतुष्टयस्योपरितनस्य च विधेरपूर्वविषयानवगमादानर्थक्ये प्रसक्ते उभयोः परस्परसम्बन्धकरणादपूर्वो महानर्थः, स ज्ञायत इति कृत्वास्माभिरेवं व्याख्यातम् । नहि महता यत्नेनापोह्यः परिशेषग्रन्थः ।

वक्तुं वस्तु विधेयमीषदधिकं सिद्धं पुरानूद्यते ।
कृच्छ्रावाप्तमथार्थमुल्बणयति स्पष्टैर्वचोभिः क्वचित् ।।
अन्यार्थप्रतिवादहेतुवचनैरन्यत्र विस्तीर्यते ।
शेषग्रन्थविधानलक्षणमिदं[5] सर्वत्र विज्ञायताम् ।।

इति पर्यध्याये पञ्चचत्वारिंशत्खण्डः

---

१ को. ०शीयज्ञापनीयं  २ को, ०मेवाश्रितो  ३ को. सजन्या०
४ को. विषयावबोधनार्था  ५ को. ०विधानकक्षण०

# अथ षट्चत्वारिंशत्खण्डः

अथा···दिति। अस्य वाक्यस्य प्रयोजनं पूर्ववाक्यव्याख्यान एव प्रतिपादितम्। अत्य···त्र इति। त्रयोदशस्तोत्रशब्देन दशममहर्विशेष्यते। त्रयोदश स्तोत्राण्यस्मिन्निति सुब्लोपे लक्षणं मृग्यम्। इति शब्दो हेतौ। तत्र त्रयोदशस्तोत्रात्मकत्वादत्यग्निष्टोमसंस्थं दशममहः स्यादिति वाक्यार्थः। अत्यग्निष्टोमो हि त्रयोदशस्तोत्रः। किमर्थमत्यग्निष्टोमत्वमुच्यते, गवामयनस्याग्निष्टोमसम्पत्तौ अग्निष्टोमो दशममहरिति श्रूयमाणत्वात् अस्मिन्नुत्पन्नाया अग्निष्टोमसंस्थाया निवर्तनार्थम्। किमस्याः निवर्तने प्रयोजनम्, उत्तर-वाक्यव्याख्यानानन्तरमस्य प्रयोजनं वक्ष्यामः। सप्त···श्चेति। अग्निष्टोमादयः सप्त स्तोमसंस्थाः[1], तासां द्वे सत्रं नावगच्छतः, वाजपेयोऽप्तोर्यामश्च। शेषाः पञ्च सत्रं गच्छन्तीति विज्ञायते। एवं श्रुतिरस्तीत्यर्थः। तथाप्यत्यग्निष्टोमसंस्थं सत्रे न पश्याम इत्याकाङ्क्षायामिदमभिहितम्। अत्यग्निष्टोममहरिति मानसीनत्र-योदशं स्तोत्रमिति कृत्वा दशममहरत्यग्निष्टोमसंस्थं श्रूयमाणश्रुतिवचनसार्थकीकरणायोत्तममिति मन्तव्यम्। अत्यग्निष्टोमो दशममहरिति। पृष्ठच···स्ते। पृष्ठच्ये षडहे सर्वे स्तोमाः सर्वाणि पृष्ठानीति च कर्तव्या-नीति विज्ञायते। एवं श्रुतिरस्तीत्यर्थः। किमर्थमिदमुच्यते, स्तोमक्लृप्तावेव निपृष्ट्यः स्तोमाः विहिताः। प्रकृतिक्लृप्तावृक्सामक्लृप्तिः। सत्यमेतत्। किन्तु पृष्ठान्युद्दिश्य किञ्चिद् विवक्षुणा आचार्येण श्रुतिनिदर्शन-द्वारेणेत्थमारभ्यते। तदारम्भे प्रयोजनमुत्तरत्र ज्ञायते। एव चेत् स्तोमवचनेन कोऽर्थः, अत्र हि श्रौतस्य वाक्यस्य न्यायविचारणाधिक्रियते। पृष्ठच्ये षडहे सर्वे स्तोमाः सर्वाणि पृष्ठानीति हि श्रुतिवाक्यम्। तस्य मध्यपतितपदद्वयनिरासाच्छ्रौतत्वं विहन्येत, श्रौतत्वविघातभयात् सर्वस्तोमशब्दोऽत्राप्रयोजनोऽपि सन् निरस्तयोः[3] श्रौतपौरुषेययोर्वाक्ययोर्भिन्नरूपो हि विचारमार्गः। तस्मादवोचमेत्। पृष्ठच्ये षडहे स्तोमाः, सर्वाणि हि पृष्ठानि इति हि श्रौतं वाक्यम्। विधातव्यानि इत्यध्याहार्यम्। तस्मात् पृष्ठच्ये[4] षडहे सर्वेषां पृष्ठानामिदं वाक्यं विधायकमिति मन्तव्यम्। किमसर्वपृष्ठोऽस्ति क्रतुः, नहि पृष्ठचविश्वजितौ विना सर्व-पृष्ठचक्रतुं पश्यामः।

नन्वादित एव ज्योतिष्टोमे रथन्तरवामदेव्यनौधसकालेयविशिष्टानि मध्यन्दिनार्भवयोर्मध्यगतानि चत्वारि स्तोत्राणि श्रुत्या आचार्येण च 'सप्तदशानि पृष्ठानि द्वादश मासाः पञ्चर्तवः इति च अथ पृष्ठानि इन्द्रियं वै वीर्यं पृष्ठानि इति च। यद्येनं पृष्ठेष्वनुव्याहरेत् इति च। राथन्तराणि बार्हतानि पृष्ठानि इति बहुकृत्वः पृष्ठशब्देनाभिलक्षितानि दृश्यन्ते। तत्रैव विकृतिष्वपि। अत्र ब्रूमः—होतृपृष्ठ एव मुख्यः पृष्ठशब्दः प्रवर्तते। अथाविशेषेणैकवचनेन पृष्ठशब्दे प्रयुक्ते होतृपृष्ठमेव प्रतीयते। यथा अथ रथन्तरं वा बृहद्वा पृष्ठम् इति च। रथन्तरं बृहद् ब्रह्मसाम इति च। तस्य रथन्तरं पृष्ठे भवति इति च। तस्य बृहत् पृष्ठं भवति, इति पृष्ठनिमित्तोऽध्वर्युर्गृहं गृह्णाति पृष्ठस्तोत्रं होतानुशंसति इति च। मैत्रावरुणसामादीनां पुनस्तत्साहचर्यात् पृष्ठप्रतीतिः। पृथङ्निर्देशेषु मैत्रावरुणसामाच्छावाकसामेति निर्देशः। न मैत्रवरुणपृष्ठं ब्रह्मपृष्ठमच्छावाक-पृष्ठमिति वा, द्वितीयपृष्ठं चतुर्थपृष्ठमिति वा निर्देशोऽस्ति। यद्यप्यस्ति स गौणो मन्तव्यः। तस्माद्धोतृपृष्ठ-

---

१ को. ०संस्थायाः　　२ को. ०वचनार्थकीकर०　　३ को. निरस्तां
४ को. पृष्ठे

सम्बन्धानि रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि पृष्ठशब्देनात्र परिगृहीतानि । कुत एतदागतम्, रैवतं वारवन्तीयं पृष्ठेऽहनि पृष्ठमुच्यते[1] पृष्ठेनाहराख्यायते इति ह्यस्ति । रैवतं षष्ठमह इति वास्ति । नचाह्नो रैवतत्वस्य रैवतपृष्ठत्वादन्यत् कारणं पश्यामः । अस्मिन्नेवार्थे श्रुतिरस्ति जीर्यन्त इव वा एतत्पृष्ठानि यदा पृष्ठमहरागच्छन्ति न वै जीर्णे रेतः[2] मिच्यते[2] तद्यद्वारवन्तीयं पृष्ठं भवत्युत्तरेषामेव यज्ञक्रतूनां प्रजात्यै इति । षष्ठमहरासाद्य जीर्णं रेतस्कमारब्धकर्मपरिसमापनासमर्थं[3] मांस्यमानं मन्यमानमिदं रैवतमात्मव्यापारमारब्धकर्मपरिसमापनसमर्थे यूपा निखनन्ति, ये प्रसज्योपरराम इति श्रुतेरभिप्रायः । पुनरप्याह श्रुतिः – यथा जीवतो दायमुपेयादेवं तद् यद् रैवतेऽहनि सति वारवान्तीयं पृष्ठं भवति इत्युपक्रम्य स्वयमेवैतद्पृष्ठं पृष्ठं वारवान्तीय क्रियते इति । अथ पृष्ठं सद् वारवन्तीयमन्त्रपृष्ठ क्रियते इति यत्, तेनापि ज्ञायते वारवन्तीयस्य प्राधान्यम् । किं बहुना, सर्वत्र पृष्ठगणनासु पृष्ठं रैवतमेव लक्ष्यते न वारवन्तीयम् । यथा एति·········
दुक्तम् । नासदासीन्नो सदासीत् (ऋ. १०.१) अथैते ऋतुष्टोमाः, अथैते दिशां स्तोमाः इत्येवमादिषु अध्यायेषु पृष्ठं रैवतमेव दृश्यते । अथवा आस्तां प्रयोगान्वेषणे क्रमः । सृष्टिक्रममवलम्ब्य समर्थयामः । ता रथन्तरं प्रथमेऽहनं सृजन्त इत्येतस्मिन्नधिकारे रैवतमेव पृष्ठं श्रूयते । तस्माद् रैवतमेव पृष्ठं भवति । कथं पुनरिदानीं पृष्ठस्तोत्रसम्बन्धमन्तरेण रथन्तरादीनां पृष्ठत्वं सिध्यति, तद्दिवि स्पृष्टमतिष्ठत् इत्यधिकृत्य तानि पृष्ठानीति परोक्षमाख्यायन्त इत्यनेन वचनेन सिध्यति । अस्यार्थस्य साधीयस्त्वमनन्तरेण वाक्येन शिल्पसम्बन्धवाचिना विशेष्यते । पृष्ठे · जिरे । पृष्ठानि सृज्यमानानि अनुसृजिरे शिल्पान्यपि । यद्वा, पृष्ठानां सृष्टिः, तदादिरेव शिल्पानामपि सृष्टिरित्यर्थः । तद्यै···ल्पानि । तस्माद्येन वा न्यायेन वा कारणेन पृष्ठानि विहितानि, तेनैव शिल्पानि विहितानि ज्ञेयानि । अथवा वाक्यद्वयमेकीकृत्य व्याख्येयम् । तस्मिन् पक्षे यच्छब्दस्याथ खलुशब्दः कल्प्यः । यस्मादसृज्यमानानि पृष्ठानि अनुसृजिरे । तस्मात् येन वाक्येन पृष्ठानि विहितानि तेन शिल्पान्यपि विहितानीति विद्यात् । इति···यने । इत्थं श्रुतिरस्ति । श्रुत्यैवायमर्थो विहित इत्यर्थः ।

ता रथन्तरं प्रथमेऽह्नि न सृजन्त, तद्रथघोषोऽन्वसृजत इत्येवमादिभिः श्रुतिवचनैः पृष्ठशिल्पसर्वक्रमविस्पष्टावबोधिभिः प्रतिपादितोऽयमर्थो ऽस्माभिरभिहितो न केवलं तर्कन्यायावक्लृप्त इति । इममर्थं प्रतिपादयितुमिद वाक्यं न्यस्तम् । अस्य श्रौतवचनत्वावबोधने प्रयोजनमीदृशश्रौतवाक्यानामर्थोपपादनक्रम इति ज्ञापनम् । किमेतस्य ज्ञापने प्रयोजनम्, अत्रानुक्तानामप्येवंविधानां विशेषाणामिमं न्यायमुपाश्रित्य प्रवर्तमानानां परिग्रहः कर्तव्य इति । यथा शिल्पानां पृष्ठचसृष्टचनुसृष्टत्वाद् युगपदेकस्मिन् क्रतौ[4] प्रवर्तमानानामेव शिल्पानि प्रयोज्यानि । तथैव च यथाक्रममिहार ?.........चित्सामक्लृप्ति सामविविक्तपृष्ठचाहःषट्कव्यक्तसम्बन्धत एतन्माहेन्द्रस्तोत्रसाधनीभूतपृष्ठविषयताविज्ञानां होतृपृष्ठगतानामेव शिल्पविधिः । तस्मात्तृतीयादिष्वहस्सु पवमानगतानां बृहद्रथन्तराणां न शिल्पविधिः । सङ्घातनियमस्य प्रयोजनं परोक्षपृष्ठस्य षडहस्य, पृष्ठस्य षडहस्य प्रथमयोरह्नोः बृहद्रथन्तरपृष्ठपक्षेऽपि न शिल्पविधिः । अथवा वाक्यत्रयमेवास्तु । तथासति एवं रूपा श्रुतिरस्तीत्यनुमातव्यम् । तथापि पूर्वोक्त एवार्थः । एवं स्थिते रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्ति इत्यादिषु वाक्येषु अर्थगतिं प्रति बहुधा विकल्पते बुद्धिः । रथन्तरादिसामश्रुतेः सामधर्माः शिल्पानि । अथवा स्तोत्रश्रुतेः स्तोत्रधर्माः आहोस्विदुभयसंयोगश्रुतेः संयोगधर्मा इति । अत्र तत्त्वनिर्णयाधिगमाय विचारयितुमारम्भः । कर्म[5]...त्वात्[5] । यदपूर्वमिति मीमांसकैरभिहितं

---

१ को. पृष्ठ उच्यते २ को. रेतरि शिष्यते ३ को. आत्मव्यापारपान०
४ को. विक्रतौ ५ को. कर्मतत्वात

वस्तु तदत्र कर्मशब्देनाभिधीयते। तादर्थ्ये चतुर्थी। कर्मार्थं स्तोत्रार्थं शिल्पानि सृष्टानि वेदितव्यानि। कथं शिल्पानीति ज्ञायते, पूर्वस्मिन् वाक्ये श्रुतत्वात् शिल्पार्थो ऽभिहितस्तदर्थोऽयं यत्नः। कस्मात् कर्मणे स्यादिति चेत्, द्रव्यस्यार्थगृहीतत्वाद् द्रव्यशब्देनात्र सामानि निर्दिश्यन्ते। सामादिद्रव्यमन्तरेण स्तोत्रं न प्रवर्तते। तस्मादर्थगृहीते[1] द्रव्ये[1] स्तोत्रस्यैव प्राधान्यं स्यात्। रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्ति इत्यादिषु वाक्येषु श्रयमाणानि रथन्तरघोषादीनि शिल्पानि रथन्तरादीनां द्रव्याणामर्थगृहीतत्वात् स्तोत्रस्य प्राधान्यात् स्तोत्रार्थान्येतानि भवितुमर्हन्तीत्यर्थः।

द्रव्य...हणात्। वाशब्दः पक्षव्यावृत्तौ। द्रव्यस्य साम्नो धर्माः शिल्पानि द्रव्यस्य विशेषग्रहणात् रथन्तरस्य स्तोत्र इति रथन्तरविशिष्टे स्तोत्रे, न केवलस्तोत्रे, इति विशेषग्रहणाद्द्रव्यार्थानि शिल्पानि स्युः। कस्मादत्र विभक्त्या नार्थः क्रियते, पूर्वस्मिन् वाक्ये कर्मण इति चतुर्थी श्रुता। अत्र द्रव्यस्येति षष्ठी श्रूयते। नैष दोषः। अध्याहार्यत्वात् द्वितीयस्य द्रव्यस्य तत्रेष्टया विभक्त्या भवितव्यम्।

नन्वयमेकोऽस्ति द्रव्यशब्दः, द्रव्यस्येत्यस्ति, द्वितीयमप्यवश्यमध्याहार्यम्। द्रव्यविशेषग्रहणात् द्रव्यस्य कर्मण इति वोत्तरवाक्यानुकूल्येन योज्यम्। उभयथाप्यदोषः। तद्यु···योगात्। अयमपि पक्षो वाशब्देन निवर्त्यते। तेन युक्तं तद्युक्तम्, तद्युक्तस्य धर्मस्तद्युक्तधर्मः। तच्छब्देन द्रव्यं परामृश्यते। द्रव्ययुक्तस्य कर्मणो धर्माः संयोगात् कारणात्। द्रव्यकर्मसंयोगश्रवणादित्यर्थः। रथन्तरस्य स्तोत्र इति रथन्तरादिविशिष्टस्यैव हि स्तोत्रस्य विधीयते। तस्मात्तद्युक्तधर्मः उभयार्थत्वादनेन वाशब्देन तृतीयोऽपि पक्षो निवर्त्यते। उभयोरेव द्रव्यकर्मणोः सामस्तोत्रयोः पृथग् धर्मो विज्ञेयः। कथम्, अन्यार्थात्। अन्यार्थो ऽर्थवादः। एवं पृष्ठेऽहनि रैवतब्राह्मणे अर्थवादो भवति। वत्सान् मातृभिः संवाशयन्ति इत्यधिकृत्य पवमाने संवाशयेत् इति च। अभ्यावर्तिषु संवाशयेत् इति च पूर्वपक्षमुक्त्वोभयत्र संवाशयेदिति सिद्धान्तः कृतः। अत्र रैवतस्तोत्रविहितः पशुघोषः पवमानगते च रैवते वात्वन्तीयविशिष्टे होतृपृष्ठे श्रूयते, तस्माच्छ्रुतो विस्पष्टं दृष्टत्वाद् अयमेव पक्षः स्थितः। अस्मिन्नर्थवादोपलब्धन्यायप्रसिद्धे पक्षे, समाश्रीयमाणेषु विकृतिषु दोष-मुत्पादयितुमाह—वैकर्मत्वात्। विकृतौ भवं वैकृतं विशेषेणावस्थानं[2] व्यवस्थानं व्यस्था [न व्यवस्था] अव्यवस्था। प्रकृतेर्धर्मः प्रकृतिधर्मः, प्रकृतिधर्मो धर्मो यस्याः सैषा प्रकृति[धर्म]धर्मा विकृतिः। उत्तरपदलोपो द्रष्टव्यः। वैकृते क्रतौ यदि पृष्ठानि प्रयुज्यन्ते तत्र शिल्पेषु प्रयुज्यमानेषु व्यवस्थानं शक्यते कर्तुम्। प्रकृतिधर्मत्वाद् विकृतेः। सर्वेषां क्रतूनां प्रकृतिर्ज्योतिष्टोमः। दशरात्रोऽहर्गणानाम्। गवामयनं संवत्सर-सत्राणाम्। शेषा विकृतयः ते पृष्ठानां स्वशिल्पानाम्। पृष्ठप्रकृतित्वं पूर्वमेव प्रतिपादितम्। नच विकृतावहःसङ्घातेषु पृष्ठानां प्रयोगो दृश्यते, एकाहे विश्वजिन्नाम्नि दृश्यते। विश्वजिति सर्वाणि पृष्ठानि इति श्रूयते। अनेनैव वचनेन शिल्पान्यपि विहितानि विज्ञेयानि इति पूर्वमेवोक्तम्। शिल्पानामुभयधर्मत्वं च साधितम्। तस्माद् विश्वजिति सामधर्मद्वारेण[3] सामसु शिल्पानि प्रयोज्यानि। स्तोत्रधर्मद्वारेण माहेन्द्रस्तोत्रे युगपदुपगच्छन्ति। तेषामशेषाणां शिल्पानां तुल्यकर्तृकाणामेककाले विहितानां माहेन्द्रस्तोत्रसकलावयवव्यापिनां क्रमनियमनिरपेक्षाणां युगपत्समावेशासम्भवादवश्योपयोग्यत्वाच्च अङ्ग-निमित्तं प्रधानावृत्तेरन्याय्यत्वाच्च अवयवशोऽपि प्रयोगः प्राप्नोति। तत्रावयवानां मात्राक्षरपादस्तोत्रिया-पिष्टापर्यादीनां कालपरिमाणपरिच्छेदसमर्थानामनेकत्वादेकैकशिल्पप्रयोगकालपरिमाणव्यवस्थानं न सम्भ-वति। इदमादौ प्रयोक्तव्यमिदं द्वितीयमिदं तृतीयमिति क्रमव्यवस्था न सम्भवति विशेषनियमकारणाभावात्।

---

१को. तस्मादर्थ गृहीतंद्रव्य    २ को. विशेषणोपस्थानं    ३ को. धर्मद्वारेण

अथ सृष्टिक्रमं वा प्रयोगक्रमं वा आसक्तिक्रमं वाश्रित्य व्यवस्थेयमिति चेत्, तत्रापि त्रयाणामेकं व्यवस्थातु न शक्यते। अथ च रथघोषपशुघोषयोरन्यकर्तृकत्वात् अग्निघोषस्य कालात् प्राक्तनत्वात् शेषाणां त्रयाणां त्रिभिरुद्गातृभिराश्रयाद् व्यवस्था कर्तव्येति चेत्, तथापीदमुद्गात्रा प्रयोक्तव्यम् इदं प्रस्तोत्रेदं प्रतिहर्त्रेति व्यवस्थानं न शक्यते। सर्वथाव्यवस्था विद्यत एव।

पक्षे···सत्वात्। वा शब्दोऽवधारणायाम्। पक्षेण विकल्पः। पर्यायेण सम्यगाप्तं, समाप्तत्वात्। एकस्मिन्नेव शिल्पे प्रयुक्ते तत्कृतेन संस्कारेण सकलं स्तोत्रं सम्यगाप्तं भवति। तस्मात् पक्षेणैकेनैव शिल्पेन भवितव्यम्। तथापीदं वा प्रयोज्यमिदं वेदं भवति, एकावधारणायां कारणाभावात् अव्यवस्थाविषयत एव। अत्र पक्षेणेत्युक्तत्वात् पूर्वपक्षो युगपत्प्राप्तिकृत इति विज्ञायते।

अपरा व्याख्या—पक्षेण वेत्येतावदेकं वाक्यम्। माहेन्द्रपक्षेणैव शिल्पानि प्राप्नुवन्ति, न युगपत्। कोऽभिप्रायः, स्तोत्रस्य हि संस्कारविशेषा[1] शिल्पानि[1]। तत्रैकेनापि शिल्पेन निरवशेषसंस्कृतं स्तोत्रं गुणसम्पन्नं भवति। अप उपनिधाय उपकिऽन्य हृदि गायन्तो महानाम्नीभिः स्तुवते इति गानोदिगानयोः समानकालत्वश्रवणात् यावत्स्तोत्रपरिसमाप्ति शिल्पेषु प्रयुक्तेषु शब्दार्थः सम्पूर्णो भवति, एकेन शिल्पेन संस्कृतं स्तोत्रमितराणि शिल्पानि नाकाङ्क्षन्ति। तस्मात् पक्षेणैकेन संस्कृतस्तोत्रस्य प्रयुक्तस्य च शिल्पस्य न वैगुण्यं भवति। युगपत्प्राप्तौ त्वसमग्रप्रयोगात् स्तोत्रस्य शिल्पानाञ्च वैगुण्यमेव भवति। तस्मात् स्तोत्रसम्पत्तिहेतोः यत्किञ्चिदेकमेव शिल्पं प्रयोक्तव्यम्। अथेदानीमेवं सति समानस्तोत्रयोः पृष्ठ्य इव तन्त्रेणैकशिल्पप्रयोगेण सिद्धत्वात् यत्नलाघवमुपलक्ष्योत्पन्नायाः अग्निघोषव्यवस्थाबुद्धेरयुक्तत्वप्रतिपादनार्थमाह—समाप्तत्वात्। समाप्तत्वात् परिनिष्ठितत्वात् सामगानारम्भात् प्रागेवाग्निघोषः समाप्त इतीतरेषां शिल्पानां प्रयोगे गानकाले भिन्नविषयतात्वात् सावकाशत्वाच्च प्राप्नोति। कृतेप्यग्निघोषे व्यवस्थाशिल्पानि प्राप्नुवन्त्येव। तस्मादव्यवस्था विद्यते एव। प्रकृतिश्चेत्, प्रकृतिः इत्यत्र ज्योतिष्टोमोऽभिधीयते। सर्वक्रतुप्रकृतित्वात्। तेषु विकृतिषु विश्वजिदादिषु पृष्ठशिल्पप्रकृतिभूतपृष्ठ्यमाहेन्द्रबहुत्वजनितयुगपत्प्राप्तिकारणादव्यवस्थाप्रसङ्ग इदमुच्यते। एकमाहेन्द्रात् ज्योतिष्टोमात् सर्वप्रकृतेर्निर्गम्य विकृतिप्राप्तानि शिल्पानि मन्तव्यानि। पृष्ठशिल्पानां सृष्टिरुपलक्ष्यते। रथन्तरमसृजत तद्रथघोषोऽन्वसृज्यत इत्यादिना ग्रन्थेन निरूपिता। प्रकृतेरेकमाहेन्द्रत्वात् एकमेव शिल्पमाहेन्द्रे प्राप्नोति। प्रकृतिवदेव हि विकृतौ भवितव्यम्। यन्माहेन्द्रसम्बन्धिनः साम्नः शिल्पं तदेव हि तस्य स्तोत्रस्यापि शिल्पं भवति। तस्मादेवमव्यवस्थादोषो न प्राप्नोति। नापूर्वत्वात्। न यदुक्तं तन्न भवति। अपूर्वत्वात् प्रकृतावप्रयुक्तत्वात्। यस्मात् प्रकृतौ शिल्पानां प्रयोगो न दृश्यते तस्मात् प्रकृतितो विकृतिं गच्छतीत्येतन्न घटते। कथं पुनरेतानि शिल्पानि ज्योतिष्टोमब्राह्मणे तद्रथन्तरमसृजत इत्यादिना ग्रन्थेन सृज्यमानानि विधीयमानानि प्रकृतौ न प्रयुज्यन्ते। अत्र ब्रूमः—प्रकृतौ होतृपृष्ठार्थं प्रजापतिर्यद् बृहद्रथन्तरे पृष्ठे[2] अथ रथन्तरं वा पृष्ठम् इति ते एव विकल्प्येते। होतृपृष्ठस्यैकत्वात्। नचात्र एतयोः शिल्पसम्बन्धः श्रूयते। नच वैरूपादीनां प्रकृतौ होतृपृष्ठसम्बन्धः श्रूयते। योऽसौ वामदेव्ये ब्राह्मणे तद्रथन्तरमसृजत इति रथन्तरादीनां शिल्पवती सृष्टिः श्रूयते। तद् रथन्तरादीनां षण्णां पृष्ठानां सशिल्पानां सृष्टत्वाद् वामदेव्यस्य माहात्म्यप्रदर्शनार्थमपि ज्ञया। नचास्याः प्रकृतेन मोहन्द्रेण सम्बन्धोऽस्ति। इत्थमभिप्रेत्यैषामपूर्वत्वमुक्तम्। स्वलिङ्गार्थी[3] इति चेत्, एषामपूर्वाणां सतां शिल्पानां प्रकृतिविकृतिसम्बन्धासंभवात् विकृतिगतैः कथं सम्बन्ध इति, लिङ्गा-

---

१ को. ०रविशेषशिल्पानि     २ को. सृष्टे ?     ३ को. २खिगा ?

र्थानि लिङ्गप्रयोजनानि। लिङ्गार्थमुत्पन्नानीत्यर्थः । पृष्ठेषु दर्शनं पृष्ठदर्शनम् पृष्ठदर्शनात् कारणात्। तद्रथन्तरमसृजत, तद्रथन्तरघोषोऽन्वसृज्यत इत्यत्र पृष्ठसर्गानुसृष्टिकारणावादितपृष्ठलिङ्गत्वप्रतीतेरन्योऽन्याकृतसंबंधानि शिल्पानि विकृतिगतैर्लिङ्गैः पृष्ठैर्दर्शनमात्रादेव। अत एव निर्गम्य संबघ्नन्तीत्यर्थः। कथमिदानीमव्यवस्थादोषः परिह्रियते, पृष्ठानां सशिल्पानामुभयत्र सृष्टिक्रमः श्रूयते। ज्योतिष्टोमब्राह्मणे पृष्ठचब्राह्मणे च तत्र वा पार्ष्ठिकानि शिल्पानि पृठचऽपि नियुक्तत्वाच्चरितार्थानि विकृतिगतैः पृष्ठैः सम्बन्धं नाकाङ्क्षन्ति।

यद्यपि सृष्टिकाले रथन्तरादिसम्बन्धत्वादाकाङ्क्षति। विकृतिषु विधीयमानानामात्मसम्बन्धिनां पृष्ठानां दर्शनमात्रमेव शिल्पानां सम्बन्धकारणं भवति। यद्यत्र शिल्पानां स्तोत्रविशेषनियमो न स्यात् तदा सर्वस्तोत्रसाधारणत्वादुत्पन्नानां स्तोत्रधर्मद्वारेण प्रतिस्तोत्रं युगपत् प्राप्नुवतां पुनरेवानेकरूपेण व्यवस्थां प्राप्नुवन्ति इव प्रतिभान्ति। व्याघ्रात् तस्य सिंहगुहाप्रवेशवत् एकामव्यवस्थां परिहर्तुं यतमानस्य संस्थाः प्रादुरासन्। अत्र ब्रूमः—तस्माद्रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्तीत्येवमादिषु माहेन्द्रनियमाभावाच्छ्रुत एवार्थ उपादेयः। येषु केषुचिद् रथन्तरादिसामविशिष्टेषु स्तोत्रेषु रथघोषादीनि शिल्पानि कार्याणीत्येतावदत्र श्रुतम्। नचात्र पवमानेऽभ्यावर्तिषु चेत्, असावर्थवादः प्रकरणान्तरवर्तित्वादुभयधर्मत्वनिश्चयावबोधहेतुः प्रवर्तते। पृष्ठस्तोत्रसंयोगमात्रमेव शिल्पानां प्रवृत्तिकारणं मन्तव्यम्। तस्माद्विश्वजिति रथन्तरसंबंधिनि मध्यन्दिने रथघोषः कार्यः। वैराजसम्बन्धिनि होतृपृष्ठेऽग्निघोषः शाक्वरसम्बन्धिनि मैत्रावरुणे साम्नि अपां घोषः, वैरूपविशिष्टे ब्रह्मसाम्नि वायुघोषः, रैवतविशिष्टेऽच्छावाकसाम्नि पशुघोषः, बृहद्विशिष्टेऽग्निष्टोमसाम्नि दुन्दुभिघोष इति।

अपूर्विकानां शिल्पानां नेच्छन्त्युभयधर्मताम्।
पृष्ठदर्शनमेवातो वैकृते वृत्तिकारणम्॥

अथैतेषां शिल्पानामपार्ष्ठिकानामप्राकृतानामर्थवादे श्रुतत्वात् क्रतुसम्बन्धनिरपेक्षाणामपूर्वाणां सतां विकृतिषु विश्वजिदादिषु विधीयमानैः पृष्ठैः तद्दर्शनमात्रादेव कारणात् सम्बन्धः कथमुपपद्यते इत्याकाङ्क्षायामाह—**निगदत्वात्**। निगद्यते इति निगदः, निगदत्वादाम्नातत्वात्। तस्माद् रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्तीत्यादिभिः वाक्यैः रथन्तरादिविशिष्टैः स्तोत्रैः शिल्पानां सम्बन्धो निगद्यते। सम्बन्धस्य निगदितत्वाद् येन केनचिदुपायेन उपयोगमाकाङ्क्ष्य स्थितानि तानि शिल्पानि उपयोगनिमित्तभूतानां पृष्ठानां दर्शनादेवोपयोगभाञ्जि भवन्तीत्यर्थः।

अथास्य शिल्पविधानस्य पार्ष्ठिकस्य[2] विहितानि नियोगविषयस्य विस्पष्टवचनं कारणान्तरं विना विकृतिषु विनियोक्तृशक्तिः कथमुपलक्ष्यते, इत्याकाङ्क्षायामाह—विज्ञानार्थानामाम्नायो वेदः। स हि क्रियार्थं यज्ञे कर्मसु विनियोगार्थः। अतदर्थानामक्रियार्थानां यज्ञकर्मसु विनियोगमलभमानानां विधीनामानर्थक्यं प्रसज्यते। तस्मात् सर्वे विधयः क्रियार्था एव भवितुमर्हन्तीत्यभिप्रायः। यदि कतिचिद् विधयः क्रियायोगं न लभन्ते, तेषामाम्नायोऽप्यनर्थकः स्यात्। क्रियार्थस्य नित्यस्याम्नायस्य स्वयंभुव एकदेशानर्थक्यमपि न युज्यते। एकदेशानर्थक्येऽपि सति प्रामाण्यं विहन्येत। तस्मिन्नप्रमादे सर्वो वेदः प्रमाण्यं भवेत्। तस्मात् सर्वे विधयः क्रियार्था एव स्युः। तस्मात् सर्वेषां विधीनामविदितविनियोगविषयाणामपि येन केनचिदप्युपायेन सम्बन्धं कल्पयित्वा कर्मसु विनियोगः साध्यः।

१ को. पृष्ठद०  २ को. पार्ष्टिकस्य

विधीनां (हि) क्रियार्थानामानार्थक्यप्रसङ्गतः ।
क्रियार्थत्वाद् विधेः सिध्यत्यवश्यविनियोज्यता ॥
अस्य शिल्पविधेर्यज्ञे न्यायमार्गानुरोधतः ।
येन केनाप्युपायेन सम्बन्धं विनियोजयेत् ॥
पृष्ठसर्गासृनुष्टत्वाच्छिल्पानां पृष्ठधर्मता ।
तस्मात्तु धर्मिणां तेषां दर्शनादेव सङ्गतिः ।
माहेन्द्रस्तोत्रसम्बन्धो यत्र शिल्पसमुद्भवः ।
अन्यार्थादुभयोर्वेति पक्षोऽयं तेन वर्तते ॥
पार्ष्ठिकानां[1] हि शिल्पानां होतृप्रष्ठाश्रितो विधिः ।
ज्योतिष्टोमे श्रुतानाञ्च स्तोत्रमात्र समाश्रितः ॥
तस्मादपार्ष्ठिकानां[2] तु शिल्पानां कल्पने ध्रुवम् ।
संयोगायुक्तधर्मो वेत्ययं पक्षोऽवधार्यते ॥
तस्माद्दर्शनमात्रेण शिल्पानां पृष्ठगामिनाम् ।
शिल्पानि तु प्रयोज्यानीत्ययमर्थोऽत्र निश्चितः ॥
रथन्तरस्य स्तोत्रे स्याद् रथघोष इति श्रुतिः ।
रथन्तरस्य तु स्तोत्रं पवमानो हि मध्यमः ॥
अनेकसामसाध्यस्य स्याद् रथन्तरता कथम् ।
तस्मात्तु पवमानस्थे साम्नि शिल्पं न युज्यते ॥
षष्ठी रथन्तरस्येति सम्बन्धाद् विहितेति चेत् ।
शिल्पस्य सकलस्तोत्रव्यापित्वं व्याप्नुयात्तदा ॥
सम्बन्धः स्तोत्रसम्बन्धे यदा शिल्पं तदा भवेत् ।
इति व्याख्यायमाने तु न च दोषः प्रवर्तते ॥
अथवा स्तोत्रमित्येतत् स्तवनार्थे प्रकल्पयेत् ।
साम्नः स्तवनकाले [हि] स्याच्छिल्पमित्यदोषकृत् ॥
स्तोत्रेऽथवा सतः साम्नो रथघोषो भवेदिति ।
व्याख्याते नैव दोषः स्यात् सर्वमिष्टं च सिध्यति ॥

इति पर्यध्याये षट्चत्वारिंशत्खण्डः ।

---

१ को. पार्ष्टिकानां ?        २ को ०दपार्ष्टिकानां ?

# अथ सप्तचत्वारिंशत्खण्डः

विज्ञायते । यदस्मिन् पटले वक्ष्यते तत्सर्वं ब्राह्मण एव विज्ञायते इत्यर्थः । जन्ति । रथन्तरस्य स्तोत्रे गीयमाने रथघोषं कुर्वन्ति । के, नु खलु रथन्तरघोषस्य कर्तारः, आस्तावे वासस्युपविष्टानां व्यवस्थित-दिगभिमुखानां द्यावापृथिव्योः सम्बन्धमीक्षमाणानामुद्गातॄणां सदसो बहिः क्रियमाणमाधावनक्रियाद्यनेकयत्नम् आस्तोत्रपरिसमाप्ति अनुपरतं सम्पाद्य रथघोषं कर्तुमसम्भवाद् यजमानपुरुषाः, इति ब्रूमः । बृहयन्ति । किमत्रापि यजमानपुरुषाः, नैवम्, उद्गातार एव कुर्युः । विरोधाभावात् । सति सम्भवेऽनादिष्टकर्तृकाणां कर्मणामुद्गातृकर्तृत्वं पूर्वमेवाधिकृतम्, वेदाधिकृतत्वात् । इममेवार्थमध्वर्यवो दृढयन्ति । दुन्दुभिनैतदध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोति इति बौधायनोक्तम् । तस्माद् दुन्दुभिना सह स्तोत्रमिति सेत्स्यति । उद्गातापि तमेव दुन्दुभिं बृहतः स्तोत्रं च परिगृह्य ब्रूयात् दिवस्थितरम् इति । उपाकरणे दुन्दुभेरेकवचनश्रवणात् उद्वादने बहुवचन-श्रवणाच्च प्रस्तोतृप्रतिहर्तारौ चान्यौ दुन्दुभी[1] उद्वादयतः[1] । वैरू—न्वन्ति । आधावेन एतदहरन्ध्यमहिन्द्रस्य स्तोत्रमुपाकरोति इति वचनात् पूर्वेणैव वाक्येन व्याख्यातम् । हिङ्कृ—न्यन्ति । हिङ्कृते अप्रस्तुते वैराजे उद्गातुरूरौ दक्षिणे अधरारणिं निधायोत्तरारणिशकले[2]नामन्थन्ति[2] । आध्वर्यवं मन्थनस्य, बहुकर्तृकत्वात् । ननु ब्राह्मणे हिङ्कृत्याप्रस्तुत्य मन्थन्ति इति श्रूयमाणयोः हिङ्कारमन्थनयोः[3] समानकर्तृकत्वादुद्गातृकर्तृकमिदं मन्थनम्, अत्र ब्रूमः—मन्थनं[4] नाम[4] अधरारणिधारणोत्तरारणिपरिभ्रमणरज्वाकर्षणाद्यनेकव्यापारसमवेत-त्वात्[4] अनेकपुरुषसाध्यम् । तत्राधारभूतेनोरुणा[5] धारणमुद्गातृकर्म, करयुगलाभ्यामुत्तरारणिचालानं परिरक्षणं प्रस्तोत्रप्रतिहर्तृकर्म । इतरदितरत्कर्म । तस्मान्मन्थनव्यापारपरत्वादुद्गात्रध्वर्यूणामध्वर्युरपामन्थति[6] इति वचनं न दोषाय । हिङ्कृत्य मन्थने यथास्य व्यापारमारभन्ते[7] इत्यर्थः । अथवा सुप्तिङुपग्रहलिङ्गेन रात्रादीना छन्दसि व्यत्ययबाहुल्यादचोद्यमेतत् । अव···उन्ति । अवकाभिरूरुं पर्यूहन्ति । अदाहाय सञ्छादयन्ति । प्रस्तो···यतः । ओंकारमित्याभीक्ष्णे णमुल् । ओमित्यक्षरमुच्चार्योच्चार्य हस्ताभ्यामरणिं धारयतः । अचपलीकरणाय[8] । तज्ज्ञा···येन । तस्मिन् स्तोत्रजाते अग्नौ जुहोति उद्गाता । अग्निं नरः (जै. सं. १.७.१०) इति तृचेन तिसृभि ऋग्भिः त्रिभिर्जुहोति । तमा···रन्ति । हरन्त्यध्वर्यवः । तं ही···रिति । उद्गातानुमन्त्रयते किमेतानि शिल्पानि स्तोत्रेषु विधीयमानानि तेषां स्तोत्राणामादौ प्रयोज्यानि उत मध्ये, उतान्त्ये, उत सर्वत्र, उभयत्र क्वचित् । अत्र ब्रूमः—सामस्तोत्रयोः संयोगः शिल्पप्रवृत्तिकारणम् । आरम्भप्रभृति आसमाप्तेः संयोगोऽस्त्येव । तस्माच्छिल्पानां स्तोत्रसकलव्यापित्वं सिद्धम् । सततकरणार्थमेव दुन्दुभ्या-दिभिः स्तोत्रोपाकरणम् । एवं 'वैराजस्य स्तोत्रेऽग्निं मन्थन्ति' इति श्रूयमाणत्वात् अत्र विहितस्याग्नि-मन्थनस्य स्तोत्रारम्भात् प्राक्तनत्वादितरवृत्तिहेतोः वैराजे प्रस्तुतेऽपि आसमाप्तेरग्निमन्थनं कर्तव्यमिव प्रतिभाति । अत्र ब्रूमः—यमेनं वैराजस्य स्तोत्रे हि मन्थंतीति यदग्निमन्थनं, विहितं, हिंकृत्याप्रस्तुत्य मन्थन्ति इति, तदग्निमन्थनमनूद्य हिंकारप्रस्तावयोः मध्यविषयत्वं विधीयते । तदेतदखिलं ब्राह्मणवचनमधिसमीक्ष्यो-

---

१ को. दुन्दुभिरुद्वा॰ २ को. ॰शकलेनाग्निं मन्थन्ति ३ को. ॰कारमन्थत्रयोः
४ को. मन्थनानामध॰ ५ को. तत्राथायि॰ ६ को. ॰र्युरपामन्थन्ति
७ को. मारंभन्ते ? ८ को. अचचली ?

पात्तं वस्तु आचार्येण सकलतत्त्ववेदिनात्र व्यक्तमभिहितम् । तस्माद् वैराजस्यैतावदेव शिल्पकर्म । **अव···वते**[1] । अवकिनिरपः समीपे निधाय ता उद्विंगयन्तः सशब्दमुत्सिञ्चन्तो महानाम्नीभिः स्तुवते । अवकिन्य[2] इति छान्दसः प्रयोगः । **अनु···षेण** । त्रयाणां पर्यायाणामन्तेषु सकृत् सकृत् पुरीषेण च स्तोतव्यम् । पुरीषं महानाम्नीनामवयवः । तिसृभ्यः स्तोत्रियाभ्यो व्यतिरिक्तोऽपि तासामेव सामान्येन शेषभूत एवोह्यादि पञ्चपदात्मकः । एतत् सामान्तरम् न च स्तोत्रियान्तरम् । **तासा···मनयेत्** । तासामुपनिहितानामपाम् अपामवयवानामास्तावे आसिच्य[3] शेषमन्तःपरिधि अग्निपरिध्योर्मध्ये निनयेत् । तासामित्यवयवषष्ठी दर्शनात् शेषशब्दश्रवणाच्च आस्तावे तासामेकादशनिनयनसिद्धेः यावत्कामीत्यनर्थकम्, श्रूयतामस्य पदस्यार्थः । वक्ष्यमाणकामापेक्षोऽयं कामशब्दः । वक्ष्यमाणानां यावन्तोऽभीष्टाः कामास्तावतां निमित्तेषु देशेषु निनीयेत्यर्थः । आस्तावे च यावत्कामं च निनीय शेषमन्तःपरिधिं निनयेत् । प्रथममास्तावे निनयेत् ततः कामसम्बन्धेषु देशेषु । यदि कामाः परिगृह्यन्ते ततः शेषमन्तःपरिधीति सिद्धम् । आस्तावान्तं परिधिनिनयनं सकामस्यापि विद्यत एव । एकवचनश्रवणादुद्गाता निनेता ।

**सद···कामः । गोष्ठे···कामः** । श्मशानेऽभिचरन् । अभिचारकाम इत्यर्थः । **सभा···कामः । सर्व···कामः । समु···यावा** । सर्वेषु निनयनेषु मन्त्रप्रापणार्थ एवकारः । किमेतान् कामानुद्गातोपभुङ्क्ते[4], नैवम् । यजमान एव क्रतुसम्बन्धं क्रियाकलापमुपभुङ्क्ते । ऋत्विजस्तु दक्षिणामात्रफलाः । एवं चेत्, सदसि वर्षकामो निनयेत् इति समानकर्तृकत्वं न घटते । नैष दोषः । वर्षकामश्चेद्[5] यजमानः सदसि[6] निनयेत् । उद्गातेति सम्बन्धः क्रियते ।

अन्तं परिधियास्तावे नित्यं विनयनं स्मृतम् ।
इतरत्र सकामस्य नाकामस्य विधीयते ॥

**वै···यन्ति** । रेवतीसम्बन्धेऽहीनवत्सान् मातृभिः सवाशयन्ति यथा मातृदर्शनाद् वत्साः स्तनपिपासया हुंभारवं कुर्वन्ति, तथा विदध्यात् इत्यर्थः । किमेतस्मिन्नहनि सर्वत्रानारतं संवाशयेयुः, नैवम् । संवाशन कालं वक्ष्यति । **पवमा···षु च** । पवमानेभ्यो वर्तिषु च संपारयन्ति । कस्मिन् पवमाने, रैवतपवमाने इति योज्यम् । किमभ्यावर्तिषु सर्वेषु, नैवम् । इयं निर्धारणे षष्ठी । अभ्यावर्तिषु यद् रैवतं स्तोत्रं वा साम तस्मिन्निति योज्यम् । रेवतीष्वृक्षु गीतत्वादत्र रैवतमिति होतृपृष्ठ वारवन्तीयं वा गृह्यते । अस्मिन्नर्थे ब्राह्मणं भवति—अथ रेवतयः इत्यधिकृत्य ऋग्वा अयं लोकः, समासौ देवक्षेत्रं वासौ लोकपवमानः ताय द्वेधा व्यूहन्ति, तेनैवाम्यामुमाभ्यां नयन्ति इति । तस्यायमर्थः । ऋगयं लोकः, लोकः समासी, देवक्षेत्रभूतो ह्यसौ लोकः पवमानः, ता रेवतिद्वगात्मनो पृष्ठे सामात्मना पवमान इति द्वेधा यत् वहन्ति तेनैव अस्माच्च लोकात् अमुष्माच्च न च्यवन्ते । अथ च आपो वै रेवतयः आप उ रैवतं साम, तद्यद रेवतीषु रैवतं पृष्ठं कुर्युः अगाधे ज्ञेयुः न प्रतिष्ठेयुः तद् यद् वारवन्तीयं पृष्ठं भवति, प्रतिष्ठित्या एव जीर्यन्तीव वा एतपृष्ठानि यदा षष्ठमहरागच्छन्ति । न वै जीर्णे रेतः परिषिच्यते[7] । तद्वारवन्तीयं पृष्ठं भवत्युत्तरेषामेव यज्ञक्रतूनां प्रजात्यै इति । तस्माद् रेवतीषु वारवन्तीयमेव पृष्ठं कुर्युः । एवं कृते उत्तरेषाँ यज्ञक्रतूनां प्रजातिर्भवतीति ।

---

१ को. वपते ?　२ को. अपकिन्य　३ को. या सिच्य
४ को. ०प भुञ्जते　५ को. वर्षुकाम०　६ को. सदसी
७ को. परिशिष्यते

एवं पवमानगतघोषस्योभयधर्मत्वम्। उभयधर्मत्वमुभयत्र संवाशयेदित्युच्यते। एव ब्राह्मणेनाभिहितमर्थमुपलक्ष्य आचार्योऽपि तमेव शब्दमुपादाय पवमानेऽभ्यावर्तिषु पवमाने चेत्यवोचत्। तस्मादभ्यावर्तिषु यद्धोतृपृष्ठं रैवतं रेवतीगतं तस्मिन् पशुघोष इति साधूक्तम्। अथवा छान्दसत्वादेकस्मिन्नर्थे बहुवचनसिद्धिर्व्यत्ययेन। अथवा। रेवतीनां बहुत्वमाश्रित्य प्रवर्तमानस्य बहुवचनस्याभ्यावर्तिनीषु इति प्राप्तस्य नीकारलोपो मन्तव्यः। अथवा। कर्तरि स्त्रियामौणादिक इप्रत्ययोऽनुमातव्यः। अथवा। रेवतीषु प्रयुज्यमानस्य साम्नः त्रयस्त्रिंशत् कृत्वः पुनरावर्तनाद् बहुत्वसिद्धिः। उक्त···त्या स्युः। स्तोतॄणामुत्तरतो वत्साः स्युः। दक्षि···तरः। स्तोतॄणामेव दक्षिणतो मातरः स्युः। मातॄणामुत्तरतो वत्साः स्युः। वत्सानां दक्षिणतो मातर इत्यपि योजयितुं शक्यत इति चेन्न। अनयोरन्यतरस्यानर्थक्यप्रसङ्गात्। ता···अयेषु। वत्साः स्वमातरश्चान्तर्वेद्येव भवेयुः। तासा···नयुः। तासां गवां दुग्धमाशीः संकल्पिते दध्नि कृत्वा आसिच्योदीचीरुदङ्मुखा उत्सृजेयुः। आदिभ···नयेषु। यदि रैवतमध्वर्यवेऽद्भिरुपकुर्युः। ता वा॰बन्तीयं स्तुत्वान्ते आपोहिष्ठीयादिभिः तिसृभिरास्तावे निनयेत्। शिल्पकर्मक्रमः कीर्तितः पृष्ठसामसु, इदानीं दशमस्याह्नो विशिष्टो वक्ष्यते विधिः। अवै···सिरत। सर्वेषु यज्ञेषु कर्तृप्रमादजनितेषु स्तुतशस्त्रयाज्यादिमन्त्रभेदषु स्वमतिदुस्साध्यप्रतिसन्धानेषु कर्मविच्छेदकारिषूत्पन्नेषु यथार्थमेव वक्तव्यम्। यज्ञविच्छेदे यद्विवेकेन वचनं यत् तत्र विपाकशब्दो वर्तते। पचेर्धातोर्भावसाधनस्य घञन्तप्रत्ययान्तस्य रूपम्। चकारस्य च घिति[1] कुत्वं विद्यते। विपाकमर्हतीति वैपाक्यं, न वैपाक्यमवैपाक्यम्। अवैपाक्यमिति दशममहरुच्यते। तद्विपाकं नार्हतीति। यद्यपि तदवैपाक्यं तथापि व्युच्यमेवमन्यन्त आचार्याः। कुत इति चेत्, यस्मादत्युच्यमाने तूष्णीमासीरन्नुद्गातारः अप्रतिभायाम्, तस्माद् व्युच्यमेव मन्यन्ते। विच्छि···यज्ञात्। तूष्णीमासनाद् ऋत्विजो यज्ञाद् विच्छिद्येरन्। यज्ञ···पेत्या। व्युच्यमेवेति। तस्मात् कारणाद् व्युच्यमेव इति मन्यन्ते आचार्याः। तद्या··· प्राह। तत्र यावताक्षरप्रमाणेन व्याह तत्प्रमाणं होत्रे प्राह ब्रूयादेतावन्त्यक्षराणीति। तद्धो···यति। तथा तैरक्षरैस्तावत्संख्यैरक्षरैः सहानुष्टुप् सम्पद्यते। शस्ते तथा होता कल्पयेत्। समीरन्ति। एवं कृते दशममहः समपादीति[2] सर्वे ऋत्विजो व्याहरन्ति सार्थम्। सम···वते। सदसो बिले द्वारे समपिहिते द्वे कृत्वा ते मानसीनेन स्तोत्रेण स्तुवते। दशमस्याहस्त्रयोदशं स्तोत्रं मानसीनं[3]। मौत···ह्वाति, मन···रोति, मन···यति। एतत्त्रयमध्वर्युकर्म। मन...र्वन्ति। उद्गातारः। मन···स्तोति। प्रस्तोता। मन···दत्ते। मन···यति। एतद्द्वयमुद्गातृकर्म। मन···रति। प्रतिहर्ता। किं साम मानसीनस्य, गायत्रं साम भवति। इति श्रूयते। गायत्रमेव एकगायत्रस्य निधनमुपेयादन्यत्र मानसीनात् इत्यनेनापि ज्ञायते, गायत्रमिति। किं गायत्रस्य प्रतिहारो नास्ति, अस्ति हिङ्कारो वै गायत्रस्य प्रतिहारः इति विहितोऽस्ति। एवं चेत्तस्यापि मानसीनत्वादिदं वाक्यमनर्थकम्। नानर्थकम्। सिद्धस्य पुनर्विधानादन्ये[4] मानसीनस्य प्राकृता धर्मा न प्राप्नुवन्तीति ज्ञापनार्थं विधातव्यम्। तस्मादपूर्वस्यास्य मानसीनस्यौदुम्बरीपरिग्रहादयो धर्माः न प्राप्नुवन्ति। यावदुक्तमेव कर्तव्यम्। प्रतिहारोपसाम्नो बहिर्भूतत्वान्न प्राप्नोति, तस्माद् विधातव्यम्। हिप···गान···वति-मनयन्ति। बहुवचनिर्देशात् सर्वे निधनमुपयन्ति। मन···यन्ति। उक्तो हि भक्षणमन्त्रः। को नु खलु मानसीनस्य स्तवनकालः, समिष्टेषु वत्सीसंयोजेषु स्तोतव्यम्। ऋमे तावन्तं कालं सदस्येवासीरन्निति, नैवम्। यज्ञायज्ञीयस्य सोमेषु भक्षितेषु अपरया द्वारा निष्क्रम्य स्तुबाहुत्यादिपत्नीसंयाजान्तं कर्म कृत्वा मानसीनेन स्तुवते[5]। पूर्वया द्वारा परस्तात् निष्क्रमणदर्शनात् पूर्वमेव प्रविश्य स्तुवते।

---

१ अत्र चजोः कुः घिण्यतोः इति घितप्रत्यये परे कुत्वं ज्ञेयम्। २ को. समपादिति ?
३ को. स्तोत्रमानसी० ४ को. ०नादस्यामान० ०नानन्या मानसीनस्य ५ को. स्तवते

ननु उत्तमसोमभक्षणानन्तरमपरद्वारा निष्क्रमणमिति पूर्वमेव कथितम्। किमतो मानसीनस्य भक्षणानन्तरमपरद्वारा निष्क्रमणं प्राप्नोति, सत्यमेतत्। प्राप्नोति। सति मानसीनस्य स्तोमस्य भक्षणे। नास्त्यत्र सोमभक्षणम्, मनसा भक्षयामीति चिन्तामात्रमेवात्र प्रवर्तते। नात्र सोमोऽस्ति। न च भक्षणक्रिया। यत्र सोमे भक्षणमस्ति, तदन्तरमेव निष्क्रमणमपरया द्वारा। न चात्र यज्ञायज्ञीयसोमात् परो सोमोऽस्ति। तस्मात् पूर्वद्वारा सदः प्रपद्य मानसीनेन स्तुवीरन्।

ब्रह्म···दन्ति। ब्रह्मवादिमार्गं सहकारिणः प्रष्टव्याः। चतुर्होतॄन् होतानुव्याचष्टे इत्यादित्यब्रह्मणे चान्वेष्टव्म्[1]। सर्वे सत्रिणो वदन्ति। वाचं···रिति। अद्वा···गायेत्। किमुद्गातृग्रहणेन प्रयोजनम्, प्रस्तोतृप्रतिनिवृत्तिः। प्रस्तोता परिगाणानां गाता। किमिदं परिगाणम्, कः संशयः, परिगाणेष्वेव विहितमेतदहरहस्सत्रे सत्रस्यर्धिगाये[2]। प्रागुदीचीं दिशमभिमुखाश्चात्वालमवेक्षमाणाः स्वादितिविहितस्य तस्यैव सत्रस्य-तस्यैव सत्रस्यर्धीनं स्थानकालयोर्विशेषावधानार्थमत्र पुनरप्युपन्यासः कृतः। किमहीनेऽपि द्वादशाहे सत्रस्यर्धि गातव्यम्, न गातव्यम्। स्वस्थान एव हि यज्ञसारथिर्गातव्यः।

सर्वे···त्तिकाः। यथा···हेति। ते द्रा···येयुः। प्रागुदीचीं दिशमभिमुखाश्चात्वालमवेक्षमाणाः साभिप्रेतं कामं ध्यायेयुः। स ऐ ह···ध्यते। एवं कृतेऽन्वकामः समृध्यते। तेषां···ते सु···जज्ञे। सुब्रह्मण्योमिति एतावदुक्त्वा पश्चाद् यथेष्टं भवितव्यम्।

ब्रह्मवादादि यत्कर्म वाग्विसर्गान्तमीरितम्।
तत् सर्वं सर्व एवैते कुर्वीरन् सह सत्रिणा॥
सत्राधिकारविज्ञाना बहुत्वश्रवणादिह।
कर्तव्यं सत्र एवैतन्नाहीन इति नो मतिः॥

इति पर्यध्याये सप्तचत्वारिंशत्खण्डः

इति पर्यध्याये नवमोऽध्यायः समाप्तः

---

१ का. चान्वेष्टव्यः
२ को. सत्रस्यर्धिगाये:

# अथ अष्टचत्वारिंशत्खण्डः

## अथ स्तोमकल्पः

सर्वसाधारणं तन्त्रमादौ सूत्रेण सूचितम् ।
स्तोमाहः क्रमसंस्थोक्तिः स्तोमकल्पेऽखिलक्रतोः ।।

प्रकृतित्रितये साम्नां विधिः प्रकृतिकल्पगः ।
संज्ञाकल्पो विकृत्यर्थः संज्ञया परिभाषया ।।

विकृतित्रितये साम्नां विधिः विकृतिकल्पगः ।
न्यायप्रदर्शनपरः पर्यध्यायः क्रतुष्वथ ।।

अवक्लृप्तक्रतुधीधर्मैः तन्त्रैः पृष्ठादिलिङ्गतः ।
त्रिस्तोत्रताद्युद्वाशादिः ऋक्साम: शेष आगया ।।

प्रस्तावाद्यर्णगीत्यन्तर्निधनेष्टादिलक्षणम् ।
षट्छन्दःप्रतिहारोक्तिरथ द्वादश नुष्टुभः ?[1] ।।

प्रगीतप्रतिहारोक्तिः प्रगी[2].................. ।
गायत्री सामभक्त्युक्तिरुचिस्तद्वच ह् इत्यभि—।।

संयोगदेवताच्छन्दः सामान्तस्तन्त्रजामिता ।
संवादः सत्रगः पूर्वं तेऽग्निष्टोमाभि......सम् ।।

महाव्रतं महाध्वर्युर्यथेसदिगर्थं (मै ?) महिं ।
नवमः परिशेषाख्यः प्राणस्तूष्णिगथापि[3] वा ?
स्तोमार्थाः स्युस्त्रयोऽध्यायाः द्वादशाध्याय एव हि ।।

अध्यायत्रयमाद्यं प्रकीर्णकं प्रतिहृतिर्द्विधा तत्र ।
ऊहः सकल्पसमयः सम्वादः संव्रतश्च परिशेषौ ।।[4]

अथास्यां[5] । बहिष्पवमानादिस्तोत्रगतस्तोत्रियायां संख्याविशेषेषु स्तोमशब्दः करणसाधनः प्रवर्तते । परिच्छिद्यन्ते स्तुवत इत्येत एकादयाऽष्टचत्वारिंशान्ताः सर्वेषु वेदेषु सर्वस्मिन् साह्नाहीनसत्रवर्त्मनि स्तोत्रप्रयोगेण सवनयोगेन च श्रूयन्ते । तेषामिदं विस्तरेण व्याख्यानं प्रतिज्ञातम् ।

तेष्व...यन्त । तेष्वष्टचत्वारिंशत्सु प्रसिद्धेषु येऽस्माकं प्रवादेन विधानेन विज्ञायन्ते विशेषतो ज्ञायन्ते, ते चतुस्त्रिंशत्[6] एव स्तोमाः सन्ति । नेतरे । द्वाविंश-त्रयोविंश-षड्विंश-नवविंश-त्रिंश-पञ्चत्रिंश-

---

१ को. द्वादशगणष्टुभः ?  २ को. प्रगीगापोष्णिगानं  ३ को. प्राणस्तुष्णिगनथापि त्रि ?
४ को. अध्यायत्रयमाद्यमि इत्यारभ्य परिशेषौ इत्यन्तं कारिकापाठ स्त्रुटितोऽवभाति विकलो वा  ५ को. अथा स्याम
६ को. चतुस्त्रिंशतमेव ?

सप्तत्रिंश-एकोनचत्वारिंश-एकचत्वारिंश-त्रिचत्वारिंश-पञ्चचत्वारिंश षट्चत्वारिंश-सप्तचत्वारिंशानां कल्पे वास्माकं ब्राह्मणे वा श्रवणाभावादिदमुक्तम् । तेषां···वन्ति । तेषामुक्तानां चतुर्दशाहा अयुजो भवन्ति । अष्टशब्दोऽवधारणार्थः । नहि त्रयोविंशनवविंशैकत्रिंशानां त्रयस्त्रिंशानां[1] परेषां च श्रवणमस्ति । युग्म··· शतिः । युग्मान्तास्तु विंशतिः श्रूयन्ते । द्विकषट्कयोः क्व श्रवणमिति चेत्, परस्याध्यायस्य सप्तमे पटले । षट्कस्य तु श्रुतावपि विधिरस्ति । यदि सर्वेषु पर्यायेषु स्तुतेष्वभिव्युच्छेत् षड्भिः होत्रोऽस्तु युग्मभिरिति[2] तान् 'स्वामीते खलु जातम्' इति जातिरुच्यते । तान् खलु चतुर्दशायुजो विंशति च युग्मतः षड्भ्यः स्तोमजातिभ्यो वक्ष्यमाणाभ्यो युग्मान्, त्रिभ्यः स्तोमजातेभ्यो युग्मान् निष्कर्षति, त्रिभ्यो ऽयुजः । एकी···खानि । अयुजां स्तोमजातानामेवैतानि मुखानि द्विकर्मजातानाम् ।

ननु प्राथम्यलक्षणमिह मुख्यत्वं भवति । तथायमाचार्य एव कतिपयवाक्यात्यये वक्ष्यति । त्रिकं··· तराः । त्रिकमुखाः षड्भिः षड्भिरुत्तरास्त्रिकास्त्रिवृत्पञ्चदश इत्येवमापञ्चचत्वारिंशदादाय[5] पृथगवयवस्थाः[4] । तदे···वति । अयुजामिति षष्ठी निर्धारणे । तदेतदष्टस्तोमात्मकमयुजां समं नाम स्तोमजातं भवति । यत्रैषां त्रयः पर्यायाः मिथः समसंख्याः शक्नुवन्ति ते समा इत्युच्यन्ते । पञ्चि···तराः । पाङ्क्त्येकादश इत्येवमासप्तपञ्चचत्वारिंशान् । तदे···वति । अधिकं शेते वर्तते इत्यधिशयः । द्वाभ्यामधिशेते इति द्व्यधिशयः कर्माधिशय[6] इति चेत्, सममित्यर्थवशात् त्रिकं हि पञ्चको द्वाभ्यामधिशेते । त्रिवृतं चैकादशः । द्व्यधिशयं नामैतत् । स्तोमजातं वेति । एकि···तरा । सप्तकमित्येवमात्रं[8] त्रिचत्वारिंशत् । तदे··· वेति । एकिनोऽर्थलुप्तमेवैकाधिशयत्वमित्ययुजः । अथ युग्मन्तः···षट्कि···तराः । तदे···वति । द्विका···चराः । तदे···वति । चतुरुत्तराः । तदे···वति । अयुग्वाक्यवदेव गमयितव्यानि । इति···वानि । न्यायशब्देनाप्यधिकृतैव स्तोमजातिरुच्यते । यथोत्तरत्र षट् स्तोमन्याया इति । तत्राप्यसिद्धमिति चेन्न । एकोपक्रमा इत्यादिना ग्रन्थेन विवृतत्वात् । न्यायानां मुखानि न्यायमुखानीति । इत्थं षट् स्तोमजातानां मुखानि भवन्ति । यत्कृतं चोद्यम् । एकद्विकयोरेव प्राथम्यादयुग्युग्मतां मुखत्वमुपपद्यते । नात्रिकादीनामिति । तदिदमयुग्युग्मत्समद्विजातिभेदापेक्षं[9] प्राथम्यं प्रदर्श्य परिहृतम् । अथ···दानम् । अथ इति षण्णामेव स्तोमजातानां निर्देशः ।

अथ जातिविवेकादनन्तरं मेद्यस्तोमजातेभ्यः चतुस्त्रिंशतः यावन्तो यावन्तः स्तोमा एकैकस्मादयुग्मत्समास्ते स्तोमजातानुपूर्वेणादीयन्ते त उपेक्षितव्याः । सम्यगधार्याः । प्रस्फुटप्रतिभानार्थमवधारणमिदं चोदितम् ।

समाः षडन्वादीयेरन् अयुजो द्वौ तु नान्तिमौ ।
पञ्चकैकादशौ चतुर्दशश्च द्व्यधिशायिनः ॥
एकप्रभृतयः पञ्च नैकत्रिंशमुखास्त्रयः ।
सप्तषट्कमुखा येषां त्रिंश एको न दृश्यते ॥
द्विकादयोऽपि तावन्तः षडंशस्यैव न ग्रहः ।
द्वाविंशषट्चत्वारिंशौ चतुष्कादिषु विप्लुतौ ॥

---

१ को. त्रयस्त्रिशान् | २ को. युग्मरिति | ३ को. द्विकर्मताम्
४ को. ०यवथास्याः ? | ५ को. ०मासप्तपंचत्वा० | ६ को. कमधिशेय
७ को. ०कवशायर्ण्या ? | ८ को, ०कमित्तेवमा० ? | ९ को. ०त्समा द्वि०

अथ⋯तन्त्रम् इत्यत्र । यत्स्वभावोपलम्भनात् परं शक्यायामपि वृद्धौ अवृद्धमैकरूप्येणैव तिष्ठति । तदुच्यते आवाप इति चात्र । तदुच्यते—यन्नियतपरिमाणं तदधिकं परिगृह्णाति । तौ तत्रावापौ विष्टावोपयोगिनौ वक्ष्यामः । उदाहरणत एवैतौ आचार्यो विवरिष्यति[1] । तत्र—च्यते । कथं तदिति । कथमित्यनवक्लृप्तौ । विशिष्टैकैकसंख्याशरीरेषु बहुतराभ्यावचनसंख्यापरिच्छिन्नतृचभागाद्यवयवेषु । तायन्तेऽस्मिन्नवयवा इति तन्त्रशब्दोऽधिकरणसाधनमापन्नः[2] प्रागपि पञ्चदशात् तत्र सद्भावमेकान्ततो निश्चित्य सासूयमेव चोदको वदति । तत्परिहरन्नाह । त्रि प्रा⋯यते । प्रथमस्य पर्यायस्य प्रथमः स्तोत्रिया वर्तते । मध्यमस्य मध्यमा । उत्तमस्य चोत्तमा । तदेव तत्र प्रायणीयपरिचरा तेषु समस्तोमेषु भवति । सा त्रिविधा तृचभागावपरिचरा संज्ञा सर्वप्रथमे पर्याये प्रथमा स्तोत्रिया तृचभाग् भवति । तत्र वशादावृत्यातिस...ऋचो भजते । मध्यमा आवापस्थानमुत्तमा एत्वस्थानम् । तदुच्यते मध्य⋯वाप । उक्तचरास्तृचभागाः परिचरायाः सिद्धौ कृतायां य इति शिष्टं, तस्यावपनं मध्यमायां कार्यमित्यर्थः । परिचरतीति परिचरा । परितः प्रवृत्तिमात्रमियं लभते । नारम्भसनमित्यर्थः । मध्यवर्ति । उत⋯वापः । प्रथ⋯परा⋯उत⋯पति⋯प्रथ⋯वापः । मध्यं परा । इत्थमेव गतिरुपरितनस्य वाक्यषट्कस्येति ख्याता इति । इतिर्यदर्थो,[3] वेत्यवधारणे । खलु शब्दः सम्यग्भावे । अयमर्थः—इयताग्रन्थेनैव प्रत्येकमकृतविष्टावसन्दर्भा अपि समस्तोमाः सम्यग्व्याख्याताः । विस्पष्टमुक्ता भवन्तीति ।

यथैकविंशे पर्यायविष्टावविधयस्तथा ।
तृणवादिसमस्तोमेष्वावापाधिकता भिदा ॥
अपि भक्ता स्तुतिः स्तोत्रं पर्यायस्तत्त्रिधा कृतेः ।
विष्टावास्तत्त्रिधा भेदाः ते सर्वेऽभ्यासवत्स्तुतौ ॥

इति महत्स्तोमे प्रथमः खण्डः

इति पर्यध्यायेऽष्टचत्वारिंशत् खण्डः

---

१ को. ऽपि वरिष्यति २ को. तन्त्रशब्दमधिकरणसाधनमपानः ३ को. इति पदर्थो

# अथ ऊनपञ्चाशत्खण्डः

अथ···षमाः । व्याख्यास्यन्ते इति शेषः । ये समेभ्योऽन्ये ते विषमाः[1] । एकाधिशया द्वयधिशयाश्च । कुतः पुनरेके विषमा उच्यन्ते इत्यपेक्षित उच्यते । ते···ख···वन्ति । खल्विति हेतौ । ते हि विषमपर्यायाः भवन्ति । यत एषां पर्यायाः न समास्तत एवैते विषमा भवन्ति । न ह्यहस्तोमास्त्रिमध्यास्त्र्युद्या इति ब्राह्मणेनोक्तं तन्त्रं विज्ञेयम् । पञ्च···द्यते । एतत्तन्त्रं पञ्चदश एव प्रथममुपपन्नं भवति । अत्र पञ्चदशे तन्त्रावापवृद्धिर्दृष्टा सा न त्रिषु यानेषु भवति । द्वयोः यानयोरेव[2] भवति । नचाधस्तनेषु स्तोमेषु ।

नन्वावापवृद्धिरष्टादशे प्रथममुपद्यते । न तत्रापि द्वयोर्ह्यानयोरेव शक्या वृद्धिः कर्तुम्, तथाप्यावापस्यैकस्य न वृद्धिः क्रियत इति सोऽपि विवर्त्यते । एक···वापौ । सहवादउत्तरविधिविषयावबोधायोपन्यस्यते । एकविंशे स्तोमेऽभ्यावर्तिनि[3] तन्त्रावापयोर्वृद्धिः प्रतिज्ञाता । अथैतमर्थमेकविंशतिविष्टावसन्दर्भेणैव विवृणोति । सप्तभ्य इति । सप्त···रोति । स तिसृभिः[4] । स एकया । अथ प्रथमे पर्याये सप्त स्तोत्रियास्ता उद्दिश्य सकृत् हिंकुर्यात् । तेन सप्तानां स्तोत्रियाणां प्राणतादोषशान्तिश्च सिद्धयति । अत्रैकवचनं विवक्षितम् । उपगातारस्त्रयोऽपि हिङ्कुर्युः । वीप्सायां वा त्रित्वसिद्धिः । अत्र प्रतिवाक्यं तच्छब्दः समानकर्तृकत्वद्योतनार्थः । अन्यथा गातृभेदात् भिन्नकर्तृत्वप्रतिभा स्यात् । तिसृभिरित्यादि स्त्रीलिङ्गनिर्देशात् स्तोत्रियाभिरिति सिध्यति । आवृत्त्या तिसृभिः प्रथमाभिः स्तोत्रियाभिः स्तुयुरिति प्रकरणात् सिध्यति । तथा मध्यमाभिरावृत्तिरहितया च स्तुयुः । प्रथमः उत्तरयोः पर्याययोरपि विष्टावभेदप्रदर्शकानामष्टकानां वाक्यनामेषैव गतिरिति विज्ञेयम् । सा···ख···वति । खल्वित्यवधारणायाम् । विष्टुतिरेकविंश उक्ता,[5] सैवोपकल्पते[5] । समपर्यायत्वमेषां न कल्पते न भवति तेषाम् । द्वौ ज्यायांसौ वृद्धतरौ एषां पर्यायाणामिति द्विज्यायांसः । द्वौ कनीयांसावल्पतरावेषां पर्यायाणामिति द्विकनीयांसः । द्वाभ्यां ··पियन्ति । द्वाभ्यां चाभ्यां स्तोत्रियाभ्यामेते पर्याया मिथोऽपियन्ति[6] । ज्यायस्त्वं कनीयस्त्वं च गच्छन्ति । त्रिस्तोत्रियं च स्तोत्रियाया इति । षट्स्तोत्रियाया अष्टस्तोत्रियाया इति च । तान्···खलु···यन्ति । एतेषामिति ये द्वये समाख्यातास्तेषां ग्रहणात् निर्धारणा षष्ठी । अयुजामित्यवयवषष्ठी । तान् खलु विषमान् । एतेषां समानां येऽयुजः, प्रसङ्गनिवर्तनार्थकत्वात् । कस्य···रिति । कथमेषां साधनमिति, इत्थमेषां साधनमेवं हि क्षिप्रमुक्तं सिध्यति । किमुक्तम्, पर्यायाणां द्विज्यायस्त्वं द्विकनीयस्त्वं मिथश्चैषां स्तोत्रियाद्वयकृतमतुल्यत्वमिति । नहि गिरिगुहोपलक्षितस्य धूमस्याग्नियोगित्वममेधसोऽप्यध्यवस्यति । न लौका इति ? यज्ञिका अधिदर्शपूर्णमासयोः सिद्धेनाग्न्यन्वाधानादिना कर्मकलापेन ज्योतिष्टोमे सिद्धेन च दीक्षणीयादिना आग्रहायणादि हविर्यज्ञान् उपसदादींश्च सोमान् सङ्गमय्य साधयन्ति । अथा···श्चेति । अथ चायमपरो हेतुः—समस्तोमपर्यायैरेव विषमात्[7] सिद्धिं कारयन्ति, अतोऽन्यथा समस्तोमपर्यायाः ।

ननु पादाय चेद्, विषमविष्टावे प्रयुक्ते[8] ततश्च पर्यायान् कर्तुं नाशक्ष्यत् । न शक्नुयादयं विषमविष्टावावकाशः[9] । समसंख्याया उपादानादन्यो विषमविष्टावसिध्युपायो नास्तीत्यर्थः । अयमर्थो

---

१ को. विषयाः | २ को. भानयोः | ३ को. स्तोमेभ्यो वर्तिनि ?
४ को. स तिसृभिः तिसृभिः | ५ को. उक्त्वा सैवोल्पते ? | ६ को. वयन्ति ?
७ को. विषमाणास्तत्सिद्धिं ? | ८ को. प्रयते | ९ को. विष्टावकाशः

ऽनन्तरं भविष्यतो वाक्यचतुष्टयस्य व्याख्यायां प्रकाशतामेष्यति । उच्यते—स खलु…हरेत् । स खलु विषमविष्टावसिद्धौ[1] यावेषां विषमाणां सन्निहितौ समौ स्तोमौ स्यातां तयोरेव पर्यायान् संहरेत् । युग्मं युक्संहारस्य । पृथग् विधास्यमानत्वादयं स्वसंहार एव । ततोऽयमयुक्समयोरेवानन्तरौ समौ इति । अथ किमेवं पुरस्तात् सन्निहितावेकादशस्य त्रिकत्रिवृताविति, उत परस्तात् पञ्चकस्य त्रिवृत्पञ्चदशाविति, उतोभयत्र पञ्चकस्य त्रिकत्रिवृताविति, तत आह—पूर्व…स्य च । पूर्वं स्थानमस्येति पूर्वस्थानः । उत्तरं स्थानमस्येत्युत्तरस्थानः । विषमात् पूर्वस्थानस्य चोत्तरस्थानस्य चोभयोः समयोः पर्यायात् संहरेत् । पूर्वीयेष्वेकादशीयेषु सिषाधयिषितेषु पूर्वस्थानस्य समस्यैकैकं पर्यायमुत्तरस्थानस्य च द्वौ द्वौ संहरेत् । सप्तके त्रिकस्यैकवृत्तौ द्वाविति । त्रयोदशे त्रिवृत एकं पञ्चदशस्य द्वाविति । अथ…कैकम् । पञ्चके त्रिकस्य द्वौ, त्रिवृत एकमिति । एकादशे त्रिवृतो द्वौ, पञ्चदशस्यैकमिति । अथ…शया । उक्तः स्वयं संहारोऽयुग्विषमाणां, युग्विषमाणां तूत्तरस्मिन् पटले वक्ष्यते । एषस्तूभयेषामेषां युग्मायुक्संहारविधिरुच्यते । अथ शब्दोऽधिकारान्तरद्योतनः । अथायुजामेकाधिशया अष्टकचतुर्दशादयो युग्मायुक्संहारे वर्तेरन् । पूर्वस्थानस्यैकैकमुत्तरस्थानस्य द्वौ द्वाविति । सप्तकादीनां स्वसंहारे या पर्यायव्यवस्था प्रकल्पिता सैवाष्टकादीनामपि युग्मायुक्संहारे पर्यायव्यवस्था भवेदित्यर्थः । एतद्युग्मायुक्संहार इति उत्तरस्माद् वाक्यादनुषङ्गन्यायेनार्थयोगात् । एतदपि वाक्य युग्मायुक्संहारे सति व्यवस्कन्दति । ततोऽष्टकस्यैकः षट्कपर्यायः, द्वौ त्रिवृत्पर्यायाविति । चतुर्दशस्यैको द्वादशपर्यायः, द्वौ पञ्चदशपर्यायाविति । पर्यायव्यवस्था युग्मायुक्सहारे प्रकल्प्या । एवमर्थमिदं वाक्यद्वयम् । सयुजामयुग्मतामिति नार्थोऽपि विशेषणेन । एकाधिशयजातस्य सर्वस्यापि एकविधमेव स्वसंहारकल्पनमुक्तम् । पूर्वस्थानस्यैकैकमुत्तरस्थानस्य द्वौ द्वावेकाधिशयेष्विति एकविधमेव सर्वस्यापि द्व्यधिशयजातस्य ।

अथ द्व्यधिशयेषु पूर्वस्थानस्य द्वौ द्वावुत्तरस्थानस्यैकैकमिति । तयोरेवंविधयोर्युग्मायुक्संहारं प्रति वैपरीत्येन प्रवर्तनार्थमेतद् वाक्यद्वयं स्यात् । इयतैव सिध्यति यैवं द्व्यधिशयेति । ततोऽन्यथा वाक्यद्वयस्यार्थो वर्ण्यते । पूर्वेण तावद् वाक्येन येऽयुगेकाधिशया एव सप्तकत्रयेण[2] अर्थमेतद्वाक्यं द्वादशनवदशपञ्चविंशैकत्रिंशसप्तत्रिंशत्रिचत्वारिंशाः स्वसंहारनिर्वर्तितसिद्धरूपास्तैः सारूप्यमिदामष्टानां युग्मद्व्याधिशयानां द्विकाष्टकचतुर्दशसविंशषड्विंशद्वात्रिंशाष्टत्रिंशचतुश्चत्वारिंशानां युग्मायुक्सहारनिर्वर्तितसिद्धरूपाणां प्रज्ञास्यते । न तु कर्तुमेषां क्रियते । उत्तरवाक्येन चैवमेव युग्मद्व्यधिशयानामष्टानां लब्धस्वसंहाराणां यद्रूपं तदेव लब्धयुग्मायुक्संहाराणामयुगेकाधिशयानां[4] रूपमिति प्रतिपाद्य यथासंख्येन चैतदेषां संयोजनं भवत्युभयेषां समसंख्यत्वात् । ततश्च सप्तकाष्टकयोस्त्रयोदशचतुर्दशयोरिति भवति । तदिदं सुखबोधाय[5] प्रदर्श्यते । सप्तकस्य संस्थासंहारसिद्धस्योभयतस्त्रिवर्गो मध्यम एकवर्गो भवति । अष्टके चैवं कृते कुतोऽप्ययं युग्मायुक्संहारो भवति । प्रथमस्य वर्गस्यैकापचयः सप्तकत्वमपि हन्तुमर्थात् कर्त्तव्यम् । एवं तावदयुगेकाधिशयानां युग्मद्व्यधिशयानां च युग्मायुक्संहारोपलभ्यरूपमाचार्येण प्रज्ञापितम् । अत एव यत्नादयुग् द्व्यधिशयानां युग्मदेकाधिशयानां चैवंभावः सिध्यति इति पृथग् वर्णितम् । यथा युग्मतामेकाधिशया वर्तन्ते एवमयुजां द्व्यधिशयाः । यथायुजां द्व्यधिशया एव युग्मतामेकाधिशया इति व्याख्यातृप्तिस्तु वर्णयित्वा प्रदर्श्या[6] । दशकस्य स्वसिद्धसंहारस्योभयतश्चतुर्वर्गो, मध्यमो द्विवर्गो भवति ।

---

१ को. विषमपिष्टावकृत्यौ  २ को. सप्तकत्रयेन  ३ को. यद्रून्
४ को. ०णामयुगेताधि०  ५ को. दुःखबोधाय  ६ को. पदर्प्या

एकादशे चैवं कृते कृतोऽप्ययं युग्मायुक्संहारो भवति। प्रथमस्य चतुर्वर्गस्यैकापचयोऽर्थबलाद्दशकत्वमपि हन्तुं कर्तव्यम्। एकादशस्य स्वसंहारसिद्धस्य पञ्चवर्गः प्रथमामध्यमोत्तमौ विसर्गौ। दशके चैवं कृते कृतोऽप्ययं युग्मायुक्संहारो भवति। प्रथमस्य पञ्चवर्गस्यैकापचयः एकादशत्वमपि हन्तुं कर्त्तव्यः।

नन्वस्यामपि व्याख्यायामयुग्मान् भेदानपेक्षयैव षोडशानामेकाधिशयानां षोडशानां च द्व्यधिशयानां यथासंख्येनैवान्योऽन्यसारूप्यप्रतिपत्तेरयुग्मजां[1] युग्मतामिति विशेषणमनर्थकमेव भवति, न भवति। स्वजातीयसंप्रत्ययनिवर्तनार्थत्वात्। यथैकाधिशया एवं द्व्यधिशयाः। यथा द्व्यधिशया एवमेकाधिशया इत्युक्ते स्वजातीयविषयमेवेदं यथासंख्यं स्यात्। तथा च सति पूर्वस्य पूर्वस्यायुगेकाधिशयस्य, पूर्वस्य पूर्वस्यायुग्द्व्यधिशयस्येदमुक्तम्। पूर्वस्य पूर्वस्य युग्मदेकाधिशयस्य, पूर्वस्य पूर्वस्य च युग्मद्व्यधिशयस्येदमुक्तम्। अन्योऽन्यसादृश्यमिति कृत्वा एकपञ्चकयोः सप्तैकाधिशययोरिति च परस्परसारूप्यवत् सारूप्यं प्रसजेत्। अयुजां युग्मतामिति तु विशेषणादुत्तरवदेव संप्रतिपन्नं भवति। अथ···तीयात्। युग्मतां युग्मसंहारे यथा प्रकृते अथातो युग्मतां विषमा इति तत्रैव।

ननु द्वाभ्यां द्वाभ्यां चैव स्तोत्रियाभ्यां व्यतियन्ति इति। अतः परमयं पर्यायव्यूहनरूपं धर्मं विज्ञायैव प्रयुञ्जीत इति व्याख्याताः।

इति महत्स्तोमे द्वितीयः खण्डः

(इति पर्यध्याये ऊनपचाशत्खण्डः)

---

१ को. सारूप्यं प्र०

# अथ पञ्चाशत् खण्डः

## अथ विष्टुतयः

अथ···षमाः। गतार्थानि पञ्च वाक्यानि। यथाप्रकृति व्यूहधर्मं प्रतीयात् इति पूर्वमेवैषां प्रतिपादितं, ततः स खलु यौ यावनन्तरौ इत्यादि ग्रन्थोक्तवत् प्रतिपत्तव्यमिति सिद्धो युग्मतां युग्मसंहारोऽपि। एवमयुजां च स्वसंहारयुग्मायुक्संहारौ प्रकल्प्य युग्मत्सु युग्मायुक्संहारमयुक्षु च संहारं प्रशस्तमितरस्मात् प्रतिपादयितुमारभते। तान्···खलु···यन्ति। पौर्ववचनिक[1] एवैवकारः। यथा पूर्वेषु वाक्येषु स चपर्यायैरिति। सहयोगे तृतीया। तान् खलु युग्मद्विषमान् एतेषामयुजामयुक्समानां समैः पर्यायैः सह आचार्याः साधयन्ति। विना युग्मायुक्संहारमेवैषां कुर्वन्तीत्यर्थः। तद्ध···कापटवः। कपटोरपत्यं कापटवः। तत्राचार्यः कापटवो ब्रवीति स्म ह। किं ब्रवीति, सप्त···च्छति। अयुजां विषमाणामिति। निर्धारणे षष्ठी। दशरात्रस्तोमानां विष्टुतयः शाखान्तरे समाम्नायन्ते। तदपेक्षोऽयं पाठः। सप्तदशः खल्वयमयुग्विषमाणां विष्टुतिपाठः श्रुतौ गच्छति प्राप्नोति। तमे···यन्ति। तमेतमयुजामेव समयोः पर्यायैः सूत्रविधयः साधयन्ति। स तु···च्छति। पुनः शब्दो ग्रन्थालङ्करणार्थः। तमे···यन्ति। युग्मायुक्संहारेणैव साधयन्तीत्यर्थः। तद···हारे। तद् ब्रूयुरिति तदुपदिशेयुश्चैवं व्याख्यातारः शिष्येभ्यः। सप्तदशेन कारिता सप्तदशकारिता। येयमयुक्संहारेऽवस्थितिः सप्तदशे दृष्टा, सा सप्तदशकारिता सर्वेष्वप्येतेष्वयुक्षु भवति। चतु···इति। चतुश्चत्वारिंशकारिता चैवम्, एतेषु युग्मेषु युग्मायुक्संहारे भवतीत्युपदिशेयुः। अयमस्याधिकारस्योपसंहारः। अयुजां स्वसंहार इतरस्मात् प्रशस्ततरः। युग्मतां च युग्मायुक्संहार इति। कः कुर्यात्, त्रयाणां पर्यायाणामेको वृद्धतमः स्याच्चेत् प्रथममेनं कुर्यात्। सप्तदशस्य सप्तवर्गः पञ्चवर्गौ च। तत्र सप्तवर्गः प्रथमं कुर्यात्। सप्तविंशस्याष्टवर्गः षड्वर्गौ च। अष्टवर्गं प्रथमं कुर्यात्। एकः...कुर्यात्। एकस्त्वल्पतम एषां स्याच्चेत्. मध्यममेनं कुर्यात्। षोडशस्य षड्वर्गौ चतुर्वर्गं मध्यमं कुर्यात्। नवदशस्य सप्तवर्गौ[2] पञ्चवर्गं मध्यमं कुर्यात्। युग्मायुक्संहारे पर्यायाणामेकैकसंख्यया वृद्धिह्रासौ भवतः। तत्र वृद्धिह्रासयोरतिशयाभावात् वर्षिष्ठ इति वक्तुमशक्यमिति। परिभाषाद्वयमिदं नावतरति। ततः पर्यायविनिवेशस्यानियम इति चेन्न, आचार्येणोत्तरत्र वर्षिष्ठपर्यायप्राथम्य-ह्रसिष्ठपर्यायमध्यमत्वस्य च पञ्चविंशचतुश्चत्वारिंशयोः युग्मायुक्संहारे निदर्शयिष्यमाणत्वात्। ततश्च वर्षिष्ठो ह्रसिष्ठ इति वृद्धो ह्रस्व इत्यर्थो गमयितव्यः। अत्र···भति। इह व्यूहो नाम त्रिप्रायणत्रिमध्यमत्र्युदयत्वम्। कथमयं व्यूहो भवति, इदमुच्यते श्रुतौ। तदा···रति। त्रिवृति त्रिवृतोन[3] त्रिवृत्तित्वमेषां[3] प्रतिज्ञाय तत्रायं हेतुः प्रतिपादितः। त्रिप्रायणाहस्तोमाः त्रिमध्याः त्र्युदया इति। एवं चास्य हेतोरर्थयोगः। यत एषां स्तोमानां प्रथममध्यमोत्तमस्थानभाजः स्तोत्रियास्त्रिस्त्रिरभ्यस्यमाना नवसंपत्त्या त्रिवृतमेकं निष्पादयन्ति[4]। तत एते त्रिवृतोनत्रिवृत्ता इत्युक्तत्वात् त्रिवृतमतिवृत्तौ न भवति। यश्चायमस्य त्रिवृतस्त्रिषु स्थानेषु त्रेधा व्यूहस्तदात्मकमिदं त्रिप्रायणत्रिमध्यत्र्युदयत्वं व्यूह इत्युच्यते। खलुशब्दोऽलङ्कारार्थः। अत्र[5] एषु खलु स्तोमेषु पञ्चदशप्रभृतीनामष्टचत्वारिंशपर्यन्तानां व्यूहः कृतो भवति। अस्ति ह्येषां द्वयोरपि संहारयोस्त्रिप्रायणत्रिमध्यत्र्युदयत्वम्। षोडशस्य त्वेकस्य स्वसंहारे त्रिमध्यत्वं नास्ति। तदनादृत्यैतदुक्तम्।

---

१ को. पौर्वंचनिक? २ को. सप्तवर्गौ ३ को. त्रिवृतोनतिवृत्तिमेषां

४ को. निष्पादयति ५ को. अर्थः अत्र

ये तु वन्ति । कृतो व्यूह एषामिति कृतव्यूहाः, न कृतव्यूहा अकृतव्यूहाः ये त्वेषामिति प्रभृतयश्चतुर्दशपर्यन्ताः, अकृतव्यूहास्ते भवन्ति । न ह्येकस्याप्येषा त्रिप्रायणत्रिमध्यत्र्युदयपर्यायप्राप्तिरस्ति । किन्तु येऽन्ये त्रिवृतस्त्रिवृतोऽन्ये ये ते एवाकृतव्यूहाः । त्रिवृतकृतव्यूहा[1] एवेत्यर्थः ।

ननु त्रिवृतोऽप्युक्तेषु स्थानेषु त्रित्वयोगो नास्ति । सत्यमेतत्, किन्तु त्रिवृ.य···वति । योऽयमुक्तो व्यूहः त्रिप्रायणत्रिमध्यत्र्युदयत्वं स कृतस्त्रिवृद्भावं गच्छति । न ह्यतो व्यतिरिक्तस्त्रिवृदस्ति, ततः कृतश्चायं व्यूहश्चेति कृतव्यूहः स्यात्, यथा चेदं त्रिवृति संस्तवेन प्रथममध्यमोत्तमानाँ स्तोत्रियाणां त्रैगुण्यं, न तदन्येषु चतुर्दशान्तेषु एकस्मिन्नपि विद्यते । तत् सम्यगुपलक्षणीयम् । बहुव्रीहिकृतव्यूहपदं पञ्चदशादिषु विशेषणसमासत्वगतं त्रिवृति वर्तते । स···खलु···श्येत् । स खलु विष्टावकृदुभयेषामेव हि युग्मयुजां कृतव्यूहानां त्रिवृत्पञ्चदशादीनां[3] च व्यूहधर्मपर्यायव्यूहनक्रमवत् सम्यगुपलक्ष्य यथा प्रतिपादितानेतानकृतव्यूहान् नेदिष्ठकृतव्यूहान् मन्येत, तथा प्रतिपादयेत् । कृतव्यूहानां[4] तावत् त्रिप्रायणत्रिमध्यत्र्युदयं तृचव्यापी च विष्टावो भवति । पर्यायाश्चैषां समभागा भवन्ति । एकसंख्याद्विषमा[5] वा त्रिषमसंख्याद् विषमा वा । अकृतव्यूहानां त्वस्य पञ्चतयस्य साकल्येन सम्पादनं न सम्भवति । यत्त सम्भवति यथा च सम्भवति तत्तेषां[6] वर्षिष्ठप्राथम्यसिद्ध[7] मध्यमत्वानादरेणापि सम्पाद्यमित्यर्थः । अथवा तेषामकृतव्यूहानां नेदिष्ठकृतव्यूहताकारणात् विष्टावविशेषान्[8] प्रयोगलाघवार्थमुपदेक्ष्यामः । एकिनः प्रथमेव द्विकस्यापि सैव आवर्तते । तद्द्वगानस्यानिष्टत्वात् त्रिकस्य तृचव्याप्यत्वमेकैकः पर्यायः । सैषा विधृतिर्नाम विष्टुतिः । यच्चादः पराचीर्विष्टुतयः इति श्रवणं तदस्यां त्रिकविष्टुतौ कल्पयितव्यम् । यतोऽस्मात् स्तोत्रियाविवेकेन पर्यायैर्ध्रियते । नेकैकस्मिन् पर्याये सर्वा वर्तन्ते । अत इयं विधृतिः । एतदध्यायविषये तु विष्टावविधौ नैतामाचार्यः परिगृहीतवान् । तृचव्यापिन एव सर्वान् कृतव्यूहानां पर्यायान् अचीक्लृपत् । तथपि तु वयं त्रिचतुष्कयोः श्लक्ष्णक्लृप्तौ स्तोत्रियान्तराय दोषं पश्यन्तो नेदिष्ठकृतव्यूहायादेनैवाचार्येणैवापि सूचितेति व्याख्यायन्तोऽगत्या[10] तां परिगृह्णीमः । चतुष्कस्य पूर्वयुग्मत्समाभात् युग्मायुक्संहार एव षट्कपर्यायप्रथम', त्रिकपर्यायावितरौ । तौ तु मध्यमया चोत्तमया च पञ्चकस्य द्वौ त्रिकस्य पर्यायौ । एवं त्रिवृतः सकृत्तमः स्यात् एवं हि सति त्रिः प्रथमा वर्तते । त्रिकश्चान्त्य इति । षष्ठीति प्रायणत्व त्र्युदयत्व सस्तवकृतं भवति । अथवायं मध्यमः स्यात् तथापि त्रिप्रायणः त्रिमध्यमश्चायं भवति । त्र्युदयत्वविघातेन त्रिमध्यमत्वं कल्प्यम् । त्रिमध्यमत्वाद्धि ज्यायसी इतरे । तदुत्तरत्र द्वादशस्य पर्यायसाम्यनिन्दायाम् अत्रिमध्यम इत्युक्तेस्त्रिविष्टावानां च त्रिमध्यमया स्तवनादर्शनात् प्राथम्यत्वमस्य केवलं त्रिप्रायतामेव साधयतीति नादरः कार्यः । षट्कस्य द्विकाः पर्याया विधृतिविष्टाव एव । ततोऽयमुक्तवदेव प्रतिपाद्यः । सप्तकस्य स्वसंहारे यथाप्राप्ति कृते त्रिप्रायणत्वं त्र्युदयत्वं च पर्यायतः सिध्यति । युग्मायुक्संहारस्त्वस्य त्र्युदयत्वहानिभयात्परिग्राह्यः[11] । अष्टकस्य युग्मायुक्संहारे त्रिप्रायणत्र्युदयत्वे सिद्धे भवतः । उभयहानिभयात्त्वस्य स्वसंहारे नादर्तव्यः । दशकस्य स्वसंहारे स्वसंस्तवतः पर्यायतश्च त्रिमध्योऽपि भवति । त्र्युदयोऽपि स एवास्य भवतु । एकादशस्य स्वसंहारे त्रिप्रायणत्वं मुख्यमेवास्ति । त्रिमध्यमत्वत्र्युदयत्वे[12] च पर्यायतः संस्तवतश्च । युग्मायुक्संहारस्तु

---

१ को. त्रिवृकृतव्यूह
२ को. बहुव्रीहिः कृ०
३ को. त्रिवृतः पञ्च०
४ को. कृतव्यूहाणां
५ को. ०संख्याविषमा वा द्विषमसख्पाद् ?
६ को. तत्तपेषां ?
७ को. ०म्यसिष्ट ? ०शिष्ट ?
८ को. मिष्टाव० ?
९ को. त ?
१० को. ऽगत्यस्तां
११ को. ०निभमात् उपरि०
१२ को. त्रिमध्यत्वत्र्यु०

संस्तवतः पर्यायतोऽपि साधयतीत्यपनेयः । द्वादशस्य समपर्यायितायां न्यायगतायां कृतायां नैकमप्येषां त्रिप्रायणत्वादीनां मुख्यं वा भक्तं वा समुपलभ्यते । नचायमध्यायो विष्टावकारमन्यमन्यस्य दर्शयितुं शक्नोति । नेदिष्ठकृतव्यूहतापादादेव तु वयमवलंबनभूतादन्यमपि अस्य विष्टावत्वमन्विच्छामः । त्रिचतुष्क-षट्काणां विधृतिमिवास्यां च दशायामकृतक्लृप्तेः कृतग्रहणं ज्याय इति कृत्वोत्तराध्यायाध्यवसितां कपोत-पातिनीमेव प्रयुञ्जीमहि । नचैतदुक्तं मन्तव्यम् । अन्यस्यां हि चतुष्पर्यायकल्पनायां द्वित्रिपञ्चषट्-संख्यान् पर्यायाननुपलक्षयन् आचार्यः षट्कपरिवर्तिनीः पञ्चदशाष्टादशीर्विशिनष्टि । षोडशस्य चतुष्का इति वदति । न द्वादश पर्याया इति । त्रयोदशस्य स्वसंहारे मुख्यमेव त्रिप्रायणत्वमुक्तं त्र्युदत्वं च । अस्ति च पर्यायसंस्तावानां त्रिमध्यमत्वमपि । युग्मायुक्संहारस्तु त्रिप्रायणत्वमात्रकर इत्यकरणीयोऽसौ भवति । चतुर्दशस्य स्वसंहारे त्रिप्रायणत्वमितरस्मिंस्तु त्र्युदयत्वमपि । तस्मात् अस्य स्वसंहारो न परिकल्प्यः ।

त्रिकषट्कचतुष्केषु श्लक्ष्णा न प्राप्नुयात् तृचम् ।
तस्माद् विधृतिरेषु स्यात् न स्यादन्येष्वकारणात् ॥

[एवमत्र] त्रिकान्तत्वं त्र्युदयत्वाय कल्पयेत् ।
एवं त्रिः प्रथमाभ्यासाद् भवेत् त्रिप्रायणो अपि ॥

अकृतव्यूहशेषे तु स्वसंहारं प्रकल्पयेत् ।
अयुजीरितमन्यस्मिन् व्यूहमात्रं प्रकल्पयेत् ॥
द्वादशे समपर्याये व्यूहस्यांशोऽपि नान्यतः ।
स नेदिष्ठकृतव्यूहः स्यात् पतन्त्याकपोतवत् ॥

कथं विषमपर्यायः समो[1] भवति चेत् किल ।
स्तोत्रियाभिर्भजन्तीभिः सममेष समो भवेत् ॥

इत्येकमेव विष्टावमेतदध्यायवत्तया ।
अवोचामाकृतव्यूह—कृतव्यूहानुपातिना ॥
गुणागुणविवेकं तु मुक्त्वा प्राप्तिप्रयोजने ।
बहुविष्टावमप्येकं परोऽध्यायो वदिष्यति ॥

इति व्याख्याताः ।

(इति पर्यध्याये विष्टुतिषु पञ्चाशत्खण्डः)

---

[1] कौ. सन् समो

# अथ एकपञ्चाशत् खण्डः

अथ···र्यायाः। केषुचित् क्रतुषु एतेषां स्तोमानां केचिच्चतुष्पर्यायाः कल्पयितुमिष्यन्ते। तदर्थं तेषां स्वरूपं व्याख्यातुमेवं प्रतिजानाति। ते खलु···श्यन्ते। ते खलु चतुष्पर्याया गोतमचतुष्टोमेषु प्रथमं दृश्यन्ते। विधीयन्त इत्यर्थः। विधीयत इत्येवं किमनुक्तम्, विहितमर्थं द्रष्टुमित्युक्तम्।

ननु गोतमचतुष्टोमेषु एकाहश्च चतूरात्रश्च। सत्यमेतत्। बहुवचनं त्वस्मान्मन्यामहे, यददर्शिव-मेधस्याद्यमहः गोतमचतुष्टोमे एकोऽनेन समस्वर्थंवाद[1] समस्तोमविधानं, तदपि गोतमचतुष्टोमसंज्ञां लभेतेति[2]। सहकारिप्रत्ययश्चैतमर्थमनुवर्तते। एवं हि बह्वृचानामश्वमेधः श्रूयते गोतमस्य चतुरुत्तरस्तोमस्तु-त्यानां प्रथममहरिति। प्रथममिति वचनादूर्ध्वमप्येभ्यः क्वचिदेषां वृत्तिरस्तीति चिन्त्यम्। एतेषां [मध्ये] पतितस्य [या] वन्ति एकाकिनः एकस्तोत्रियात्मिका। तत्र···येत्। तृचस्य व्याप्तये सिद्धायां विधृतावयं विशेष उच्यते। तेषु पर्यायेषु द्वौ द्वौ प्रथमां वा स्तोत्रियां मध्यमां वा भाजयेत्। व्रात्याख्यमेवं भावात् सकारणमर्थंवत्[3]। द्वौ वा द्वौ पर्यायौ प्रथमयैव गतयेत्, द्वितीयया तृतीयम्, तृतीयया चतुर्थम्। अथवा। आद्यया आद्यम्, मध्यमो मध्यमया [उत्तमः] उत्तमया। पूर्वस्मिन् पक्षे वृद्धिरितरस्मिन् क्षत्रवृद्धिः। इति हि ब्राह्मणम्।

अथा···तोष्टि···वस्य वन्ति। षट्कस्य पर्याया द्विका इत्यर्थः। तत्र···जयत्। अथ···दश···वन्ति। परिवर्तिनीति श्लक्षणायाः निवृत्तौ[4]। विष्टुतेः संज्ञा उत्तरत्र वक्ष्यते। एवंभूतस्यास्य चत्वारोऽपि पर्यायाः तृचव्यापिन एकरूपा भवन्ति। अथा···डाशः। तस्य···वन्ति। यथा···त्तमः। यद्विधः प्रथमः पर्यायस्तद्विध एवोत्तमोऽपि स्यात्। य···तथा। द्वैगुण्यमुत्तमोऽपि प्रथमाया एवेत्यर्थः। मध्यं कुर्यात्। द्वितीयतृतीयौ वा पर्यायौ समौ कुर्यात्। तृतीयापि मध्यमेव द्विगुणा[6] स्यात्। इदमपि पक्षद्वयं ब्रह्मक्षत्रवृध्यनुगतमेव। अथा··· विंशः। तस्य···वध्ति अथा···विंशः। स स्व···श्यन्त। सन्ति विकृतिष्वस्माकमन्येषां च केचित् क्रतवः। अग्नि-ष्टोमा एवान्तरुक्थ्याहमहाश्चतुर्विधाश्च ते श्रूयन्ते—अन्तरुक्थ्यं, सामान्तरुक्थ्यम्, ऋगन्तरुक्थ्यम्, ऋक्सा-मान्तरुक्थ्यमिति। तत्रान्तरुक्थ्यं न छन्दोमतन्त्रं स्पृशति। स सामान्तरुक्थ्येनोक्तः[8] यस्य यज्ञायज्ञीयमुक्थ्य-त्रयं च यज्ञायज्ञीयस्यैव स्तोत्रिये प्रवृत्तमेकीभूय द्वादशं स्तोत्रं भवति। अथ यस्य यज्ञायज्ञीयमेवाग्निष्टोम साम तत् स्वासु चाम्नातासु उक्थ्यानामृक्षु वर्तते, ऋगन्तरुक्थ्यः। यस्य तु नाम[9] स्तोत्रियावस्थितमेवै-तत्सामचतुष्टयं सम्भूयाग्निष्टोमसामत्वं गच्छति स ऋक्सामान्तरुक्थ्यः।

यस्त्वयमेकाहो गोतमचतुष्टोमः स त्रिविधोऽपि स्तोमकल्पे कथितः। प्रथममृक्सामान्तरुक्थ्यः तत[10] ऋगन्तरुक्थ्यस्ततः सामान्तरुक्थ्यस्तत्रैतद्वाक्यम्, ऋक्सामान्तरुक्थ्ये वा। अस्मिन् सति चतुर्विंशस्य विष्टाव-रचनां[11] विधातुमुपन्यस्त.[12]। तत् स खल्वयं चतुर्विंशः चतुर्विधेषु स्तोत्रियेषु दृश्यते।

---

१ को. समस्वार्थ० ? — २ को. लभतेति — ३ को. साकरणम० ?
४ को. वृद्धि इत० — ५ को. निवृत्तो — ६ को. द्विगुणः
७ को. वान्तरुक्थाहमाह च० — ८ को. त्वामान्तरुक्थ्येनोमा — ९ को ना ?
१० को. तत्र — ११ को. विष्टाव० — १२ को. ०मुपश्यस्तम

अथ पर्यध्याये एकादशोऽध्यायः

# द्विपञ्चाशत् खण्डः

षट्[1] स्तोम न्यायः[2]। षण्णामपि जातीनां विष्टावविधानं पूर्वस्मिन्नेवाध्याये कृतवानाचार्यः, व्याख्यानसमाप्तिं च व्यत्यजानात् 'इति वै स्तोमा आख्यातः' इति। तथापि विस्पष्टप्रतिभानार्थमस्मिन्नेवाध्यायेऽस्यैव प्रपञ्चं करोति। तत्रासिद्धांश्च कतिचिद् विष्टावभेदन् कथयति। अयमपि तु परिहारः पौनरुक्त्यस्यान्तिमे पूर्वस्मिन्नध्याये संहारव्याख्या कृता, विस्तरतो ऽस्मिन् व्याख्यायत इति। स्तोमन्यायाः स्तोमजातयस्ते षड् भवन्ति। **त्रयं गमताम्। त्रयो...युजाम्। एको...युजाम्। द्व्युप...रमताम्। त्र्युप...युजाम्।** ये त्र्युपक्रमास्ते[3] ऽयुजां समा भवन्ति, अयुक्समा भवन्ति, स्वयमेव भवन्ति,[4] यथासौ परमेश्वरो न कुतश्चिदुत्पद्यते।

**त्रिकं...त्रिवृत्।** त्रिका त्रिवृदुत्पद्यते। षडुत्तरेण वै स्तोमाः प्रजनयन्ति इति श्रुतौ दर्शनादयं वादः संप्रतिपन्नो भवति। **त्रिवृ...दशः। पञ्चविंशः। एकं...चयं।** त्रिचभागं[5] त्रिसंख्यां नातिवर्तते। परिचरा त्वेकाकिन्येव[6]। याभ्यामितराः स्तोत्रिया स्तोमवृद्धौ बह्वीभिः स्तोत्रियाभिरुपचीयते। तथा च स्तोमभागा नाम स्तोमवृद्धिं भजन्ते। इति स्तोमभागान् त्र्युपकर्मेषु प्रथमैकविंशोपचयं लभते। त्रिषु पूर्वेषु एकाकिन्येवंषाम्। **तस्य...गाच।** त्रिपिनीति तृचभागाया एव नामान्तरं सन्दिह्येत इति सन्देहस्य भूतमनयोरन्योन्यसारूप्यमुपलक्ष्यते। त्रिपिनी च स्तोमभागा चात्र मिथः सन्दिह्येते। तुल्यपरिमाणे इत्यर्थः। त्रिपिनीतुल्यपरिमाणत्वाच्च स्तोमभागायाः सहपरिचरायाः सप्तकत्वं स्तोमस्य पर्यायाणामुक्तमासीत्। इह प्रथमशब्दप्रयोगसामर्थ्यादिवाचार्येणात्र सप्तविंशादीनां चतुर्णामकल्पयिष्यमाणविष्टावानां स्तोमभागोपचयः सिद्धो द्रष्टव्यः। तदुपचयमात्रेणैव तेषामेकविंशवदेव विष्टावरूपोपलब्धिः। अत एव ताननुक्रम्याचार्यो ऽर्वाचिस्तोमाननुचरति। **तत्व...वैति।** तत एकविंशात् पञ्चदशं प्रत्यवतरति, विष्टावविधिमुपदिशति, तस्योपचयः। **सन्दि...शाच।** एके त्रिपिनीति[7] परिचरायाः संज्ञा, सा च स्तोमभागा चात्र तुल्यपरिमाणे। अत एव तृचभागया सार्धं पर्यायाणां पञ्चकत्वं सिद्धम्। **तत...चैति। तत्र...विति।** सर्वो ह्युपचयस्तृचभागोपचयेन सन्देहात् सीदति नश्यति नोपलभ्यते।

**श्लक्ष्णं...द्यते।** एवं वाक्यमस्यास्त्रिवृतो विष्टुतौ व्रतं सार्थं उपन्यस्तः। इयं विष्टुतिः श्लक्ष्णेव संपद्यते संपन्ना भवति। पर्यायतो हि त्रिप्रायणत्रिमध्यत्र्युदयत्वं चास्या दृश्यते। सा च स्तोमभागानां प्रशंसा श्रुतावस्ति। त्रिप्रायणा हि स्तोमास्त्रिमध्यमास्त्र्युदया इति।

---

१ को. ओम् षट
२ को. स्तोमा न्यायाः
३ को. त्र्युपक्रमः ते
४ को. भवति
५ को. तृच भागा
६ को. वकाकिन्येवै
७ को. ऽपिनीति

**ततो...वेति । तस्य...काम्यम् ।** द्वादशाक्षरप्रस्तावं[1] कामयत इति द्वादशाक्षरप्रस्तावकामस्तस्य[2] भावो द्वादशाक्षरप्रस्तावकाम्यम् । भायजात्य आचार्यो द्वादशाक्षरप्रस्तावकाम्यत्वात् तस्य त्रिकस्य विष्टावः पराचीषु स्यादिति[3] वदति[4] । तत्रैकैकमनया[5] स्तोत्रिययैकः पर्यायः सिद्धः । प्रतिपर्यायं च हिंकारः । अथैतच्छ्रवणानन्तरं शिष्याणां चित्ते आर्भवयद्वाहिष्ठीयादीनि कृतपदानि प्रतिनिवर्तयन्नाह । तानि...मिति । तानि द्वादशाक्षरप्रस्तावानि । कानीति चेत्, एतानि त्रीणि सामानि । सर्वत्रापि ह्येतानि त्रीणि स्तोत्रापन्नानि भवन्ति, द्वादशाक्षरप्रस्तावान्येव भवन्ति । तृचभागाननियमात् प्रथमायामेव ह्यभ्यस्यमानायां द्वादशाक्षरप्रस्तावत्वं विहन्येत । काममेतद् विहन्यताम् । एकत्रके रथन्तरस्थे वेति चेन्न । तत्रैकस्तोमे द्वादशाक्षरप्रस्तावतायाः सम्पादयितुमशक्यत्वात् । किं च…अपि…वन्ति । अपि चैतानि सामानि द्वैच्छन्दसानि भवन्ति, द्वयोश्छन्दसोर्भवन्ति, ककुब्बृहत्योः । किमत्रेत्यपेक्षायामुच्यते । तद्व…दिति । [इति] हेतौ । तस्माद् द्वयोश्छन्दसोरनुग्रहाय पराचीषु स्यादिति । ककुबनुग्रहायेत्यर्थः ।

सर्वा…दिति । पराञ्चः पवमानास्तेभ्योऽन्यानि स्तोत्राणि पुनरावर्तनं गातव्यानीति नियमः प्रसिद्धः । तत्र त्रिकविष्टावेऽवाचीषु कृते सर्वाणि स्तोत्राणि पराञ्च्येव भवेयुर्न च तद्युक्तमिति । तस्मात् कारणात् प्रथमामेव त्रिरावर्तयेदिति औदरावकाशिनः आचार्यः । प्रथमावर्तिनं यदि हिंकारमवधारयन् ब्रूते, सकृद्धिकृतः पात्रीर्हिकृता वा त्रिकविष्टावा विकल्पेन कार्यमित्यभिप्रेत्य ब्रवीति—वान्दा[7]...येति । एवं हिंकारस्य विकल्पप्रसंगे वान्दारवो नाम आचार्य औदरावकाशिनस्याभिप्राय विदित्वा त्रिर्हिकृतमेवैतत् स्तोत्रं पर्यायानुग्रहाय स्यादित्यभिप्रायेणाब्रवीत् । औदरावकाशिनो न विकल्पाभिप्रायेणेत्याह स्म ह ।

अथ स्वाभिप्रायं विवृणोति वान्दारवः । अथाव…स्यात् । पर्यायावपि नाम चेदिहोत्सीदतः । किमेतद् वक्तव्यम्,[8] हिंकार उत्सीदतीति । हिंकारोऽपि हि प्रतिसामपवमानयोः प्रतिपर्यायमावर्तिषु प्रवर्तते । स किमर्थम्, पर्यायैक्यार्थमित्यभिप्रायः[9] । एवमिदमधुनावस्थितमौदरावकाशिनमतेन त्रिर्हिकरणम्, वान्दारवमतेन सकृदिति । अथेदमस्मदाचार्यः सिद्धान्तमवधारयन्नाह । नैका…तीति । नाह…स्यैका । त्रिर्हिकरणमिति निश्चेतव्यम् । द्वौ पक्षौ त्रिकविष्टावस्य कथितौ । ऋक्त्रयेण पर्यायत्रयमित्येकः पक्षः । अपरस्तु प्रथमावर्तनेन पर्यायैक्यमिति । कोऽनयोः श्रेयानिति, पूर्वस्य तावत् पक्षस्य त्रयो गुणाः, पर्यायानुत्सादः, द्वादशाक्षरप्रस्तावसंग्रहोऽपि,[10] द्विच्छन्दोऽनुग्रहश्च । दोषस्त्वेक एव, आवर्तितस्यार्थासंपत्तिः । सोऽप्यर्थतः । उत्तरस्य पक्षस्यावर्तितशब्दस्यार्थसम्पत्तिः [इति] एक एव गुणस्त्रयो दोषाः—पर्यायोत्सादः, द्वादशाक्षरप्रस्तावस्य भावश्छन्दसश्चैकस्य योग[11] इति । तस्माद् भायजात्यपक्ष एव श्रेयान् ।

इति पर्यध्याये विष्टावभेदे द्विपञ्चाशत् खण्डः

---

१ को. ०रप्रस्तावः २ को. रप्रस्तावकामाः तस्य० ३ को. स्यादि हि
४ को. बह्वीति ५ को, तत्रैकैकमयं ६ को. ष्ठीयाः हि न
७ को. वाङायेति ? ८ को. श्यक्त्यम् ९ को. पर्यायैक्यमित्य०
१० को. ०शाक्षरप्रस्तावप्रस्ताव सं ११ को. योग्य ?

# अथ त्रिपञ्चाशत् खण्डः

अथ···तयः । व्याख्यास्यन्त इति शेषः । द्व्यति···क्षते । द्वाभ्यां स्तोत्रियाभ्यामतिरिक्ता एकया स्तोत्रियया न्यूनाः । उभयमपि तदुभयतः समस्तोमापेक्षं त्रिकं हि । पञ्चको द्वाभ्यामतिरिक्तः षट्को ह्येकया न्यूनः । एवमेकादशादयोऽप्युपलक्ष्याः । तानेतान् पञ्चकप्रभृतीन् द्व्यतिरिक्ता एकैकन्यूना इति स्तोमविद आचक्षते । तस्य...वर्गो । एवं विधास्त्रयोऽस्य पर्यायाः स्युः । एको ज्येष्ठो महान् पर्यायः आसां स्तोत्रियाणामित्येका[1] ज्येष्ठा स्तोत्रिया[1] । एका महापर्यायेत्यर्थः[2] ।

द्विष···यस्य । द्वौ समौ मिथस्तुल्यपरिमाणौ । कनीयांसौ पर्यायौ हि द्वाभ्यां समौ स्तोत्रियाभ्याम् । अयुज आसां पर्यायतुल्यपरिमाणं संस्तवं भजन्ते इति यावत् । पर्ययिसंस्तुतभाजः स्तोत्रियाः । आसां हि पर्याया एते । एकः सप्तवर्गः पञ्चवर्गद्वयं चैकया स्तोत्रियया त्रिषु पर्यायेषु सम्भूय सप्तकृत्वः स्तूयते, पञ्चकृत्वः पञ्चकृत्व इत्यारभ्य । तासां स्तोत्रियाणां न्यायेन स्तुतिप्रापितेन त्रिप्रायणत्रिमध्यत्र्युदयकत्वसम्पादकेन[3] विष्टूयमानानां यत्र तस्मिन् प्रदेशे वर्षिष्ठो महान् पर्यायः प्रथमो भवति तत्र मध्यमा स्तोत्रिया इतरे द्वे अतिभजते अतिक्रम्य वर्तते । बह्वेषा[4] हीयते । द्विष्टुतीविन्यस्योपलक्ष्यम् । अस्य वचनस्य ब्रह्मक्षत्रं षडिति । स्तोत्रियात्रयस्य श्रुतौ संकीर्णक्षत्रं वृद्धितर इत्यस्य पक्षस्याश्रयणं यत्र, तत्र कस्यचित् प्रथमस्तोत्रयातिभजते, कस्यचिदुत्तमा । पर्यायत्रयस्यापि ब्रह्मक्षत्रं षड् इति श्रुतावेन सङ्कीर्तनात् 'विड्वृद्धिक्षयकरः' इत्यस्य पक्षस्य त्यागोऽस्य प्रयोजनम् ।

अथ···वर्गश्च । द्विज्यायस्या द्वौ द्विज्यायांसौ षड्वर्गौ । के निष्ठाः, एकोऽल्पः पञ्चवर्गः । एकपर्याया[6] एकया ह्यसमौ षट्कपर्यायौ अयुजा पञ्चकेन मिश्रिता अयुङ्मिश्राः अयुङ्मिश्राः पर्याया आसामित्ययुङ्मिश्रपर्यायास्तासां ज्यतो ह्रसिष्ठः पञ्चवर्गः । अल्पार्थेऽत्र निःशब्दः । निर्भाज्यते अल्पं भाज्यते । कैरिति चेत्, स्तोत्रियाभिः । अत्र चोद्यतोऽतिभाज्यत इति वा पूर्वत्र वक्तव्यम् । अत्र वा निर्भजत इति । वक्तव्यो वा अस्य वचनवैषम्यस्य परिहार इति । अयमस्य परिहारः, बहुसाधारणे द्रव्ये बलवतः कारणाद् ईषद्वैषम्येणापि भज्यमाने महान्तं भागं गृह्णाति । स्वपरप्रेप्सितं स्वयमेव प्रीतवद् गृह्णाति । यस्त्वल्पः स्वपरप्रेप्सितोऽप्रीतवत्करणेन वचनवैषम्यस्य परिहार इति । तत···चेति । तस्यै···वर्गो । तत्र···मेव । यथानिपतितमित्यस्य द्वावर्थौ श्रवणानन्तरं प्रतिभातः । यथानिपततं पर्यायैस्तथैव स्तोत्रियाणां संस्तवभाग इत्येकः । योऽसौ यावत्पर्यायसंस्तुतभाज इत्यतो भागवतः स एवायमपि तथा नार्थवानिति । इह यथानिपतितमित्यन्यमर्थमवबोधयितुं वदति । किमिति चेत्, प्रथमे पर्याये वर्षिष्ठे प्रथमैवातिभजते, मध्यमे मध्यमा, उत्तमे, उत्तमेति । एवमिदमर्थद्वयं यथानिपतितमित्यस्य प्रतिपादयितुं शक्यमिवासद् अशक्यं करिष्यति । चतुर्दशषोडशयोः सत्संहारौ, तयोरपि हि पर्यायपरिक्लृप्त्यनन्तरमेव वक्ष्यति ।

---

१ को. एकः ज्येष्ठाः स्तोत्रियाः    २ को. एकामहापर्यायामित्यर्थः    ३ को. त्रिप्रायणः
४ को. बह्वेषा    ५ को. दिष्टुत्री०    ६ को. एकपर्यायाः

तत्र···यथानिपतितमेवेति । तत्र चतुर्दशस्य तावत् पर्यायाः षड्वर्गाश्चतुर्वर्गौ, संस्तवभागस्तु स्तोत्रियाणां पञ्चवर्गद्वयं चतुर्वर्गश्च । ततः सिद्धं, यथानिपतितमित्यत्र प्रतिपादितयोरन्यतरोऽपि नार्थ इति । एवमेव षोडशस्य स्वसंहारवतोऽपि । कः पुनरस्यार्थः, अयमुच्यते—क्लृप्तानां पर्यायाणामानुपूर्व्येण नियमार्थमिदं वचनं यथानिपतितमेवेति । येन क्रमेण कल्पनेनात्र[1] ह्रसिष्ठत्वात् त्रिवर्गस्य मध्यमता प्राप्ता तन्निषेधार्थमवश्यमिदं वक्तव्यम् । पूर्वस्मिन् विष्टावविधौ अनुरूपेण तं तथा निपतितमेवेति, अस्मिंस्तु विधिरूपेणैव । तत एतत् सिद्धम्—उत्तरेषु यथानिपतितवादेषु अनपेक्ष्य वर्षिष्ठप्राथम्यविधिं ह्रसिष्ठमध्यमत्वविधिं च प्रथमोक्त एव पर्यायः प्रथमः कर्तव्य इति ।

तत···वेति । एषां···यता । इदमस्य विष्टावस्य प्रसंशार्थमुच्यते । एषां खल्वस्य त्रिप्रायणता त्र्युदयता च कथमिति चेत् । तिस्रो···वतं । सिद्धं त्रिप्रायणत्वम् । त्रिक···पति । सिद्धं त्र्युदयत्वमपि ।

स ए···क्षणया । यस्याः[2] स्तोत्रियया साधारणाः पर्यायाः सा विष्टुतिः[3] श्लक्ष्णा[3] नाम । यस्यास्तु यथासंख्येन प्रथमा च प्रथमया[4] इत्येवं भवति सा विधृतिर्नाम । स एष पञ्चकश्लक्षणया विष्टुत्या कल्पत एव प्रतिपादयितुं शक्यते इत्यर्थः । कल्पधृत्यर्थः । कल्प···धृत्या···त्रिव्यन्तरा । त्रिव्य···रेति । इतरा व्यन्तरा[5] तयोः श्लक्ष्णा, सा त्रिव्यपा (त्रिविधव्यपा[6]) त्रिविधा व्यपा मयनाः शमनाः विन्यासविशेषा अस्या इति त्रिव्यपा । त्रिवर्ग एकवर्गश्च द्वयमिति त्रिव्यपा भवति । द्वित···धर्माः । अथा···का च । स ए···त्मते । न श्लक्षणया । यद्येकया श्लक्षणया विष्टोतुं प्रासयेत, उत्तरस्य स्तोत्रियाद्वयस्योदः प्रसज्येत । तदुयक्तमिति विधृत्यैवैष कल्पते । न श्लक्षणया । सा त्रि···पति । एकवर्गस्यादिमध्यान्तावसानैः त्रिव्ययत्वमित्येव धर्माः तूर्वैः षड्भिः सम्भूय नवैते भवन्ति ।

इति पर्यध्याये विष्टुतिषु त्रिपञ्चाशत् खण्डः

---

१ को. कल्पनामेवात्र २ को. यस्य स्तोत्रियात्र यस्य ३ को. विष्टुतिश्लक्ष्णा
४ को. प्रथम ५ को. व्ततरा ६ को. त्रिविधमयः विविधः मयः मयनः शमनः

# अथ चतुष्पञ्चाशत् खण्डः

अथै···तयः । एका···क्षते । यथा पञ्चकप्रभृतीनां व्यतिरिक्तत्वमेकन्यूनत्वञ्च तद्वदेषामेकातिरिक्तत्वं च एकस्यैकातिरिक्तत्वमर्थलुप्तम् । यस्यै···ड्वर्गौ । किमयमुक्तिविपर्ययः कृतः । सप्तदशस्य स्वसंहारः पूर्वमिति । अत्र ब्रूमः—त्रयाणां च पर्यायाणां तिसृणां च स्तोत्रियाणां ब्रह्मक्षत्रविडित्यनुक्रमेण पाठः श्रूयते—तत्र प्रथमे पर्याये वर्षिष्ठे ब्रह्मवृद्धिर्भवति । द्वितीयस्याश्च स्तोत्रियायास्तत्र बहुकृत्वो गानात् क्षत्रवृद्धिरपि । ह्रसिष्ठे तु प्रथमे पर्याये तयोर्विपर्यासो भवति । तत्र ब्रह्मक्षत्रवृद्धिकरस्यैव विष्टावस्य प्रथमक्लृप्तिरनेकरीतिपूर्वं[1] क्रियते । यदि चात्र सप्तदशस्यैव[2] स्वसंहारः पूर्वमुच्येत, यः प्रथमो ह्रसिष्ठः पर्यायो भवति मध्यमा तत्र निर्भाज्यते इति वचनाद् ब्रह्मक्षत्रवृद्ध्यभावादमंगलं स्यात् । अतः कृतवदेव शोभनम् । ऋज्वर्थो हि शेषो न व्याख्यानमाकांक्षते ।

इति पर्यध्याये विष्टुतिषु चतुष्पञ्चाशत् खण्डः

---

१ को. ०प्तिमनेक०　　　२ को. ०शस्यैव

# अथ पञ्चपञ्चाशत्खण्डः

षट्कद्विकचतुष्काय चतुष्पर्यायसन्तनीर्व्याचख्यौ। नेह षट्खण्डान्[1] ऋज्वर्था इति वृत्तिकृत् कल्प्यादीन्[2]। अयुरेकश्चतुरुत्तरः[3]। अयुशब्दो अयुगार्थोऽत्र कृतसम्पादनं शुभम् ?

तिसृ···रोति। दशमेऽध्याये संहाररूपे सर्वा विष्टुतयो विहिताः। एकादशे विस्तृत्याभिहिताः। अस्मिन् पुनरध्याये ज्योतिष्टोमद्वादशाहगवामयननानामेकाहाहीनसत्रप्रकृतिभूतानां[4] ये स्तोमास्तेषां काश्चि-द्विधाः पूर्वसमा एव परब्राह्मणेन विशेषप्रदर्शितसम्पत्तिकामविशेषणसम्बन्धाद्[5] व्यक्तं वक्तुमधिकारे तत्र त्रिवृत एवादावारभ्यते। त्रिवृतो हि त्रिकास्त्रयः पर्यायास्ते प्रथमे पर्याये तिस्रः स्तोत्रियास्ताभ्यस्तिसृभ्यः सकृदेव हिंकरोति। ताभिः···सृभिः[6]। ताभिस्तिसृभिरपुनरावृत्तिभिः स्तोत्रियाभिः स्तुवते। तिसृ·· रोति। ताभि···याभिः[6]। एवं द्वितीयपर्यायो गमयितव्यः एवं तृतीय इति श्लक्ष्णा। इत्थं रूपा श्लक्ष्णा नाम विधा वेदितव्या। तां···श्ल···रिति। तां विधां कस्य हेतोः श्लक्ष्णेत्याचक्षते,[7] इति चोदयति—कल्यां ··श्याहुः। बहवो हि त्रिवृतो विधास्तासु तासु सर्वास्वपि इयं विधा कल्याणीतमा निर्दिष्टा भवतीत्याहुराचार्याः। युज्यते हि कल्याणीतमात्वमस्याः[8] साम्येन सर्वविष्टावसम्पत्तिदर्शनात्। कल्या···क्षते। कल्याणं दर्शनीयं पुरुषं दृष्ट्वा श्लक्ष्णशरीरोऽयमित्याचक्षते। उदित्या उदिता विशिष्टाः पुरुषा इत्यर्थः। श्लक्ष्णशरीरः शोभनशरीर इत्यर्थः। सर्वस्थानगतानां विष्टुतीनामेकैकत्वाद् वृद्धिह्रासयोरभावादत्रेयं[9] विधा दर्शनीया भवति। तस्मात् श्लक्ष्णेत्युच्यते। सा त्रि···पति। एवमपि त्रिप्रायणत्वं त्र्युदयत्वं च सम्पद्यते। पर्यायप्रमाणतः स्तोत्रियाप्रमाणतश्च परेति। अत उत्तरेषां स्तोमानां समानप्रायं भवति। उत्तरेष्वपि स्तोमेषु श्लक्ष्णाया रूपमन्तर्भूतमस्तीत्यर्थविधृतिष्वप्यभावात् प्रायवचनमर्थवद् भवति।

सा सा···वति[10]। सा विधा विषयाणामेकरूप्यात्[11] साधु विहिता भवति। त इति। तृचः सामान्यरू-पेण परिवर्तत इत्यस्मात् कारणाद् इमां विधां परिवर्तिनीत्याचक्षते ताण्डिनः ते हैत इति। ये परिवर्तिनीं विधां[12] विदधते ते भाल्लविनः परिवर्तनान्न च्य (व) न्ते। कः परिवर्तत इत्याकांक्षायामाह परिवर्त इति भरतानां नामधेयम्। परिवर्त इति भरतविषयस्य नामधेयम्। तस्माद् भरतविषयान्न च्यवन्त इत्यस्मात् कारणात् परिवर्तिनीं विदधते।

तस्या···ह्मणम्। सम्लं···वति। सम···मन्ति। अध्वानो मार्गाः सम्यक् क्रामन्ति। सम्मार्गप्रतिपन्नाः सर्वारम्भाः सर्वपुरुषाः पादवन्ति इत्यर्थः। अवि ··वतव। अविवारितौ अविभक्तौ श्रेयांश्च पापीयांश्च भवतः।

---

१ को. षट्खाण्डान्
२ को. कल्प्यादीनियुः
३ को. एकाश्चतु०
४ को. नामेकाहीन०
५ को. ०षणसम्बन्धा
६ को. चीभिः
७ श्लष्टोत्याचशते
८ को. कल्याणत्वमस्य
९ को. ०योरभावात्र इयं
१० को. पति
११ को. विष्पायानार्मैकरू
१२ को. विधा
१३ को. पादवन्तीत्यर्थः

श्रेयांसश्च पापीयांसश्च मिश्रिता भवन्तीत्यर्थः । श्रेयसि पापं, पापीयसि श्रेयो भवतीत्यर्थः[१] । **तस्या**···**वादः** । उपवादः परिचक्षा निन्दा, अस्तीत्यध्याहारः[२] । **सैषा**···**नाय** । सैषा श्लक्ष्णा, अपशव्या अहिता यजमानाय स्यात् । **नहि**···**न्त इति** । श्लक्ष्णभूतले तृणकाष्ठवर्जिते नहि पशवो रमन्ते, तस्मादियमपशव्या । अपशव्यत्वादहिता यजमानाय भवति । **यत्र**···**रमन्ते** । अपलेशनजीर्णपर्णयोरुदात्रि यस्मिन् देशे तदपलेशनवत् । यद्वा तृणवद्वा भूतलं विद्यते तत्र पशवो रमन्ते, इत्येव अदोऽस्याः श्लक्ष्णाया इयं निन्दा ।

**अथै**···**धते** । अस्या उपवादत्वाद् द्वितीयापि विधा विधातव्या स्यात् । सा च वक्ष्यते ।

(इति पर्यध्याये पञ्चपञ्चाशत् खण्डः)

इति विष्टुतिषु चतुर्थः खण्डः

# अथ षट्पञ्चाशत्खण्डः

**तिसृ**···**रोति** । **एषा**[३]···**विधृतिः** । एषा विधा विधृतिरित्युच्यते । **तां वि**···**रिति** । हिंकारं—वति[४] । हिंकारं[५] विधाय[६] स्तोत्रियाणां विधारणात् हिंकारव्यपेता[७] भवति । तस्माद् विधृतिरित्युच्यते । **सा**··· **त्रि**···**वति** । पर्यायतो विष्टावतश्च[८] स्तोत्रियाणामध्यासादुपचयवती[९] भवति । एषा विधा तृचमूर्ध्वमेव गच्छति नचावर्तते । तस्मादिमां विधामुद्यन्तीत्याचक्षते ताण्डिनः । **तस्या**···**ह्मणम्** । **अव**[१]···**र्षति** । **अव**[१]···**र्षति**[१] । अवगृह्यावगृह्य वर्षति पर्जन्यः । **व्यध्वा**···**वन्ति**। मार्गाश्च विकारबहुला भवन्ति । **सुपि**···**वतः** । सुविभक्तौ भवतः । **श्रेया**···**वति** । पापैर्न लिप्यते । **पापी**···**पीयात्** । **तस्या**···**पादः** । तस्या उपपादोऽस्ति । यदिदमसमाप्य तृचं हिंकारो मध्ये व्यवैति[१०] स एवोपपादः स्यात् । **अथै**···**धते** ।

इति पर्यध्याये विष्टुतिषु षट्पञ्चाशत् खण्डः

---

१ को, भवन्तीत्यर्थः  २ को. अस्तीध्याहारः  ३ को. एषो  ४ को. पतिः
५ को. हिंकारणं  ६ को. व्यधाय  ७ को. ०रव्यवेता
८ को. विष्टावं च उप-वति  ९ को, अप वति अप वति  १० को, व्यपैति

# अथ सप्तपञ्चाशत् खण्डः

**तिसृ···रोति।** ताभिः समीचीभिः[1] तिसृकरोति। **स उत्तमया।** उत्तमया स्तोत्रियया प्रथमं स्तुवीत। **स प्रथमया।** अथ मध्यमया स्तुवीत। **स मध्यमया।** **तिसृ···रोति।** स मध्यमया तृतीयस्य पर्यायस्य प्रथमं मध्यमया स्तुवीत। स उत्तमया, स प्रथमया। **इत्येयिनी।** **तां···कुरिति।** कुलं भुवः। कुलं गृहम्। कुलायिनी नाम यल्लताभिर्वा विदलैर्वा तृणभङ्गैर्वा काष्ठैः कुसूलाकारं परिमण्डलमात्मनिवासपर्याप्तिनीडम् तस्य कुलायिनीति नामधेयम्। लातपेयो नाम कश्चिदृषिः पुरातनः, स तु कदाचिदात्मनिवासाय लताभिरनेकाभिः पूर्वविरचितलतान्तैरुत्तरलतादीन् सन्धाय कुटीत्वाकारतया कुटी कुलायसादृश्यां [निरमात्तां] कुलायिनी[मि]त्याचक्षते। तस्माज्जनास्तदाप्रभृति लातपेयस्य कुलं कुलायिनीमित्याचक्षते। पर्यायाणामन्तादिसन्धानेन परिमण्डलाकारत्वात् कुलायभूतेवेति। दकारपाठः प्रमादादागतो मन्तव्यः। यदि दकार एव सुपाठस्तस्यार्थोऽन्वेष्टव्यः। **आवे[2]···ष्टुकिः।** क्रोष्टुकिर्नाम कश्चिदृषिरावेष्टितेत्याह स्म। **सा त्रि···वति।** **नाना···ल्पते।** पर्यायेषु स्तोत्रियाणां क्रमविपर्यासादत्यन्तनानात्वेनेयं विधा कल्पते। विधा यान्तात्यन्तभिन्नरूपा भवति इत्यर्थः। **अथा···यति।** अथापीयं व्यूहेन समानप्रत्यया भवति। स्तोत्रियाणां चात्र विन्यासो व्यूह इत्युच्यते। अस्यां विधायां त्रिषु पर्यायेष्वयं व्यूहः समानो भवतीत्यर्थः। कथं त्रिष्वपि पर्यायेषु प्रथमा स्तोत्रिया तृचभागा, स्थान एव भवति। द्वितीयावाप एव तृतीया परिचर्येरेव। तस्मात् समानरूपा भवतीत्यर्थः। कुलायस्येति बृहद्रथन्तरयज्ञायज्ञीयानां स्तोत्राणां श्लक्ष्णां वा विधृतिं वा कुर्यात्। न कदाचिदपि कुलायिनीं कुर्यादित्यर्थः। **एता···वन्ति।** **नोक···हत्यै।** कुलायिन्यां तु क्रियमाणायां बृहत्यः पूर्वा ककुब्भवति स दोषः। बृहत्येव याभ्यस्तस्याः[3] वादः।

इति पर्यध्याये विष्टुतिषु सप्तपञ्चाशत् खण्डः

इति द्वादशे द्वितीयः खण्डः

---

१ को. चीभि व    २ को. तु पीत्वत्    ३ को. आपे    ४ को. योम्यो

# अथ अष्टपञ्चाशत् खण्डः

यदि···वति। कथमावेष्टिता भवति। उक्त···वति। द्वितीये पर्याये उत्तमा स्तोत्रिया प्रथमगीतत्वात् प्रथमैव भवति। प्रथमैव। अयाचति। अथ उत्तमे पर्याये मध्यमा प्रथमा भवति। उत्तमे एव प्रथममेव सर्वाः प्रथमाः सर्वास्तिस्रोऽपि स्तोत्रियाणां पर्यायाणां प्रथमा भवन्तीति सर्वा मध्यमाः सर्वा उत्तमाः। इदमावेष्टितरूपतरम्[1]। अयमस्या उपपादता एवेत्यर्थः। एताः श्लक्षणा विधृतिकुलायिन्यः सर्वा एव उपपादवत्यः, सर्वाः पत्यः, सर्वासु प्रशंसा च विद्यते। तांसा···वीत। सर्वासां गुणदोषवत्त्वात्[2] यामिच्छेत्तां कुर्वीत। विधृ···र्वते। एता···चेति। वयं सत्रे कुलायिनमेव कुर्मः। न चान्यां विधां कुर्मः[3]। अथवैकमेवेदं वाक्यं विधृतेति। विधृतिमेवैतां सत्रे कुर्मः। अन्यानपि चेत्याचक्षमाणाः शाट्यायनिनो विधृतिमेव कुर्वते।

इति पर्यध्याये विष्टुतिषु अष्टपञ्चाशः खण्डः

# अथ ऊनषष्टिः खण्डः

पञ्च···रोति। इति···चिनी। तां···परिति। एवं च···रेव। पञ्चवर्गैरेव पर्यायविधानां पञ्चपञ्च नीत्याचक्षते। सन्द्रि···गाच। एकपिनीस्तोमभागयोरेकत्वात् सन्देहो जायते।

इति पर्यध्याये विष्टुतिषु ऊनषष्टिः खण्डः

इति द्वादशे चतुर्थः खण्डः

---

१ को, ०मावेष्टोतरुपतर  २ को. गुण दोष वतात् ?  ३ की. पिमः ?

# अथ षष्टिः खण्डः

पिसृ···रोति। इत्येवं च स्याताम्। न···रि···ति। एतत्···ण···इति। एतदपि चोदकवाक्यम्। अग्न्यागारमजिनानि[1] ब्रह्मचारिण इत्येवं विधं ब्रह्मवर्चसस्य रूपं, तदत्र न पश्यामः। तस्मात् कथमिमा ब्रह्मवर्चसस्येत्याचक्षत इति। त्रय···वन्ति। इमे हि त्रयस्त्रिवृतः। नन्वेक एवात्र त्रिवृत्, सत्यमेतत्। त्रिकावपि साहचर्यात् त्रिवृच्छब्देनोच्येते। त्रिवृतं स्तोममन्ववस्यन्तो, त्यधिकृत्य तदेव तत् स्तोत्रमानसीनं तिसृभिः स्तुवन्ति इति व्यक्तं श्रूयते। तस्मात् त्रिवृच्छब्दवचनं न दोषाय। तस्य···स्येति। तां गणीति। के नु इति। नाना···बभूवुः। ये पुरा नानागोत्राः सत्रमासाञ्चक्रिरे ते कारुद्विषयो नाम बभूवुः। अथा···षयः। अथवा भाल्लविन एव कारुद्विषयः। अन्ये पर्यग्निका नाम विज्ञेया[2] इत्यर्थः। प्रकृतिभावोऽपि छान्दसः सन्नपि स्वार्थं एव ग्राह्यः। अथवाजिज्ञासिषतेति लङन्त एव कल्प्यः। अत्र विकरणप्रत्ययोऽनुमेयः[3]। किमडागमो लटोऽस्ति, नायमडागमः, अयमाङुपसर्गः। आ वा···रिति। आचार्याणामिव वचो येषां ते आचार्यवचसः। अथवा आचार्य इति वचो येषु [ति] आचार्यवचसः। पर्यग्निकृताः शुभवादमात्रेणैव आचार्यवचसो भाल्लविनः पुनः साक्षादाचार्याः। तस्माद् भाल्लविन एव कारुद्विषयः। अथवा। अन्यथा वाक्यच्छेदः। अन्याः···ग्निकाः। भाल्लविभ्योऽन्ये पर्यग्निका नाम बभूवुः। उपा···रिति। आभिमुख्येन समीपं गत्वा जिज्ञासतः पुरुषस्य विज्ञानार्थिनः[4] शुभमवादिषुः। प्रजापतेर्मुखं त्रिवृत्स्तोमोऽसृज्यत ब्राह्मणतश्च। तस्मात् ब्राह्मणेन समानयोनित्वात् त्रिवृदपि ब्रह्मोक्तः। इत्यस्मात् कारणात् आचार्यवचसः। अथा···णीति। ब्रह्मोक्तस्य त्रिवृत आणी ब्रह्माणी, त्रिका चासौ[5] आणीति त्रिकाणीत्यपीयं त्रिकाणी भवति। त्रिवृत्···वक्ति। मध्ये स्थूलरूपस्त्रिवृत्, अभितस्त्रिकावणुत्वादाणिरूपौ, आणिभ्यामभितो दृढनिहितत्वादिय[6] दृढीभवति। दृढत्वादभितो ब्रह्माणी कल्याणीष्ठा भवतीत्याहुराचार्याः। तां कामिति कस्य हेतोर्ब्रह्मवर्चस्यां पञ्चदशे कुर्वन्ति। क्षत्र···दशः। क्षत्रसम्बन्धी पञ्चदशः स्तोमः। उभयोः प्रजापतिबाहुसम्भूतत्वात् तत्र कुर्वन्तीति[7]। तदुभयरूपं क्षत्रं भवति। यत्र क्षत्रे ब्रह्मरूपं, ब्रह्मणि वा क्षत्ररूपं तत्समृद्धं भवति। तस्मात् पञ्चदश एव ब्रह्मवर्चस्या युक्ता।

इति पर्यध्याये विष्टुतिषु षष्टिः खण्डः

---

१ को. अग्न्यगार० ?   २ को. ०धिज्ञेय   ३ को. विकारण०   ४ को. विज्ञानार्थी दः

५ को. च स्या   ६ को. निहितत्वाय इदं   ७ को. यत्र न्तीति

## अथ एकषष्टिः खण्डः

सप्त···रोति। इत्येषा[1] इषुस्ताभिरिति। एक···वति। कथमिति चेत्तदाह—पश्चात्···हेषुः। प्रकुलं कनिष्ठम्। पश्चात्प्रकुलमस्या इति सेयं पश्चात्प्रकुला नामेषुः पश्चात्प्रकुलेव भवति। कथं पश्चात्प्रकुलेति चेत् तदाह—पत्र···रिष्टा। अत्र पत्राणि धीयन्त इति पत्रधिः। प्रतिपत्रैरुन्नतत्वात् वरिष्ठेव भवति। अथ···तेजनं। तेजनं शरदण्डः। अथ···णिष्ठे। इषोरस्या[2] अणिष्ठे भागे उग्रसन्निहिते प्रोता कार्ष्णायसी[3] यवाङ्कुराकारा सा शल्येत्युच्यते सा अणिष्ठा। तस्मादिषुसादृश्यादियमिषुरित्याख्यायते। उक्तं···न्त। भल्लो नाम विशो वाग्रः शरविशेषः[4]। अथे···न्यन्ते। खजाका नाम कश्चिच्छरविशेषः। इह सप्तवर्गं पश्चात्कुर्वन्तः खजाकारूपमिव च मन्यन्ते। अभि···त्याहुः[5]। इमामिषुमभिचरन् आभिचारयज्ञे विदधीतेत्याहुराचार्याः। तां···कमिति। क्षत्रं···दशः। क्षत्रं···स्तवः। क्षत्रियो हि वध्यानां घातकः। तस्य···मिति।

वधस्य[6] क्षत्रियः कर्ता वधस्येषुश्च[7] साधनम्।
क्षत्रं पञ्चदशं विद्यादिषुः पञ्चदशे ततः॥

इति पर्यध्याये विष्टुतिषु एकषष्टिः खण्डः

## अथ द्विषष्टिः खण्डः

सप्त···रोति। गर्भिणी। तां ग···रिति। यदि जाते मध्यमा स्तोत्रिया सप्त विष्टुतीर्भजते। पञ्च···जेते। आद्यन्तस्तोत्रिये पञ्च भजेते। भूयिष्ठमध्यमत्वात् गर्भिणी भवति। तस्मात्तां गर्भिणीत्याचक्षते। सो···अपि...ह्मणं···सा उ। आद्यन्तयोः स्तोत्रिययोः संस्तवतो दशसंख्यात्वाद् विराट् संपद्यते। तस्यामपि विराजि सा गर्भिणी प्रतिष्ठितेति ब्राह्मणम्। अन्नं वै विराट् इति श्रुतेरन्नसंस्तुतायां विराजि प्रतिष्ठितत्वात् इयमन्नेनापि सम्पन्ना भवतीत्यर्थः। अथान्तर्गणः संस्तवतः प्रथमे स्तोत्रिये पञ्चवर्गत्वमुपगच्छतः मध्यमा सप्तवर्गत्वं तस्मात् सप्तवर्गेण व्यवहितौ पञ्चवर्गौ स्याताम्। व्यव···र्गाभ्याम्। कथमेकः सप्तवर्गो द्वाभ्यां पञ्चवर्गाभ्यां व्यवधीयते, अत्र संस्तवसंवादितः सप्तवर्गः[8] तयोः मध्यमायाः स्तोत्रियायाः अवयवानां प्रथमपर्यायस्योत्तमया[9] च, द्वितीयपर्यायस्य[10] प्रथमया च व्यवधानमस्ति। एवं द्वितीयतृतीययोः पर्याययोः

---

१ को. इत्येषो २ को. इष्टोरस्या ३ को. काक्ष्णायसी
४ को. शरावि० ५ को. अभि ६ को. वध्यस्य
७ को. वध्यस्ये० ८ को. ०प्तवर्गौ ताया ९ को. ०पर्यायो० १० को. पर्यय प्र०

किं व्यवधानेन कृतमित्याकांक्षायामाह—**एव···तीति**। उत्तरपञ्चवर्गद्वयं निपातकृतजामिदोषपरिहारादजामितरं भवति। **उत···दन्तः**। मुखतः प्रयुक्तौ सम्भूय दश सम्पद्यन्ते। दशसंस्तुता हि विराट्। विराट् मुखमस्या इति विराण्मुखी वरिष्ठा उत्तमपर्यायत्वादपोत्क्रमणी[1]। अपोत्क्रमणी[2] विराण्मुखी च सा विराण्मुखापोत्क्रमणी। एवमुक्तं गुणमीक्षमाणास्ताण्डिनः सप्तवर्गमुत्तमं कुर्वन्ति। **अथा···च्यन्ति**। सम्यञ्च समवेतांसाः सङ्गताः पञ्चवर्गा भविष्यन्ति। पर्यायतः प्रथममध्यमौ च पञ्चवर्गौ संस्तवतः उत्तरे स्तोत्रिये एकतो भवतः। **त्सम्य···इति**। पर्यायत उत्तमसप्तवर्गः संस्तवतः प्रथमाः स्तोत्रियाः सप्तकृत्व आवर्तनात् सप्तवर्गा इत्युक्ताः पर्यायाणां प्रथमा एव भवन्ति[4]। नेतराभिर्व्यवधानात्। स्तोत्रियापेक्षं बहुवचनम्। तस्मात् सम्यञ्च एव सप्तवर्गा[3] भवन्ति[4]। पूर्वं पञ्चवर्गद्वयसन्निपातस्य जामितादोषभयात् अजामित्वमुक्तम्। इदानीं पुनः सम्यक्तां ताण्डिनः सम्पत्तये कल्पयन्ति। तेषां सम्यक्तायां प्रशंसास्तीति मन्तव्यम्। **तत्रो···यनम्**। तत्र तस्मिन् पक्षे गुणानुपसंहनन्, अपहर्तुकामः अपनेतुकामः दोषानुत्पादयितुकामो वा पाकायन आचार्यो निस्सारो नास्तीत्याह स्म। निस्सारो निस्सरणं प्रसूतिः प्रजननम्। यदा सप्तवर्ग उत्तमो(न)भवति तदा गर्भिणी न प्रसवति[4]। अगर्भिणीभवत्वात्[5] प्रसूतिर्न भवतीत्यर्थः। **यद्य···च्छुयुः**। यद्युत्तमं पर्यायं सप्तवर्गं कृत्वा गर्भिणीकरणाय प्रथमां स्तोत्रियां सकृदेव शंसेयुः[6] तदा विष्टावः कृतो भवति। **यथु हि···स्यात्**। यदा एका मध्ये गर्भिणी न भवति, **यद्यु···मा स्यात्**। यदा एका उत्तमा स्यात् तदा त्र्युदयः स्तोमः स्यात्। तस्मात् सप्तवर्गस्योत्तमत्वं न घटते। **अथा···पति**। यदेतत् सप्तदश इत्याख्यातं वचनं शब्दस्तदानुकूल्यातिशयेन विष्टुतं भवतीत्यर्थः। सप्तदश इत्यत्र सप्तदशशब्दः प्रथमं प्रयुज्यमानः सप्तवर्गः सम्पद्यते। प्रथमे सप्तवर्गे क्रियमाणे अयमपि गुणो ग्राह्य इत्यर्थः। **एवं···श इति**। पञ्च च दश च पञ्चदशः सप्त च दश च सप्तदशः। एकश्च विंशतिश्चैकविंशः। त्रीणि च नवकानि च त्रिणवः[7]। त्रयश्च त्रिंशच्च त्रयस्त्रिंशः। इत्येवमल्पतरेण संख्यानेन प्रथमप्रयुक्तेन पञ्चदशादयः स्तोमा आख्यायन्ते। अन्येऽपि स्तोमाश्चतुर्विंशः पञ्चविंश इत्येवमादयः एवमेवाख्यायन्ते। सर्वे हि स्तोमा अल्पतरेणाख्यानेनादिभूतेनाख्यायन्ते, न तेषां शब्दानुरूप्येण पर्यायविधिः सम्भवति। सप्तदशस्य पुनः सप्तं भवति। तस्मादाख्यातानुकूल्येन कल्पनयैषा सप्तदशस्य सप्तवर्गप्रथमक्लृप्तिरभिहिता, गुण इति मन्तव्यम्। तस्मात् सप्तवर्ग एव प्रथमः स्यात्। **अथा···येन**। प्रथमे सप्तवर्गे क्रियमाणे पर्यायतो ब्रह्मवृद्धिर्भवति। मुखं हि ब्रह्म। **क्षत्रं···वति**। द्वितीया क्षत्र-[8] वृद्धिर्भवति,[8] तृतीया हि विट्। असौ विष्टावतः पर्यायतश्च पञ्चकत्वान्निर्भज्यते। तस्मात् प्रथम एव सप्तवर्गः।

इति पर्यध्याये विष्टुतिषु द्विषष्टिः खण्डः

१ को. ०त्वादचो — २ को. ०दयोत्क० — ३ को. सप्तवर्ग

४ को. प्रवति — ५ को. न भवत्वात् — ६ को. शयेयुः

७ को. त्रीणव — ८ को. क्षत्रं विद्धे इति

## अथ त्रिषष्टिः खण्डः

सप्त...रोति । इत्ये...र्मध्या । तान्नि...रिति । यदि...जत । तस्मान्निर्मध्येत्याचक्षते न प्रत्याहुः । प्रजाकामो निर्मध्यां न कुर्यादित्यर्थः । तां...कमिति । यथै...ष्यति । एवं, उ, नु, एवा, अपि इति पञ्च निपाताः । यथा वासौ गर्भिणी मध्ये स्थूला उभयतः कृशा समा चाभूत्, एवमेवेयमपि निर्मध्योभयतः समा स्थूला च मध्ये कृशा भविष्यति । अस्मिन् स्तोमे । तस्मादस्मिन्नेव स्तोमे निर्मध्या कार्या । परे···य···इति । गर्भिण्या न्यायः गर्भिणीन्यायः । निर्मध्याया न्यायो निर्मध्यान्यायः । उत्तरेषु च स्तोमेषु यस्मिन् गर्भिणी निर्मध्ये संभवतः तत्र गर्भिणीन्याय इति च । एवं विधानायात्र निर्मध्या विहिता । यत्र गर्भिणीप्रयोगः सम्भवति तत्रैव निर्मध्या कर्तव्येत्यर्थः । उभा···विति । पर्यायाणामुभयोरन्तयोः परिग्रहाय प्रथमोत्तमयोः स्तोत्रिययोः परिग्रहाय गर्भिणी निर्मध्ये कर्तव्ये । कथं परिग्रह इति चेत्, उभावन्तौ गृह्णाति संहाराणि अल्पीयांसि करवाणि । एने···व । पूरणीयानि । उभयोरन्तयोः तन्त्रकरणेन वा पूरणेन वा परिग्रहायेत्यर्थः । गर्भिण्याः तन्त्रकरणेन निर्मध्यायाः पूरणेन कथं वा पुरुषस्याद्यन्तयोर्वयसोः परिग्रहायेति योज्यम् । उभयोः स्तोत्रिययोः गर्भिण्यां तनुत्वात् पुरुषस्याद्यन्तयोर्वयसोः गुणानां तनुत्वं स्यात् । निर्मध्यायाः स्थवीयत्वात् गुणानां वृद्धिः स्यादिति कल्प्यम् ।

इति पर्यध्याये विष्टुतिषु त्रिषष्टिः खण्डः

## अथ चतुःषष्टिः खण्डः

नव···रोति । इत्येषा[1] इषुः । एतानि वाक्यानि गतार्थानि । प्रजा···पतिः । सप्तदशः प्रजापतिः इति श्रूयते । तस्मात् प्रजापत्युक्तः सप्तदशः शान्तोक्तः प्रजापतिः इति श्रूयते । तस्मै···म इति । तस्मै शत्रवे इमं विततं प्रजापतिमनया विष्टुत्या क्रोधयिष्याम इति । तस्मात् कारणादिषुः सप्तदशे कर्तव्या । प्रजापतिसंस्तुते सप्तदशे प्रयुज्यमाने इषुर्विधे भवति । तया विद्धः क्रुध्यति प्रजापतिः । स क्रोधः शत्रुं दहतीति चिन्त्यम् । यत्र···तीति । यस्मिन् कर्मणि शान्तः पुरुषः क्रुध्यति तत्कर्म भृशं भवति । अरिदारणं[2] भवति । वीर्यवत्तमं भवीत्यर्थः । यथाप्रयोगं सुनियमसंपन्नः स्वकर्मसम्पन्नः क्षमावानक्रोधनः सर्वभूतेषु दयावान् अविकारी स शान्त इत्युक्तः । तस्य पुरुषस्य तेजसो वीर्यत्वात् कोपो वा प्रसादो वा वीर्यवत्तरो भवति । तद्वदत्रापि चिन्ता शान्ते पितरि प्रजापतौ क्रुद्धे सर्वशत्रवो दह्यन्त इति चिन्त्यम् ।

इति पर्यध्याये विष्टुतिषु चतुष्षष्टिः खण्डः

---

१ को. इत्येषो    २ को, रिदारुणं    ३ को. मनिथम०

## अथ पञ्चषष्टिः खण्डः

सप्त···रोति । इतिः-प्तिर्नासा । तसा···रिति । सप्त···रेव । सप्तवर्गैरेव पर्यायाणां विधानां सप्तसप्तनीत्याचक्षते । सप्त···गणाः । गणशश्चरन्ति । मरुतो···देवाः । एकैकस्मिन् गणे सप्त सप्त मरुतो भवन्ति । आदि···स्तोमः । असावादित्य एकविंश: इति श्रुतेरेकविंश आदित्यस्तोमः । आदित्यो[1] हि नेन्द्रसंस्तुनस्तस्मादिन्द्रस्तोम[1] एवैकविंशः । इन्द्रस्तप इन्द्रो मरुत्वान् इति श्रूयते । मरुद्भिर्नित्यसाहचर्यादिन्द्रो मरुत्संस्तवः । तस्य···वन्ति । एकविंश आदित्यस्तोमः । आदित्यो हीन्द्रः, इन्द्रो मरुत्संस्तवः, मरुतां गणाः सप्त सप्त, तस्मादेकविंशस्य पर्यायाः सप्त सन्ति । त···स्युः । एवं दर्शने कृतेऽदृष्टं फलमस्तीति मन्तव्यम् ।

इति पर्यध्याये पञ्चषष्टिः खण्डः

इति विष्टुतिषु दशमः खण्डः

## अथ षट्षष्टिः खण्डः

नव···रोति । इत्ये···दीप्तानां । तास्तं···रिति । अग्न्यु···वति । अग्निस्त्रिवृतः[2] । प्रजापतेर्मुखतः सृष्टयोः समानयोः समानत्वादग्निसंस्तुतस्त्रिवृत् । त्रिके···वनि । त्रिवृ···भितः । तस्य···प्ते । तां कमिति । ज्योतिस्तुतः अयं स्तोमोऽग्निसंस्तुतत्वाज्ज्योतिस्संस्तवो भवति । अग्निर्हि ज्योतिः । तस्मिन् द्विति । तत्र यत्किञ्चित् ज्योतिस्संस्तुतं तदेकविंशस्य[3] रूपमेव भवतीति,[4] तन्नूनं[5] स निश्चय इति । तस्मादेकविंशे सूर्मिकार्यौ ?

इति पर्यध्याये षट्पञ्चाशत् खण्डः

इति विष्टुतिषु एकादशः खण्डः

---

१ को. आदित्यं हि वेन्द्र　　२ को. अग्नि त्रिवृतो:　　३ को. तदेकविंशस्या
४ को. भवन्तीति　　५ को. तन्न्यूनं

## अथ सप्तषष्टिः खण्डः

नव···रोति। इत्ये···तिष्ठा। तास्तो···रिति। सर्वे···ईयन्ते। ज्योतिष्टोमश्चतुष्टोम[1] इत्युच्यते, तत्र भवाः स्तोमाश्चातुष्टोमाः। चतुष्टोमानां रूपाण्यत्र दृश्यन्ते। अतः प्रतिष्ठन्ति। तस्मादिमाः[2] स्तोमानां प्रतिष्ठा इत्याचक्षते। कथमिति चेन्नव भवन्ति। नव वर्गः प्रथमः,[3] तेन त्रिवृत् प्रतिष्ठितो भवति। पञ्च···दशः। सप्त···दशः। सस्ता···विंशः। तां···कमिति। प्रति—स्तोमः। चतुष्टोमो नामान्त एकविंशः। अन्तो हि प्रतिष्ठास्तोमो भवत्येकविंशः। तस्मिन्···इति। प्रतिष्ठास्तोमे हि प्रतिष्ठा विधातव्या।

इति पर्यध्याये सप्तषष्टिः खण्डः

इति विष्टुतिषु द्वादशः खण्डः

## अथ अष्टषष्टिः खण्डः

नव···रोति। इति विकूला। तां···पि···रिति। अत्र···जन्ति। अस्मिन् स्तोमे प्रथमं वैकूल्यं गच्छन्ति विष्टावाः। वैकूल्यान्नानात्वे[4] विष्टावानां वैरूप्यम्। प्रथमा स्तोत्रिया त्रिपिनी, तृतीया एका। एवमुत्तरयोरपि पर्याययोः नानात्वं दृश्यते। सन्दि···शाच। पञ्च ह्येते। अथा·· वन्ति। अत्र नानारूपा विष्टावा भवन्ति, तस्मादिमां विकूलेत्याचक्षते। न···विं···वाप। तत्स···द्यन्ते। एवं विष्टूयमाने[5] सप्तविंशतिः स्तोत्रियाः संपद्यन्ते। सप्त···वति। सप्तविंशत्वेन श्रुतौ संस्तुतः प्रजापतिः।

इति पर्यध्याये अष्टषष्टिः खण्डः

इति विष्टुतिषु त्रयोदशः खण्डः

---

१ को. ज्योतिष्टोमचतुष्टोम० २ को. तस्मादिमां ३ को. प्रथमं
४ को, ०न्नानात्वं ५ को. विषूय०

# अथ ऊनसप्ततिः खण्डः

**नव**···**रोति** । इत्येषा वज्रा । **ता**···**व**···**रिति** । **वज्रो**···**वति** । **त्रिवृद्वै** वज्र इति । **त इ**···**मन्ति** । इमे वज्रोक्तास्त्रयस्त्रिवृतः समविक्रान्तिः समं विष्टूयन्ते । ननु विकूलायामपि वर्तत[1] एव त्रिवृत्त्वं[2], तस्यामपि वज्रता संप्रसजति । अस्यां विधायां सर्वे त्रिवृतः समवक्रामन्ति, तुल्यरूपेण विष्टूयन्ते । पर्यायास्त्रिक एव हि सर्वे विष्टावाभ्यां, या हि विकूलाया विष्टा वास्तस्मादस्यामेव वज्रपुष्टिसत्वान्नानादेशप्रभावात्[3] परस्परामर्षिणो[4] दुष्टाः । शतरथकारिणो रथभङ्गकारिणो यदि रथे युज्यन्ते पुरुषैस्तदानीमेवमुक्तं भवति । यथा परस्परविसंवादिनोऽश्वा[5] दुष्टा[5] रथे युज्यन्ते ते रथं दुष्टचारित्वात् सद्यो मृन्नन्ति, तथा भिन्नरूपा विष्टावा यत्नोत्थं मृन्तन्ति । तस्मादेकरूपमेव विष्टावः कर्तव्य इत्युक्तं भवति । **ब्राह्मणेद**···**तां**···**कमिति** । **वज्र**···**णव** । **तस्मिन्नति** । **एका**···**रीति** । **इत्ये**···**जाति** । **कां**···**स्तो**···**रिति** । एवमिति । एवमेव स्थवीयसोऽणीयः प्रजापतेरेकादशवर्गे[6] नववर्गो विद्यते, नववर्गे सप्तवर्गः । तस्मात् प्रजापतेरित्थं **भवति**···**यथा**··**मिति** । नल्वमिति प्रमाणयुक्तक्षेत्रस्य[7] विशेषयुक्तस्याख्या । नल्वपत्रकमिति नल्वावयवभूतस्य[8] प्रमाणान्तरस्याख्या । यथा नल्वान्नल्वपुत्रकं जायते, एवमेकादशवर्गान्नववर्गस्तनः सप्तवर्गः । इत्यनेनानुक्रमेण स्थवीयसोऽणीयः प्रजापतेरेकादशवर्गान्नववर्गोऽणीयस्त्वाज्जायते । नववर्गात् सप्तवर्गो जायत इव । तस्मात् प्रजापतिरित्याख्यायते । **अण**···**वति** । षट्त्रिंशोने संवत्सरे एकादश मासा भवन्ति. तस्मात् संवत्सरमासतुल्यसंख्य एकादशवर्गः प्रथमो भवति । **स**···**व**···**यन्ते** । सर्वाणि हि बीजानि संवत्सराज्जायन्ते, तस्मात् संवत्सरमाससमानसंख्यः प्रथमो भवति । तस्मादपि प्रजापतिरित्याख्यायते । **ता**··**क**···**रिति** । कथमत्रारतिः प्रथमया निर्दिश्यते, तां कस्य हेतोरिहैवमित्येवमादिषु[9] द्वितीयया निर्देशः कृतः, नैष दोषः । ता प्रजापतिरित्येतामभिधामिह कस्य हेतोः कुर्वन्ति इति । **तामे**···**रिति** । **एका**···**देव** । सप्त गणा देवगणमात्रा एकादशिनः पर्याया भवन्ति । **एका**···**वन्ति** । **सप्त्यावापो** । आवापोऽपि देवगणमात्रः । **तत्र**···**द्यन्ते** । **त्रय**···**वताः** । **तयो**·· **रति** । **इत्ये**···**जातिः** । नवोनस्य संवत्सरस्य त्रयोदशस्यापि संवत्सरप्रमाणत्वं विद्यते । सर्वं गतार्थम् ।

**नव**···**रोति** । **इत्ये**···**मस्य** । **ताज्ये**···**रिति** । **यदि**···**इति** । यदिदमुत्तरोत्तरिण उत्तरोत्तरवृद्धाः पर्याया भवन्ति, तस्मादिमां विधां कुर्वतोऽप्युत्तरोत्तराभिवृद्धा[10] भवन्ति । उत्तरोत्तराभिवृद्धिर्ज्यैष्ठ्यमित्थमुच्यते । संवत्सरतुल्योत्तमपर्यायित्वात् ज्येष्ठ्यकामस्य विधेया । **तां**···**खक**···**स्येति** । **ज्यैष्ठ्य इति** । **एष**···**द्यते** । त्रिवृत्पञ्चदशः सप्तदश इत्येष क्रमः एतावानेव विद्यते । नानासंवत्सरयुग्भिः निन्दाप्रशंसावादालङ्कृतिभिस्तिसृभिर्विधाभिः संयुक्तानां षण्णामेतेषां स्तोमानां ताण्डिब्राह्मणेऽपि विहितोऽय क्रमः । एतावानेव विहित इत्यर्थः । **आप्ताः**···**स्तोमाः** । एतैरेव षड्भिः स्तोमैः सर्वस्तोमा आप्ता भवन्तीति विज्ञेयम् । **आप्तः**··· **छन्दांसि** । एतैरेव पृष्ठ्यस्तोमैः सर्वाणिच्छन्दांसि आप्तानि वेदितव्यानि । **आप्ता ग्रहाः** । पृष्ठ्य एव सर्वे

---

१ को. त्र — २ को. त्रिवृतं — ३ को. ०शप्रभवात्
४ को. पवस्वराम० — ५ को. ०वादिनश्चादुष्टा — ६ को. ०रेकादशवर्गो
७ को. ०प्रमाणयुक्तं क्षे० — ८ को. नल्वावयवभू० — ९ को. इहैवमीत्येव० ?
१० को. ०त्तरा वृद्धा

ग्रहाः आप्ता वेदितव्याः। अथै···इते। उक्तानेव षट् स्तोमान् द्वाभ्यां द्वाभ्यां समस्तान् छन्दोमिकान् स्तोमाँश्चतुर्विंशचतुर्विंशाष्टाचत्वारिंशान् कुरुते। कः कुरुते, श्रुतिरेव कुरुते। स त्रिवृच्च पञ्चदशं च समा स्यात् तदेव चतुर्विंशं सप्तममहरभवत् इत्यादिना ग्रन्थेन कल्प्यते। चतुस्तोमा यत्र छन्दोमास्तेषां चतुर्विंशस्य[1] विष्टुतिविधानं वक्ष्यामः। ष्टा···रोति। चतु···र्वात। यमपि चतुर्विंशस्य सम्पदर्धं वा पर्यायमपि संपत्। तच्च···यन्ते। चतु। यत्र विष्टावविधानेन प्रकारेण सम्पदः कल्प्याः, यथा[2] यथा[2] सम्पदः सम्भवन्ति तथा तथा कल्प्याः। अथा···त्रिष्टुप्। अया···शस्य। अष्टा···जगती। एकविंशपटलमस्मिन् पटलद्वयेन वाच्यमस्ति।

अथा···स्याहुः। त्रिण···वन्ति। यः सर्पराज्ञीषु त्रिकस्तोमस्तूष्णींस्तोमस्य ऋच ऋचे हिङ्कुर्वन्ति एतावानेव विष्टावक्रमः। विधृतिरेव कर्तव्या, न श्लक्ष्णेत्युक्तं भवति। अथ···शस्य। अत्रापि नव वाच्यमस्ति।

अथा···शस्य। पञ्चविधेऽस्मिन् स्तोमे तमत्रे? पापं? पञ्चीभवति इयं सम्पत्। कथमस्य पञ्चविधत्वं, पञ्चसंख्या पञ्च सम्भूय पञ्चविंशः स्तोमः सम्पद्यते। पञ्चभिर्वियुक्तैः शुद्धिभागं दास्यतीति पञ्चविधस्तस्मात् पञ्चविध इत्युच्यते। अथा···वलं। सप्त···मध्ये। स्वसंहारपक्षोऽयमुच्यते। अयुक्···र्यायः। अयुक् स्तोमोऽप्ययं, तस्यायुज एव पर्याया[4] भवन्ति। तस्यै···जेते। सप्तो···जेते। विद्धे···इति। इत्थं विष्टूयमाने विडेव निर्भाज्यन्ते। तृचा···र्वन्ति। किमर्थमिदमुच्यते, पूर्वमेवायमर्थः प्रतिपादितः। सकृद्धिकृ-तैरेव भाल्लविनः स्तुवीत इत्यस्य प्रायणार्थमुच्यते। तृचा···शीर्ष्णं। ऋच···ज्ञीभ्यः। अग्य···वत्वे। एभिरपि··· भाल्लविनः। सकृद्धिकृतैरेव भाल्लविनः स्तुवते। तिस्र···त्याहुः। प्रथमे पर्याये प्रथमायामावापो, मध्यमैका उत्तमा[5] त्रिरावर्तते। इत्थे···वत। एतावति कर्मणि सर्वो हि स्तोमो विहितो भवतीत्याहुराचार्याः। तद्य–शय। पूर्वमेव गतार्थत्वादेते वाक्ये अनर्थके, नानर्थके। अयमेव न्यायो विष्टावधर्मं इति विज्ञापनार्थत्वात्। यद्येते वाक्ये नाकरिष्यत्, अस्मिन्नध्याये विहितानां विष्टावभेदानां त्रयाणां पूर्वस्मिन्नपि बहूनां दर्शनात् तदानुकूल्येन नान्येषामपि स्तोमानां कामवशाद्वा सम्पद्वशाद् वा यथारुचि प्रासक्ष्यत्, तस्माद् वक्तव्य एव। अथ···तस्य। एवं क्लृप्त इति। 'तिस्र आवापा' इत्येतत्प्रभृति यदभिहितं वस्तु, विद्वानेवं मन्येत, मया अविज्ञातस्तोमो नास्ति. अभिहितश्च नास्तीति। किमुक्तं भवति, इदानीमभिहितस्य वस्तुनः प्रशंसार्थमाह 'कथं तिस्र आवापा' इत्यादिना ग्रन्थेन यावदभिहितं वस्तु तावद्विद्वानपि सर्वां स्तोमक्लृप्तिं विजानाति, कल्पयितुं शक्नोति च। किं पुनरेतैस्त्रिभिरध्यायैर्विस्तृतं वस्तु विद्वान्। एवं पुनरुक्ता भवति।

इति पर्यध्याये विष्टावभेद ऊनसप्ततिः खण्डः

इति विष्टुतिषु चतुर्दशः खण्डः[6]।

---

१ को. चतुर्विंशारशतस्य शस्य चतुर्विंशस्य　२ को. यथायथं　३ को. सोमो०
४ को. पर्याया एव　५ को. उत्तमं
६ कोषे समापननिर्देशो न दृश्यतेऽत्र

# अथ सप्ततिः खण्डः

ओमित्यस्य[१] सूत्रकल्पपरिशेषप्रभृतिभिरनेकैः सन्दर्भविशेषैरशेषं यज्ञतन्त्रमुपदिश्य, पर्कप्रभृतीनामशेषाणां साम्नामनुक्रमेण नामधेयगोत्रोदाहरणं कल्पसूत्रे निर्दिष्टानां साम्नामिदमद इति नामानि सम्यक् परिच्छेत्तुं सुशकमिति मत्वा, प्रतिमन्त्रमृषिगोत्रनामधेयोदाहरणमिदानीमाचार्येणोपक्रम्यते । तत्र वेदाध्ययनारम्भवेलायां यदक्षरं प्रथममुच्चार्यते प्रणवाभिधायि, तस्यैवादो ऋषिरभिधीयते । प्रजापतेरपत्यस्य परमेष्ठिन ओमित्येतदक्षरं भवति । परमेष्ठिना दृष्टमित्यर्थः । ऋषीणामुदाहरणस्यारभ्यमाणत्वात्[२] एवकारार्थे वाशब्दः । यदेतदक्षरं सामभूत्वा कर्मविशेषे गीयते तदपि परमेष्ठिन एव प्राजापत्यस्य भवति । केन कर्मविशेषेणेदं साम भूत्वा सम्पत्स्यते, **उपाधिरिति** । यदुद्गातृभिः स्तोत्रारम्भे चतुर्दशमात्रासहितमकारहीनं गीतिविशेषविरचितमक्षरमुच्चार्यते, यच्चोपगातृभिरुपगीयते तदत्र सामभूतमक्षरमित्युच्यते । यदेतदक्षरमोमित्येव वा गायेत् इति ब्राह्मणे गीतिविशेषः श्रूयते तदपि परमेष्ठिना दृष्टमित्यर्थः ।

**ब्रह्म...ब्रह्मा** । वेदो ब्रह्म ( जै. उप. ब्रा ४. २५.३ ) इति श्रूयमाणत्वादखिलो वेदो मन्त्रब्राह्मणसहितोऽत्र ब्रह्मशब्देनाभिधीयते । सकलो वेदोऽब्रह्मणा[३] दृष्ट इत्यर्थः । वाशब्देन तदादिभिः[४] ? प्रतिमन्त्रऋषि (भि ?) रिति । कल्पार्थस्य ब्रह्मणोऽस्य स यो सवो ? रित्ययं शब्दविशेषः[५] पूर्वं परमेष्ठिनः इत्युक्तम् । ब्रह्मणो वा दृष्टं भवति । अथवेदं वाक्यद्वयमेकीकृत्य व्याख्यास्यामहे । तौ वाशब्द पि·········वेदो ब्रह्मणा दृष्टो भवतीत्यर्थः । ब्रह्म ओमित्येकाक्षरमौपनिषदं ब्रह्म इत्युपासनीयं भवतीत्यर्थः । **वाचो वा साम** । इदमेवाक्षरं वाचा वा दृष्टं सत्यं सामेत्युच्यते ।

**स्वर्ग...रणम्** । स्वर्गस्य द्वारविवरणम् । द्वारमनेन विव्रियत इति द्वारविवरणम् । किं स्वर्गलोके न दृष्टम्, नैवम्, स्वर्गलोकस्य द्वारमनेन विव्रियत इति सम्बन्धः । प्रणवोपास्यया स्वर्गलोकद्वारं विव्रियते हि । स्वर्गलोकं[६] वैति । तस्मात् स्वर्गलोकद्वारविवरणमिति चोद्यते ।

**देवानामिवौघः** । देवैर्वा दृष्टमोघो नाम भवति । **त्रय.. यनम्** । वेदत्रमनेनाध्याह्रियते[७] संबध्यत इति वेदाध्ययनं नाम भवति । अरं तृप्तं व्याहृतिभिस्तर्पयति । व्याहृतयस्तृप्ता वेदांस्तर्पयन्ति इति हि श्रूयते । तस्माद् वेदाप्यायनत्वमुक्तम् । अयातयामाः, आत्तवीर्यत्वादयातयामाभिधानं वा भवति । अस्याक्षरस्याविदितस्य रसोऽप्यक्षरन्तदेवाभवत्[८] इति श्रूयते । **अक्षरसाम** । इदमेवाक्षरस्थं सामेत्युच्यते ।

**वासि···कारः** । स्तोत्रारम्भे यो हिंकारः स वासिष्ठो वसिष्ठेन दृष्टः । प्राजापत्यो वा प्रजापतिना दृष्टो वा, गवां वा । **अथ···रणम्** । अथानन्तरं समस्तयज्ञक्लृप्त्यनन्तरम् । अत ह्यस्मात् कारणात्, यस्मा-

---

१ को. जैमिनये नमः गं ओमित्यस्य २ को. ०माणत्वात् सामन्त्यस्य ३ को. ब्राह्मणदृष्ट

४ को. तमादिभिः ५ को. शब्दविशेषं

६ को. स्वर्गलोकावैति ७ को. ०त्रयमनेनमध्याह्नि० ८ को. ०सोऽप्यक्षरान्तदेव

त्प्रतिमन्त्रमृषिगोत्रनामधेयोदाहरणानि कल्पसूत्रगतानि सम्यक् परिहर्तुं शक्तानि[1] भवन्ति, तस्मादृषीणां नामधेयानि च गोत्राणि च वक्ष्यन्त इति ज्ञायते[2]।

नन्विदं वाक्यमस्यादौ वक्तव्यम्, सत्यमेतत्। किन्तु इतः प्रभृति वक्ष्यमाणा एव वेदमन्त्रा एव न प्रणवादय इति ज्ञापयितुमिदं वाक्यमत्र न्यस्तम्। किमेतस्य ज्ञापने प्रयोजनम्, उपाकर्मणि चोत्सर्गे च आदितश्छन्दांस्यधीत्य[3], यथार्थमित्यत्र प्रणवोच्चारणादेव कृतिनो मा भूवन्निति, एतत्प्रयोजनम्। प्रणवोच्चारणं हि वेदाध्ययनस्याङ्गभूतं क्रियाविशेषः। उपाधिहिङ्कारौ स्तोत्रांशभूतौ। तस्मादुक्तवदेव साधु।

अथ···व्याख्या। ऋषिरिति वेदस्याख्या विद्यते। अयमृषिशब्दो वेदाभिधायी सन्नत्र वेदावयवभूतेषु सामसु वर्तते। गोत्रशब्देनात्र[4] मन्त्रदृशोऽभिधीयन्ते। ऋषीणां मन्त्राणां साम्नां नामधेयोदाहरणं गोत्रोदाहरणं चारभ्य इत्युक्तं भवति। आदित आरभ्य सर्वेषां साम्नां नामधेयानि वक्तुमृषींश्च वक्तुमारभ्यत इत्यर्थः।

ननु अल्पाच्तरम् पा० (२.२.३४) इति गोत्रशब्दस्य पूर्वनिपातो युज्यते, नैष दोषः। अभ्यर्हितं पूर्वम् वा० (१ ४ १२) इत्यनेन भवति पूर्वनिपातः। कथमभ्यर्हितत्वम्, नामधेयानि सकलं सामविषयं प्राप्नुवन्ति, गोत्राणि पुनः कञ्चित् प्रदेशमुपयुज्य प्रवर्तन्ते। असकलव्यापिनोऽपि हि सकलव्यापिविधिरभ्यर्हितः स्यात्, तस्माददोषः पूर्वनिपातः। एवं चेत् पूर्वस्मिन् व्याख्याने ऋषिनामधेयानामृषिगोत्राणाञ्च सामवर्तिन्यसकलव्यापित्वस्य सामान्यादुक्तो दोषोऽस्त्येव। नास्ति दोषः। बहुषु सामसु ऋषिनामधेयान्युदाह्रियन्ते। कतिपयै ऋषिगोत्राणि, यत्र भूयस्त्वमपेक्ष्याभ्यर्हितत्वं नामधेयानां भवति। किमर्थं पुनराचार्यः ऋषिनामधेयगोत्रोदाहरणमधिकृत्य केषांचित् साम्नां पर्कादीनामृषीणां नामधेयानि च वक्ष्यति। साकमश्वस्य शौनःशेफस्य सामनी द्वे, वत्सस्य काण्वस्य सामनी द्वे, और्वस्य बौधारेः सामनी द्वे, इत्येवमादिषु कतिपयेषु नाम धेयं च गोत्रं च वक्ष्यति। एतेषां पुना रोहितकुलीयः शुक्रभर्गयशशुक्रचन्द्रादीनामुभयं न वक्ष्यतीति। अत्र ब्रूमः—आचार्यः सकलवेदपारगत्वाद् अनेकेषु ब्राह्मणान्तरेषूपलक्षितान् अल्पमेधसामनुग्रहायात्रोदाहर्तुमारभते[5]। येषां पुनः साम्नामखिलेषु ब्राह्मणेषु ऋषयो न श्रूयन्ते तेषामृष्यवगमोपायाभावान्न वक्ष्यति। यस्य ऋषेर्गोत्रं न ज्ञायते तत्रोभयं वक्ष्यति। यस्य साम्नो यो द्रष्टा स एवादिभूतस्य ऋषिरेव वक्ष्यते, न गोत्रम्। एवं चेदृषीणामुदाहरणमित्येतावता सर्वोऽयमभिहितोऽर्थः सिध्यति। नार्थो नामधेयगोत्रग्रहणेन। नामधेयैर्विना न शक्यमृषीनुदाहर्तुम्। अत्र ब्रूमः—ऋषीणां नामधेयगोत्रयोः सतोः ब्राह्मणान्तरेषु श्रूयमाणयोरुदाहरणमारभ्यते, नाश्रूयमाणयोरित्येतमर्थमवबोधयितुं[6] नामधेयगोत्रोदाहरणं कृतम्।

'अथ ऋषीणामुदाहरणम्' इत्येतावत्युक्ते सर्वनामर्षिवचनारम्भः कृतो भवति, नहि सर्वेषामृषयः श्रूयन्ते। किमर्थं पुनरेकेषामेवर्षयो न वक्ष्यन्ते, श्रूयताम्—येषां साम्नामृषयः परब्राह्मणेषु द्रष्टारो भवन्ति तेषामृषयोऽल्पमेधसामनेकशाखाध्ययनासमर्थानामेकशाखाध्ययनसन्तुष्टानामधुनातनानामनुग्रहाय[7] वक्ष्यन्ते, यथाब्राह्मणम्।

---

१ को. शक्यानि २ को. ज्ञायन्ते ३ को. आदितश्छन्दस्यधीत्य
४ को. गोत्रशब्दो नाम ५ को. ०यात्रोदाहर्तुमारभ्यते ६ को. नाश्रूयमाणादित्ये०
७ को. ०नातर्हानार

गोत···पर्कः। प्रथमं साम गोतमस्य पर्कः[१] नाम साम्नो नामधेयम्। पर्कः[२] ऋषिगोतम इति प्रत्येतव्यम्। किमिदं वाक्यमर्थवत्,[३] कः संशयः। एवं चेत् पर्कस्य गोतम इति वक्तव्यम्, ऋषिनामधेयोदाहरणं ह्यधिकृतं कृतं तद्धिः प्रथमया विभक्त्या भवितव्यम्, नैष दोषः। ऋषिनाम्ना[४] यया कयाचिद् विभक्त्या भवितव्यम्। यथा लोके—अर्जुनस्य सुतोऽभिमन्युः, अभिमन्योः पितार्जुन इति। तद्वदत्रापि गोतमस्य पर्क इति वा, पर्कस्य गोतम इति वोक्ते न दोषः। किंलक्षणेयं षष्ठी, द्रष्ट्सम्बन्धलक्षणा। गोतमस्य द्रष्टृत्वात्तस्य सामेति वक्तुं न दोषः। अथवा ब्राह्मणत एवात्र सिद्धा षष्ठी। 'तासु वसिष्ठस्य पौङ्क्रमिति', 'भरद्वाजस्यादारसदिति च, 'वसिष्ठस्य प्लवमिति च। तत्र यल्लक्षणा षष्ठी तदेवास्त्वत्र लक्षणम्। अथ कथमेव न गृह्यते, गोतमनामधेयस्य प्रथमस्य साम्न ऋषिः पर्क इति। तदयुक्तम्[५]। 'सौपर्णं[६] च वैश्वमनसं चादिश्य सामवेदि च वत्सस्य काण्वस्य सामनी द्वे' इत्येवमादौ सामनामधेयेष्वेषु प्रथमया विभक्त्या श्रूयमाणत्वात्। अथात्र ऋषेर्नामधेयं क्व श्रूयते, न गोत्रम्। यस्य वंशस्य य आदिभूतस्तस्य वंशस्य स गोत्रशब्देनाभिवाञ्छितः। तस्माद् गोतमो[७] नाम[७] आदिगोतमः,[७] स एव पर्कस्य द्रष्टा। तस्मिन्नेव गोत्रनामधेये युगपदापद्यते[८]। तस्मादुभयमुक्तं भवति। एवं चेदृषीणाँ नामधेयोदाहरणमित्येतावता सिध्यति, नार्थो गोत्रशब्देन, उत्तरत्र शाकमश्वस्य शौनःशेफस्य[९] सामनी द्वे इत्येवमादिषु सार्थको भवति। अथ गोत्रेषु ऋषिशब्दमृषिषु[१०] च गोत्रशब्दं कल्पयित्वा व्याख्यायमाने सर्वमिदमुक्तं भवति। प्रथमस्य साम्नो नामधेयं पर्क इति, ऋषिर्गोतम इति। गोत्रेऽप्यकृते शाकमश्वस्य शौनःशेफैरित्यत्र ऋषिभूतं शाकमश्वं[११] पित्रा[१२] शुनःशेफेन विशेषयति। पुनर्वचने एवकारं[१३] ग्रन्थालंकाराय प्रयुञ्जते आचार्याः। सौपर्णं च सुपर्णेन दृष्टम्। वैश्व···मपो। विश्वमनसा वादित्येन वा। किमयमाचार्योऽस्य साम्नो द्रष्टारमादित्यविश्वमनसोरन्यतरं निश्चेतुं न शक्नोति, य एवं विकल्पयति, नात्र संशय आचार्यस्य, नचायं संशयभूतो विकल्पः। कानिचित् सामान्येकैकानि बहुसामगानानि विद्यन्ते, तत्र[१४] यथास्थं कामं साधयितुमेकमेव साम बहवोऽपि पृथक् पश्यन्ति। अस्मिन्नर्थेऽयं वा शब्दः प्रयुज्यते। इदं साम कदाचिदात्माभिप्रेतं कामं साधयितुं विश्वमना दृष्टवान्। कदाचिदादित्यं तं विजानन्नाचार्यं उभौ वदति। अस्य साम्नो विश्वमनाश्चर्षिरादित्यश्चेत्युक्तम्। यथा मैधातिथं ब्राह्मणम्। मैधातिथं मेधातिथिश्च दृष्टवान् कदाचित्, कदाचिन्मरुतं, कदाचिदङ्गिरस्यं[१५] कदाचिद्विश्वामित्रं तं विजानन्नाचार्यो मारुतं वैश्वामित्रं वाङ्गिरस्यानां वा साम मैधातिथं वेति वक्ष्यति। तद्वदत्रापि द्रष्टव्यम्।

अतः प्रभृति व्यक्तार्थत्वात् अत्र वक्व्यमिति तदेव व्याख्यास्यामः। श्रुतर्षिणा दृष्टानि श्रौतर्षाणि। औशन शाकमश्ववात्सानामान्तररहितत्वादस्मिन् ब्राह्मणे श्रुतार्षेयाणामपि नामनिर्देशार्थमृषयो विधीयन्ते। इन्द्रस्य संवर्गं च वृत्रघ्नं[१६] च आभाश्रौष्टे च आभेन श्रुष्टिना दृष्टे। अन्येषामपि दृश्यते

---

१ को. पूर्वो नाम　　२ को. पंर्क
३ को. वाक्यमर्थं　　४ को. ऋषिनाम्नोर्यथा　　५ को. चेत्तदयु०
६ को. सौएर्णं　　७ को. गोतमनामादिर्गोतमः　　८ को. युग्मपदापद्येत
९ को. शौनः शेफः　　१० को. ऋषिगोत्रशब्दं
११ को. साक०　　१२ को. पिता　　१३ को. एवकारान्
१४ को. यत्र　　१५ को. ०दङ्गिरस्य　　१६ को. वृक्तृघ्नं

(पा० ६.३.१३७) इति दीर्घः। जराबोधीयस्य नामान्तरत्वात् अस्मिन् ब्राह्मणे विधीयमानोऽपि गौरीविितिरस्य[1] ऋषिर्नोक्तस्तथा वारवन्तीयस्य प्रजापतिः। सूर्यवर्चसपुत्रेण वसुरोचिषा[2] दृष्टं श्रुष्टीहवेन[3] दृष्टं श्रुष्टीहावम्, आदिवृद्धेरभावस्य लक्षणं द्रष्टव्यम्। भद्' नि···द्वे च। पूर्वस्य प्रश्निनोऽस्मिन्नेव ब्राह्मणे कारणं चिन्त्यम्। इन्द्रस्याभयंकरं नाम। अजमायुना दृष्टमाजमायवम्। उद्वंशीयस्य ऋषिर्न कथितः, अथ ह वा एतेन देवाः साम्ना वंशमिवोद्योत्यान्नसुरानभूम्यत्यक्रामन् इति हि देवाः श्रूयन्ते। नानदस्य ऋषिर्नोक्तः, इन्द्रो ब्राह्मणे श्रुतः। त्रैशोकात्[4] पराणि शैखण्डनादीन्यष्टौ सामानि अस्यां शाखायां न विद्यन्ते। परार्थमभिहितानीति मन्तव्यम्। एकैकानि हि कल्पसूत्राण्यनेकशाखोपकाराय विदधत्याचार्याः। धर्मविधर्मणीत्यत्र द्वे पूर्वे धर्मणी, द्वे उत्तरे विधर्मणी हि। ककुभानामृषिरत्र न कथितः। इन्द्रो हि ब्राह्मणैरेव ऋषिर्न कथितः। बृहत्कस्य ब्राह्मणे देवाः श्रूयन्ते। उद्वंशपुत्रस्य नर्षिः। अक्षर्यस्य रेवतो नर्षिः। आजिगाभीकयोः[5] ब्राह्मणे देवाः शैशवाः। महायवयोः प्रजापतिः। तेषामत्र न कथितः। सूरूपेण दृष्टे[6] सूरूपे। आदिवृद्ध्यभावश्छान्दसः। अथवौकारोऽध्येतृप्रमादाद्[7] विनाशितः। वाजजितो[8] देवा ऋषयः। आचार्येण ऋषिर्नोक्तः। वाजजितोऽश्वत्रैककुभयोः, जागतस्य, सामराजानां, सुज्ञानयोः, आतीषादीययोः, सभानाम्, शकुनोदीर्घयोः, गायत्रपार्श्वस्य, सन्तनिनः इत्येतेषामृषयो नोक्तः। तेषु केषाञ्चिद्दृषिः[9] प्रजापतिः केषाञ्चिद्देवाः[10]। ऋष्युदाहरणे[11] येषामाचार्येण[11] नोक्ता ऋषयः प्रायशस्तेषां देवाः। अथो प्रजापतिः सत्रस्यर्धिन ऋषिः। दीर्घतमसो व्रतस्य कषूचयो नाम शशः। पूर्वे वासिष्ठस्य व्रते, उत्तरे जमदग्नेः। जमदग्नेर्व्रतं हि पूर्वमूहे गीतम्। उत्तरमिलान्दम्। पञ्चावयवबहुशुप्रभृति व्रतमेव सुपोशकुन इत्यन्तम्। तस्य बहुशु[12] इत्येतच्छिरः, अग्निरस्मि (जै. सं. २. २. ७) इति दक्षिणः पक्षः। पात्यग्निः (जै. सं. २. २. ८) उत्तरः, आजन्त्यग्ने (जै. सं. २. २. ९) इति पुच्छम्। इन्द्रं नरः (जै. सं. १. ३३. ६) इत्यात्मा। एतत् पञ्चावयवमेकं साम। इलाब्दयोः ऋक् न श्रूयते। निह्नवादीनां चतुर्णां सभाप्रभृतीनां[13] त्रयाणाञ्च नोक्ता ऋषयः। पुरुषं? निधिषाम्न आनुवाकपरिसमाप्तेः यत् सामसप्तासु गानं तत् पुरुषव्रतं नाम। अथवा सप्तैव पुरुषव्रतानि स्युः। तथा चाध्येतारो व्यवहरन्ति, सप्त सामानि पुरुषव्रतानि इति।

ननु अध्येतृव्यवहारप्रामाण्ये सति पक्षेलान्द दिशांव्रतकश्यपव्रतादिषु दोष उत्पद्यते, तत्राध्येतृव्यवहारातिलम्बि वचनं विद्यते। सपक्षेलान्दस्य ब्राह्मणे तत् पाक्षि भवति इत्येवमादिभिर्वचनैः शिरः पक्षपुच्छात्मवत्वं[14] महाव्रतानुकृतित्वं च प्रतिपादितम्। तस्मात् सपक्षमिलान्दमेकमेव पञ्चावयवः स्यात्। दिशांव्रतकश्यपव्रतयोस्तु गणानुगानत्वमाचार्येण प्रतिपादितम्। गणानुगानानि यथा दिशांव्रतं कश्यपव्रतमिति।

नच पुरुषव्रतस्य गणानुगानत्वे तादृशं प्रमाणमस्ति, तस्मात् सप्तैव पुरुषव्रतानि स्युः। उपरितनेन पुरुषव्रतनिर्देशेनैकवचनम्, तेन बहुविषयव्यापिना[15] (विधिना) विधानसामान्यादयमपि पुरुषव्रतनिर्देशः एकवचनम्, तेन स[16] न[16] बहुषु वर्तत इति ज्ञायते। दशमेऽध्यायेऽध्येतार एकादश सामानीति व्यवहरन्ति।

---

१ को. गौरीपिति
२ को. वसुरोचिष्टा
३ को. श्रुष्टीगुना
४ को. त्रैशाकात्
५ को. आजीकाभीकयोः
६ को. दृष्टेः
७ को. अथवानीकारां
८ को. वाजितो
९ को. ०दृषिभिः
१० को. केषांचिदेषा
११ को. ऋष्युदाहरणम्। एषावाचार्येण
१२ को. हुश्नू
१३ को. प्रभृतिनां
१४ को, पक्षः पुच्छाः०
१५ को. बहुविषयं व्या०
१६ को, सन्

तत्र पुरुषव्रतं कश्यपव्रतं चेत्याचार्यो वदति। तत्र प्रथमं साम विराट्स्वराज इत्यूढमूह्याम्नाये। पञ्चमं प्रजापतेर्हृदयमिति विनियुक्तमग्न्युपस्थाने। गणानुगानत्वात् कश्यपव्रतेनानेकगीतेन[1] भवितव्यम्। तस्मात्[2] प्रजापतेर्हृदयात् परतः सामानि षड्वा पञ्च वा कश्यपव्रताय परिकल्प्यानि। तत्रोद्यन्नित्यस्यानुक्तस्य पूर्वेषामनुक्तानां समासकर्मत्वात् पुरुषव्रतत्वमेव युज्यते। अथवा भं भं भं भ वित्यस्य शाट्यायनिभिः प्रवर्ग्येऽपि[3] विनियुक्तत्वात् पृथगेव। तस्यापि कश्यपव्रतान्तर्भावो न घटते। तस्मादतः परमेव कश्यपव्रतं भवितुमर्हति।

ननु गणशब्दो बहुत्वविषयः, किमतः गणानुगानत्वात् कश्यपव्रतं बहुषु ऋक्षु कल्पनीयं स्यात्, द्वयोरपि ऋचोर्गीयमानं गणानुगानं भवति, यथा तवश्श्याव्यम्। तस्मान्नव पुरुषव्रतानि, कश्यपव्रतं शेषम्। पुरुषव्रते श्रूयमाणस्यैकवचनस्येत्थं परिहारासम्भवार्थं छात्रव्यवहारानुग्रह एवापि सति सम्भवे कर्तव्य इति कृत्वा नव सामानि पुरुषव्रतानि इत्युक्तम्।

कथं (पुनः) निर्दिश्यमानमस्मिन्नार्षेये प्रथमं विराट्स्वराजं पञ्चमं प्रजापतेर्हृदयमित्येतज्जानीम[4], अनेकमार्गसमुत्पन्नानि साम्नां नामधेयानि स्युः। तद्यथा—केषाञ्चिद् ऋषिद्वारेण नामानि निर्दिश्यन्ते यथा सौपर्णं वैश्वमनसमौशनं काव्यमिति। केषाञ्चिद्देवताद्वारेण यथा अग्नेराग्नेये द्व इति। केषाञ्चिन्निधनद्वारेण यथा हरिश्रीनिधनमिति घृतश्च्युन्निधनमिति। केषाञ्चिल्लिङ्गद्वारेण यथा बर्हिषीयमिषोवृधीयं वाराहमिति। केषाञ्चित् कर्मगुणतो[5] यथा रथन्तररोहितकुलीये[6] अन्तरिक्षम् अरिष्टमिति। केषाञ्चिच्छन्दस्तः यथा गायत्रं वैराजम् शाक्वरमिति। तत्र प्रथमं विराट्स्वाराजाभिधाने ऋतौ विनियोगार्थमूहसमाम्नाये विराट् स्वाराजवत्त्वादाचार्येण संज्ञायां वैकृतेन विराट्स्वाराजमित्युक्तम्। पञ्चमं प्रजापतेर्हृदयशब्दवत्वात्[7] प्रजापतेर्हृदयमित्युक्तम्। आर्षेये पुनः निर्दिष्टानि सुलभानि नामधेयानि। यथा गातुविन्निधनस्वर्णिधनानि। तस्मात्प्रथमपञ्चमे एव[8] विराट्स्वराजे[9] प्रजापतेर्हृदये निश्चेतव्ये। कथमेकवचनेन बहूनि सामानि निर्दिश्यन्ते, अत्र ब्रूमः—पुरुष एकः सन्निरुह्य परं ब्रह्मेत्युक्तः[10], परमात्मसंस्तुतः[11] सर्वगतो नित्यः[12] सर्वव्यक्तिषु सामान्यरूपेणावस्थितः होतृपुरुष इति निर्दिश्यते। तस्मादनेकेषां साम्नां सामजातिसामान्यादेकवचननिर्देशः कृतः। तस्मादेषामृषिरप्यखिलव्यक्तिषु सामान्यरूपेणैव स्थितः परमात्मा निधनं पुरुष इति प्रतीयेत। नायं नारायणाख्य इति। अथवा 'छन्दोवत्कल्पसूत्राणि' इति कृत्वा 'छन्दसि सुपां सुपो भवन्ति' इति वचनाच्छान्दसं सुभवति।

'अहमन्नम्' इत्यादि 'प्रथमे प्रये' इत्यन्तं दशानुगानं। दि...रात्...व्रतः। अतः परमेषां त्रयाणामृषिर्न। बृहदोवशायाश्च पुण्यादीनां नवानामृषयो न। रेवतीषु गीतत्वाद् रैवते अर्कग्रीवार्कशिरसोः [ऋषिर्] न। पदस्तोभानां ब्राह्मणे श्रूयमाणैरेव विशेषाभिधानैः संख्या ज्ञायेतेति[13] कृत्वात्र नोक्तावमानानि सौम्यादीनि इति[14] ज्ञायते।

---

१ को. ०नेकाशी०　　२ को. तस्मात् तस्मात्　　३ को. प्रवर्ग्योऽपि
४ को. ०तज्जानीमः　　५ को. कर्मगुणताः　　६ को. रथंतरं
७ को. प्रजापतेर्हृदं　　८ को. एवं　　९ को. ०ट्स्वराज०
१० को. ब्रह्मत्युक्तम　　११ को. ०त्मसंस्तुतं　　१२ को. नित्यं
१३ को. ज्ञायतेति?　　१४ का. रार्त ?

रथन्तरादीनि त्रीणि वर्जयित्वास्मिन्नध्याये सर्वाणि सामान्यृषिकानि । भर्गादीनां चतुर्णां चक्षुषां च भद्रश्रेयसां च नर्षिः। प्रथमं भद्रमुत्तरे श्रेयसी। सङ्कृतिलुगन्वेष्टव्यम् ? वृपकादीनां षण्णां नर्षिः। तन्वोतुन्योरायुरादीनाञ्च द्वादशानामृषयः। नामार्तवादीनि नव सामानि अस्यां शाखायां न विद्यन्ते। परार्थमुदाह्रियन्ते। यानि षट् स्वराणि प्राकृते स्वरसामस्वस्माभिः क्लृप्तानि, तेषामृ:परग्निः। तत्रैव सिद्धत्वादत्र संख्यातो[1] ऽनुपानुगानादीनामनिर्देशादेव स्वर्याणां त्रित्वं सिद्धयति। 'भ्राजा द्वे' निर्देशादेव व्रतशुक्रियाणां षट्त्वं सिध्यति। महानाम्नीनामेव नामानि महामानयः सिमाः शक्वर्यः। मद्विरिति षोडशिनः[2] नामनि। तवश्श्याव्यंजेषु सामसु भेषजमिति व्याहृतिसामानि सप्तदश। ऋतेऽपि संख्यावचनं व्याहृतिसाम्नामियत्तापरिच्छेदः सुशक इति कृत्वा सङ्ख्या नोक्ता। कथमिति चेत्, गायत्रेण परिनिष्ठितो मन्त्रगणः। यानि तवश्श्याव्यशाक्वराणि[3] गायत्रादर्वाञ्चि सप्तदश सामानि तानि व्याहृतिसामानीति विद्यादिति। ऋषिर्गायत्रस्य प्रजापतिः। गायत्रेण परिनिष्ठितो मन्त्रगणः।

व्याख्यानमिदमाख्यानमार्षेयस्य यथामति।
ग्रन्थमानमिह प्रोक्तं चत्वारिंशच्छतं मया॥

अग्निष्टोमाद्यनेकश्रुतिमपि विधिवज्जैमिनेर्यज्ञतन्त्रं[4]।
व्याचख्यावल्पशेषं मठरकुलपतिः श्री भवत्रातनामा॥

जामाता भागिनेयः प्रतिविततयशास्तस्य शिष्यो ऽनुकूलः।
भारद्वाजो जयन्तो व्यरचयदनया[5] व्याख्ययोक्तावशेषम्॥

सूत्रं गृह्यं वैकृतं स्तोमसंज्ञां,
पर्यध्यायाद्यनुवाकत्रयञ्च।
पश्चादन्याः[6] विष्टुतीनाञ्च क्लृप्तीः[6],
भावत्राती भूषयामास वृत्तिः॥

पर्यध्यायावशेषं[7] यदार्षेयं प्राकृतञ्च यत्।
परिहारविधिर्यश्च जायन्ती तत्र वर्तिता॥

यस्य व्याख्या अवसिता [ तस्मै ] जैमिनये नमः।

इति जैमिनीयश्रौतसूत्रे भावत्राती वृत्तिः

समाप्ता।

---

१ को. संख्यानो ? २ को. षोडशिन ? ३ को. तवश्श्याव्याक्कराणि।
४ को. वज्जैमिनिर्य० ५ को. व्यरचयमनया ६ को. पथ्यादन्यां विष्टुतीनां च क्लृप्तिः
७ को. ०याशेषा

## जैमिनीयश्रौतवृत्तावुद्धृतानामृष्यादीनां नामानि

## जैमिनीयश्रौतवृत्तौ प्रमाणत्वेनोद्धृताः ग्रन्थाः



## नामग्रहणं विनैव प्रमाणत्वेनोपन्यस्ताः